मुमुक्षु भवन वेद वेदांग वि
ग्रन्थालय
आगत क्रमांक...८६९...
दिनांक...............

श्रीगणेशायनमः ।

श्रीकुलदेवतायैनमः ।

श्रीगुरुचरणारविन्दाभ्यां नमः ।

# पाद्मपुराणम्

## अथ पञ्चमं पातालखण्डम्

### प्रथमोऽध्यायः

रामाश्वमेधचरित्रकथनारम्भः

नारायणं नमस्कृत्य नरंचैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

ऋषय ऊचुः ।

श्रुतं सर्वं महाभाग ! स्वर्गखण्डं मनोहरम् । त्वत्तोऽधुना वद्वायुष्मन्श्रीरामचरितं हि नः

सूत उवाच ।

अथैकदा धराधारं पृष्टवान्भुजगेश्वरम् । वात्स्यायनो मुनिवरःकथामेतां सुनिर्मलाम् ॥

श्रीवात्स्यायन उवाच ।

शेषश्रुताःकथास्त्वत्तो जगत्सर्गलयादिकाः । भूगोलश्च खगोलश्च ज्योतिश्चक्रविनिर्णयः
महत्तत्त्वादि सृष्टीनां पृथक्तत्त्वविनिर्णयः । नाना राजचरित्राणि कथितानि त्वयाऽनघ
सूर्यवंशभवानां च राज्ञां चारित्रमद्भुतम् । तत्रानेकमहापापहरा रामकथा स्तुताः

तस्य वीरस्य रामस्य हयमेधकथा श्रुता ।
संक्षेपतो मया त्वत्तस्तामिच्छामि सविस्तराम् ॥ ७ ॥
या श्रुता संस्मृता चोक्ता महापातकहारिणी ।
चिन्तितार्थप्रदात्री च भक्तचित्तप्रतोषदा ॥ ८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शेष उवाच।

धन्योऽसि द्विजवर्य ! त्वं यस्य ते मतिरीदृशी। रघुवीरपदद्वन्द्वमकरन्दस्पृहावती ॥
वदन्ति मुनयःसर्वे साधूनां सङ्गमं वरम्। यस्मात्पापक्षयकरी रघुनाथकथा भवेत् ॥
त्वया मेऽनुग्रहःसृष्टो यद्रामःस्मारितःपुनः। सुरासुरकिरीटौघमणिनीराजिताङ्घ्रिकः ॥

रावणारिकथावार्द्धौ मशको मादृशःकियान्।
यत्र ब्रह्मादयो देवा मोहिता न विदन्त्यपि ॥ १२ ॥
तथापि भो मया तुभ्यं वक्तव्यं स्वीयशक्तितः।
पक्षिणः स्वगतिं श्रित्वा खे गच्छन्ति सुविस्तरे ॥ १३ ॥

चरितं रघुनाथस्य शतकोटिप्रविस्तरम्। येषां वै यादृशी बुद्धिस्ते वदन्त्येव तादृशम्
रघुनाथसतीकीर्तिर्मद्बुद्धिं निर्मलीमसाम्। करिष्यति स्वसम्पर्कात्कनकं त्वनलो यथा

सूत उवाच।

इत्युक्त्वा तं मुनिवरं ध्यानस्तिमितलोचनः।
ज्ञानेनालोकयाञ्चक्रे कथां लोकोत्तरां शुभाम् ॥ १६ ॥

गद्गदस्वरसंयुक्तो महाहर्षाङ्किताङ्गकः। कथयामास विशदां कथां दाशरथेःपुनः ॥

शेष उवाच।

लङ्केश्वरे विनिहते देवदानवदुःखदे। अप्सरोगणवक्त्राब्जचन्द्रमःकान्तिहर्तरि ॥१८॥
सुराःसर्वे सुखं प्रापुरिन्द्रप्रभृतयस्तदा। सुखं प्राप्ताःस्तुतिं चक्रुर्दासवत्प्रणतिं गताः ॥
लङ्कायां च प्रतिष्ठाप्य धर्मयुक्तं विभीषणम्। सीतयासहितो रामःपुष्पकं समुपाश्रितः।
सुग्रीवहनुमत्सीतालक्ष्मणैस्संयुतस्तदा। लङ्कामपश्यद् बहुधा भग्नप्राकारतोरणाम् ॥

दृष्ट्वाऽशोकवनं तत्र सीतास्थानं मुमूर्च्छ ह।
शिंशपास्तत्र वृक्षांश्च पुष्पितान्कोरकैर्युतान् ॥ २२ ॥
राक्षसीभिः समाकीर्णान्मृताभिर्हनुमद्भयात्।
इत्थं सर्वं विलोक्याशु रामः प्रायात्पुरीं प्रति ॥ २३ ॥

विभीषणोऽपि सचिवैरन्वगाद्विरहोत्सुकः। ब्रह्मादि देवैःसहितः स्वीयस्वीयविमानकैः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवदुन्दुभिनिर्घोषाञ्छृण्वञ्छ्रोत्रसुखावहान् ।
यथैवाप्सरसां नृत्यैः पूज्यमानो रघूत्तमः ॥ २५ ॥
सीतायै दर्शयन्मार्गे तीर्थान्याश्रमवन्ति च । मुनींश्च मुनिपुत्रांश्च मुनिपत्नीःपतिव्रताः
यत्र यत्र कृतावासाःपूर्वं रामेण धीमता । तान्सर्वान्दर्शयामास लक्ष्मणेन समन्वितः
इत्येवं दर्शयंस्तस्यै रामोऽद्राक्षीत्स्वकां पुरीम् । तस्याःपुनःसमीपेतु नन्दिग्रामं ददर्शह
यत्र वै भरतो राजापालयन्धर्ममास्थितः । भ्रातुर्वियोगजनितं दुःखचिह्नं वहन्बहु ॥२६
गर्तशायी ब्रह्मचारी जटावल्कलसंयुतः ।
कृशाङ्गश्चातिदुःखार्तःकुर्वन्रामकथां मुहुः ॥३०॥
यवान्नमपि नो भुङ्क्ते जलं पिबति नो मुहुः ।
उद्यन्तं सवितारं यो नमस्कृत्य ब्रवीति च ॥ ३१ ॥
जगन्नेत्र ! सुरस्वामिन्हर मे दुष्कृतं महत् । मदर्थे रामचन्द्रोऽपि जगत्पूज्यो वनं ययौ
सीतया सुकुमाराङ्ग्या सेव्यमानोऽटवीं गतः ।
या सीता पुष्पपर्यङ्के वृन्तमासाद्य दुःखिता ॥ ३३ ॥
या सीता रविसन्तापं कदापि प्राप नो सती । मदर्थे जानकी सा च प्रत्यरण्यं भ्रमत्यहो
या सीता राजवृन्दैश्च न दृष्टा नयनैःकदा । सा सीता दृश्यते नूनं किरातैःकालरूपिभिः
या सीता मधुरं त्वन्नं भोजिता न बुभुक्षति ।
सा सीताऽद्य वनस्थानि फलानि प्रार्थयत्यहो ॥ ३६ ॥
इत्येवमन्वहं सूर्यमुपस्थाय वदत्यदः । प्रातः प्रातर्महाराजो भरतो रामवल्लभः ॥ ३७ ॥
यश्चोच्यमानःसचिवैःसमदुःखसुखैर्बुधैः । नीतिज्ञैःशास्त्रनिपुणैरिति प्रोवाच तान्नृपः ॥
अमात्या दुर्भगं मां किं प्रब्रूत पुरुषाधमम् । यदर्थमग्रजो रामो वनं प्राप्यावसीदति ॥
दुर्भगस्य मम प्रस्वाः पापमार्जनमादरात् ।
करोमि रामचन्द्राङ्घ्रिं स्मारं स्मारं सुमन्त्रिणः ॥ ४० ॥
धन्या सुमित्रा सुतरां वीरसूस्वपतिप्रिया ।
यस्यास्तनूजो रामस्य चरणौ सेवतेऽन्वहम् ॥४१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्र ग्रामे स्थितो नूनं भरतो भ्रातृवत्सलः । विलापं प्रकरोत्युच्चैस्तं ग्रामं सददर्श ह
इति श्रीपाद्मपुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे रघुनाथस्य भरतावासनन्दिग्रामदर्शनं नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः

### रामप्रहितस्य मारुतेर्भरतं प्रत्यागमनम्

शेष उवाच ।

अथ तद्दर्शनोत्कण्ठा विह्वलीकृतचेतसा । पुनःपुनःस्मृतो भ्राता भरतो धार्मिकाग्रणीः
उवाच च हनूमन्तं बलवन्तं समीरजम् । प्रस्फुरद्दशनव्याजचन्द्रकान्तिहतान्धकः ॥

शृणु वीर हनूमंस्त्वं मद्गिरं भ्रातृनोदिताम् ।
चिरन्तनवियोगेन गद्गदीकृतविह्वलाम् ॥ ३ ॥

गच्छतं भ्रातरं वीर समीरणतनूद्भव ! । मद्वियोगकृशां यष्टिं वपुषो बिभ्रतं हठात् । ४ ।
यो वल्कलं परीधत्ते जटां धत्ते शिरोरुहे । फलानां भक्षणमपि न कुर्याद्विरहातुरः ॥
परस्त्री यस्य मातेव लोष्टवत्काञ्चनं पुनः । प्रजाः पुत्रानिवो द्रक्षेद्बान्धवो मम धर्मवित्
मद्वियोगजदुःखाग्निज्वालादग्धकलेवरम् । मदागमनसन्देशपयोवृष्ट्याऽशुसिञ्चतम् ॥७॥
सीतया सहितं रामं लक्ष्मणेन समन्वितम् । सुग्रीवादि कपीन्द्रैश्च रक्षोभिःसविभीषणैः

प्राप्तं निवेदय सुखात्पुष्पकासनसंस्थितम् ।
येन मे सोऽनुजः शीघ्रं सुखमेति मदागमात् ॥ ९ ॥

इति श्रुत्वा ततो वाक्यं रघुवीरस्य धीमतः । जगाम भरतावासं नन्दिग्रामं निदेशकृत्
गत्वा स नन्दिग्रामं तु मन्त्रिवृद्धैःसुसंयुतम् । भरतं भ्रातृविरहक्लिन्नं धीमान्ददर्श ह ॥
कथयन्तं मन्त्रिवृद्धान्रामचन्द्रकथानकम् । तदीयपदपाथोजमकरन्दसुनिर्भरः ॥ १२ ।
नमश्चकार भरतं धर्मं मूर्तियुतं किल । विधात्रा सकलांशेन सत्त्वेनैव विनिर्मितम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तं दृष्ट्वा भरतःशीघ्रं प्रत्युत्थाय कृताञ्जलिः । स्वागतं चेतिहोवाच रामस्य कुशलं वद

इत्येवं वदतस्तस्य भुजो दक्षिणतोऽस्फुरत् ।
हृदयाच्च गतःशोको हर्षास्रैःपूरिताननः ॥ १५ ॥
विलोक्य तादृशं भूपं प्रत्युवाच कपीश्वरः ।
निकटे हि पुरःप्राप्तं विद्धि रामं सलक्ष्मणम् ॥ १६ ॥

रामागमनसन्देशामृतसिक्तकलेवरः । प्रापयद्धर्षपुरं हि सहस्रास्यो न वेद्म्यहम् ॥१७॥
जगाद मम तन्नास्ति यत्तुभ्यं दीयते मया । दासोऽस्मि जन्मपर्यन्तं रामसन्देशहारक !
वसिष्ठोऽपिगृहीत्वाऽर्घ्यं मन्त्रिवृद्धाःसुहर्षिता । जग्मुस्ते रामचन्द्रं च हनुमद्दर्शिताऽध्वना

दृष्ट्वा दूरात्समायान्तं रामचन्द्रं मनोरमम् ।
पुष्पकासनमध्यस्थं स सीतं सहलक्ष्मणम् ॥ २० ॥

रामोऽपि दृष्ट्वा भरतं पादचारेण सङ्गतम् । जटावल्कलकौपीनपरिधानसमन्वितम् ॥
अमात्यान्भ्रातृवेषेण समवेषाञ्जटाधरान् । नित्यं तपःक्लिष्टतया कृशरूपान्ददर्श ह ॥

रामोऽपि चिन्तयामास दृष्ट्वा वै तादृशं नृपम्
अहो दशरथस्यायं राजराजस्य धीमतः ॥ २३ ॥

पुत्रःपदातिरायाति जटावल्कलवेषभृत् । न दुःखं तादृशं मेऽन्यद्वनमध्यगतस्य हि ॥
यादृशं मद्वियोगेन चैतस्य परिवर्तते । अहो पश्यत मे भ्राता प्राणात्प्रियतमःसखा ॥

श्रुत्वा मां निकटे प्राप्तं मन्त्रिवृद्धैःसुहर्षितः ।
द्रष्टुं मां भरतोऽभ्येति वसिष्ठेन समन्वितः ॥ २६ ॥

इति ब्रुवन्नरपतिःपुष्पकान्नभसोऽङ्गणात् । विभीषणहनूमद्भ्यां लक्ष्मणेन कृतादरः ॥
यानादवततराशु विरहक्लिन्नमानसः । भ्रातर्भ्रातःपुनर्भ्रातर्भ्रातर्भ्रातर्वदन्मुहुः ॥ २८ ॥
दृष्ट्वा समुत्तीर्णमिमं रामचन्द्रं सुरैर्युतम् । भरतो भ्रातृविरहक्लिन्नं धीमान्ददर्श ह ॥
हर्षाश्रूणि प्रमुञ्चंश्च दण्डवत्प्रणनाम ह । रघुनाथोऽपि तं दृष्ट्वा दण्डवत्पतितं भुवि

उत्थाप्य जगृहे दोर्भ्यां हर्षालोकसमन्वितः ॥ ३० ॥

उत्थापितोऽपि हि भृशं नोदतिष्ठद्रुदन्मुहुः । रामचन्द्रपदाम्भोजग्रहणासक्तबाहुभृत् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भरत उवाच।

दुराचारस्य दुष्टस्य पापिनो मे कृपां कुरु। रामचन्द्र! महाबाहो कारुण्यात्करुणानिधे
यस्ते विदेहजापाणिस्पर्शं क्रूरममन्यत। स एव चरणो राम वने बभ्राम मत्कृते॥
इत्युक्त्वाऽश्रुमुखो दीनःपरिरभ्य पुनःपुनः। प्राञ्जलिःपुरतस्तस्थौ हर्षविह्वलिताननः॥

रघुनाथस्तमनुजं परिष्वज्य कृपानिधिः।
प्रणम्य च महामन्त्रिमुख्यानापृच्छ्य सादरम्॥ ३५॥

भरतेन समं भ्रात्रा पुष्पकासनमास्थितः। सीतां ददर्श भरतो भ्रातृपत्नीमनिन्दिताम्
अनसूयामिवात्रेःकिं लोपामुद्रां घटोद्भवः। पतिव्रतां जनकजाममन्यत ननाम च॥
मातःक्षमस्व यदघं मयाकृतमबुद्धिना। त्वत्सदृश्यःपतिपराःसर्वेषां साधुकारिकाः॥
जानक्यपि महाभागा देवरं वीक्ष्य सादरम्। आशीर्भिरभियुज्याथ समपृच्छदनामयम्
विमानवरमारूढास्ते सर्वे नभसोऽङ्गणे। क्षणादालोकयाञ्चक्रुर्निकटे स्वपितुःपुरीम्
इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे राम-
राजधानीदर्शनं नाम द्वितीयोऽध्यायः।

---

# तृतीयोऽध्यायः

## रामस्य अयोध्यायां प्रवेशः

शेष उवाच।

दृष्ट्वा रामो राजधानीं निजलोकनिवासिताम्। जहर्ष मतिमान्वीरश्चिरदर्शनलालसः
भरतोऽपि स्वकं मित्रं सुमुखं नगरं प्रति। प्रेषयामास सचिवं नगरोत्सवसिद्धये॥

भरत उवाच।

कुर्वन्तु लोकास्त्वरितं रघुनाथागमोत्सवम्। मन्दिरे मन्दिरे रम्यं कृतकौतुक चित्रकम्
विपांसुका राजमार्गाश्चन्दनद्रवसेचिताः। प्रसूनभरसङ्कुलता हृष्टपुष्टजनावृताः॥ ४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विचित्रवर्णध्वजभा चित्रिताखिलस्वाङ्गणाः ।
मेघागमे धनुरिव पश्यन्त्वेव वलीमुखाः ॥ ५ ॥
प्रतिगेहं तु लोकानां कारयन्त्वगरूक्षणम् ।
यद्धूमं वीक्ष्य शिखिनो नृत्यं कुर्वन्ति लीलया ॥ ६ ॥

हस्तिनो मम शैलाभा नाधोरण सुयन्त्रितान् । विचित्रयन्तु बहुशो गैरिकाद्युपधातुभिः
वाजिनश्चित्रिता भूयःसुशोभन्तु मनोजवाः । यद्वेगवीक्षणादेव गर्वं त्यजति स्वर्हयः ॥
कन्याःसहस्रशोरम्याःसर्वाभरणभूषिताः । गजोपरि समारूढा मुक्ताभिर्विकिरन्तु च
ब्राह्मण्यःपात्रहस्ताश्च दूर्वा हारिद्रसंयुताः । सुवासिन्यो महाराजं रामं नीराजयन्तुताः
कौसल्या पुत्रसंयोगसन्देशविधुरा सती । हर्षं प्राप्नोतु सुकृशा तदीक्षणसुलालसा ॥
इत्येवमादि रचनाः पुरशोभाविधायिकाः । करोतु जनता हृष्टा रामस्यागमनं प्रति ॥

शेष उवाच ।

इति श्रुत्वा ततो वाक्यं सुमुखो मन्त्रवित्तमः । प्रययौ नगरीं कर्तुं कृतकौतुकतोरणाम्

गत्वाऽथ नगरीं तां वै मन्त्री तु सुमुखाभिधः ।
ख्यापयामास लोकानां रामागममहोत्सवम् ॥ १४ ॥

लोकाःश्रुत्वा पुरीं प्राप्तं रघुनाथं सुहर्षिताः । पूर्वं तदीयविरहत्यक्तभोगसुखादयः ॥१५
ब्राह्मणा वेदसम्पन्नाःपवित्रा दर्भपाणयः । धौतोत्तरीय वलिता जग्मुःश्रीरघुनायकम्
क्षत्रिया ये शूरतमा धनुर्बाणधरा वराः । सङ्ग्रामे बहुशो वीरा जेतारो ययुरप्यमुम् ॥
वैश्या धनसमृद्धाश्च मुद्राशोभितपाणयः । शुभ्रवस्त्र परीधाना अभिजग्मुर्नरेश्वरम् ॥

शूद्रा द्विजेषु ये भक्ताः स्वीयाचारसुनिष्ठिताः ।
वेदाचाररता ये वै तेऽपि जग्मुः पुरीपतिम् ॥१९॥
ये ये वृत्तिकरा लोकाःस्वे स्वे कर्मण्यधिष्ठिताः ।
स्वकं वस्तु समादाय ययुः श्रीरामभूपतिम् ॥ २० ॥

इत्थं भूपतिसन्देशात्प्रमोदाप्लवसंयुताः । नानाकौतुकसंयुक्ता आजग्मुर्मनुजेश्वरम् ॥
रघुनाथोऽपि सकलैर्दैवतैःस्वस्वयानगैः । परीतःप्रविवेशोच्चैःपुरीं रचितमोहनाम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्लवङ्गाः प्लवनैर्युक्ता आकाशपथचारिणः ।
स्वस्वशोभा परीताङ्गाश्चानुजग्मुःपुरोत्तमम् ॥ २३ ॥
पुष्पकादवरुह्याशु नरयानमथारुहत् । सीतयासहितो रामःपरिवारसमावृतः ॥ २४ ॥
अयोध्यां प्रविवेशाथ कृतकौतुकतोरणाम् । हृष्टपुष्ट जनाकीर्णामुत्सवैःपरिभूषिताम्
वीणापणवभेर्यादि वादित्रैराहतैर्भृशम् । शोभमानःस्तूयमानःसूतमागधबन्दिभिः ॥२६
जय राघव रामेति जय सूर्य कुलाङ्गद । जय दाशरथे देव जयताल्लोकनायक ! ॥२७॥
इति शृण्वञ्छुभां वाचं पौराणां हर्षिताङ्गिनाम् ।
रामदर्शनसञ्जात पुलकोद्भेदशोभिनाम् ॥ २८ ॥
प्रविवेश वरं मार्गं रथ्याचत्वरभूषितम् । चन्दनोदकसंसिक्तं पुष्पपल्लवसंयुतम् ॥२९॥
तदा पौराङ्गनाःकाश्चिद्गवाक्ष विलमाश्रिताः ।
रघुनाथस्वरूपेक्षा जातकामा अथाब्रुवन् ॥ ३० ॥

पौराङ्गना ऊचुः ।

धन्या अभूवन्बत भिल्लकन्या वनेषु या राममुखारविन्दम् ।
स्वलोचनेन्दीवरकैस्थापिवन्स्वभाग्यसञ्जातमहोदया इमाः ॥ ३१ ॥
धन्यं मुखं पश्यत वीरधाम्न श्रीरामदेवस्य सरोजनेत्रम् ।
यद्दर्शनं धातृमुखाःसुरा अपि प्रापुर्महद्भाग्ययुता वयं त्वहो । ३२ ॥
एतन्मुखं पश्यत चारुहासं किरीटसंशोभि निजोत्तमाङ्गम् ।
वन्धूकधिक्कारलसच्छविप्रदं दन्तच्छदं बिभ्रतमुच्चनासम् ॥ ३३ ॥
इति गदितवतीस्ताःस्नेहभारेण रामो नलिनदलसदृक्षैर्नेत्रपातैर्निरीक्ष्य ।
निखिलगुरुरनूनप्रेमभारं नृलोकं जननिगृहमियेष प्रोषिताङ्गिन हृष्टः ॥ ३४ ॥
इति श्रीपाद्मेमहापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
रघुनाथस्य पुरप्रवेशनं नाम तृतीयोऽध्यायः ॥ ३ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# चतुर्थोऽध्यायः

## रामवियोगाद्राममातुर्विलापकरणम्

वात्स्यायन उवाच

भुजगाधीश्वरेशान! धराभारधरक्षम ! । शृण्वेकं संशयं मह्यं कृपया कथयस्व तम् ॥१॥

रघुनाथस्य गमनं वनंप्रति यदाह्यभूत् । तदा प्रभृति देहेन स्थिता शून्येन चेतसा ॥२॥

तद्विप्रयोगविधुरा कृशदेहातिदुःखिता । सुमुखान्मन्त्रिणःश्रुत्वा रघुनाथं समागतम् ॥३

कथं जहर्ष किमभूत्कीदृशं तत्र चिह्नितम् । रामचन्द्रस्य सन्देशहर्तारं किमुवाच सा ॥

एतं मे संशयं छिन्धि रघुनाथ गुणोदयम् । यथावच्छृण्वते मह्यं कथयस्व प्रसादतः ॥

शेष उवाच ।

साधु पृष्टं महाभाग द्विजवर्य पुरस्कृत । तन्मे निगदितःसाक्षाच्छृणुष्वैकमनाःकिल ॥६॥

सा वै तद्वदनाम्भोजच्युतं रामागमामृतम् ।

पीत्वा पीत्वा बभूवाहो स्थगिताङ्गेन विह्वला ॥ ७ ॥

किं मे स्वप्नो विमूढायाः किं वा भ्रमकरं वचः । मम वै मन्दभाग्यायाःकथं रामेक्षणंपुनः

बहुना तपसा कृत्वा प्राप्तोऽयं वै सुतःशिशुः । केनचिन्मम पापेन विप्रयोगं गतःपुनः ॥

सुमन्त्रिन्कुशली रामःसीता लक्ष्मणसंयुतः। कथंमां स्मरते वीरो वनचारीसुदुःखिताम्

इति सा विललापोच्चै रघुनाथस्मृतिं गता ।

न विवेद निजं किञ्चित्परकीयं विमोहिता ॥ ११ ॥

सुमुखोऽपि तथा दृष्ट्वा दुःखितां मातरं भृशम् ।

वीजयामास वासोग्रैःसंज्ञामाप च सा पुनः ॥ १२ ॥

उवाच जननीं सौम्यं वचो हर्षकरं मुहुः । रघुनाथागमस्मारहृष्टां तां व्यदधात्पुनः ॥

मातर्विद्धि गृहं प्राप्तं रघुनाथं सलक्ष्मणम् ।

सीतया सहितं पश्य चाशीर्भिरभियुङ्क्ष्व च ॥ १४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति तथ्यं वचःश्रुत्वा सुमुखेन प्रभाषितम् । यादृशं हर्षमापेदे तादृशं वेद्म्यहं न हि ॥
उत्थाय वाजिरेप्राप्ता रोमाञ्चिततनूरुहा । हर्षविह्वलिताङ्ग्यश्रु मुञ्चन्ती राममैक्षत ॥

तावत्सरामो राजेन्द्रो नरयानमधिश्रितः ।
प्राप्तःस्वमातुर्भवनं कैकेय्याःसुनयाःपुरः ॥ १७ ॥
कैकेय्यपि त्रपाभारनम्रा रामं पुरःस्थितम् ।
नोवाच किंचिन्महतीं चिन्तां प्राप्तवती मुहुः ॥ १८ ॥
सूर्यवंशध्वजो रामो मातरं वीक्ष्य लज्जिताम् ।
उवाच सान्त्वयंस्तां च वाक्यैर्विनयमिश्रितैः ॥ १९ ॥

मातर्मया वनं गत्वा सर्वमाचरितं तथा । अधुना करवै किं वा त्वदाज्ञातो जनन्यहो
मया न्यूनं कृतं नास्ति कथं मां नेक्षसे पुनः । आशीर्भिरभिनन्द्यैनं भरतं मां च वीक्षय
इति श्रुत्वापि तद्वाक्यं सा नम्रवदनाऽनघ । शनैः शनैः प्रत्युवाच राम गच्छस्वमालयम्

रामोऽपि श्रुत्वा वचनं जनन्याः पुरुषोत्तमः ।
नमस्कृत्य ययौगेहं सुमित्रायाः कृपानिधिः ॥ २३ ॥
सुमित्रापुत्र सहितं रामं दृष्ट्वा महामनाः ।
चिरंजीव चिरंजीव ह्याशीर्भिरिति चाभ्यधात् ॥ २४ ॥

मातुश्चरामभद्रोऽपि चरणौ प्रणिपत्य च । परिष्वज्य मुदायुक्तो जगाद वचनं पुनः ॥
रत्नगर्भे ममभ्रात्रा केनापि न कृतं तथा । यथायमकरोद्धीमान्मम दुःखापनोदनम् ॥
रावणेन हृता सीता मयायत्प्राप्यते पुनः। मातस्तत्सर्वमाविद्धि लक्ष्मणस्य विचेष्टितम्
दत्तामाशिषमागृह्य शिरसा यं सुमित्रया । निजमातुश्च भवनं प्रययौ विबुधैर्वृतः ॥
मातरं वीक्ष्य हृषितां निजदर्शनलालसाम् । स्वयानादवरुह्याशु चरणावग्रहीद्धरिः ॥
माता तद्दर्शनोत्कण्ठा विह्वली कृतमानसा । परिष्वज्य परिष्वज्य रामंमुदमवाप सा
शरीरे रोमहर्षोभूद्गद्गदावागभूत्तदा । हर्षाश्रूणि तु सोष्णानि प्रवाहं प्रापुरापदात् ॥
जननीं वीक्ष्य विनयी ताटङ्कद्वय वर्जिताम् । कराकल्पपदाकल्परहितां विभ्रतींतनुम् ॥

किञ्चित्स्वदर्शनाद्धृष्टां कृशाङ्गीं तां स शोकभाक् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुःखस्य समयो नायमिति मत्वा जगाद ताम् ॥ ३३ ॥

श्रीराम उवाच ।

आलभेया त्वच्चरणौ चिरकालं न सेवितौ । ततःक्षमस्वापराधं भाग्यहीनस्य वै मम

ये पुत्रा मातापित्रोर्न शुश्रूषायां समुत्सुकाः। ते मन्तव्याः परामातःकीटकारेतसोभवाः

किं कुर्वे जनकाज्ञातो गतो वै दण्डकं वनम् ।

तत्रापि त्वत्कृपापाङ्गात्तीर्णोऽस्मि दुःखसागरम् ॥ ३६ ॥

रावणेन हृता सीता लङ्कायां गमिता पुनः ।

त्वत्कृपातो मया लब्धा तं हत्वा राक्षसेश्वरम् ॥ ३७ ॥

सीतेयं त्वच्चरणयोःपतिता वै पतिव्रता । सम्भावयाशु चकितां त्वत्पादार्पितमानसाम्

इति श्रुत्वा तु तद्वाक्यं पादयोः पतितां स्नुषाम् ।

आशीर्भिरभियुज्यैनां बभाषे तां पतिव्रताम् ॥ ३९ ॥

सीते स्वपतिना सार्द्धं चिरंविलस भामिनि । पुत्रौ प्रसूय च कुलं स्वकं पावय पावने!

त्वत्सदृश्यः पतिपराः पतिदुःखसुखानुगाः । भवन्तिदुःखभागिन्यो न हि सत्यंजगत्त्रये

विदेहपुत्रि ! स्वकुलं त्वया पावितमात्मना ।

रामपादाब्जयुगलमनुयान्त्या महावने ॥ ४२ ॥

किं चित्रं यत्पुमांसस्तु वैरिकोटिप्रभञ्जनाः ।

येषां गेहे सती भार्या स्वपतिप्रियवाञ्छिका ॥ ४३ ॥

इत्युक्त्वा रघुनाथस्य भार्यामश्रितलोचनाम् ।

तूष्णीं बभूव हृषिता प्रहृष्टस्वतनूरुहा ॥ ४४ ॥

अथ भ्राताऽस्य भरतःपित्रादत्तं निजं महत् । राज्यं निवेदयामास रामचन्द्राय धीमते

मन्त्रिणस्ते प्रहृष्टाङ्गा दैवज्ञान्मन्त्रकोविदान्। आहूय सुमुहूर्तं ते पप्रच्छुःवरमादरात् ॥

शुभे मुहूर्ते सुदिने शुभनक्षत्रसंयुते । अभिषेकं महाराज्ये कारयामासुरुद्यताः ॥४७॥

सप्तद्वीपवतीं पृथ्वीं व्याघ्रचर्मणि सुन्दरे ।

लिखित्वोपरि राजेन्द्रो महाराजोऽधितस्थिवान् ॥ ४८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्दिनादेव साधूनां मनांसि प्रमुदं ययुः । दुष्टानां चेतसोग्लानिरभवत्परतापिनाम् ॥
स्त्रियस्तु पतिभक्त्या च पतिव्रतपरायणाः । मनसाऽपि कदा पापं नाचरन्ति जना मुने
दैत्या देवास्तथा नागा यक्षासुरामहोरगाः ।
सर्वे न्यायपथे स्थित्वा रामाज्ञां शिरसा दधुः ॥ ५१ ॥
परोपकरणेयुक्ताःस्वधर्मसुखनिर्वृताः । विद्याविनोदगमिता दिनरात्रि क्षणाःशुभाः ॥
वातोऽपि मार्गसंस्थानां बलान्नाहरते महान् ।
वासांस्यपि तु सूक्ष्माणि तत्र चौरकथा न हि ॥ ५३ ॥
धनदो ह्यर्थिनां रामः कारुण्यश्च कृपानिधिः ।
भ्रातृभिःसहितो नित्यं गुरुदेवस्तुतिं व्यधात् ॥ ५४ ॥

इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे रघुवरस्य राज्याभिषेको नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः

### सर्वदेवकृतरामस्तुतिः ।

शेष उवाच ।

अथाभिषिक्तं रामं तु तुष्टुवुःप्रणताःसुराः । रावणाभिधदैत्येन्द्रवधहर्षितमानसाः ॥

देवा ऊचुः ।

जय दाशरथे ! सुरार्तिहञ्जय जय दानववंशदाहक ! ।
जय देववराङ्गनागणग्रहणव्यग्रकरारिदारक ! ॥ २ ॥
तव यद्दनुजेन्द्रनाशनं कवयो वर्णयितुं समुत्सुकाः ।
प्रलये जगतां ततीः पुनर्ग्रससे त्वं भुवनेश ! लीलया ॥ ३ ॥
जय जन्मजरादिदुःखकैः परिमुक्त प्रबलोद्धरोद्धर ! ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जय धर्मकरान्वयाम्बुधौ कृतजन्मन्नजरामराच्युत ॥ ४ ॥
तव देववरस्य नामभिर्बहुपापा अपि ते पवित्रिताः ।
किमसाधु द्विजवर्य पूर्वकाः सुतनुं मानुषतामुपागताः ॥ ५ ॥
हर विरिञ्चिनुतं तव पादयोर्युगलमीप्सितकाम समृद्धिदम् ।
हृदि पवित्रयवादिकचिह्नितैःसुरचितं मनसा स्पृहयामहे ॥ ६ ॥
यदि भवान्नदधात्यभयं भुवो मदनमूर्तितिरस्करकान्तिभृत् ।
सुरगणा हि कथं सुखिनःपुनर्ननु भवन्ति घृणामय पावन ॥ ७ ॥
यदा यदा नो दनुजा हि दुःखदास्तदा तदा त्वं भुवि जन्मभाग्भवेः ।
अजोऽव्ययोऽपीशवरोऽपि सन्विभो स्वभावमास्थाय निजं निजार्चितः ॥
स्मृतसुधा सदृशैरघनाशनैःसुचरितैरवकीर्य महीतलम् ।
अमनुजैर्गुणशंसिभिरीडितः प्रविश चाशु पुनर्हि स्वकं पदम् ॥ ९ ॥
अनादिराद्योऽजररूपधारी हारी किरीटी मकरध्वजाभः ।
जयं करोतु प्रसभं हतारिःस्मरारिसंसेवितपादपद्मः ॥ १० ॥
इत्युक्त्वा ते सुराःसर्वे ब्रह्मेन्द्रप्रमुखा मुहुः । प्रणेमुररिनाशेन प्रीणिता रघुनायकम् ॥
इति स्तुत्यातिसंहृष्टो रघुनाथो महायशाः ।
प्रोवाच तान्सुरान्वीक्ष्य प्रणतान्नतकन्धरान् ॥ १२ ॥

श्रीराम उवाच ।

सुरा! वृणुतमे यूयं वरं किञ्चित्सुदुर्ल्लभम् । यं कोऽपि देवो दनुजो न यक्षःप्राप सादरः

सुरा ऊचुः ।

स्वामिन्भगवतःसर्वं प्राप्तमस्माभिरुत्तमम् । यदयं निहतःशत्रुरस्माकं तु दशाननः ॥
यदा यदाऽसुरोऽस्माकं बाधां परिदधाति भोः । तदा तदेति कर्तव्यमेतावद्वैरिनाशनम्
तथेत्युक्त्वा पुनर्वीरः प्रोवाच रघुनन्दनः ।

श्रीराम उवाच ।

सुराःशृणुत मद्वाक्यमादरेण समन्विताः । भवत्कृतं मदीयैर्वै गुणैर्ग्रथितमद्भुतम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तोत्रं पठिष्यति मुहुःप्रातर्निशि सकृन्नरः । तस्य वैरि पराभूतिर्न भविष्यति दारुणा
न च दारिद्र्यसंयोगो न च व्याधिपराभवौ । मदीय चरणद्वन्द्वे भक्तिस्तेषां तु भूयसी

भविष्यति मुदायुक्ते स्वान्ते पुसां तु पाठतः ।
इत्युक्त्वा सोऽभवत्तूष्णीं नरदेवशिरोमणिः ॥ २० ॥
सुराः सर्वे प्रहृष्टास्ते ययुर्लोकं स्वकं स्वकम् ।
रघुनाथोऽपि भ्रातॄंस्तान्पालयंस्तातवद् बुधान् ॥ २१ ॥
प्रजाः पुत्रानिव स्वीयाँल्लालयँल्लोकनायकः ।
यस्मिञ्छासति लोकानां नाकालमरणं नृणाम् ॥ २२ ॥

न रोगादि पराभूतिर्गृहेषु च महीयसी । नेतिःकदापि दृश्येत वैरिजं भयमेव च ॥
वृक्षाःसदैव फलिनो मही भूयिष्ठधान्यका । पुत्रपौत्रपरीवारसनाथीकृत जीवनाः ॥
कान्तासंयोगजसुखैर्निरस्त विरहक्लमाः । नित्यं श्रीरघुनाथस्य पादपद्मकथोत्सुकाः ॥
कदापि परनिन्दासु वाचस्तेषां भवन्ति न । कारवोऽपि कदा पापं नाचरन्ति मनस्यहो
रघुनाथ कराघात दुःखशङ्काभिशंसिनः । सीतापति मुखालोक निश्चली भूतलोचनाः
लोका बभूवुः सततं कारुण्यपरिपूरिताः । राज्यं प्राप्तमसापत्नं समृद्धबलवाहनम् ॥
ऋषिभिर्हृष्टपुष्टैश्च रम्यं हाटकभूषणैः । सम्पुष्टमिष्टापूर्तानां धर्माणां नित्यकर्तृभिः ॥
सदासम्पन्नसस्यं च सुवसुक्षेत्रसंयुतम् । सुदेशं सुप्रजःस्वस्थं सुतृणं बहुगोधनम् ॥
देवतायतनानां च राजिभिःपरिराजितम् । सुपूर्णा यत्र वै ग्रामाःसुवित्तर्द्धि विराजिताः

सुपुष्पकृत्रिमोद्याना: सुस्वादु फलपादपाः ।
सपद्मिनीककासारा यत्र राजन्ति भूमयः ॥ ३२ ॥
सदम्भा निम्नगा यत्र न यत्र जनता क्वचित् ।
कुलान्येव कुलीनानि वर्णानां न धनानि च ॥ ३३ ॥

विभ्रमो यत्र नारीषु न विद्वत्सु च कर्हिचित् । नद्यःकुटिल गामिन्यो न यत्रविषयेप्रजाः
तमोयुक्ताःक्षपा यत्र बहुलेषु न मानवाः । रजोयुजःस्त्रियो यत्र नाधनं बहुला नराः ॥
धनैरनन्धो यत्रास्ति जनो नैव च भोजने । अनयःस्यन्दनो यत्र न चैव राजपूरुषः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दण्डःपरशु कुद्दाल वालव्यजनराजिषु । आतपत्रेषु नान्यत्र क्वचित्क्रोधोपरोधजः ॥
अन्यत्राक्षिकवृन्देभ्यःक्वचिन्न परिदेवनम् । आक्षिका एव दृश्यन्ते यत्र पाशकपाणयः
जाड्यवार्ता जलेष्वेव स्त्रीमध्या एव दुर्बलाः । कठोरहृदया यत्र सीमन्तिन्यो न मानवाः

औषधेष्वेव यत्रास्ति कुष्टयोगो न मानवे ।
वेधो यत्र सुरत्नेषु शूलं मूर्तिकरेषु वै ॥ ४० ॥
कम्पःसात्त्विकभावोत्थो न भयात्क्वापि कस्यचित् ।
सञ्ज्वरः कामजो यत्र दारिद्र्यं कलुषस्य च ॥ ४१ ॥

दुर्लभत्वं सदैवस्य सुकृते न च वस्तुनः। इभा एव प्रमत्ता वै युद्धे वीच्यो जलाशये ॥

दानहानिर्गजेष्वेव तीक्ष्णा एव हि कण्टकाः ।
वाणेषु गुणविश्लेषो वन्धोक्तिःपुस्तके दृढा ॥ ४३ ॥

स्नेहत्यागः खलेष्वेव न च वै स्वजने जने । तं देशं पालयामास लालयँल्लालिताःप्रजाः
धर्मं संस्थापयन्देशे दुष्टे दण्डधरोपमः । एवं पालयतो देशं धर्मेण धरणीतलम् ॥
सहस्रं च व्यतीयुर्वै वर्षाण्येकादश प्रभोः । तत्र नीचजनाच्छ्रुत्वा सीताया अपमाननम्
स्वां च निन्दांरजकतस्तां तत्याज रघूद्वहः । पृथ्वीं पालयमानस्य धर्मेण नृपतेस्तदा ॥
सीताविरहितामेकां निदेशेन सुरक्षिताम् । कदाचित्संसदोमध्ये ह्यासीनस्य महामते ॥

आजगाम मुनिश्रेष्ठःकुम्भोत्पत्तिर्मुनिर्महान् ।
गृहीत्वाऽर्घ्यं समुत्तस्थौ वसिष्ठेन समन्वितः ॥ ४६ ॥

जनताभिर्महाराजो वार्धिशोषकमागतम् । स्वागतेन सुसम्भाव्य पप्रच्छ तमनामयम् ॥

सुखोपविष्टं विश्रान्तं बभाषे रघुनन्दनः ॥ ५० ॥

इति श्रीपाद्मेमहापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधेऽगस्त्य समागमो नाम पञ्चमोऽध्यायः ॥ ५ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# षष्ठोऽध्यायः

## रामेणागस्तिस्वागतकरणम् ।

शेष उवाच ।

इत्थं स्वागतसन्तुष्टं ब्रह्मचर्यं तपोनिधिम् । उवाच मतिमान्वीरःसर्वलोकगुरुर्मुनिम् ॥१॥

श्रीराम उवाच ।

स्वागतं ते महाभाग ! कुम्भयोने तपोनिधे । त्वद्दर्शनेन सर्वे वै पाविताःसकुटुम्बकाः

कच्चिन्मतिस्ते वेदेषु शास्त्रेषु परिवर्तते । त्वत्तपो विघ्नकर्ता वै नास्ति भूमण्डले क्वचित्

लोपामुद्रा महाभाग ! या च ते धर्मचारिणी ।
यस्याः पतिव्रता धर्मात्सर्वं भवति शोभनम् ॥ ४ ॥

अपि शंस महाभाग धर्ममूर्ते कृपानिधे । अलोलुपस्य किं कार्यं करवाणि मुनीश्वर ! ॥

त्वत्तपो योगतःसर्वं भवति स्वेच्छया बहु ।
तथापि मयि कृत्वैव कृपां शंस मुनीश्वर ॥ ६ ॥

शेष उवाच ।

इत्युक्तो लोकगुरुणा राजराजेन धीमता । उवाच रामं लोकेशं विनीततरभाषया ॥७॥

अगस्त्य उवाच ।

स्वामिंस्तव सुदुर्दर्शं दर्शनं दैवतैरपि । मत्वा समागतं विद्धि राजराज ! कृपानिधे ! ॥

हतस्त्वया रावणाख्यस्त्वसुरो लोककण्टकः ।
दिष्ट्याऽद्य देवाःसुखिनो दिष्ट्या राजा विभीषणः ॥ ६ ॥

राम त्वद्दर्शनान्मेऽद्य गतं वै दुष्कृतं किल । सम्पूर्णो मे मनःकोश आनन्देन सुरोत्तमम्

इत्युक्त्वा स बभूवाशु तूष्णीं कुम्भसमुद्भवः । रामसन्दर्शनाह्लादविह्वलीकृतमानसः ॥

रामः पप्रच्छ तं भूयो मुनिं ज्ञानविशारदम् ।
लोकातीतं भवद्भावि सर्वं जानासि सर्वतः ॥ १२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुने कथय मे सर्वं पृच्छतो हि सुविस्तरम् ।
कोऽसौ मया हतो यो हि रावणो विबुधार्दनः ॥ १३ ॥
कुम्भकर्णोऽपि कस्त्वेष का जातिर्वै दुरात्मनः ।
देवो दैत्यः पिशाचो वा राक्षसो वा महामुने ! ॥ १४ ॥
सर्वमाख्याहि सर्वज्ञ ! सर्वं जानासि विस्तरात् ।
अतः कथय मे सर्वं कृपां कृत्वा ममोपरि ॥ १५ ॥
इति श्रुत्वा ततो वाक्यं कुम्भजन्मा तपोनिधिः ।
यत्पृष्टं रघुराजेन प्रवक्तुं तत्प्रचक्रमे ॥ १६ ॥
राजन्सृष्टिकरो ब्रह्मा पुलस्त्यस्तत्सुतोऽभवत् ।
ततस्तु विश्रवा जज्ञे वेदविद्याविशारदः ॥ १७ ॥
तस्य पत्नीद्वयं जातं पातिव्रत्यचरित्रभृत् ।
एका मन्दाकिनी नाम्नी द्वितीया कैकसी स्मृता ॥ १८ ॥
पूर्वस्यां धनदो जज्ञे लोकपालविलासभृत् ।
योऽसौ शिवप्रसादेन लङ्कावासमचीकरत् ॥ १९ ॥

विद्युन्मालिसुतायां तु पुत्रत्रयमभून्महत् । रावणःकुम्भकर्णश्च तथा पुण्यो विभीषणः
राक्षस्युदरजन्मत्वात्सन्ध्यासमयसम्भवात् । द्वयोरधर्मनिपुणा मतिरासीन्महामते ! ॥
एकदा तु विमानेन पुष्पकेण सुशोभिना । काञ्चनीयोपकल्पेन किङ्किणीजालमालिना
आरुह्य पितरौ द्रष्टुं प्रायाच्छोभासमन्वितः । स्वगणैःसंस्तुतो भूत्वा नानारत्नविभूषणः
आगत्य पित्रोश्चरणे पतित्वा चिरमात्मजः । हर्षविह्वलितात्मा च रोमाञ्चिततनूरुहः ॥
उवाच मेऽद्य सुदिनं महाभाग्य ! फलोदयः । यन्मे युष्मत्पदौ दृष्टौ महापुण्यददर्शनौ ॥

इत्यादिभिः स्तुतिपदैः स्तुत्वाऽगान्मन्दिरं स्वकम् ।
पितरावपि संहृष्टौ पुत्रस्नेहाद् बभूवतुः ॥ २६ ॥
तं दृष्ट्वा रावणो धीमाञ्जगाद निजमातरम् ।
कोऽयं पुमान्सुरो वाऽथ यक्षो वाऽथ नरोत्तमः ॥ २७ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योऽसौ मम पितुःपादौ संनिषेव्य गतःपुनः । महाभाग्यनिधिःस्वीयैर्गणैःसुपरिवारितः
केनेदं तपसा लब्धं विमानं वायुवेगधृत् । उद्यानाराम लीलादिविलासस्थानमुत्तमम् ॥

शेष उवाच ।

इति वाक्यं समाकर्ण्य जननी रोषविक्लवा ।
उवाच पुत्रं विमनाः किञ्चिन्नेत्रविकारिणी ॥ ३० ॥
रे पुत्र ! शृणु मद्वाक्यं बहुशिक्षासमन्वितम् ।
एतस्य जन्मकर्मादि विचारचतुराधिकम् ॥ ३१ ॥
सपत्न्यां मम कुक्षिस्थं विधानं समुपस्थितम् ।
येन स्वमातुर्विमलं कुलमुज्ज्वलितं महत् ॥ ३२ ॥
त्वं तु मत्कुक्षिजः कीटः पापः स्वोदरपूरकः ।
यथा खरः स्वकं भारं जानाति न च तद्गुणम् ॥ ३३ ॥
तथा त्वं लक्ष्यसे ज्ञानी शयनासनभोगवान् ।
सुप्तो गतः क्वचिद् भ्रष्ट इत्येव तव सम्भवः ॥ ३४ ॥
अनेन तपसा लब्धं शिवसन्तोषकारिणा । लङ्कावासो मनोवेगं विमानं राज्यसम्पदः
सुधन्या जननी त्वस्य सुभाग्या सुमहोदया ।
यस्याः पुत्रो निजगुणैर्लब्धवान्महतां पदम् ॥ ३६ ॥
इति क्रुधा भाषितमार्तया तया मात्रा स्वयाऽऽकर्ण्य दुरात्मसत्तमः ।
रोषं विधायाऽऽत्मगतं पुनर्वचो जगाद तां निश्चयभृत्तपः प्रति ॥ ३७ ॥

रावण उवाच ।

जनन्याकर्णय वचो मम गर्वसमन्वितम् ।
रत्नगर्भा त्वमेवासि यस्याः पुत्रास्त्रयो वयम् ॥ ३८ ॥
कोऽसौ कीटः सधनदः क्व तपः स्वल्पकं पुनः ।
का लङ्का किं तु तद्राज्यं स्वल्पसेवकसंयुतम् ॥ ३९ ॥
मातः ! शृणु ममोत्साहात्प्रतिज्ञां करुणान्विते ! ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न केनापि कृता कर्त्री महाभाग्ये ! हि कैकसि ! ॥ ४० ॥
यद्यहं भुवनं सर्वं वशेन स्थापयामि वै । तपोभिर्दुष्कृतैःकृत्वा ब्रह्मसन्तोषकारकः ॥
अन्नोदके सदा त्यक्त्वा निद्रां क्रीडां तथा पुनः ।
चेत्तदापि त्रिलोकस्य घातात्पापं भवेन्मम ॥ ४२ ॥
कुम्भकर्णोऽपि कृतवान्विभीषणसमन्वितः ।
रावणेन सहभ्रात्रेत्युक्त्वाऽगाद्गिरिकाननम् ॥ ४३ ॥
इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे रावणोत्पत्तिर्नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः

### रावणकुम्भकणविभीषणानां तपसोग्रेण प्रसन्नस्य ब्रह्मणोवरप्रदानम् ।

अगस्त्य उवाच ।

अथोग्रं स तपो दैत्यो दशवर्षसहस्रकम् । चकार भानुमक्ष्णा च पश्यन्नूर्ध्वपदे स्थितः
कुम्भकर्णोऽपि कृतवांस्तपः परमदुश्चरम् । विभीषणस्तु धर्मात्मा चचार परमं तपः ॥
तदा प्रसन्नो भगवान्देवदेवःप्रजापतिः । देवदानवयक्षादिमुकुटैः परिसेवितः ॥३॥
ददौ राज्यं च सुमहद्भुवनत्रयभास्वरम् । वपुश्च कृतवान्रम्यं देवदानवसेवितम् ॥ ४ ॥
तदा सन्तापितो भ्राता धनदो धर्मबुद्धिमान् ।
विमानं तु ततो नीतं लङ्का च नगरी हठात् ॥ ५ ॥
भुवनं तापितं सर्वं देवाश्चैव दिवोगताः । हतवान्ब्राह्मणकुलं मुनीनां मूलकृन्तनः ॥६॥
तदाऽतिदुःखिता देवाःसेन्द्राब्रह्माणमाययुः। स्तुतिं चक्रुर्महात्मानो दण्डवत्प्रणतिं गताः
ते तुष्टुवुःसुराःसर्वे वाग्भिरर्थ्याभिरादृताः । ततःप्रसन्नो भगवान्किं करोमीतिचाब्रवीत्
ततो निवदेयाञ्चक्रुर्ब्रह्मणे विबुधाःपुरः । दशग्रीवाच्च सङ्कष्टं तथा निजपराभवम् ॥ ९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षणं ध्यात्वा ययौ ब्रह्मा कैलासं त्रिदशैः सह ।
तस्य शैलस्य पार्श्वे तु वैचित्र्येण समाकुलाः ॥ १० ॥

स्थिताःसन्तुष्टुवुर्देवाःशम्भुं शक्रपुरोगमाः । नमो भवाय शर्वाय नीलग्रीवाय ते नमः ॥
नमःस्थूलाय सूक्ष्माय बहुरूपाय ते नमः । इति सर्वमुखेनोक्तां वाणीमाकर्ण्य शङ्करः ॥
प्रोवाच नन्दिनं देवानानयेति ममान्तिकम् । एतस्मिन्नन्तरे देवा आहूता नन्दिना च ते
प्रविश्यान्तःपुरे देवा ददृशुर्विस्मितेक्षणाः । ब्रह्माऽऽगत्य ददर्शाथ शङ्करं लोकशङ्करम् ॥
गणकोटिसहस्रैस्तु सेवितं मोदशालिभिः । नग्नैर्विरूपैःकुटिलैर्धूसरैर्विकटैस्तथा ॥
प्रणिपत्याग्रतःस्थित्वा सह देवैःपितामहः। उवाच देवदेवेशं पश्यावस्थां दिवौकसाम्

कृपां कुरु महादेव ! शरणागतवत्सल ! ।
दुष्टदैत्यवधार्थं त्वं समुद्योगं विधेहि भोः ॥ १७ ॥

सोऽपि तद्वचनं श्रुत्वा दैन्यशोकसमन्वितम् । त्रिदशैःसहितःसर्वैराजगाम हरेःपदम् ॥
तुष्टुवुर्मुनयःसर्वे ससुरोरगकिन्नराः । जय माधव ! देवेश ! जयभक्तजनार्तिहन् ! ॥१९
विलोकय महादेव ! लोकयस्व स्वसेवकान् । इत्युच्चैर्जगदुःसर्वे देवाःशर्वपुरोगमाः

इत्युक्तमाकर्ण्य सुराधिनाथो दृष्ट्वा सुरार्तिं परिचिन्त्य विष्णुः ।
जगाद देवाञ्जलदोच्चया गिरा दुःखं तु तेषां प्रशमं नयन्निव ॥ २१ ॥
भो ब्रह्मशर्वेन्द्रपुरोगमामराः ! शृण्वन्तु वाचं भवतां हिते रताम् ।
जाने दशग्रीवकृतं भयं वस्तन्नाशयाम्यद्य कृतावतारः ॥ २२ ॥
पुरी त्वयोध्या रविवंशजातैर्नृपैर्महादानमखादिसत्क्रियैः ।
प्रपालिता भूतलमण्डनीया विराजते राजतभूमिभागैः ॥ २३ ॥
तस्यां दशरथो राजा निरपत्यःश्रियान्वितः ।
पालयत्यधुना राज्यं दिक्चक्रजयवान्विभुः ॥ २४ ॥
स तु वन्याद्दृष्यश्रृङ्गात्प्रार्थितात्पुत्रकाम्यया ।
पुत्रेष्ट्यां विधिना यज्वा महाबलसमन्वितः ॥ २५ ॥

ततोऽहं प्रार्थितःपूर्वं तपसा तेन भोःसुराः! । पत्नीषु तिसृषु प्रीत्या चतुर्धाऽपिभवत्कृते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रामलक्ष्मणशत्रुघ्नभरताख्यासमन्वितः । कर्ताऽस्मि रावणोद्धारं समूलबलवाहनम् ॥
भवन्तोऽपि स्वकैरंशैरवतीर्य चरन्त्विह । ऋक्षवानररूपेण सर्वत्र पृथिवीतले ॥ २८ ॥

इत्युक्त्वा विरराामाऽऽशु नभसीरितवाङ् मुने ! ।
देवाः श्रुत्वा महद्वाक्यं सर्वे संहृष्टमानसाः ॥ २९ ॥

ते चक्रुर्गदितं याद्दग्देवदेवेन धीमता । स्वैःस्वैरंशैर्महीपूर्णा ऋक्षवानररूपिभिः ॥३०॥
योऽसौ विष्णुर्महादेवो देवानां दुःखनाशकः। स त्वमेव महाराज ! भगवान्कृतविग्रहः
भरतोऽयं लक्ष्मणश्च शत्रुघ्नश्च महामते ! । तावकांशाद्दशग्रीवो जनितश्च सुरार्दनः ॥
पूर्ववैरानुबन्धेन जानकीं हृतवान्पुनः । स त्वया निहतो दैत्यो ब्रह्मराक्षसजातिमान् ॥
पुलस्त्यपुत्रो दैत्येन्द्रःसर्वलोकैककण्टकः । पातितःपृथिवी सर्वा सुखमाप महेश्वर ! ॥

ब्राह्मणानां सुखं त्वद्य मुनीनां तापसं बलम् ।
शिवानि सर्वतीर्थानि सर्वे यज्ञाः सुसंहिताः ॥ ३५ ॥

त्वयि राज्ञि जगत्सर्वं सदेवासुरमानुषम् । सुखं प्रपेदे विश्वात्मञ्जगद्योने ! नरोत्तम ! ॥
एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं त्वयाऽनघ । उत्पत्तिश्च विपत्तिश्च मया मत्यनुसारतः

इत्थं निशम्य दितिजेन्द्रकुलानुकारिवार्तां महापुरुष ईश्वर ईशिता च ।
संरुद्धबाष्पगलदश्रुमुखारविन्दो भूमौ पपात सदसि प्रथितप्रभावः ॥ ३८ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे रावणोत्पत्तिविपत्तिकथनं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः

### ब्रह्मवधपरितप्तस्य रामस्य पश्चात्तापकरणम् ।

शेष उवाच ।

वात्स्यायन ! मुनिश्रेष्ठ ! कथा पापप्रणाशिनी । ब्रह्मण्यदेवदेवस्य सर्वधर्मैकरक्षितुः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजानं मूर्च्छितं दृष्ट्वा कुम्भजन्मा तपोनिधिः ।
शनैः शनैः करेणाऽऽशु पस्पर्शाश्रु जगाद च ॥ २ ॥
भो रामाश्वसिहि क्षिप्रं किमर्थमवसीदसि । भवान्दैत्यकुलच्छेत्ता महाविष्णुःसनातनः
भूतं भव्यं भवच्चैव जगत्स्थास्नु चरिष्णु च ।
त्वदृते नास्ति सञ्चारी किमर्थमिह मूर्च्छितः ॥ ४ ॥
श्रुत्वा वाक्यं महाराजः कुम्भजन्मसमीरितम् ।
उत्तस्थौ विगलन्नेत्रबाष्पपूरितसन्मुखः ॥ ५ ॥
उवाच दीनदीनं च विस्पष्टाक्षरविस्तरम् । त्रपाभरनमन्मूर्तिर्ब्रह्मद्रोहपराङ्मुखः ॥ ६ ॥

श्रीराम उवाच ।

अहो मे पश्यताज्ञानं विमूढस्य दुरात्मनः । यद्ब्राह्मणकुले रूढं हतवान्काममलोलुपः ॥
महिलार्थे त्वहं विप्रं वेदशास्त्रविवेकवान् । हतवान्वाडवकुलं बुद्धिहीनोऽतिदुर्मतिः
इक्ष्वाकूणां कुले जातु ब्राह्मणो न दुरुक्तिभाक् ।
ईदृशं कुर्वता कर्म मयैतत्सुकलङ्कितम् ॥ ९ ॥
ये ब्राह्मणास्तु पूजार्हा दानसम्मानभोजनैः । ते मया निहता विप्राःशरसङ्घातसंहितैः
काँल्लोकान्नु गमिष्यामि कुम्भीपाकोऽपि दुःसहः ।
न तादृशं तीर्थमस्ति यन्मां पावयितुं क्षमम् ॥ ११ ॥
नयज्ञो न तपो दानं न वा चैव व्रतादिकम् । यत्तु वै ब्राह्मणद्रोग्धुर्मम पावनताकरम् ॥
यैःकोपितं ब्रह्मकुलं नरैर्निरयगामिभिः । ते नरा बहुशो दुःखं भोक्ष्यन्ति निरयं गताः ॥
वेदा मूलं तु धर्माणां वर्णाश्रमविवेकिनाम् ।
तन्मूलं ब्राह्मणकुलं सर्ववेदैकशाखिनः ॥ १४ ॥
मूलच्छेत्तुर्ममौद्धत्यात्को लोकोऽनुभविष्यति ।
किमद्य करणीयं वै येन मे हि शिवं भवेत् ॥ १५ ॥

शेष उवाच ।

विलपन्तं भृशं रामं राजेन्द्रं रघुपुङ्गवम् । मायामनुष्यवपुषं कुम्भजन्माऽब्रवीद्वचः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अगस्त्य उवाच ।

मा विषादं महाधीर ! कुरु राजन्महामते । न ते ब्राह्मणहत्या स्याद्दुष्टानांनाश मिच्छतः

त्वं पुराणः पुमान्साक्षादीश्वरः प्रकृतेः परः ।

कर्ता हर्ताऽविता साक्षी निर्गुणः स्वेच्छया गुणी ॥ १८ ॥

सुरापो ब्रह्महत्याकृत्स्वर्णस्तेयी महाघकृत् । सर्वे त्वन्नामवादेन पूता शीघ्रं भवन्ति हि

इयं देवी जनकजा महाविद्या महामते । यस्याःस्मरणमात्रेण मुक्ता यास्यन्ति सद्गतिम्

रावणोऽपि न वै दैत्यो वैकुण्ठे तव सेवकः ।

ऋषीणां शापतोऽवाप्तो दैत्यत्वं दनुजान्तकः ॥ २१ ॥

तस्याऽनुग्रहकर्ता त्वं न तु हन्ता द्विजन्मनः ।

एवं सञ्चिन्त्य मा भूयो निजं शोचितुमर्हसि ॥ २२ ॥

इति श्रुत्वा ततो वाक्यं रामःपरपुरञ्जयः । उवाच मधुरं वाक्यं गद्गदस्वरभाषितम् ॥

श्रीराम उवाच ।

पातकं द्विविधं प्रोक्तं ज्ञाताज्ञातविभेदतः ।

ज्ञातं यद्बुद्धिपूर्वं हि अज्ञातं तद्विवर्जितम् ॥ २४ ॥

बुद्धिपूर्वं कृतं कर्म भोगेनैव विनश्यति । नश्येदनुशयादन्यदिदं शास्त्रविनिश्चितम् ॥

कुर्वतो बुद्धिपूर्वं मे ब्रह्महत्यां सुनिन्दिताम् । न मे दुःखापनोदाय साधुवादः सुसंमतः

प्रब्रूहि तादृशं मह्यं यादृशं पापदाहकम् । व्रतं दानं मखं किञ्चित्तीर्थमाराधनं महत् ॥

येन मे विमलाकीर्तिर्लोकान्वै पावयिष्यति । पापाचारात्तकालुष्यान्ब्रह्महत्याहतप्रभान्

शेष उवाच ।

इत्युक्तवन्तं तं रामं जगाद स तपोनिधिः । सुरासुरनमन्मौलिमणिनीराजिताङ्घ्रिकम्

शृणु राम ! महावीर ! लोकानुग्रहकारक ! । विप्रहत्यापनोदाय तव यद्वचनं ब्रुवे ॥

सर्वं स पापं तरति योऽश्वमेधं यजेत वै । तस्मात्त्वं यज विश्वात्मन्वाजिमेधेन शोभिना

सप्ततन्तुर्मही भर्त्रा त्वया साध्यो मनीषिणा ।

महासमृद्धियुक्तेन महाबलसुशालिना ॥ ३२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स वाजिमेधो विप्राणां हत्यायाः पापनोदनः । कृतवान्यंमहाराजो दिलीपस्तव पूर्वजः
शतक्रतुःशतं कृत्वा क्रतूनां पुरुषर्षभः । पदमापामरावत्यां देवदैत्यसुसेवितम् ॥ ३४ ॥
मनुश्च सगरो राजा मरुत्तो नहुषात्मजः । एते ते पूर्वजाःसर्वे यज्ञं कृत्वा पदं गताः ॥

तस्मात्त्वं कुरु राजेन्द्र ! समर्थोऽसि समन्ततः ।
भ्रातरो लोकपालाभा वर्तन्ते तव भावुकाः ॥ ३६ ॥
इत्युक्तमाकर्ण्य मुनेः स भाग्यवान्रघूत्तमो ब्राह्मणघातभीतः ।
पप्रच्छ यागे सुमतिं चिकीर्षन्विधिं पुरावित्परिगीयमानः ॥ ३७ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे रघुनाथस्यागस्त्योपदेशो नामाष्टमोऽध्यायः ॥ ८ ॥

———

## नवमोऽध्यायः

### अश्वमेधीयाश्वविषये रामस्यागस्त्येन सह स्वाश्वशालायाःनिरीक्षणम् ।

श्रीराम उवाच ।

कीदृशोऽश्वस्तत्र भाव्यः को विधिस्तत्र पूजने ।
कथं वा शक्यते कर्तुं के जेयास्तत्र वैरिणः ॥ १ ॥

अगस्त्य उवाच ।

गङ्गाजलसमानेन वर्णेन वपुषा शुभः । कर्णे श्यामो मुखे रक्तःपीतःपुच्छे सुलक्षितः ॥
मनोवेगःसर्वगतिरुच्चैःश्रवस्समप्रभः । वाजिमेधे हयःप्रोक्तः शुभलक्षणलक्षितः ॥ ३ ॥

वैशाखपौर्णमास्यां तु पूजयित्वा यथाविधि ।
पत्रं लिखित्वा भाले तु स्वनामबलचिह्नितम् ॥ ४ ॥

मोचनीयःप्रयत्नेन रक्षकैःपरिरक्षितः । यत्र गच्छति यज्ञाश्वस्तत्र गच्छेत्सुरक्षकः ॥५॥
यस्तं बलान्निबध्नाति स्ववीर्यबलदर्पितः । तस्मात्प्रसभमानेयःपरिरक्षाकरैर्हयः ॥ ६ ॥
कर्त्रा तावत्सुविधिना स्थातव्यं नियमादिह । मृगश्रृङ्गधरो भूत्वा ब्रह्मचर्यसमन्वितः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्रतं पालयमानश्च यावद्वर्षमतिक्रमेत् । तावद्दीनान्धकृपणाः परितोष्या धनादिभिः
अन्नं तु बहुशो देयं धनं वा भूरि मारिष । यद्यत्प्रार्थयते धीमांस्तत्तदेव ददाति हि ॥
एवं प्रकुर्वतःकर्म यज्ञंसम्पूर्णतां गतः । करोति सर्वपापानां नाशनं रिपुनाशन ! ॥१०॥

तस्माद्भवान्समर्थोऽस्ति करणे पालनेऽर्चने ।
कृत्वा कीर्तिं सुविमलां पावयान्याञ्जनान्नृप ! ॥ ११ ॥

श्रीराम उवाच ।

विलोकय द्विजश्रेष्ठ ! वाजिशालां ममाधुना ।
तादृशाः सन्ति नो वाऽश्वाः शुभलक्षणलक्षिताः ॥ १२ ॥
इति श्रुत्वा तु तद्वाक्यमगस्त्यः करुणाकरः ।
उत्तस्थौ वीक्षमाणोऽयं यागार्हान्वाजिनः शुभान् ॥ १३ ॥
गत्वाऽथ तत्र शालायां रामचन्द्रसमन्वितः ।
ददर्शाश्वान्विचित्राङ्गान्मनोवेगान्महाबलान् ॥ १४ ॥

अवनितलगताःकिंवाजिराजस्य वंश्याः किमथ रघुपतीनामेकतः कीर्तिपिण्डाः ।
किमिदममृतराशिर्वाहरूपेण सिन्धोर्मुनिरिति मनसोऽन्तर्विस्मयं प्राप पश्यन् ॥१५॥

एकतः शोणदेहानां वाजिनां पङ्क्तिरुत्तमा ।
एकतः श्यामकर्णाश्च कस्तूरीकान्तिसप्रभाः ॥ १६ ॥

एकतःकनकाभाश्च त्वन्यतो नीलवर्णिनः । एकतःशबलैर्वर्णैर्विशिष्टैर्वाजिभिर्वृताः ॥
एवं पश्यन्मुनिःसर्वान्कौतुकाविष्टमानसः । ययावन्यत्र तान्द्रष्टुं यागयोग्यान्हयान्मुनिः
ददर्श तत्र शतशो बद्धांस्तादृशवर्णकान् । दृष्ट्वाविस्मयमापेदे समुनिर्हर्षिताङ्गकः ॥

एकतः श्यामकर्णांश्च सर्वाङ्गैः क्षीरसन्निभान् ।
पीतपुच्छान्मुखे रक्ताञ्छुभलक्षणलक्षितान् ॥ २० ॥
निरीक्ष्य परितोऽनघान्विमलनीरधारानिभान्-
मनोजवनशोभितान्विमलकीर्तिपुञ्जप्रभान् ॥
पयोनिधिविशोषको मुनिरुवाच सीतापतिं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विचित्रहयदर्शनाद्धृषितनेत्रवक्त्रप्रभः ॥ २१ ॥

अगस्त्य उवाच ।

हयमेधक्रतौ योग्यान्वाहांस्ते बहुशःशुभान् । पश्यतो नेत्रयोर्मेऽद्य तृप्तिर्नास्ति रघूत्तम !
रामचन्द्र ! महाभाग ! सुरासुरनमस्कृत ! । यज्ञं कुरु महाराज ! हयमेधं सुविस्तरम् ॥
सुरपतिरिव सर्वान्यज्ञसङ्घान्करिष्यंस्तपन इव सुपर्वारातितोयं विशोष्यन् ॥ २३ ॥
हतरिपुगणमुख्यं साम्परायं विजित्य क्षितितलसुखभोगं कुर्विदं भूरिभाग ! ॥ २४ ॥
इत्येवं वाक्यवादेन परितुष्टाखिलेन्द्रियः । सर्वान्वै यज्ञसम्भारानाजहार मनोहरान् ॥
मुन्यन्वितो महाराजःसरयूतीरमागतः । सुवर्णलाङ्गलैर्भूमिं विचकर्ष महीयसीम् ॥२६॥
विलिख्य भूमिं बहुशश्चतुर्योजनसंमिताम् । मण्डपान्रचयामास यज्ञार्थं स नरोत्तमः

कुण्डं तु विधिवत्कृत्वा योनिमेखलयान्वितम् ।
अनेकरत्नरचितं सर्वशोभासमन्वितम् ॥ २८ ॥

मुनीश्वरो महाभागो वसिष्ठःसुमहातपाः । सर्वंतत्कारयामास वेदशास्त्रविधिश्रितम्
प्रेषितास्तेन मुनिना शिष्या मुनिवराश्रमान् । कथयामासुरुद्युक्तं हयमेधे रघूत्तमम् ॥
आकारितास्तदा सर्वे ऋषयस्तपतां वराः । आजग्मुःपरमेशस्यं दर्शने त्वतिलालसाः ॥

नारदोऽसितनामा च पर्वतः कपिलो मुनिः ।
जातूकर्ण्योऽङ्गिरा व्यास आर्ष्टिषेणोऽत्रिरासुरिः ॥ ३२ ॥

हारीतो याज्ञवल्क्यश्च संवर्तःशुकसंज्ञितः । इत्येवमादयो रामहयमेधवरं ययुः ॥३३ ॥
तान्सर्वान्पूजयामास रघुराजो महामनाः । प्रत्युत्थानाभिवादाभ्यामर्घ्यविष्टरकादिभिः
गां हिरण्यं ददौ तेभ्यःप्रायशो दृष्टविक्रमः । महद्भाग्यं त्वद्य मेऽस्ति यद्यूयं दर्शनं गताः

शेष उवाच ।

एवं समाकुले ब्रह्मन्नृषिवर्यसमागमे । धर्मवार्ता बभूवाहो वर्णाश्रमसुसंमता ॥ ३६ ॥

वात्स्यायन उवाच ।

का धर्मवार्ता तत्रासीत्किं वा कथितमद्भुतम् ।
साधवः सर्वलोकानां कारुण्यात्किमुताब्रुवन् ॥ ३७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शेष उवाच ।

तान्समेतान्मुनीन्दृष्ट्वा रामो दाशरथिर्महान् ।
पप्रच्छ सर्वधर्मांश्च सर्ववर्णाश्रमोचितान् ॥ ३८ ॥
ते तु पृष्टा हि रामेण धर्मान्प्रोचुर्महागुणान् ।
तान्प्रवक्ष्यामि ते सर्वान्यथाविधि शृणुष्व तान् ॥ ३९ ॥

ऋषय ऊचुः ।

ब्राह्मणेन सदा कार्यं यजनाध्ययनादिकम् ।
वेदान्पठित्वा विरजेन्नो वा गार्हस्थ्यमाविशेत् ॥ ४० ॥

ब्राह्मणेन सदा त्याज्यं नीचसेवानुजीवनम् । आपद्गतोऽपि जीवेत न श्ववृत्त्या कदाचन
ऋतुकालाभिगमनं धर्मोऽयं गृहिणःपरः। स्त्रीणां वरमनुस्मृत्याऽपत्यकामोऽथ वा भवेत्
दिवाभिगमनं पुंसामनायुष्यकरं मतम् । श्राद्धाहःसर्वपर्वाणि यतस्त्याज्यानि धीमता
तत्र गछेत्स्त्रियं मोहाद्धर्मात्प्रच्यवते परात् । ऋतुकालाभिगामी यःस्वदारनिरतश्च यः
सर्वदा ब्रह्मचारी ह विज्ञेयःस गृहाश्रमी । ऋतुःषोडशयामिन्यश्चतस्रस्ता सुगर्हिताः ॥

पुत्रदास्तासु या युग्मा अयुग्माः कन्यकाप्रदाः ।
त्यक्त्वा चन्द्रमसं दुष्टं मघां मूलं विहाय च ॥ ४६ ॥

शुचिःसन्निर्विशेत्पत्नीं पुंनामर्क्षे विशेषतः । शुचिं पुत्रं प्रसूयेत पुरुषार्थप्रसाधनम् ॥
आर्षे विवाहे गोद्वन्द्वं यदुक्तं तत्प्रशस्यते । शुल्कमण्वपि कन्यायाःकन्याक्रेतुस्तु पापकृत्
वाणिज्यं नृपतेःसेवा वेदानध्ययनं तथा। कुविवाहःक्रियालोपःकुलपातनहेतवः ॥
अन्नोदकपयोमूलफलैर्वाऽपि गृहाश्रमी । गोदानेन तु यत्पुण्यं पात्राय विधिपूर्वकम् ॥

अनर्चितोऽतिथिर्गेहाद्भग्नाशो यस्य गच्छति ।
आजन्म सञ्चितात्पुण्यात्क्षणात्स हि बहिर्भवेत् ॥ ५१ ॥

पितृदेवमनुष्येभ्यो दत्त्वाऽश्नीतामृतं गृही । स्वार्थं पचत्यघं भुङ्क्ते केवलं स्वोदरम्भरिः
षष्ठ्यष्टम्योर्विशेत्पापं तैले मांसे सदैव हि । चतुर्दश्यां तथाऽमायां त्यजेत क्षुरमङ्गनाम्
रजस्वलां न सेवेत नाश्नीयात्सह भार्यया । एकवासा न भुञ्जीत न भुञ्जीतोत्कटासने

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाश्नन्तीं स्त्रियमीक्षेत तेजःकामो नरोत्तमः । मुखेनोपधमेन्नाग्निं नग्नां नेक्षेत योषितम्
नाङ्घ्री प्रतापयेदग्नौ न वस्त्वशुचि निक्षिपेत् ।
प्राणिहिंसां न कुर्वीत नाश्नीयात्सन्ध्ययोर्द्वयोः ॥ ५६ ॥
नाचक्षीत धयन्तीं गां नेन्द्रचापं प्रदर्शयेत् । न दिवोद्गतसारं च भक्षयेद्दधि नो निशि ॥
स्त्रीं धर्मिणीं नाभिवदेन्नाद्यादातृप्ति रात्रिषु ।
तौर्यत्रिकप्रियो न स्यात्कांस्ये पादौ न धावयेत् ॥ ५८ ॥
न धारयेदन्यभुक्तं वासश्चोपानहावपि । न भिन्नभाजनेऽश्नीयान्नाश्नीतान्नं विदूषितम्
संविशेन्नार्द्रचरणो नोच्छिष्टः क्वचिदाव्रजेत् ।
शयानो वा न चाश्नीयान्नोच्छिष्टः संस्पृशेच्छिरः ॥ ६० ॥
न मनुष्यस्तुतिं कुर्यान्नात्मानमवमानयेत् । अभ्युद्यतं न प्रणमेत्परमर्माणि नो वदेत्
एवं गार्हस्थ्यमाश्रित्य वानप्रस्थाश्रमं व्रजेत् ।
सस्त्रीको वा गतस्त्रीको विरज्येत ततः परम् ॥ ६२ ॥
इत्येवमाद्योधर्मा गदिता ऋषिभिस्तदा । श्रुता रामेण महता सर्वलोकहितैषिणा ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे सर्वधर्मोपदेशो नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः

### अश्वमेधकरणाय रामस्य सम्भारयोजनम् ।

शेष उवाच ।

इत्थं संशृण्वतो धर्मान्वसन्तःसमुपस्थितः । यत्र यज्ञक्रियादीनां प्रारम्भःसुमहात्मनाम्
दृष्ट्वा तं समयं धीमान्वसिष्ठः कलशोद्भवः ।
रामचन्द्रं महाराजं प्रत्युवाच यथोचितम् ॥ २ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वसिष्ठ उवाच ।

रामचन्द्र ! महाबाहो ! समयःपर्यभूत्तव । हयो यत्र प्रमुच्येत यज्ञार्थं परिपूजितः ॥३॥

सामग्री क्रियतां तत्र आहूयन्तां द्विजोत्तमाः ।

करोतु पूजां भगवान्ब्राह्मणानां यथोचिताम् ॥ ४ ॥

दीनान्धकृपणानां च दानं स्वान्ते समुत्थितम् ।

ददातु विधिवत्तेषां प्रतिपूज्याधिमान्य च ॥ ५ ॥

भवान्कनकसत्पत्न्यादीक्षितश्चरताद्व्रतम् । भूमिशायी ब्रह्मचारी वसुभोगविवर्जितः ॥

मृगशृङ्गधरःकट्यां मेखलाजिनदण्डभृत् । करोतु यज्ञसम्भारं सर्वद्रव्यसमन्वितम् ॥

इति श्रुत्वा महद्वाक्यं वसिष्ठस्य यथार्थकम् ।

उवाच लक्ष्मणं धीमान्नानार्थपरिबृंहितम् ॥ ८ ॥

श्रीराम उवाच ।

शृणु लक्ष्मण ! मद्वाक्यं श्रुत्वा तत्कुरु सत्वरम् ।

हयमानय यत्नेन वाजिमेधक्रियोचितम् ॥ ६ ॥

शेष उवाच ।

श्रुत्वा वाक्यं रघुपतेःशत्रुजिल्लक्ष्मणस्तदा । सेनापतिमुवाचेदं वचो विविधवर्णनम् ॥

लक्ष्मण उवाच ।

वीराकर्णय मे वचः सुमधुरं श्रुत्वा त्वरातः पुनः ।

कार्यं तत्क्षितिपालमौलिमुकुटैर्घृष्टाङ्घ्रि रामाज्ञया ॥

सेनां कालबलप्रभञ्जनबल प्रोद्यत्समर्थाङ्गिनीम् ।

सज्जां सद्रथहस्तिपत्तिसुहयारोहैर्विधेह्यन्विताम् ॥ ११ ॥

सज्जीकृता वायुयवास्तुरङ्गास्तरङ्गमालाललिताङ्घ्रिपाताः ।

सदश्वचारैर्बहुशस्त्रधारिभिः संरोहिता वैरिबलप्रहारिभिः ॥ १२ ॥

संलक्ष्यन्तां हस्तिनःपर्वताभा आधोरणैःप्रासकुन्ताग्रहस्तैः ।

शूरैः सास्त्रैर्भूरिदानोपहाराः क्षीवाणस्ते सर्वशस्त्रास्त्रपूर्णाः ॥ १३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विततबहुसमृद्धिभ्राजमाना रथा मे पवनजवनवेगैर्वाजिभिर्युज्यमानाः ।
विविधरिपुविनाशस्मारकैरायुधास्त्रैर्भृतवलभिविभागा नीयतां सूतवृन्दैः ॥ १४ ॥
पत्तयःशतशो मह्यमायान्त्वस्त्राग्र्यपाणयः । हयमेधार्हवाहस्य रक्षणे विततोद्यमाः ॥

इत्याकर्ण्य वचस्तस्य लक्ष्मणस्य महात्मनः ।
सेनानीः कालजिन्नामा कारयामास सज्जताम् ॥ १६ ॥
दशध्रुवकमण्डितो लघुसुरोमशोभान्वितो,
विविक्तगलशुक्तिभृद्वितकण्ठकोशे मणिः ॥
मुखे विशदकान्तिधृत्त्वसितकान्तिभृत् कर्णयो,
र्व्यराजत तदा हयो धृतकराग्ररश्मिच्छटः ॥ १७ ॥
कलासंशोभितमुखःस्फुरद्रत्नविशोभितः ।
मुक्ताफलानां मालाभिः शोभितो निर्ययौ हयः ॥ १८ ॥

श्वेतातपत्ररचितः सितचामरशोभितः । बहुशोभापरीताङ्गो निर्ययौ हयराट् ततः ॥
अग्रतो मध्यतश्चैके पृष्ठतःसैनिकास्तथा । देवा हरिं यथापूर्वं सेवन्ते सेवनोचितम् ॥
अथ सैन्यं समाहूय सर्वमाज्ञापयत्तदा । हस्त्यश्वरथपादातवृन्दैःसुबहु सङ्कुलम् ॥
ततस्ततःसमेतानां सैन्यानां श्रूयते ध्वनिः । ततो दुन्दुभिनादोऽभूत्तस्मिन्पुरवरे तदा ॥
तन्निनादेन शूराणां प्रियेण महता तदा । कम्पन्ते गिरिशृङ्गाणि प्रासादा विचलन्ति च
हेषारवो महानासीद्वाजिनां मुह्यतां नृप ! । रथाङ्गघातसंघुष्टा धरा सञ्चलतीव सा ॥
चलितैर्गजयूथैश्च पृथ्वी रुद्धा समन्ततः । रजस्तु प्रचलत्तत्र जनान्तर्द्धानमादधात् ॥

निर्जगाम महासैन्यं छत्रैः संछाद्य भास्करम् ।
सेनान्या कालजिन्नाम्ना प्रेरितं जनसङ्कुलम् ॥ २६ ॥
गर्जन्तस्तत्लवीराग्र्याःकुर्वन्तो रणसम्भ्रमम् ।
रघुनाथस्य यागाय सज्जास्ते प्रययुर्मुदा ॥ २७ ॥

मृगमदमयमङ्गेष्वङ्गरागं दधानाः कुसुमविमलमाला शोभितस्वोत्तमाङ्गाः ।
मुकुटकटकभूषाभूषिताङ्गाः समस्ताः प्रययुरवनिनाथप्रेरितास्तेऽपि सर्वे ॥ २८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्येवं ते महाराजं ययु:सेनाचरा वराः। धनुर्धरा:पाशधरा:खड्गधरा:स्फुटक्रमाः ॥
एवं शनैःशनैःप्राप्तो मण्डपं यागचिह्नितम् । हयःखुरक्षततलां भूमिं कुर्वन्नभः प्लवन् ॥
रामो दृष्ट्वा हरिं प्राप्तं बहुसन्तुष्टमानसः । वसिष्ठं प्रेरयामास क्रियाकर्तव्यतां प्रति
वसिष्ठो राममाहूय स्वर्णपत्नीसमन्वितम् । प्रयोगं कारयामास ब्रह्महत्यापनोदनम् ॥
ब्रह्मचर्यव्रतधरो मृगशृङ्गपरिग्रहः । तत्कर्म कारयामास रामः परपुरञ्जयः ॥ ३३ ॥

प्रारंभे यागकर्माऽथ कुण्डं मण्डपसंमितम् ।
तत्राचार्योऽभवद्धीमान्वेदशास्त्रविचारवित् ॥ ३४ ॥

वसिष्ठो रघुनाथस्य कुलपूर्वगुरुर्मुनिः । ब्राह्म्यं तत्राचरद्ब्रह्मन्कर्मागस्त्यस्तपोनिधिः ॥
वाल्मीकिर्मुनिरध्वर्युर्मुनिःकण्वस्तु द्वारपः। अष्टौ द्वाराणि तत्रासन्सतोरणशुभानि वै ॥

द्वारि द्वारि द्वयं विप्र ब्राह्मणस्याधिमंत्रवित् ।
पूर्वद्वारि मुनिश्रेष्ठौ देवलासितसंज्ञितौ ॥ ३७ ॥
दक्षिणद्वारि भूमानौ कश्यपात्री तपोनिधी ।
पश्चिमद्वारि ऋषभौ जातूकर्ण्योऽथ जाजलिः ॥ ३८ ॥

उत्तरद्वारि तु मुनी द्वौ द्वितैकततापसौ । एवं द्वारविधिं कृत्वा वसिष्ठःकलशोद्भवः ॥
हयवर्यस्य सत्पूजां कर्तुमारभत द्विज ! । सुवासिन्यःस्त्रियस्तत्र वासोऽलङ्कारभूषिताः
हरिद्राऽक्षतगन्धाद्यैः पूजयामासुरर्चितम् । नीराजनं ततःकृत्वा धूपयित्वाऽगुरूक्षणैः
वर्धापनं ततो वेश्याश्चक्रुस्ता वाडवाज्ञया । एवं सम्पूज्य विमले भालेचन्दनचर्चिते ॥
कुङ्कमादिकगन्धाढ्यसर्वशोभासमन्विते । बबन्ध भास्वरं पत्रं तप्तहाटकनिर्मितम् ॥
तत्रालिखद्दाशरथेः प्रतापबलमूर्जितम् । सूर्यवंशध्वजो धन्वी धनुर्दीक्षागुरुर्गुरुः ॥४४॥
यं देवा:सासुरा:सर्वे नमन्ति मणिमौलिभिः । तस्यात्मजो वीरवलदर्पहारी रघूद्वहः ॥
रामचन्द्रोमहाभागःसर्वशूरशिरोमणिः । तन्माता कोसलनृपपत्नी गर्भसमुद्भवा ॥४६॥
तस्याः कुक्षिभवं रत्नं रामःशत्रुक्षयङ्करः । करोति हयमेधं वै ब्राह्मणेन सुशिक्षितः ॥

रामेणाभिधविप्रेन्द्रवधपापापनुत्तये ।
मोचितस्तेन वाहानां मुख्योऽसौ वाजिनाम्वरः ॥ ४८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महाबलपरीवारपरिखाभिः सुरक्षितः ।
तद्रक्षकोऽस्ति तद्‌ भ्राता शत्रुघ्नो लवणान्तकः ॥ ४९ ॥
हस्त्यश्वरथपादातसेनासङ्घसमन्वितः ।
यस्य राज्ञ इति श्रेष्ठो मानः स्यात्स्वबलोन्मदात् ॥ ५० ॥
वयं धनुर्धराःशूराः श्रेष्ठा वयमिहोत्कटाः । ते गृह्णन्तु बलाद्वाहं रत्नमालाविभूषितम् ॥
मनोवेगं कामजवं सर्वगत्यधिभास्वरम् ।
ततो मोचयिता भ्राता शत्रुघ्नो लीलया हयम् ॥ ५२ ॥
शरासनविनिर्मुक्तवत्सदन्तैः शिलाशितैः ॥ ५३ ॥
इत्येवमादि विलिलेख महामुनीन्द्रः श्रीरामचन्द्रभुजवीर्यलसत्प्रतापम् ।
शोभानिधानमतिचञ्चलवायुवेगं पातालभूतलविशेषगतिं मुमोच ॥ ५४ ॥
शत्रुघ्नमादिदेशाऽथ रामः शस्त्रभृतां वरः । याहि वाहस्य रक्षार्थं पृष्ठतःस्वैरगामिनः ॥
शत्रुघ्न ! गच्छ वाहस्य मार्गं भद्रं भवेत्तव । भवेतां शत्रुविजयौ रिपुकर्षण ! ते भुजौ ॥
ये योद्धारः प्रतिरणगतास्ते त्वया वारणीया ।
वाहं रक्ष स्वकगुणगणैः संयुतः सन्महोर्व्याम् ॥
सुप्तान्भ्रष्टान्विगतवसनान्भीतभीतांस्तु नम्रां-
स्तान्मा हन्याः सुकृतकृतिनो ये न शंसन्ति कर्म ॥ ५७ ॥
विरथां भयसन्त्रस्ता ये वदन्ति वयं तव । ते त्वया नहि हन्तव्याः शत्रुघ्न ! सुकृतैषिणा
यो हन्याद्विमदं मत्तं सुप्तं भग्नं भयातुरम् । तावकोऽहं ब्रुवाणं च सव्रजत्यधमांगतिम्
परस्वे चित्तवृत्तिं त्वं मा कृथाः पारदारिके ।
नीचे रतिं न कुर्वीथाः सर्वसद्‌गुणपूरितः ॥ ६० ॥
वृद्धानां प्रेरणं पूर्वं मा कुर्वीथा रणञ्जय ! । पूज्यपूजातिक्रमं त्वं मा विधेहि दयान्वितः
गां विप्रं च नमस्कुर्या वैष्णवं धर्मसंयुतम् ।
अभिवाद्य यतो गच्छेस्तत्र सिद्धिमवाप्नुयाः ॥ ६२ ॥
विष्णुःसर्वेश्वरःसाक्षी स्सर्वव्यापकदेहभृत् । ये तदीया महाबाहो तद्रूपाविचरन्ति हि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ये स्मरन्ति महाविष्णुं सर्वभूतहृदि स्थितम्। ते मन्तव्या महाविष्णुसमरूपा रघूद्वह !
यस्य स्वीयो न पारक्यो यस्य मित्रसमो रिपुः।
ते वैष्णवाः क्षणादेव पापिनं पावयन्ति हि ॥ ६५ ॥
येषां प्रियं भागवतं येषां वै ब्राह्मणाःप्रियाः। वैकुण्ठात्प्रेषितास्तेऽत्र लोकपावनहेतवे
येषां वक्त्रे हरेर्नाम हृदि विष्णुः सनातनः। उदरे विष्णुनैवेद्यं स श्वपाकोऽपिवैष्णवः
येषां वेदाःप्रियतमा न च संसारजं सुखम्। स्वधर्मनिरता ये च तान्नमस्कुर्विहान्वितान्
शिवे विष्णौ न वा भेदो न च ब्रह्ममहेशयोः। तेषां पादरजःपूतं वहाम्यघविनाशनम्
गौरी गङ्गा महालक्ष्मीर्यस्य नास्ति पृथक्तया।
ते मन्तव्या नराः सर्वे स्वर्गलोकादिहागताः ॥ ७० ॥
शरणागतरक्षी च मानदानपरायणः। यथाशक्ति हरेःप्रीत्यै स ज्ञेयो वैष्णवोत्तमः ॥
यस्य नाम महापापराशिं दहति सत्वरम्। तदीयचरणद्वन्द्वे भक्तिर्यस्य स वैष्णवः ॥
इन्द्रियाणि वशे येषां मनोऽपि हरचिन्तकम्।
तान्नमस्कृत्य पूयात्स ह्याजन्ममरणान्तिकात् ॥ ७३ ॥
परस्त्रियं त्वं करवालवत्त्यजन्भवेर्यशोभूषणभूतिभूमिः।
एवं ममादेशमथाचरंश्च लभेःपरं धाम सुयोगमीड्यम् ॥ ७४ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे शत्रुघ्न-शिक्षाकथनं नाम दशमोऽध्यायः ॥ १० ॥

———

# एकादशोऽध्यायः

## रामाज्ञया शत्रुघ्नस्य हयपृष्ठतोगमनम्।

### शेष उवाच।

एवमाज्ञाप्य भगवान्रामश्चामित्रकर्षणः। वीरानालोकयन्भूयो जगाद शुभया गिरा ॥१



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शत्रुघ्नस्य मम भ्रातुर्वाजिरक्षाकरस्य वै। को गन्ता पृष्ठतो रक्षंस्तन्निदेशप्रपालकः॥
यः सर्ववीरान्प्रतिमुख्यमागतान्विनिर्जयेन्मर्मभिदस्त्रसङ्घैः।
गृह्णात्वसौ मे करवीटकं तद् भूमौ यशः स्वं प्रथयन्सुविस्तरम्॥ ३॥
इत्युक्तवति रामे तु पुष्कलो भरतात्मजः। जग्राह वीटकं तस्माद्रघुराजकराम्बुजात्
स्वामिन्गच्छामि शत्रुघ्न पृष्ठरक्षाकरोऽन्वहम्। सन्नद्धः सर्वशस्त्रास्त्रचापबाणधरः प्रभो!
सर्वमद्य क्षितितलं त्वत्प्रतापो विजेष्यते। एते निमित्तभूता वै रामचन्द्र! महामते!॥
भवत्कृपातः सकलं ससुरासुरमानुषम्। उपस्थितं प्रयुद्धाय तन्निषेधे क्षमो ह्यहम्॥
सर्वं स्वामी ज्ञास्यति यन्मम विक्रमदर्शनात्। एष गन्ताऽस्मि शत्रुघ्नपृष्ठरक्षाप्रकारकः॥
एवं ब्रुवन्तं भरतात्मजं स प्रस्तूय साध्वित्यनुमोदमानः।
शशंस सर्वान्कपिवीरमुख्यान्प्रभञ्जनोद्भूतमुखान्हरिः प्रभुः॥ ६॥
भो हनूमन्महावीर! शृणु मद्वाक्यमादृतः। त्वत्प्रसादान्मया प्राप्तमिदं राज्यमकण्टकम्
सीतया मम संयोगे यो भवाञ्जलधिं ततैत। चरितं तद्धरे! वेद्मि सर्वं तव कपीश्वर!॥
त्वं गच्छ मम सैन्यस्य पालकः सन्ममाऽऽज्ञया।
शत्रुघ्नः सोदरो मह्यं पालनीयस्त्वहं यथा॥ १२॥
यत्र यत्र मतिभ्रंशः शत्रुघ्नस्य प्रजायते। तत्र तत्र प्रबोद्धव्यो भ्राता मम महामते!॥
इति श्रुत्वा महद्वाक्यं रामचन्द्रस्य धीमतः। शिरसा तत्समाधाय प्रणाममकरोत्तदा
अथाऽदिशन्महाराजो जाम्बवन्तं कपीश्वरम्। रघुनाथस्य सेवायै कपिषूत्तमतेजसम्॥
अङ्गदो गवयो मैन्दस्तथा दधिमुखः कपिः। सुग्रीवः प्लवगाधीशः शतवल्यक्षिकौ कपी
नीलो नलो मनोवेगोऽधिगन्ता वानराङ्गजः। इत्येवमाद्यो यूयं सज्जीभूता भवन्तु भोः
सर्वैर्गजैः सदश्वैश्च तप्तहाटकभूषणैः। कवचैः सशिरस्त्राणैर्भूषिता यान्तु सत्वराः॥
शेष उवाच।
सुमन्तमाहूय सुमन्त्रिणं तदा जगाद रामो बलवीर्यशोभनः।
अमात्यमौले! वद केऽत्र योज्या नरा हयं पालयितुं समर्थाः॥ १६॥
तदुक्तमेवमाकर्ण्य जगाद परवीरहा। हयस्य रक्षणे योग्यान्बलिनोऽत्र नराधिपान्॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रघुनाथ ! शृणुष्वैतान्नव वीरान्सुसंहितान् ।
धनुर्धरान्महाविद्यान्सर्वशस्त्रास्त्रकोविदान् ॥ २१ ॥
प्रतापाग्र्यं नीलरत्नं तथा लक्ष्मीनिधिं नृपम् । रिपुतापं चोग्रहयं तथा शस्त्रविदं नृपम्
राजन्योऽसौ नीलरत्नो महावीरो रथाग्रणीः । स एव लक्षं रक्षेत लक्षं युध्येत निर्भयः
अक्षौहिणीभिर्दशभिर्यातु वाहस्य रक्षणे । दंशितैस्सशिरस्त्राणैर्महाबाहुभिरुद्धतैः ॥
प्रतापाग्र्यो यो ह्ययं च रिपुगर्वमशातयत् ।
सव्यापसव्यबाणानां मोक्ता सर्वास्त्रवित्तमः ॥ २५ ॥
एषोऽक्षौहिणिविंशत्या यातु यज्ञहयावने ।
सन्नद्धो रिपुनाशाय युवा कोदण्डदण्डभृत् ॥ २६ ॥
तथा लक्ष्मीनिधिस्त्वेष यातु राजन्यसत्तमः ।
यस्तपोभिःशतधृतिं प्रसाद्यास्त्राणि चाभ्यसत् ॥ २७ ॥
ब्रह्मास्त्रं पाशुपत्यास्त्रं गारुडं नागसंज्ञितम् । मायूरं नाकुलं रौद्रं वैष्णवं मेघसंज्ञितम्
वज्रं पार्वतसंज्ञं च तथा वायव्यसंज्ञितम् ।
इत्यादिकानामस्त्राणां सम्प्रयोगविसर्गवित् ॥ २६ ॥
स एष निजसैन्यानामक्षौहिण्यैकयायुतः । प्रयातु शूरमुकुटः सर्ववैरिप्रभञ्जनः ॥ ३० ॥
रिपुतापोऽयमेवाद्य गच्छत्वग्र्यो धनुर्भृताम् । सर्वशस्त्रास्त्रकुशलो रिपुवंशदवानलः
गच्छतात्सेनया बह्व्या चतुरङ्गसमेतया । शत्रुघ्नाज्ञां शिरस्येते दधत्वद्य बलोत्कटाः ॥
उग्राश्वोऽपि महाराजस्तथा शस्त्रविदेष च ।
सर्वे यान्तु सुसंनद्धास्तव वाहस्य पालकाः ॥ ३३ ॥
इति भाषितमाकर्ण्य मन्त्रिणःप्रजहर्ष च । आज्ञापयामास च तान्सुमन्त्रकथितान्भटान्
तेऽनुज्ञां रघुनाथस्य प्राप्य मोदं प्रपेदिरे । चिरकालं साम्परायं वाञ्छन्तो युद्धदुर्मदाः
सन्नद्धाःकवचाद्यैश्च तथा शस्त्रास्त्रवर्तनैः । ययुःशत्रुघ्नसंवासं सीतापतिप्रणोदिताः ॥
अथोक्तऋषिणारामोविधिनाऽपूजयत्क्रमात् । आचार्यादीनृषीन्सर्वान्यथोक्तवरदक्षिणैः
आचार्याय ददौ रामो हस्तिनं षष्टिहायनम् । हयमेकं मनोवेगं रत्नमालाविभूषितम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पौरटं रथमेकं च मणिरत्नविभूषितम् । चतुर्भिर्वाजिभिर्युक्तं सर्वोपस्करसंयुतम् ॥३९
मणिलक्षं तु प्रत्यक्षं मुक्ताफलतुलाशतम् । विद्रुमस्य तुलानां तु सहस्रं स्फुटतेजसाम्

ग्राममेकं सुसम्पन्नं नानाजनसमाकुलम् ।
विचित्रसस्य निष्पन्नं विविधैर्मन्दिरैर्वृतम् ॥ ४१ ॥
ब्रह्मणेऽपि तथैवादाद्धोत्रेऽप्यध्वर्यवे ददौ ।
ऋत्विग्भ्यो भूरिशो दत्त्वा प्रणनाम रघूत्तमः ॥ ४२ ॥

सर्वे तेऽवर्धयन्वाग्भिराशीर्भिरभिपूजिताः। चिरंजीव महाराज ! रामचन्द्र ! रघूद्वह !॥
कन्यादानं भूमिदानं गजदानं तथैव च । अश्वदानं स्वर्णदानं तिलदानं समौक्तिकम् ॥
अन्नदानं पयोदानमभयदानमुत्तमम् । रत्नदानानि सर्वाणि विप्रेभ्यश्चादिशन्महान् ॥

देहि देहि धनं देहि मा नेति ब्रूहि कस्यचित् ।
ददात्वन्नं ददात्वन्नं सर्वभोगसमन्वितम् ॥ ४६ ॥

इत्थं प्रावर्तत मखो रघुनाथस्य धीमतः । स दक्षिणो द्विजवरैः पूर्णः सर्वशुभक्रियः॥
अथ रामानुजो गत्वा मातरं प्रणनामह । आज्ञापयाश्वरक्षार्थमेष गच्छामि शोभने !॥
त्वत्कृपातो रिपुकुलं जित्वा शोभासमन्वितः। आयास्यामि महाराजैर्हयवर्यसमन्वितः

मातोवाच ।

पुत्रगच्छ महावीर शिवाःपन्थान एव ते । सर्वान्रिपुगणाञ्जित्वा पुनरागच्छ सन्मते !॥
पुष्कलं पालय निजभ्रातृजं धर्मवित्तमम् । महाबलिनमद्यापि बालकं लीलया युतम् ॥

पुत्रागच्छसि चेद्युक्तः पुष्कलेनशुभान्वितः ।
तदा मम प्रमोदः स्यादन्यथा शोकभागहम् ॥ ५२ ॥
इति सम्भाषमाणां स्वां मातरं प्रत्युवाच सः ।
त्वदीयचरणद्वन्द्वं स्मरन्प्राप्स्यामि शोभनम् ॥ ५३ ॥

पुष्कलं पालयित्वाऽहं निजाङ्गमिव शोभने । स्वनाम सदृशं कृत्वा पुनरैष्यामि मोदवान्
इत्युक्त्वा प्रययौ वीरो रामं स मखमण्डपे । आसीनं मुनिवर्याग्र्यैर्यज्ञवेषधरं वरम् ॥
उवाच मतिमान्वीरः सर्वशोभासमन्वितः । रामाज्ञापय रक्षार्थं हयस्यात्र महामखे ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रघुनाथोऽपि तच्छ्रुत्वा भद्रमस्त्विति चाब्रवीत् ।
बालं स्त्रियं प्रमत्तं त्वं मा हन्याः शस्त्रवर्जितम् ॥ ५७ ॥

तदा लक्ष्मीनिधिर्भ्राता जानक्या जनकात्मजः। प्रहस्य किञ्चिन्नयने नर्तयन्राममब्रवीत्

लक्ष्मीनिधिरुवाच ।

रामचन्द्र ! महाबाहो ! सर्वधर्मपरायण! । शत्रुघ्नं शिक्षय तथा यथालोकोत्तरो भवेत्
कुलोचितं कर्म कुर्वन्नग्रजाचरितं तथा । गच्छेत्स परमं धाम तेजोबलसमन्वितम् ॥
त्वया प्रोक्तं महाराज ! ब्राह्मणं नावमानयेत् । पित्रा तव हतो विप्रःपितृभक्तिपरायणः
त्वयाऽपि सुमहत्कर्म कृतं लोकविगर्हितम् । अवध्यां महिलां यस्त्वं हतवान्नियतं ततः
अग्रजोऽस्य महाराज ! कृतवान्यं पराक्रमम् । स न केन कृतःपूर्वं राक्षस्याःकर्णकर्तनम्
एवं करिष्यति नृप ! शत्रुघ्नः शिक्षया तव । यदि नायं तथा कुर्यात्कुलस्यासदृशं भवेत्
इत्युक्तवन्तं तं रामः प्रत्युवाच हसन्निव । मेघगम्भीरया वाचा सर्ववाक्यविशारदः ॥

श्रृण्वन्तु योगिनः शान्ताः समदुःखसुखाःपुनः ।
जानन्त्यपारसंसारनिस्तारकरणादिकम् ॥ ६६ ॥
ये शूराः समहेष्वासाः सर्वशस्त्रास्त्रकोविदाः ।
ते च जानन्ति युद्धस्य वार्तां न तु भवादृशाः ॥ ६७ ॥

परोपतापिनो ये वै ये चोत्पथविसारिणः । ते हन्तव्या नृपैःसर्वैःसर्वलोकहितैषिभिः ॥

इत्युक्तमाकर्ण्य सभासदस्ते सर्वे स्मितं चक्रुररिन्दमस्य ।
कुम्भोद्भवः पूजितमेनमश्वं विमोचयामास सुशोभितं हि ॥ ६९ ॥

इमं मन्त्रं समुच्चार्य वशिष्ठः कलशोद्भवः । कराग्रेण स्पृशन्नश्वं मुमोच जयकाङ्क्षया ॥
वाजिन्गच्छ यथालीलं सर्वत्र धरणीतले । यागार्थे मोचितो येन पुनरागच्छ सत्वरः ॥
अश्वस्तु मोचितः सर्वैर्भटैःशस्त्रास्त्रकोविदैः । परीतःप्रययौ प्राचीं दिशं वायुजवान्वितः
प्रचचार बलं सर्वं कम्पयद्धरणीतलम् । शेषोऽपिकिञ्चिन्नतया फणया धृतवान्भुवम्

दिशः प्रसेदुः परितः क्ष्मातलं शोभयान्वितम् ।
वायवस्तं तु शत्रुघ्नं पृष्ठतो मन्दगामिनः ॥ ७४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शत्रुघ्नस्य प्रयाणायाभ्युद्यतस्य भुजोऽस्फुरत्। दक्षिणः शुभमाशंसञ्जयाय च बभूव ह
पुष्कलःस्वगृहं रम्यं प्रविवेश समृद्धिमत्। वितर्दिभिर्वलक्षाभिः शोभितं रत्नवेदिकम्
तत्रापश्यन्निजां भार्यां पतिव्रतपरायणाम्। किञ्चित्स्वदर्शनाद्धृष्टांभर्तृदर्शनलालसाम्

मुखारविन्देन च नागवल्लीदलं सुकर्पूरयुतं च चर्वती।
नासाफलं तोयभवं महाधनं बाह्वोर्मृणालीसदृशोः सुकङ्कणे ॥ ७८ ॥
कुचौ तु मालूरफलोपमौ वरौ नितम्बबिम्बं वरनीविशोभितम्।
पादौ तुलाकोटिधरौ सुकोमलौ दधत्यहो! ऐक्षत सत्पतिं स्वकम् ॥७९॥
परिरभ्य प्रियां धीरो गद्गदस्वरभाषिणीम्।
तदुरोजपरीरम्भनिर्भरीकृतदेहिकाम् ॥ ८० ॥

उवाच भद्रे! गच्छामि शत्रुघ्नपृष्ठरक्षकः। रामाऽऽज्ञया याज्ञमश्वं पालयन्रथसंयुतः॥
त्वया मे मातरःपूज्याःपादसंवाहनादिभिः। तदुच्छिष्टं हि भुञ्जानातत्कर्मकरणादरा॥

सर्वाः पतिव्रता नार्यो लोपामुद्रादिकाः शुभाः।
नावमान्यास्त्वया भीरु! स्वतपोबलशोभिताः ॥ ८३ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
हयमोचनपुष्कलभार्यासमागमो नामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः

### पुष्कलपत्न्या स्वपतिं विजयमात्रोत्सुकं वीक्ष्य तदभिनन्दनम्

शेष उवाच।

इत्युक्तवन्तं स्वपतिं वीक्ष्य प्रेम्णा सुनिर्भरम्।
प्रत्युवाच हसन्तीव किञ्चिद् गद्गदभाषिणी ॥ १ ॥

नाथ! ते विजयो भूयात्सर्वत्र रणमण्डले। शत्रुघ्नाज्ञा प्रकर्तव्या हयरक्षा यथाभवे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्मरणीया हि सर्वत्र सेविका त्वत्पदानुगा।
कदापि मानसं नाथ! त्वत्तो नाऽन्यत्र गच्छति ॥३॥
परमायोधने कान्त! स्मर्तव्याहं न जातुचित्।
सत्यां मयि तव स्वान्ते युद्धे विजयसंशयः ॥ ४ ॥
पद्मनेत्र! तथा कार्यमूर्मिलाग्रा यथा मम। हास्यंनैव प्रकुर्वन्ति मां वीक्ष्य करताडनैः॥
इयं पत्नी महाभीरोःसङ्ग्रामे प्रपलायितुः। कातरायर्हि युद्ध्यन्ति शूराणां समयःकुतः
इत्येवं न हसन्त्युच्चैर्यथा मे देवराङ्गनाः। तथा कार्यं महाबाहो रामस्य हयरक्षणे ॥
योद्धा त्वमादौ सर्वत्र परे ये तव पृष्ठतः। धनुष्टङ्कारवधिराः क्रियन्तां बलिनः परे ॥
तव प्रोद्यत्कराम्भोजकरवालभियाबलम्।
परेषां भवतात्क्षिप्रमन्योन्यभयसङ्कुलम् ॥ ८ ॥
कुलं महदलङ्कार्यं परान्विजयता त्वया। गच्छस्वामिन्महाबाहो! तव श्रेयो भवत्विह
इदं धनुर्गृहाणाऽऽशु महद्गुणविभूषितम्। यस्य गर्जितमाकर्ण्य वैरिवृन्दभयातुरम् ॥
इमौ ते त्विषुधी वीर! बध्येतां शं यथा भवेत्।
वैरिकोटिविनिष्पेषबाणकोटिसुपूरितौ ॥ १२ ॥
कवचं त्विदमाधेहि शरीरे कामसुन्दरे। वज्रप्रभामहादीप्तिहतसन्तमसंदृढम् ॥ १३ ॥
शिरस्त्राणं निजोत्तंसे कुरु कान्त! मनोरमम्। इमेवतंसे विशदे मणिरत्नविभूषिते ॥
इति सुविमलवाचं वारिपुत्रीं प्रपश्यन्नयनकमलदृष्ट्या वीक्षमाणस्तदङ्गम्।
अधिगतपरिमोदो भारतिः शत्रुजेता रणकरणसमर्थस्तां जगादाऽतिधीरः ॥

पुष्कल उवाच।

कान्ते यत्त्वं वदसि मां तथा सर्वं चराम्यहम्।
वीरपत्नि! भवेत्कीर्तिस्तवकान्तिमीप्सिता ॥ १६ ॥
इति कान्तिमतीदत्तं कवचं मुकुटं वरम्। धनुर्महेषुधी खड्गं सर्वं जग्राह वीर्यवान् ॥
परिधाय च तत्सर्वं बहुशोभासमन्वितः। शुशुभेऽतीव सुभटःसर्वशस्त्रास्त्रकोविदः ॥
तमस्त्रशस्त्रशोभाढ्यं वीरमालाविभूषितम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुङ्कुमागुरुकस्तूरीचन्दनादिकचर्चितम् ॥ १६ ॥
नाना कुसुममालाभिराजानुपरिशोभितम् ।
नीराजयामास मुहुस्तत्र कान्तिमती सती ॥ २० ॥
नीराजयित्वा बहुशः किरन्ती मौक्तिकैर्मुहुः । गलदश्रुचलन्नेत्रा परिरेभे पतिं निजम् ॥
दृढं स परिरभ्यैतां चिरमाश्वासयत्तदा । वीरपत्नि ! कान्तिमति विरहं मा कृथा मम
एष गच्छामि सविधात्तव भामे! पतिव्रते! । इत्युक्त्वा तां निजां पत्नीं रथमारुरुहे वरम्
तं प्रयान्तं पतिश्रेष्ठं नयनैर्निमिषोज्झितः । विलोकयामास तदा पतिव्रतपरायणा ॥
स ययौ जनकं द्रष्टुं जननीं प्रेमविह्वलाम् । गत्वा पितरमम्बां च ववन्दे शिरसा मुदा ॥
माता पुत्रं परिष्वज्य स्वाङ्कमारोपयत्तदा ।
मुञ्चन्ती वाष्पनिचयं स्वस्त्यस्त्विति जगाद सा ॥ २६ ॥
पितरं प्राह भरतं रामो यज्ञकरः परः । पालनीयो लक्ष्मणेन भवद्भिश्च महात्मभिः ॥२७
आज्ञप्तोऽसौ जनन्या च पित्रा हृषितया गिरा । ययौ शत्रुघ्नकटकं महावीरविभूषितम् ॥
रथिभिः पत्तिभिर्वीरैः सदश्वैः सादिभिर्वृतः । ययौ मुदा रघूत्तंसमहायज्ञहयाग्रणीः ॥२६
गच्छन्पाञ्चालदेशांश्च कुरूंश्चैवोत्तरान्कुरून् ।
दशार्णाञ्छ्रीविशालांश्च सर्वशोभासमन्वितः ॥ ३० ॥
तत्र तत्रोपशृण्वानो रघुवीरयशोऽखिलम् । रावणासुरघातेन भक्तरक्षाविधायकम् ॥
पुनश्च हयमेधादि कार्यमारभ्य पावनम् । यशो वितन्वन्भुवने लोकान्रामोऽविता भयात्
तेभ्यस्तुष्टो ददौ हारान्रत्नानि विविधानि च । महाधनानि वासांसि शत्रुघ्नः प्रवरो महान्
सुमतिर्नाम तेजस्वी सर्वविद्याविशारदः । रघुनाथस्य सचिवः शत्रुघ्नानुचरो वरः ॥३४॥
ययौ तेन महावीरो ग्रामाञ्जनपदान्बहून् । रघुनाथप्रतापेन न कोऽपि हृतवान्हयम् ॥३५
देशाधिपा ये बहवो महाबलपराक्रमाः । हस्त्यश्वरथपादातचतुरङ्गसमन्विताः ॥३६॥
सम्पदो बहुशो नीत्वा मुक्तामाणिक्यसंयुताः ।
शत्रुघ्नं हयरक्षार्थमागतं प्रणता मुहुः ॥ ३७ ॥
इदं राज्यं धनं सर्वं सपुत्रपशुबान्धवम् । रामचन्द्रस्य सर्वं हि न मदीयं रघूद्वह ! ॥३८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं तदुक्तमाकर्ण्य शत्रुघ्नःपरवीरहा । आज्ञां स्वां तत्र संज्ञाप्य ययौ तैः सहितः पथि ॥
एवं क्रमेण सम्प्राप्तःशत्रुघ्नो हयसंयुतः । अहिच्छत्रां पुरीं ब्रह्मन्नानाजनसमाकुलाम् ॥

ब्रह्मद्विजसमकीर्णां नानारत्नविभूषिताम् ।
सौवर्णैः स्फाटिकैर्हर्म्यैर्गोपुरैःसमलङ्कृताम् ॥ ४१ ॥
यत्र रम्भातिरस्कारकारिण्यः कमलाननाः ।
दृश्यन्ते सर्वहर्म्येषु ललना लीलयान्विताः ॥ ४२ ॥

यत्र स्वाचारललिताःसर्वभोगैकभोगिनः । धनदानुचरा यद्वत्तथा लीलासमन्विताः ॥
यत्र वीरा धनुर्हस्ताःशरसन्धानकोविदाः । कुर्वन्ति तत्र राजानं सुहृष्टं सुमदाभिधम्
एवं विधं ददर्शाऽसौ नगरं दूरतःप्रभुः । पार्श्वे तस्य सुरश्रेष्ठमुद्यानं शोभयाऽन्वितम् ॥
पुन्नागैर्नागचम्पैश्च तिलकैर्देवदारुभिः । अशोकैःपाटलैश्चूतैर्मन्दारैःकोविदारकैः ॥४६॥

आम्रजम्बुकदम्बैश्च प्रियालपनसैस्तथा ।
शालैस्तालैस्तमालैश्च मल्लिकाजातियूथिभिः ॥ ४७ ॥

नीपैःकदम्बैर्बकुलैश्चम्पकैर्मदनादिभिः । शोभितं स ददर्शाऽथ शत्रुघ्नःपरवीरहा ॥ ४८ ॥

हयो गतस्तद्वनमध्यदेशे तमालतालादिसुशोभिते वै ।
ययौ ततः पृष्ठत एव वीरो धनुर्धरैःसेवितपादपद्मः ॥ ४६ ॥

ददर्श तत्र रचितं देवायतनमद्भुतम् । इन्द्रनीलैश्च वैडूर्यैस्तथा मारकतैरपि ॥ ५० ॥
शोभितं सुरसेवार्हं कैलासप्रस्थसन्निभम् । जातरूपमयैःस्तम्भैःशोभितं सद्मनां वरम्

दृष्ट्वा तद्रघुनाथस्य भ्राता देवालयं वरम् ।
पप्रच्छ सुमतिं स्वीयं मन्त्रिणं वदतां वरम् ॥ ५२ ॥

शत्रुघ्न उवाच ।

वदाऽमात्यवरेदं किं कस्य देवस्य केतनम् । का देवता पूज्यतेऽत्र कस्य हेतोःस्थिताऽनघ

सुमति रुवाच

एवमाकर्ण्य सर्वज्ञो मन्त्रविन्निजगाद ह । शृणुष्वैकमना वीर ! यथावदिह सर्वशः ॥
कामाक्षायाःपरं स्थानं विद्धि विश्वैकशर्मदम् । यस्या दर्शनमात्रेण सर्वसिद्धिःप्रजायते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवासुरास्ते यां स्तुत्वा नत्वा प्राप्ताखिलां श्रियम् ।
धर्मार्थकाममोक्षाणां दात्री भक्तानुकम्पिनी ॥ ५६ ॥
याचिता सुमदेनात्राहिच्छत्रापतिना पुरा । स्थिता करोति सकलं भक्तानां दुःखहारिणी
तां नमस्कुरुशत्रुघ्न! सर्ववीरशिरोमणे !। नत्वाऽऽशुसिद्धिंप्राप्नोषि ससुरासुरदुर्लभाम्
इति श्रुत्वाऽथ तद्वाक्यं शत्रुघ्नःशत्रुतापनः । पप्रच्छ सकलां वार्तां भवान्याःपुरुषर्षभः

शत्रुघ्न उवाच ।

कोऽहिच्छत्रापती राजा सुमदः किं तपः कृतम् ।
येनेयं सर्वलोकानां माता तुष्टाऽत्र संस्थिता ॥ ६० ॥
वद सर्वं महामात्य ! नानार्थपरिवृंहितम् । यथावत्त्वं हि जानासि तस्माद्वद महामते!

सुमतिरुवाच ।

हेमकूटोगिरिःपूतःसर्वदेवोपशोभितः । तत्रास्ति तीर्थं विमलमृषिवृन्दनिषेवितम् ॥
सुमदो हि तपस्तेपे हतमातृपितृप्रजः । अरिभिःसर्वसामन्तैर्जगाम तपसे हितम् ॥
वर्षाणि त्रीणि स पदा त्वेकेन मनसा स्मरन् ।
जगतां मातरं दध्यौ नासाग्रस्तिमितेक्षणः ॥ ६४ ॥
वर्षाणि त्रीणि शुष्काणां पर्णानां भक्षणं चरन् । चकार परमुग्रं स तपःपरमदुश्चरम्
अब्दानि त्रीणि सलिले शीतकाले ममज्ज सः ।
ग्रीष्मे चचार पञ्चाग्नीन्प्रावृट्सु जलदोन्मुखः ॥ ६६ ॥
त्रीणि वर्षाणि पवनं संरुध्य स्वान्तगोचरम् ।
भवानीं संस्मरन्धीरो न च किञ्चन पश्यति ॥ ६७ ॥
वर्षे तु द्वादशेऽतीते दृष्ट्वैतत्परमं तपः । विभाव्य मनसाऽतीव शक्रःपस्पर्धे तंभयात्
आदिदेश सकामं तु परिवारपरीवृतम् । अप्सरोभिः सुसंयुक्तं ब्रह्मेन्द्रादिजयोद्यतम्
गच्छ कामसखे ! मह्यं प्रियमाचर मोहन ! । सुमदस्य तपोविघ्नं समाचर यथा भवेत्
इति श्रुत्वा महद्वाक्यं तुरासाहः स्वयं प्रभुः ।
उवाच विश्वविजये प्रौढगर्वो रघूद्वह ! ॥ ७१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काम उवाच।

स्वामिन्कोऽसौ हि सुमदः किं तपः स्वल्पकं पुनः।
ब्रह्मादीनां तपोभङ्गं करोम्यस्य तु का कथा॥ ७२॥
मद्बाणबलनिर्भिन्नश्चन्द्रस्तारां गतः पुरा।
त्वमप्यहल्यां गतवान्विश्वामित्रस्तु मेनकाम्॥ ७३॥
चिन्तां मा कुरु देवेन्द्र! सेवके मयि संस्थिते। एष गच्छामि सुमदं देवान्पालय मारिष
एवमुक्त्वा कामदेवो हेमकूटं गिरिं ययौ। वसन्तेन युतःसख्या तथैवाप्सरसां गणैः॥
वसन्तस्तत्र सकलान्वृक्षान्पुष्पफलैर्युतान्।
कोकिलान्षट्पदश्रेण्या पुष्टानाशु चकार ह॥ ७६॥
वायुःसुशीतलो वाति दक्षिणां दिशमाश्रितः। कृतमालासरित्तीरलवङ्गकुसुमान्वितः
एवंविधे वने वृत्ते रम्भानामाऽप्सरो वरा।
सखीभिःसंवृता तत्र जगाम सुमदान्तिकम्॥ ७८॥
तत्रारभत गानं सा किन्नरस्वरशोभना। मृदङ्गपणवानेकवाद्यभेदविशारदा॥ ७९॥
तद्गानमाकर्ण्य नराधिपोऽसौ वसन्तमालोक्य मनोहरञ्च।
तथान्यपुष्टारटितं मनोरमं चकार चक्षुःपरिवर्तनं बुधः॥ ८०॥
तं प्रबुद्धं नृपं वीक्ष्य कामःपुष्पायुधस्त्वरन्। चकार सत्वरं सज्यं धनुस्तत्पृष्ठतोऽनघ
एकाप्सरास्तत्र नृपस्य पादयोःसंवाहनं नर्तितनेत्रपल्लवा।
चकार चान्या तु कटाक्षमोक्षणं चकार काचिद् भृशमङ्गचेष्टितम्॥ ८२॥
अप्सरोभिस्तथाकीर्णःकामविह्वलमानसः।
चिन्तयामास मतिमाञ्जितेन्द्रियशिरोमणिः॥ ८३॥
एता मे तपसो विघ्नकारिण्योऽप्सरसां वराः।
शक्रेण प्रेषिताःसर्वाःकरिष्यन्ति यथातथम्॥ ८४॥
इति सञ्चिन्त्य सुतपास्ता उवाच वराङ्गनाः।
का यूयं कुत्र संस्थाःकिं भवतीनां चिकीर्षितम्॥ ८५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्यद्भुतं जातमहो यद्भवत्योऽक्षिगोचराः ।
यास्तपोभिः सुदुष्प्राप्यास्ता मे तपस आगताः ॥ ८६ ॥

इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे कामाक्षोपाख्यानं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः

### सुमदाप्सरः सम्भाषणम् ।

शेष उवाच ।

इति वाक्यं समाकर्ण्य सुमदस्य तपोनिधेः । जगदुःकामसेनास्तं रम्भाद्यप्सरसो मुदा
त्वत्तपोभिर्वयं कान्त ! प्राप्ताःसर्ववराङ्गनाः ।
तासां यौवनसर्वस्वं भुङ्क्ष्व त्यज तपः फलम् ॥ २ ॥
इयं घृताची सुभगा चम्पकाभशरीरभृत् । कर्पूरगन्धललितं भुनक्तु त्वन्मुखामृतम् ॥
एतां महाभाग सुशोभिविभ्रमां मनोहराङ्गीं घनपीनसत्कुचाम् ।
कान्तोपभुङ्क्ष्वाऽऽशु निजोग्रपुण्यतःप्राप्तां पुनस्त्वं त्यज दुःखजातम् ॥४॥
मामप्यनर्घ्याभरणोपशोभितां मन्दारमालापरिशोभिवक्षसम् ।
नानारताख्यानविचारचंचुरां दृढं यथास्यात्परिरम्भणं कुरु ॥ ५ ॥
पिवामृतं मामकवक्त्रनिर्गतं विमानमारुह्य वरं मया सह ।
सुमेरुशृङ्गं वहुपुण्यसेवितं सम्प्राप्य भोगं कुरु सत्तपःफलम् ॥ ६ ॥
तिलोत्तमा यौवनरूपशोभिता गृह्णातु ते मूर्धनि तापवारणम् ।
सुचामरौ सन्ततधारयाङ्कितौ गङ्गाप्रवाहाविव सुन्दरोत्तम ! ॥ ७ ॥
शृणुष्व भोःकामकथां मनोहरां पिबामृतं देवगणादिवाञ्छितम् ।
उद्यानमासाद्य च नन्दनाभिधं वराङ्गनाभिर्विहरं कुरु प्रभो ! ॥ ८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्युक्तमाकर्ण्य महामतिर्नृपो विचारयामास कुतो ह्युपस्थिताः ।
मया सुसृष्टास्तपसा सुराङ्गनाःप्रत्यूह एवात्र विधेयमेष किम् ॥ ९ ॥
इति चिन्तातुरो राजा स्वान्ते सञ्चिन्तयन्सुधीः ।
जगाद मतिमान्वीरःसुमदो देवताङ्गनाः ॥ १० ॥
यूयं तु मम चित्तस्था जगन्मातृस्वरूपकाः ।
मया सञ्चिन्त्यते या हि साऽपि त्वद्रूपिणी मता ॥ ११ ॥
इदं तुच्छं स्वर्गसुखं त्वयोक्तं सविकल्पकम् ।
मत्स्वामिनी मया भक्त्या सेविता दास्यते वरम् ॥ १२ ॥
यत्कृपातो विधिः सत्यलोकं प्राप्तो महानभूत् ।
सा मे दास्यति सर्वं हि भक्तदुःखान्तकारिणी ॥ १३ ॥
किं नन्दनं किं तु गिरिःकनकेन सुमण्डितः ।
किं सुधा स्वल्पपुण्येन प्राप्या दानवदुःखदा ॥ १४ ॥
इति वाक्यं समाकर्ण्य कामस्तु विविधैःशरैः । प्राहरन्नरदेवस्य कर्तुं किञ्चिन्न वै प्रभुः
कटाक्षैर्नूपुरारावैःपरिरम्भैर्विलोकनैः । न तस्य चित्तं विभ्रान्तं कर्तुं शक्ता वराननाः
गत्वा यथागतं शक्रं जगदुर्धीरधीर्नृपः । तच्छ्रुत्वा मघवा भीतो मोघमारम्भमात्मनः
अथ निश्चितमालोक्य पादपद्मे स्वकेऽम्बिका ।
जितेन्द्रियं महाराजं प्रत्यक्षाऽभूत्सुतोषिता ॥ १८ ॥
पञ्चास्यपृष्ठललिता पाशाङ्कुशधरा वरा । धनुर्बाणधरा माता जगत्पावनपावनी ॥
तां वीक्ष्य मातरं धीमान्सूर्यकोटिसमप्रभाम् ।
धनुर्बाणसृर्णीपाशान्दधानां हर्षमाप्तवान् ॥ २० ॥
शिरसा बहुशो नत्वा मातरं भक्तिभाविताम् । हसन्तीं निजदेहेषु स्पृशन्तीं पाणिनामुहुः
तुष्टाव भक्त्युत्कलितचित्तवृत्तिर्महामतिः । गद्गदस्वरसंयुक्तःकण्टकाङ्गोपशोभितः ॥
जय देवि ! महादेवि ! भक्तवृन्दैकसेविते ! । ब्रह्मरुद्रादिदेवेन्द्रसेविताङ्घ्रियुगेऽनघे ! ॥
मातस्तव कलाविद्धमेतद्भाति चराचरम् । त्वद्वते नास्ति सर्वं तन्मातर्भद्रे ! नमोऽस्तु ते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महीं त्वयाऽऽधारशक्त्या स्थापिता चलतीह न ।
सपर्वतवनोद्यानदिग्गजैरुपशोभिता ॥ २५ ॥

सूर्यस्तपति खे तीक्ष्णैरंशुभिःप्रतपन्महीम् । त्वच्छक्त्या वसुधासंस्थं रसं गृह्णन्विमुञ्चति
अन्तर्बहिःस्थितो वह्निर्लोकानां प्रकरोति शम् । त्वत्प्रतापान्महादेवि ! सुरासुरनमस्कृते !

त्वं विद्या त्वं महामाया विष्णोर्लोकैकपालिनः ।
स्वशक्त्या सृजसीदं त्वं पालयस्यपि मोहिनि ! ॥ २८ ॥

त्वत्तःसर्वे सुराःप्राप्य सिद्धिं सुखमयन्ति वै । मां पालय कृपानाथे! वन्दिते! भक्तवल्लभे!
रक्ष मां सेवकं मातस्त्वदीयचरणारणम् । कुरु मे वाञ्छितां सिद्धिं महापुरुषपूर्वजे !

सुमतिरुवाच ।

एवं तुष्टा जगन्माता वृणीष्व वरमुत्तमम् । उवाच भक्तं सुमदं तपसाकृशदेहिनम् ॥
इत्येतद्वाक्यमाकर्ण्य प्रहृष्टःसुमदो नृपः । वव्रे निजं हृतं राज्यं हतदुर्जनकण्टकम् ॥ ३२
महेशीचरणद्वन्द्वे भक्तिमव्यभिचारिणीम् । प्रान्ते मुक्तिं तु संसारवारिधेस्तारिणीं पुनः

कामाक्षोवाच ।

राज्यं प्राप्नुहि सुमद ! सर्वत्र हतकण्टकम् । महिलारत्नसञ्जुष्टपादपद्मद्वयो भव ॥
तव वैरिपराभूतिर्मा भूयात्सुमदाभिध ! । यदा तु रावणं हत्वा रघुनाथो महायशाः ॥
करिष्यत्यश्वमेधं हि सर्वसम्भारशोभितम् । तस्य भ्राता महावीरःशत्रुघ्नःपरवीरहा ॥
पालयन्हयमायास्यत्यत्र वीरादिभिर्वृतः । तस्मै सर्वं समर्प्य त्वं राज्यमृद्धं धनादिकम्

पालयिष्यसि योधैः स्वैर्धनुर्धारिभिरुद्भटैः ।
ततःपृथिव्यां सर्वत्र भ्रमिष्यसि महामते ! ॥ ३८ ॥
ततो रामं नमस्कृत्य ब्रह्मेन्द्रेशादिसेवितम् ।
मुक्तिं प्राप्स्यसि दुष्प्रापां योगिभिर्यमसाधनैः ॥ ३९ ॥
तावत्कालमिहस्थास्ये यावद्रामहयागमः ।
पश्चात्त्वां तु समुद्धृत्य गन्ताऽस्मि परमं पदम् ॥ ४० ॥
इत्युक्त्वाऽन्तर्दधे देवी सुरासुरनमस्कृता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुमदोऽप्यहिच्छत्रायां शत्रून्हत्वा नृपोऽभवत् ॥ ४१ ॥

एष राजा समर्थोऽपि बलवाहनसंयुतः । न ग्रहीष्यति ते वाहं महामायासुशिक्षितः ॥

श्रुत्वा प्राप्तं पुरीपार्श्वे हयमेधहयोत्तमम् ।

त्वां च सर्वैर्महाराजैः सेविताङ्घ्रिं महामतिम् ॥ ४३ ॥

सर्वं दास्यति सर्वज्ञ ! राजा सुमदनामधृत् । अधुनातन्महाराजरामचन्द्रप्रतापतः ॥४४॥

शेष उवाच ।

इति वृत्तं समाकर्ण्य सुमदस्य महायशाः । साधु साध्विति चोवाच जहर्ष मतिमान्बली

अहिच्छत्रापतिःसर्वैःस्वगणैःपरिवारितः । सभायां सुखमास्ते यो बहुराजन्यसेवितः ॥

ब्राह्मणा वेदविदुषो वैश्या धनसमृद्धयः । राजानं पर्युपासन्ते सुमदं शोभयान्वितम् ॥

वेदविद्याविनोदेन न्यायिनो ब्राह्मणावराः ।

आशीर्वदन्ति तं भूपं सर्वलोकैकरक्षकम् ॥ ४८ ॥

एतस्मिन्समये कश्चिदागत्य नृपतिं जगौ ।

स्वामिन्न जाने कस्यास्ति हयः पत्रधरोऽन्तिके ॥ ४६ ॥

तच्छ्रुत्वा सेवकं श्रेष्ठं प्रेषयामास सत्वरः ।

जानीहि कस्य राज्ञोऽयमश्वो मम पुरान्तिके ॥ ५० ॥

गत्वाऽथ सेवकस्तत्र ज्ञात्वा वृत्तान्तमादितः ।

निवेदयामास नृपं महाराजन्यसेवितम् ॥ ५१ ॥

स श्रुत्वा रघुनाथस्य हयं नित्यमनुस्मरन् ।

आज्ञापयामास जनं सर्वं राजा विशारदः ॥ ५२ ॥

लोका मदीया सर्वे ये धन्यधान्यसमाकुलाः ।

तोरणादीनि गेहेषु मङ्गलानि सृजन्त्विह ॥ ५३ ॥

कन्याःसहस्रशो रम्याःसर्वाभरणभूषिताः । गजोपरि समारूढा यान्तु शत्रुघ्नसंमुखम् ॥

इत्यादि सर्वमाज्ञाप्य ययौ राजा स्वयं ततः । पुत्रपौत्रमहिष्यादिपरिवारसमावृतः ॥

शत्रुघ्नःसुमहामात्यैःसुभटैःपुष्कलादिभिः । संयुतो भूपतिं वीरं ददर्श सुमदाभिधम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हस्तिभिःसादिसंयुक्तैःपत्तिभिःपरतापनैः । वाजिभिर्भूषितैर्वीरैःसंयुतं वीरशोभितम् ॥

अथागत्य महाराजःशत्रुघ्नं नतवान्मुदा ।
धन्योऽस्मि कृतकृत्योऽस्मि सत्कृतं च कृतं वपुः॥ ५८ ॥

इदं राज्यं गृहाणाशु महराजोपशोभितम् । महामाणिक्यमुक्तादिमहाधनसुपूरितम् ॥

स्वामिंश्चिरं प्रतीक्षेऽहं हयस्यागमनं प्रति ।
कामाक्षाकथितं पूर्वं जातं सम्प्रति तत्तथा ॥ ६० ॥

विलोकय पुरं मह्यं कृतार्थान्कुरु मानवान् । पावयास्मत्कुलं सर्वं रामानुज ! महीपते !

इत्युक्त्वाऽऽरोहमायास कुञ्जरं चन्द्रसुप्रभम् ।
पुष्कलं च महावीरं तथा स्वयमथाऽऽरुहत् ॥ ६२ ॥

भेरीपणवतूर्याणां वीणादीनां स्वनस्तदा । व्याप्नोति स्म महाराज ! सुमदेन प्रणोदितः

कन्याःसमागत्य महानरेन्द्र शत्रुघ्नमिन्द्रादिकसेविताङ्घ्रिम् ।
करिस्थिता मौक्तिकवृन्दसङ्घैर्वर्धापयामासुरिनप्रयुक्ताः ॥ ६४ ॥

शनैःशनैः समागत्य पुरिमध्ये जनैर्मुदा । वर्धापितो गृहं प्राप तोरणादिकभूषितम् ॥

हयरत्नेन संयुक्तस्तथा वीरैःसुशोभितः । राज्ञा पुरस्कृतो राजा शत्रुघ्नःप्राप मन्दिरम् ॥

अर्घादिभिःपूजयित्वा रघुनाथानुजं तदा । सर्वं समर्पयामास रामचन्द्राय धीमते ॥

इति श्रीपाद्मे महापुराणे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
शत्रुघ्नाहिच्छत्रापुरिप्रवेशो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

————

## चतुर्दशोऽध्यायः

### सुमदस्य शत्रुघ्नेन सह संवादः

शेष उवाच ।

अथ स्वागतसन्तुष्टं शत्रुघ्नं प्राह भूमिपः । रघुनाथकथां श्रेष्ठां शुश्रूषुःपुरुषर्षभः ॥ १ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुमद उवाच ।

कच्चिदास्ते सुखं रामःसर्वलोकशिरोमणिः । भक्तरक्षावतारोऽयं ममानुग्रहकारकः ॥२॥

धन्या लोका इमे पुर्यां रघुनाथमुखाम्बुजम् ।
ये पिबन्त्यनिशं चाक्षिपुटकैः परिमोदिताः ॥ ३ ॥

अथ जातं मदीयं च नितरां पुरुषर्षभ ! । कृतार्थं कुलभूम्यादि वस्तु जातं महामते ! ॥४॥
कामाक्षया प्रसादो मे कृतःपूर्वं दयार्द्रया । रघुनाथमुखाम्भोजं द्रक्ष्येऽद्य सकुटुम्बकः ॥
इत्युक्तवति वीरे तु सुमदे पार्थिवोत्तमे । सर्वं तत्कथयामास रघुनाथगुणोदयम् ॥
त्रिरात्रं तत्र वै स्थित्वा रघुनाथानुजःपरम् । गन्तुं चकार धिषणां राज्ञा सह महामतिः

तज्ज्ञात्वा सुमदः शीघ्रं पुत्रं राज्येऽभ्यषेचयत् ।
शत्रुघ्नेन महाराज ! पुष्कलेनानुमोदितः ॥ ८ ॥

वासांसि बहुरत्नानि धनानि विविधानि च । शत्रुघ्नसेवकेभ्योऽसौ प्रादात्तत्र महामतिः
ततो गमनमारेभे मन्त्रिभिर्बहुवित्तमैः । पत्तिभिर्वाजिभिर्नागैःसदश्वै रथकोटिभिः ॥
शत्रुघ्न सहितस्तेन सुमदेन धनुर्भृता । जगाम मार्गे विहसन्रघुनाथप्रतापभृत् ॥ ११ ॥
पयोष्णीतीरमासाद्य जगाम स हयोत्तमः । पृष्ठतोऽनुययुःसर्वे योधा वै हयरक्षिणः ॥

आश्रमान्विविधान्पश्यन्नृषीणां सुतपोभृताम् ।
तत्र तत्र विश्रृण्वानो रघुनाथगुणोदयम् ॥ १३ ॥

एष धीमान्हरिर्याति हरिणा परिरक्षितः । हरिभिर्हरिभक्तैश्च हरिवर्यानुगैर्मुहुः ॥ १४ ॥

इति श्रृण्वञ्छुभा वचो मुनीनां परितः प्रभुः ।
तुतोष भक्त्युत्कलितचित्तवृत्तिभृतां महान् ॥ १५ ॥

ददर्श चाश्रमं शुद्धं जनजन्तुसमाकुलम् । वेदध्वनिहताशेषामङ्गलं श्रृण्वतां नृणाम् ॥
अग्निहोत्रहविर्धूमपवित्रितनभस्थलम् । मुनिवर्यकृतानेकयागयूपसुशोभितम् ॥ १७ ॥

यत्र गावस्तु हरिणा पाल्यन्ते पालनोचिताः ।
मूषका न खनन्त्यस्मिन्बिडालस्य भयाद् बिलम् ॥ १८ ॥
मयूरैर्नकुलैः सार्द्धं क्रीडन्ति फणिनोऽनिशम् ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गजैः सिंहैर्नित्यमत्र स्थीयते मित्रतां गतैः ॥ १९ ॥
एणास्तत्रत्यनीवारभक्षणेषु कृतादराः । न भयं कुर्वते कालाद्रक्षिता मुनिवृन्दकैः ॥
गावः कुम्भसमोधस्का नन्दिनीसमविग्रहाः ।
कुर्वन्ति चरणोत्थेन रजसेलां पवित्रिताम् ॥ २१ ॥
मुनिवर्याः समित्पाणिपद्मैर्धर्मक्रियोचिताम् ।
दृष्ट्वा पप्रच्छ सुमतिं सर्वज्ञं राममन्त्रिणम् ॥ २२ ॥

शत्रुघ्न उवाच ।

सुमते ! कस्य संस्थानं मुनेर्भाति पुरोगतम् । निर्वैरिजन्तुसंसेव्यं मुनिवृन्दसमाकुलम्
श्रोष्यामि मुनिवार्तां च विदधामि पवित्रताम् ।
निजं वपुस्तदीयाभिर्वार्ताभिर्वर्णनादिभिः ॥ २४ ॥
इति श्रुत्वा महद्वाक्यं शत्रुघ्नस्य महात्मनः । कथयामास सचिवो रघुनाथस्य धीमतः

सुमतिरुवाच ।

च्यवनस्याश्रमं विद्धि महातापसशोभितम् । निर्वैरि जन्तुसङ्कीर्णं मुनिपत्नीभिरावृतम्
योऽसौ महामुनिःस्वर्गवैद्ययोर्भागमादधात् । स्वायम्भुवमहायज्ञे शक्रमानविभेदनः ॥
महामुनेःप्रभावोऽयं न केनापि समाप्यते । तपोबलसमृद्धस्य वेदमूर्तिधरस्य ह ॥२८॥
श्रुत्वा रामानुजो वार्तां च्यवनस्य महामुनेः । सर्वं प्रपच्छ सुमतिं शक्रमानादिभञ्जनम्

शत्रुघ्न उवाच ।

कदाऽसौदस्रयोर्भागं चकार सुरपङ्क्तिषु । किं कृतं देवराजेन स्वायम्भुवमहामखे ॥

सुमतिरुवाच ।

ब्रह्मवंशेऽतिविख्यातो मुनिर्भृगुरिति श्रुतः । कदाचिद्गतवान्सायं समिदाहरणं प्रति ॥
तदा मखविनाशाय दमनो राक्षसोबलिः । आगत्योच्चैर्जगादेदं महाभयकरं वचः ॥
कुत्रास्ति मुनिबन्धुःस कुत्र तन्महिलाऽनघा । पुनःपुनरुवाचेदं वचो रोषसमाकुलः ॥
तदा हुतवहो ज्ञात्वा राक्षसाद्भयमागतम् । दर्शयामास तज्जायामन्तर्वत्नीमनिन्दिताम् ॥
जहार राक्षसस्तां तु रुदन्तीं कुररीमिव । भृगो ! रक्षपते ! रक्ष रक्ष नाथ ! तपोनिधे !

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

0221221 15858.5.1



एवं वदन्तीमार्तां तां गृहीत्वा निरगाद्बहिः ।
दुष्टो वाक्यप्रहारेण धर्षयन्स भृगोः सतीम् ॥ ३६ ॥
ततो महाभयत्रस्तो गर्भश्चोदरमध्यतः । पपात प्रज्वलन्नेत्रो वैश्वानर इवाङ्गजः ॥३७॥
तेनोक्तं मा व्रजाशु त्वं भस्मी भव सुदुर्मते ! ।
न हि साध्वीपरामर्शं कृत्वा श्रेयोऽधि यास्यसि ॥ ३८ ॥
इत्युक्तःस पपाताशु भस्मीभूतकलेवरः । माता तदाऽर्भकं नीत्वा जगामाश्रममुन्मनाः ॥
भृगुर्वह्निकृतं सर्वं ज्ञात्वा कोपसमाकुलः । शशाप सर्वभक्षस्त्वं भव दुष्टारिसूचक ॥
तदा शप्तोऽतिदुःखार्तो जग्राहाङ्घ्री तनूनपात् । कुरु मेऽनुग्रहं स्वामिन्कृपार्णव महामते
मयाऽनृतं वचो भीत्या कथितं न गुरुद्रुहा । तस्मान्ममोपरि कृपां कुरु धर्मशिरोमणे !
तदानुग्रहमाधाच्च सर्वभक्षो भवाञ्छुचिः । इत्युक्तवान्हुतभुजं दयार्द्रो मुनि तापसः ॥
गर्भाच्च्युतस्य पुत्रस्य जातकर्मादिकं शुचिः ।
चकार विधिवद्विप्रो दर्भपाणिः सुमङ्गलः ॥ ४४ ॥
च्यवनाच्च्यवनं प्राहुःपुत्रं सर्वे तपस्विनः । शनैःशनैः स ववृधे शुक्लप्रतिपदीन्दुवत् ॥
स जगाम तपःकर्तुं रेवां लोकैकपावनीम् । शिष्यैःपरिवृतःसर्वैस्तपोबलसमन्वितैः ॥
गत्वा तत्र तपस्तेपे वर्षाणामयुतं महान् । अंसयोःकिंशुकौ जातौ वल्मीकोपरिशोभितौ
मृगा आगत्य तस्याङ्गे कण्डूं विदधुरुत्सुकाः ।
न किञ्चित्स हि जानाति दुर्वारतपसावृतः ॥ ४८ ॥
कदाचिन्मनुरुद्युक्तस्तीर्थयात्रां प्रति प्रभुः । स कुटुम्बो ययौ रेवां महाबलसमावृतः ॥
तत्र स्नात्वा महानद्यां सन्तर्प्य पितृदेवताः । दानानि ब्राह्मणेभ्यश्च प्रादाद्विष्णुप्रतुष्टये
तत्कन्या विचरन्ती सा वनमध्ये इतस्ततः । सखीभिःसहिता रम्या तप्तहाटकभूषणा
तत्र दृष्ट्वाऽथ वल्मीकं महातरुसुशोभितम् ।
निमेषोन्मेषरहितं तेजः किञ्चिद्ददर्श सा ॥ ५२ ॥
गत्वा तत्र शलाकाभिस्तुदद्रुधिरं स्रवत् । दृष्ट्वा राज्ञोऽङ्गजाखेदं प्राप्तवत्यतिदुःखिता
न जनन्यै तथा पित्रे शशंसाद्येन विप्लुता । स्वयमेवात्मनाऽऽत्मानं सा शुशोच भयातुरा

मुमुक्षु भवन वेद वेदाङ्ग पुस्तकालय
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदा भूश्चलिता राजन्दिवश्चोल्का पपात ह । धूम्रादिशोऽभवन्सर्वाःसूर्यश्च परिवेषितः
तदा राज्ञो हयानष्टा हस्तिनो बहवो मृताः । धनं नष्टं रत्नयुतं कलहोऽभून्मिथस्तदा ॥
तदालोक्य नृपो भीतःकिञ्चिदुद्विग्नमानसः । जनानपृच्छत्केनापि मुनये त्वपराधितम् ॥

पारम्पर्येण तज्ज्ञात्वा स्वपुत्र्याः परिचेष्टितम् ।
ययौ सुदुःखितस्तत्र समृद्धबलवाहनः ॥ ५८ ॥

तं वै तपोनिधिं वीक्ष्य महता तपसायुतम् । स्तुत्वा प्रसादयामास मुनिवर्य ! दयांकुरु
तस्मै तुष्टो जगादायं मुनिवर्यो महातपाः । तवात्मजा कृतं सर्वमुत्पाताद्यमवेहि तत् ॥
तव पुत्र्या महाराज ! चक्षुर्विस्फोटनं कृतम् । बहुसुस्राव रुधिरं जानती त्वामुवाच न
तस्मादियं महाभूप ! मह्यं देया यथाविधि । ततश्चोत्पातशमनं भविष्यति न संशयः ॥

तच्छ्रुत्वा दुःखितो राजा प्रज्ञाचक्षुष आत्मजाम् ।
ददौ कुलवयोरूपशीललक्षणसंयुताम् ॥ ६३ ॥

दत्ता यदा नृपेणेयं कन्या कमललोचना । तदोत्पाताशमं याताःसर्वे मुनिरुषोद्गताः

राजा दत्त्वाऽऽत्मजां तस्मै मुनये तपसांनिधे !
प्राप स्वां नगरीं भूयो दुःखितोऽयं दयायुतः ॥ ६५ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
च्यवनोपाख्यानं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः

### च्यवनसुकन्यावृत्तान्तवर्णनम् ।

सुमतिरुवाच ।

अथर्षिःस्वाश्रमं गत्वा मानव्यासह भार्यया । मुदं प्राप हताशेषपातको योगयुक्तया
सा मानवी तं वरमात्मनःपतिं नेत्रेण हीनं जरसा गतौजसम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिषेव एनं हरिमेधसोत्तमं निजेष्टदात्रीं कुलदेवतां यथा ॥ २ ॥
शुश्रूषती स्वं पतिमिङ्गितज्ञा महानुभावं तपसांनिधिं प्रियम् ।
परां मुदं प्राप सती मनोहरा शची यथा शक्रनिषेवणोद्यता ॥ ३ ॥
चरणौ सेवते तन्वी सर्वलक्षणलक्षिता । राजपुत्री सुन्दराङ्गी फलमूलोदकाशना ॥
नित्यं तद्वाक्यकरणे तत्परा पूजनेरता । कालक्षेमं प्रकुरुते सर्वभूतहिते रता ॥ ५ ॥
विसृज्य कामं दम्भं च द्वेषं लोभमघं मदम् । अप्रमत्तोद्यता नित्यं च्यवनं समतोषयत्
एवं तस्य प्रकुर्वाणा सेवां वाक्कायकर्मभिः ।
सहस्राब्दं महाराज ! सा च कामं मनस्यधात् ॥ ७ ॥
कदाचिद्देवभिषजावागतावाश्रमे मुनेः । स्वागतेन सुसम्भाव्य तयोःपूजां चकार सा
शर्यातिकन्याकृतपूजनार्घपाद्यादिना तोषितत्तिवृत्ती ।
तावूचतुः स्नेहवशेन सुन्दरौ वरं वृणीष्वेति मनोहराङ्गीम् ॥ ९ ॥
तुष्टौ तौ वीक्ष्य भिषजौ देवानां वरयाचने । मतिं चकार नृपतेः पुत्री मतिमतांवरा ॥
प्रत्यभिप्रायमालक्ष्य वाचमूचे नृपात्मजा । दत्तं मे चक्षुषी पत्युर्यदि तुष्टौ युवां सुरौ
इत्येतद्वचनं श्रुत्वा सुकन्यायाः मनोहरम् । सतीत्वं च विलोक्येदमूचतुर्भिषजांवरौ ॥
त्वत्पतिर्यदि देवानां भागं यज्ञे दधात्यसौ । आवयोरधुना कुर्वश्चक्षुषोःस्फुटदर्शनम् ॥
च्यवनोऽप्योमिति प्राह भागदाने वरौजसोः ।
तद दृष्ट्वावश्विनौ तमूचतुस्तपतां वरम् ॥ १४ ॥
निमज्जतां भवानस्मिन्ह्रदे सिद्धविनिर्मिते । इत्युक्तोजरया ग्रस्तदेहो धमनिसन्ततः ॥
ह्रदं प्रवेशितोऽश्विभ्यां स्वयं चामज्जतां ह्रदे ।
पुरुषास्त्रय उत्तस्थुरपीच्या वनिताप्रियाः ॥ १६ ॥
रुक्मस्रजःकुण्डलिनस्तुल्यरूपाःसुवाससः । तान्निरीक्ष्य वरारोहा सुरूपान्सूर्यवर्चसः ॥
अजानती पतिं साध्वी ह्यश्विनौ शरणं ययौ ।
दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ ॥ १८ ॥
ऋषिमामन्त्र्य ययतुर्विमानेन त्रिविष्टपम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यक्ष्यमाणे क्रतौ स्वीयभागकार्याशयायुतौ ॥ १६ ॥
कालेन भूयसा क्षामां कर्शितां व्रतचर्यया। प्रेम गद्गदयावाचा पीडितःकृपयाऽब्रवीत् ॥
तुष्टोऽहमद्य तव भामिनि मानदायाःशुश्रूषया परमया हृदि चैकभक्त्या।
यो देहिनामयमतीव सुहृत्स्वदेहो नावेक्षितः समुचितःक्षपितुं मदर्थे॥ २१ ॥
ये मे स्वधर्मनिरतस्य तपःसमाधिविद्याऽऽत्मयोगविजिताभगवत्प्रसादाः।
तानेव ते मदनुसेवनयाऽविरुद्धान्दृष्टिं प्रपश्य वितराम्यभयानशोकान् ॥ २२ ॥
अन्ये पुनर्भगवतो भ्रुव द्विजृम्भ विस्रंसितार्थरचनाः किमुरुक्रमस्य।
सिद्धाऽसि भुङ्क्ष्व विभवान्निजधर्मदेहान्दिव्यान्नरैर्दुरधिगान्नृप विक्रियाभिः ॥२३॥
एवं ब्रुवाणमबलाऽखिलयोगमायाविद्याविचक्षणमवेक्ष्य गताधिरासीत्।
सम्प्रश्रयप्रणयविह्वलया गिरेषद्व्रीडाविलोकविलसद्धसिताननाऽऽह॥ २४ ॥

सुकन्योवाच।

राद्धं बत द्विजवृषैतदमोघयोगमायाधिपे त्वयि विभो तदवैमि भर्तः!।
यस्तेऽभ्यधायि समयःसकृदङ्गसङ्गो भूयाद्गरीयसि गुणःप्रसवःसतीनाम् ॥ २५ ॥
तत्रेति कृत्यमुपशिक्ष्य यथोपदेशं येनैष कर्शिततमोऽतिरिरंसयात्मा।
सिध्येत ते कृतमनो भवधर्षिताया दीनस्तदीश भवनं सदृशं विचक्ष्व ॥ २६ ॥

सुमतिरुवाच।

प्रियायाःप्रियमन्विच्छंश्च्यवनो योगमास्थितः।
विमानं कामगं राजंस्तर्ह्येवाविरचीकरत् ॥ २७ ॥
सर्वकामदुघंरम्यं सर्वरत्नसमन्वितम्। सर्वार्थोपचयोदर्कं मणिस्तम्भैरुपस्कृतम् ॥२८॥
दिव्योपस्तरणोपेतं सर्वकालसुखावहम्।
पट्टिकाभिः पताकाभिर्विचित्राभिरलङ्कृतम् ॥ २९ ॥
स्रग्भिर्विचित्रमालाभिर्मञ्जुशिञ्जत्षडङ्घ्रिभिः।
दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ॥ ३० ॥
उपपर्युपरिविन्यस्तनिलयेषु पृथक्पृथक्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्लृप्तैः कशिपुभिः कान्तं पर्यङ्कव्यजनादिभिः ॥ ३१ ॥
तत्र तत्र विनिक्षिप्तनानाशिल्पोपशोभितम् ।
महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ॥
द्वाःसु विद्रुमदेहल्या भातं वज्रकपाटकम् ॥ ३२ ॥
शिखरेष्विन्द्रनीलेषु हेमकुम्भैरधिश्रितम् ॥ ३३ ॥
चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषु निर्मितैः ।
जुष्टं विचित्रवैतानैर्मुक्ताहारावलम्बितैः ॥ ३४ ॥

हंसपारावतव्रातैस्तत्र तत्र निकूजितम् । कृत्रिमानि विमानानि त्वधिरुह्यावरुह्य च ॥
विहारस्थानविश्रामसंवेशप्राङ्गणाजिरैः । यथोपजोषं रचितैर्विस्मापनमिवात्मनः ॥३६
एवं गृहं प्रपश्यन्तीं नातिप्रीतेन चेतसा । सर्वभूताशयाभिज्ञःस्वयं प्रोवाच तां प्रति ॥

निमज्ज्यास्मिन्ह्रदे भीरु ! विमानमिदमारुह ।
सुभ्रू भर्तुः समादाय वचः कुवलयेक्षणा ॥ ३८ ॥
सरजो बिभ्रती वासो वेणीभूतांश्च मूर्द्धजान् ।
अङ्गं च मलपङ्केन सञ्छन्नं शबलस्तनम् ॥ ३९ ॥

आविवेश सरस्तत्र मुदा शिवजलाशयम् । सान्तःसरसि वेश्मस्थाःशतानि दश कन्यकाः

सर्वाःकिशोरवयसो ददर्शोत्पलगन्धिनीः ।
तां दृष्ट्वा शीघ्रमुत्थाय प्रोचुः प्राञ्जलयःस्त्रियः ॥ ४१ ॥
कर्मकर्यो वयं तुभ्यं शाधि नः करवाम किम् ।
स्नानेन ता महार्हेण स्नापयित्वा मनस्विनीम् ॥ ४२ ॥

दुकूले निर्मले नूत्ने ददुरस्यै च मानद ! । भूषणानि परार्ध्यानि वरीयांसि द्युमन्ति च

अन्नं सर्वगुणोपेतं पानंचैवामृतासवम् ।
अथादर्शे स्वमात्मानं स्रग्विणं विरजोऽम्बरम् ॥ ४४ ॥

ताभिःकृतस्वस्त्ययनं कान्ताभिर्बहुमानितम् । हारेण च महार्हेण रुचकेन चभूषितम् ॥
निष्कग्रीवं वलयिनं क्वणत्काञ्चननूपुरम् । श्रोण्योरध्यस्तया काञ्च्या काञ्चन्याबहुरत्नया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुभ्रु वा सुदता शुक्लस्निग्धापाङ्गेन चक्षुषा ।
पद्मकोशस्पृधा नीलैरलकैश्च लसन्मुखम् ॥ ४७ ॥
यदा सस्मार दयितमृषीणां वल्लभं पतिम् । तत्र चास्ते सहस्त्रीभिर्यत्रास्ते समुनीश्वरः
भर्तुःपुरस्तादात्मानं स्त्रीसहस्रवृतं तदा । निशाम्य तद्योगगतिं संशयं प्रत्यपद्यत ॥
स तां कृतमलस्नानां विभ्राजन्तीमपूर्ववत् ।
आत्मनो बिभ्रतीं रूपं संवीतरुचिरस्तनीम् ॥ ५० ॥
विद्याधरीसहस्रेण सेव्यमानां सुवाससम् । जातभावो विमानं तदारोहयदमित्रहन् ॥
तस्मिन्नलुप्तमहिमा प्रिययाऽनुरक्तो विद्याधरीभिरुपचीर्णवपुर्विमाने ।
बभ्राज उत्कचकुमुद्गणवानपीच्यस्ताराभिरावृत इवोडुपतिर्नभःस्थः ॥५२॥
तेनाष्टलोकपविहारकुलाचलेन्द्रद्रोणीष्वनङ्गसखमारुतसौभगासु ।
सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु रेमे चिरं धनदवल्ललनावरूथी ॥ ५३ ॥
वैश्रम्भके सुरवने नन्दने पुष्पभद्रके । मानसे चैत्ररथ्ये च स रेमे रामया रतः ॥ ५४ ॥
इति श्रीपाद्मेमहापुराणे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे च्यवनस्य
तपोभोगवर्णनं नाम पञ्चदशोऽध्यायः ॥१५॥

---

## षोडशोऽध्यायः

शर्यातियज्ञं प्रति गतयोः सुकन्याच्यवनयोः शर्यातिना सुकन्याभर्त्सनम् ।

सुमतिरुवाच ।

एवं तया क्रीडमानःसर्वत्र धरणीतले । नाबुध्यत गतानब्दाञ्छतसङ्ख्यापरीमितान् ॥
ततो ज्ञात्वाऽथ तद्विप्रःस्वकालपरिवर्तिनीम् ।
मनोरथैश्च सम्पूर्णां स्वस्य प्रियतमां वराम् ॥ २ ॥
न्यवर्तताश्रमं श्रेष्ठं पयोष्णीतीरसंस्थितम् । निर्वैरजन्तुजनतासङ्कुलं मृगसेवितम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्रावसत्स सुतपाःशिष्यैर्वेदसमन्वितैः। सेविताङ्घ्रियुगो नित्यं ततापे परमं तपः ॥
कदाचिदथ शर्यातिर्यष्टुमैच्छत देवताः। तदा च्यवनमानेतुं प्रेषयामास सेवकान् ॥

तैराहूतो द्विजवरस्तत्रागच्छन्महातपाः।
सुकन्यया धर्मपत्न्या स्वाचारपरिनिष्ठया ॥ ६ ॥

आगतं तं मुनिवरं पत्न्या पुत्र्या महायशाः। ददर्श दुहितुःपार्श्वे पुरुषं सूर्यवर्चसम् ॥
राजा दुहितरं प्राह कृतपादाभिवन्दनाम्। आशिषो न प्रयुञ्जानो नातिप्रीतमना इव ॥

चिकीर्षितं ते किमिदं पतिस्त्वया प्रलम्भितो लोकनमस्कृतो मुनिः।
या त्वं जराग्रस्तमसंमतं पतिं विहाय जारं भजसेऽमुमध्वगम् ॥ ९ ॥
कथं मतिस्तेऽवगताऽन्यथा सतां कुलप्रसूतेः कुलदूषणं त्विदम्।
बिभर्षि जारं यदपत्रपाकुलं पितुःस्वभर्तुश्च नयस्यधस्तमाम् ॥ १० ॥

एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता। उवाच तात! जामाता तवैष भृगुनन्दनः
शशंस पित्रे तत्सर्वं वयोरूपाभिलम्भनम्। विस्मितःपरमप्रीतस्तनयां परिषस्वजे ॥
सोमेनायाजयद्वीरं ग्रहं सोमस्य चाग्रहीत्। असोमपोरप्यश्विनोश्च्यवनःस्वेन तेजसा
ग्रहं तु ग्राहयामास तपोबलसमन्वितः। वज्रं गृहीत्वा शक्रस्तु हन्तुं ब्राह्मणसत्तमम् ॥

अपङ्क्तिपावनौ देवौ कुर्वाणं पङ्क्तिगोचरौ।
शक्रं वज्रधरं दृष्ट्वा मुनिः स्वहननोद्यतम् ॥ १५ ॥

हुङ्कारमकरोद्धीमान्स्तम्भयामास तद्भुजम्। इन्द्रःस्तब्धभुजस्तत्र दृष्टःसर्वैश्च मानवैः

कोपेन श्वसमानोऽहिर्यथा मन्त्रनियन्त्रितः।
तुष्टाव स मुनिं शक्रःस्तब्धबाहुस्तपोनिधिम् ॥ १७ ॥
अश्विभ्यां भागदानं च कुर्वन्तं निर्भयान्तरम्।
कथयामास भोःस्वामिन्दीयतामश्विनोर्बलिः ॥ १८ ॥

मया न वार्यते तात! क्षमस्वाघं महत्कृतम्। इत्युक्तःस मुनिःकोपं जहौ तूर्णं कृपानिधिः
इन्द्रोमुक्तभुजोऽप्यासीत्तदानीं पुरुषर्षभ!। एतद्वीक्ष्य जनाःसर्वे कौतुकाविष्टमानसाः
शशंसुर्ब्राह्मणबलं ते तु देवादि दुर्ल्लभम्। ततो राजा बहुधनं ब्राह्मणेभ्योऽददन्महान्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चक्रे चावभृथस्नानं यागान्ते शत्रुतापनः । त्वया पृष्टं यदाचक्ष्व च्यवनस्य महोदयम्
स मया कथितःसर्वस्तपोयोगसमन्वितः । नमस्कृत्य तपोमूर्तिमिमं प्राप्य जयाशिषः
प्रेषय त्वं सपत्नीकं रामयज्ञे मनोरमे ॥ २४ ॥

शेष उवाच ।

एवं तु कुर्वतोर्वार्तां हयःप्रापाश्रमं प्रति । विदध्रद्वायुवेगेन पृथ्वीं खुरविलक्षिताम् ॥
दूर्वाङ्कुरान्मुखाग्रेण चरंस्तत्र महाश्रमे । मुनयो यावदादाय दर्भान्स्नातुं गता नदीम् ॥
शत्रुघ्नःशत्रुसेनायास्तापनःशूरसंमतः । तावत्प्राप मुनेर्वासं च्यवनस्यातिशोभितम् ॥
गत्वा तदाश्रमे वीरो ददर्श च्यवनं मुनिम् ।
सुकन्यायाःसमीपस्थं तपोमूर्तिमिव स्थितम् ॥ २८ ॥
ववन्दे चरणौ तस्य स्वाभिधां समुदाहरन् । शत्रुघ्नोऽहं रघुपतेर्भ्राता वाहस्य पालकः
नमस्करोमि युष्मभ्यं महापापोपशान्तये । इति वाक्यं समाकर्ण्य जगाद मुनिसत्तमः
शत्रुघ्न! तव कल्याणं भूयान्नरवरर्षभ! । यज्ञं पालयमानस्य कीर्तिस्ते विपुला भवेत्
चित्रं पश्यत भो विप्रा! रामोऽपि मखकारकः ।
यन्नामस्मरणादीनि कुर्वन्ति पापनाशनम् ॥ ३२ ॥
महापातकसंयुक्ताःपरदाररता नराः । यन्नामस्मरणोद्युक्ता मुक्ता यान्ति परांगतिम् ॥
पादपद्मसमुत्थेन रेणुनाग्रावमूर्तिभृत् । तत्क्षणाद्गौतमार्धाङ्गी जाता मोहनरूपधृत् ॥
मामकीयस्वरूपस्य ध्यानेन प्रेमनिर्भरा । सर्वपातकराशिं सा दग्ध्वा प्राप्ता सुरूपताम्
दैत्या यस्य मनोहारि रूपं प्रधनमण्डले । पश्यन्तःप्रापुरेतस्य रूपं विकृतिवर्जितम् ॥
योगिनो ध्याननिष्ठा ये यं ध्यात्वा योगमास्थिता ।
संसारभयनिर्मुक्ताः प्रयाताः परमं पदम् ॥ ३७ ॥
धन्योऽहमद्य रामस्य मुखं द्रक्ष्यामि शोभनम् । पयोजदलनेत्रान्तं सुनसं सुभ्रु सून्नतम्
सा जिह्वा रघुनाथस्य नामकीर्तनमादरात् । करोति विपरीताया फणिनो रसनासमा
अद्य प्राप्तं तपःपुण्यमद्य पूर्णा मनोरथाः । यद्द्रक्ष्ये रामचन्द्रस्य मुखं ब्रह्मादि दुर्लभम्
तत्पादरेणुना स्वाङ्गं पवित्रं विदधाम्यहम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विचित्रतरवार्ताभिः पावये रसनां स्वकाम् ॥ ४१ ॥
इत्यादि रामचरणस्मरणप्रबुद्धप्रेमव्रजप्रसृतगद्गदवागुदश्रुः ।
श्रीरामचन्द्र ! रघुपुङ्गव ! धर्ममूर्ते ! भक्तानुकम्पक ! समुद्धर संसृतेर्माम् ॥
जल्पन्नश्रुकलापूर्णो मुनीनां पुरतस्तदा ।
नाज्ञासीत्तत्र पारक्यं निजध्यानेन संस्थितः ॥ ४३ ॥
शत्रुघ्नस्तं मुनिं प्राह स्वामिन्नो मखसत्तमः । क्रियतां भवतापादरजसा सुपवित्रितः
महद्भाग्यं रघुपतेर्यद्युष्मन्मानसान्तरे । तिष्ठत्यसौ महाबाहुःसर्वलोकसुपूजितः ॥४५॥
इत्युक्तःसपरीवारःसर्वाग्निपरिसंवृतः । जगाम च्यवनस्तत्र प्रमोदह्रदसम्प्लुतः ॥ ४६ ॥
हनूमांस्तं पदायान्तं रामभक्तमवेक्ष्य ह । शत्रुघ्नं निजगादासौ वचो विनयसंयुतः ॥
स्वामिन्कथयसि त्वं चेन्महापुरुषसुन्दरम् ।
रामभक्तं मुनिवरं नयामि स्वपुरीमहम् ॥ ४८ ॥
इति श्रुत्वा महद्वाक्यं कपिवीरस्य शत्रुहा । आदिदेश हनूमन्तं गच्छ प्रापय तं मुनिम्
हनूमांस्तं मुनिं स्वीये पृष्ठ आरोप्य वेगवान् । सकुटुम्बं निनायाशु वायुःख इव सर्वगः
आगतं तं मुनिं दृष्ट्वा रामो मतिमतांवरः । अर्घ्यं पाद्यादिकं चक्रे प्रीतःप्रणयविह्वलः ॥
धन्योऽस्मि मुनिवर्यस्य दर्शनेन तवाधुना ।
पवित्रितो मखो मेऽद्य सर्वसम्भारसम्भृतः ॥ ५२ ॥
इति वाक्यं समाकर्ण्य च्यवनो मुनिसत्तमः । उवाच प्रेमनिर्भिन्न पुलकाङ्गोऽतिनिर्वृतः
स्वामिन्ब्रह्मण्यदेवस्य तव वाडवपूजनम् । युक्तमेव महाराज ! धर्ममार्गं प्ररक्षितुः ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
च्यवनाश्रमे हयगमनं नाम षोडशोऽध्यायः ॥ १६ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सप्तदशोऽध्यायः

## शत्रुघ्नस्याश्वेन सह वाजीपुरं प्रति गमनम्

शेष उवाच ।

शत्रुघ्नश्च्यवनस्याथ दृष्टाऽचिन्त्यं तपोबलम् । प्रशशंस तपो ब्राह्मं सर्वलोकैकवन्दितम्
अहो पश्यत योगस्य सिद्धिं ब्राह्मणसत्तमे । यःक्षणादेव दुष्प्रापं तद्विमानमचीकरत् ॥
क्व भोगसिद्धिर्महती मुनीनाममलात्मनाम् । क्व तपो बलहीनानां भोगेच्छामनुजात्मनाम्

इति स्वगतमाशंसञ्छत्रुघ्नश्च्यवनाश्रमे ।
क्षणं स्थित्वा जलं पीत्वा सुखसम्भोगमाप्तवान् ॥ ४ ॥
हयस्तस्याःपयोष्ण्याख्यनद्याः पुण्यजलात्मनः ।
पयः पीत्वा ययौ मार्गे वायुवेगगतिर्महान् ॥ ५ ॥

योधास्तन्निर्गमं दृष्ट्वा पृष्ठतोऽनुययुस्तदा । हस्तिभिःपत्तिभिःकेचिद्रथैःकेचन वाजिभिः
शत्रुघ्नोऽमात्यवर्येण सुमत्याख्येन संयुतः । पृष्ठतोऽनुजगामाशु रथेन हयशोभिना ॥
गच्छन्वाजीपुरं प्राप्तो विमलाख्यस्य भूपतेः । रत्नातटाख्यं च जनैर्हृष्टपुष्टैःसमाकुलम्
स सेवकादुपश्रुत्य रघुनाथहयोत्तमम् । पुरोऽन्तिके हि सम्प्राप्तं सर्वयोधसमन्वितम्

तदा गजानां सप्तत्या चन्द्रवर्णसमानया ।
अश्वानामयुतैःसार्धं रथानां काञ्चनत्विषाम् ॥ १० ॥
सहस्रेण च संयुक्तः शत्रुघ्नं प्रति जग्मिवान् ।
शत्रुघ्नं स नमस्कृत्य सर्वान्प्राप्तन्महारथान् ॥ ११ ॥

वसुकोशं धनंसर्वं राज्यं तस्मै निवेद्य च । किंकरोमीति राजा तं जगाद पुरतःस्थितः

राजापि तं स्वीयपदे प्रणम्रं दोर्भ्यां दृढं सम्परिषस्वजे महान् ।
जगाम साकं तनये स्वराज्यं निक्षिप्य सर्वं बहुधन्विभिर्वृतः ॥ १३ ॥

रामचन्द्राभिधां श्रुत्वा सर्वे श्रुतिमनोहराम् । सर्वे प्रणम्यतं वाहं ददुर्वसु महाधनम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजानं पूजयित्वा तु शत्रुघ्नःपरमया मुदा ।
सेनया सहितोऽगच्छद्वाजिनःपृष्ठतस्तदा ॥ १५ ॥

एवं सगच्छंस्तन्मार्गे पर्वताग्र्यं ददर्शह । स्फाटिकैःकानकै रप्यै राजितं प्रस्थराजिभिः
जलनिर्झरसंह्रादं नानाधातुकभूतलम् । गैरिकादिकसद्धातुलाक्षारङ्गविराजितम् ॥१७॥

यत्र सिद्धाङ्गनाः सिद्धैःसङ्क्रीडन्तेऽकुतोभयाः ।
गन्धर्वाप्सरसो नागा यत्र क्रीडन्ति लीलया ॥ १८ ॥

गङ्गातरङ्गसंस्पर्श शीतवायुनिषेवितम् । वीणारणद्धं सशुककणसुन्दरशोभितम् ॥१६॥
पर्वतं वीक्ष्य शत्रुघ्न उवाच सुमतिं त्विदम् । तद्दर्शनसमुद्भूतविस्मयाविष्टमानसः ॥
कोऽयं महागिरिवरो विस्मापयति मे मनः । महारजतसत्प्रस्थो मार्गे राजति मेऽद्भुतः
अत्र किं देवतावासो देवानां क्रीडनस्थलम् । यदेतन्मनसःक्षोभं करोति श्रीसमुच्चयैः ॥
इति वाक्यं समाकर्ण्य जगाद सुमतिस्तदा । वक्ष्यमाणगुणागाररामचन्द्रपदाब्जधीः ॥
नीलोऽयं पर्वतो राजन्पुरतो भाति भूमिप ! । मनोहरैर्महाशृङ्गैःस्फाटिकाग्रैःसमन्ततः ॥
एनं पश्यन्ति नो पापाः परदाररता नराः । विष्णोर्गुणगणान्येवै न मन्यन्ते नराधमाः
श्रुतिस्मृतिसमुत्थं ये धर्मसद्भिःसुसाधितम् । न मन्यन्ते स्वबुद्धिस्थहेतुवादविचारणाः

नीलीविक्रयकर्तारो लाक्षाविक्रयकारकाः ।
यो ब्राह्मणो घृतादीनि विक्रीणाति सुरापकः ॥ २७ ॥
कन्यां रूपेण सम्पन्नां न दद्यात्कुलशालिने ।
विक्रीणाति द्रव्यलोभात्पिता पापेन मोहितः ॥ २८ ॥

पत्नीं दूषयते यस्तु कुलशीलवतींनरः । स्वयमेवात्ति मधुरं बन्धुभ्यो न ददाति यः ॥
भोजने ब्राह्मणार्थे च पाकभेदं करोति यः । कृसरं पायसं वापि निजार्थे पाचयेत्कुधीः

अतिथीनवमन्यन्ते सूर्योढान्सुक्षुधार्दितान् ।
अन्तरिक्षभुजो ये च ये च विश्वासघातकाः ॥ ३१ ॥

न पश्यन्ति महाराज ! रघुनाथपराङ्मुखाः । असौ पुण्यो गिरिवरः पुरुषोत्तमशोभितः
पवित्रयति सर्वान्नो दर्शनेन मनोहरः । अत्र तिष्ठति देवानां मुकुटैरर्चिताङ्घ्रिकः ॥३२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुण्यवद्भिर्दर्शनार्हःपुण्यदःपुरुषोत्तमः । श्रुतयोनेति नेतीति ब्रुवाणा न विदन्ति यम् ॥
यत्पादरज इन्द्रादि देवैर्मृग्यं सुदुर्ल्लभम् । वेदान्तादिभिरन्यूनैर्वाक्यैर्विन्दन्ति यं बुधाः
सोऽत्र श्रीमान्नीलशैले वसते पुरुषोत्तमः ।
आरुह्य तं नमस्कृत्य सम्पूज्य सुकृतादिना ॥ ३६ ॥
नैवेद्यं भक्षयित्वा वै भूप ! भूयाच्चतुर्भुजः । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥
तं शृणुष्व महाराज ! सर्वाश्चर्यसमन्वितम् । रत्नग्रीवस्य नृपतेर्यद्वृत्तं सकुटुम्बिनः ॥
चतुर्भुजादिकं प्राप्तं देवदानवदुर्लभम् । आसीत्काञ्ची महाराज पुरी लोकेषु विश्रुता ॥
महाजनपरीवारसमृद्धबलवाहना । यस्यां वसन्ति विप्राग्र्याःषट्कर्मनिरता भृशम् ॥
सर्वभूतहिते युक्ता रामभक्तिषु लालसाः ।
क्षत्त्रिया रणकर्तारः सङ्ग्रामेऽप्यपलायिनः ॥ ४१ ॥
परदारपरद्रव्यपरद्रोहपराङ्मुखाः । वैश्याःकुसीद कृष्यादि वाणिज्यशुभवृत्तयः ॥१५॥
कुर्वन्ति रघुनाथस्य पदाम्भोजे रतिं सदा । शूद्रा ब्राह्मण सेवाभिर्गत रात्रि दिनान्तराः
कुर्वन्ति कथनं राम रामेति रसानाग्रतः । प्राकृताःकेपि नो पापं कुर्वन्ति मनसाऽत्र वै
दानं दया दमःसत्यं तत्र तिष्ठन्ति नित्यशः । वदते न पराबाधं वाक्यं कोऽपि नरोऽनघः
न पारक्ये धने लोभं कुर्वन्ति नहि पातकम् ।
एवं प्रजा महाराज रत्नग्रीवेण पाल्यते ॥ ४६ ॥
षष्ठांशं तत्र गृह्णाति नान्यं लोभविवर्जितः । एवं पालयमानस्य प्रजाधमण भूपतेः ॥
गतानि बहुवर्षाणि सर्वभोगविलासिनः । विशालाक्षीं महाराज एकदा ह्यूचिवानिदम्
पतिव्रतां धर्मपत्नीं पतिव्रतपरायणाम् । पुत्राजाता विशालाक्षि प्रजारक्षा धुरन्धराः
परीवारो महान्मह्यं वर्तते विगतज्वरः । हस्तिनो मम शैलाभा वाजिनःपवनोपमाः ॥
रथाश्च सुहयैर्युक्ता वर्तन्ते मम नित्यशः ।
महाविष्णुप्रसादेन किञ्चिन्न्यूनं ममास्ति न ॥ ५१ ॥
एवं मनोरथस्त्वेकस्तिष्ठते मानसे मम । परं तीर्थं मया नाद्य कृतं परमशोभने ॥ ५२ ॥
गर्भवासविरामाय क्षमं गोविन्दशोभितम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृद्धो जातोऽस्म्यहं तावद्वलीपलितदेहवान् ॥ ५३ ॥

करिष्यामि मनोहारि तीर्थसेवनमादृतः । यो नरो जन्मपर्यन्तं स्वोदरस्य प्रपूरकः ॥
न करोति हरेःपूजां स नरो गोवृषःस्मृतः। तस्माद्गच्छामि भो भद्रे! तीर्थयात्रां प्रतिप्रिये

स कुटुम्बः सुते न्यस्य धुरं राज्यस्य निर्भृताम् ।

इति व्यवस्य सन्ध्यायां हरिं ध्यायन्निशान्तरे ॥ ५६ ॥

अद्राक्षीत्स्वप्नमप्येकं ब्राह्मणं तापसं वरम् ।

प्रातरुत्थाय राजाऽसौ कृत्वा सन्ध्यादिकाःक्रियाः ॥ ५७ ॥

सभां मन्त्रिजनैःसार्द्धं सुखमासेदिवान्महान् ।

तावत्क्षिप्रं ददर्शाथ तापसं कृशदेहिनम् ॥ ५८ ॥

जटावल्कलकौपीनधारिणं दण्डपाणिनम् । अनेकतीर्थसेवाभिः कृतपुण्यकलेवरम् ॥
राजा तं वीक्ष्य शिरसा प्रणनाम महाभुजः । अर्घ्यपाद्यादिकं चक्रे प्रहृष्टात्मा महीपतिः

सुखोपविष्टं विश्रान्तं पप्रच्छ विदितं द्विजम् ।

स्वामिंस्त्वद्दर्शनान्मेऽद्य गतं देहस्य पातकम् ॥ ६१ ॥

महान्तःकृपणान्पातुं यान्ति तद्गेहमादरात् । तस्मात्कथय भो विप्र! वृद्धस्य ममसम्प्रति
को देवो गर्भनाशाय किं तीर्थं च क्षमं भवेत् । यूयं सर्वगताःश्रेष्ठाःसमाधिध्यानतत्पराः

सर्वतीर्थावगाहेन कृतपुण्यात्मनोऽमलाः ।

यथावच्छृण्वते मह्यं श्रद्दधानाय विस्तरात् ॥ ६४ ॥

कथयस्व प्रसादेन सर्वतीर्थविचक्षण ! ॥ ६५ ॥

ब्राह्मण उवाच ।

शृणु राजेन्द्र ! वक्ष्यामि यत्पृष्टं तीर्थसेवनम् ।

कस्य देवस्य कृपया गर्भनिर्वारणं भवेत् ॥ ६६ ॥

सेव्यःश्रीरामचन्द्रोऽसौ संसारज्वरनाशकः । पूज्यःस एव भगवान्पुरुषोत्तमसंज्ञकः ॥
नानापुर्यो मया दृष्टाःसर्वपापक्षयङ्कराः । अयोध्या सरयूस्तापी तथा द्वारंहरेःपरम् ॥

अवन्ती विमला काञ्ची रेवा सागरगामिनी ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गोकर्णं हाटकाख्यं च हत्याकोटिविनाशनम् ॥ ६९ ॥
मल्लिकाख्यो महाशैलो मोक्षदः पश्यतां नृणाम् ।
यत्राङ्गेषु नृणां तोयं श्यामं वा निर्मलं भवेत् ॥ ७० ॥
पातकस्यापहारीदं मया दृष्टं तु तीर्थकम् । मया द्वारवती दृष्टा सुरासुरनिषेविता ॥
गोमती यत्र वहति साक्षाद् ब्रह्मजला शुभा ।
यत्र स्वापो लयःप्रोक्ता मृतिर्मोक्ष इति श्रुतिः ॥ ७२ ॥
यस्यांसं वसतां नृणां न कलिःप्रभवेत्क्वचित् ।
चक्राङ्का यत्र पाषाणा मानवा अपि चक्रिणः ॥ ७३ ॥
पशवःकीटपक्षाद्याःसर्वे चक्रशरीरिणः । त्रिविक्रमो वसेद्यस्यां सर्वलोकैकपालकः ॥
सा पुरी तु महापुण्यैर्मया दृग्गोचरीकृता । कुरुक्षेत्रं मया दृष्टं सर्वहत्यापनोदनम् ॥
स्यमन्तपञ्चकं यत्र महापातकनाशनम् । वाराणसी मया दृष्टा विश्वनाथकृतालया ।
यत्रोपदिशते मन्त्रं तारकब्रह्मसंज्ञितम् ॥ ७६ ॥
यस्यां मृताः कीटपतङ्गभृङ्गाः पश्वादयो वा सुरयोनयो वा ।
स्वकर्मसम्भोगसुखं विहाय गच्छन्ति कैलासमतीतदुःखाः ॥ ७७ ॥
मणिकर्णियत्र तीर्थं यस्यामुत्तरवाहिनी । करोति संसृतेर्बन्धच्छेदं पापकृतामपि ॥
कपर्दिनःकुण्डलिनःसर्पभूषाधरा वराः । गजचर्मपरीधाना वसन्ति गतदुःखकाः ॥
कालभैरवनामाऽत्र करोति यमशासनम् । न करोति नृणां वार्तां यमो दण्डधरःप्रभुः ॥
एतादृशी मया दृष्टा काशी विश्वेश्वराङ्किता ।
अनेकान्यपि तीर्थानि मया दृष्टानि भूमिप ! ॥ ८१ ॥
परमेकं महच्चित्रं यद्दृष्टं नीलपर्वते । पुरुषोत्तमसान्निध्ये तन्न क्वाप्यक्षिगोचरम् ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे ब्राह्मणसमागमो नाम सप्तदशोऽध्यायः ॥ १७ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अष्टादशोऽध्यायः

## नीलपर्वतवासाच्चतुर्भुजस्वरूपप्राप्तिवर्णनम् ।

ब्राह्मण उवाच ।

राजंस्त्वं शृणु यद्वृत्तं नीले पर्वतसत्तमे । यच्छ्रद्दधानाःपुरुषा यान्ति ब्रह्म सनातनम्
मया पर्यटता तत्र गतं नीलाभिधे गिरौ । गङ्गासागरतोयेन क्षालितप्राङ्गणे मुहुः ॥
तत्र भिल्ला मया दृष्टाःपर्वताग्रे धनुर्भृतः । चतुर्भुजा मूलफलैर्भक्ष्यैर्निर्वाहितक्रमाः ॥
तदा मे मनसि क्षिप्रं संशयः सुमहानभूत् । चतुर्भुजाःकिमेते वै धनुर्बाणधरा नराः ॥
वैकुण्ठवासिनां रूपं दृश्यते विजितात्मनाम् । कथमेतैरुपालब्धं ब्रह्माद्यैरपि दुर्ल्लभम्

शङ्खचक्रगदाशार्ङ्गपद्मोल्लसितपाणयः ।
वनमालापरीताङ्गा विष्णुभक्ता इवान्तिके ॥ ६ ॥

संशयाविष्टचित्तेन मया पृष्टं तदा नृप ! । यूयं के वत युष्माभिर्लब्धं चातुर्भुजं कथम्

तदा तैर्बहुहास्यं तु कृत्वा मां प्रतिभाषितम् ।
ब्राह्मणोऽयं न जानाति पिण्डमाहात्म्यमद्भुतम् ॥ ८ ॥

इति श्रुत्वाऽवदं चाहं कःपिण्डःकस्य दीयते । तन्मम ब्रूत धर्मिष्ठाश्चतुर्भुजशरीरिणः
तदा मद्वाक्यमाकर्ण्य कथितं तैर्महात्मभिः । सर्वं तत्र तु यद्वृत्तं चतुर्भुजभवादिकम्

किराता ऊचुः ।

शृणु ब्राह्मण ! वृत्तान्तमस्माकं पृथुकःशिशुः। नित्यं जम्बूफलादीनि भक्षयन्क्रीडयाचरन्
एकदा रममाणस्तु गिरिशृङ्गं मनोरमम् । समारुरोह शिशुभिःसमन्तात्परिवारितः ॥
तदा तत्र ददर्शाथ देवायतनमद्भुतम् । गारुत्मतादिमणिभिःखचितं स्वर्णभित्तिकम् ॥

स्वकान्त्या तिमिरश्रेणीं दारयद्रविवद् भृशम् ।
दृष्ट्वा विस्मयमापेदे किमिदं कस्य वै गृहम् ॥ १४ ॥

गत्वा विलोकयामीति किमिदं महतां पदम् । इति सञ्चिन्त्य गेहान्तर्जगाम बहुभाग्यतः


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ददर्श तत्र देवेशं सुरासुरनमस्कृतम् । किरीटहारकेयूरग्रैवेयाद्यैर्विराजितम् ॥ १६ ॥
मनोहरावतंसौ च धारयन्तं सुनिर्मलौ । पादपद्मे तुलसिकागन्धमत्तषडङ्घ्रिके ॥
शङ्खचक्रगदाशार्ङ्गपद्माद्यैर्मूर्तिसंयुतैः । उपासिताङ्घ्रिं श्रीमूर्तिं नारदाद्यैःसुसेवितम् ॥

केचिद्गायन्ति नृत्यन्ति हसन्ति परमाद्भुतम् ।
प्रीणयन्ति महाराजं सर्वलोकैकवन्दितम् ॥ १६ ॥
हरिं वीक्ष्य मदीयोऽर्भस्तत्र सङ्गमिवान्मुने ! ।
देवास्तत्र विधायोच्चैः पूजां धूपादिसंयुताम् ॥ २० ॥
नैवेद्यं श्रीप्रियस्यार्थे कृत्वा नीराजनं ततः ।
जग्मुः स्वं स्वं गृहं राजन्कृपां पश्यन्त आदरात् ॥ २१ ॥

महाभाग्यवशात्तेन प्राप्तं नैवेद्यसिक्थकम् । पतितं ब्रह्मदेवाद्यैर्दुर्ल्लभं सुरमानुषैः ॥
तद्भक्षणं च कृत्वाऽथो श्रीमूर्तिमवलोक्य च । चतुर्भुजत्वमाप्तं वै पृथुकेन सुशोभिना

तदाऽस्माभिर्गृहं प्राप्तो बालको वीक्षितो मुहुः ।
चतुर्भुजत्वं सम्प्राप्तः शङ्खचक्रादिधारकः ॥ २४ ॥

अस्माभिःपृष्टमेतस्य किमेतज्जातमद्भुतम् । तदा प्रोवाच नःसर्वान्बालकःपरमाद्भुतम् ॥
शिखराग्रे गतःपूर्वं तत्र दृष्टःसुरेश्वरः । तत्र नैवेद्यसिक्थं तु मया प्राप्तं मनोहरम् ॥
तस्य भक्षणमात्रेण कारणेन तु साम्प्रतम् । चतुर्भुजत्वं सम्प्राप्तो विस्मयेन समन्वितः

तच्छ्रुत्वा तु वचस्तस्य सद्यः सम्प्राप्तविस्मयैः ।
अस्माभिरप्यसौ दृष्टो देवः परमदुर्ल्लभः ॥ २८ ॥

अन्नादिकं तत्र भुक्तं सर्वस्वादं समन्वितम् । वयं चतुर्भुजा जाता देवस्य कृपया पुनः
गत्वा त्वमपि देवस्य दर्शनं कुरु सत्तम !। भुक्त्वा तत्रान्नसिक्थं तु भव विप्र! चतुर्भुजः

त्वया पृष्टं यदाश्चर्यं तदुक्तं वाडवर्षभ ! ॥ ३० ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे ब्राह्मणोपदेशो नामाष्टादशोऽध्यायः ॥ १८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# ऊनविंशोऽध्यायः

## नीलगिरियात्राविधिवर्णनम् ।

ब्राह्मण उवाच ।

इति श्रुत्वा तु तद्वाक्यं भिल्लानां महदद्भुतम् ।
अत्याश्चर्यमिदं मत्वा प्रहृष्टोऽभवमित्युत ॥ १ ॥

गङ्गासागरसंयोगे स्नात्वा पुण्यकलेवरः । शृङ्गमारुरुहे तत्र मणिमाणिक्यचित्रितम् ॥
तत्रापश्यं महाराज देवं देवादिवन्दितम् । नमस्कृत्य कृतार्थोऽहं जातोऽन्नप्राशनेन च
चतुर्भुजत्वं सम्प्राप्तःशङ्खचक्रादिचिह्नितम् । पुरुषोत्तमदर्शनेन न पुनर्गर्भमाविशम् ॥

राजंस्त्वमपि तत्राशु गच्छ नीलाभिधं गिरिम् ।
कृतार्थं कुरु चात्मानं गर्भदुःखविवर्जितम् ॥ ५ ॥
इत्याकर्ण्य वचस्तस्य वाडवाग्र्यस्य धीमतः ।
पप्रच्छ हृष्टगात्रस्तु तीर्थयात्राविधिं मुनिम् ॥ ६ ॥

राजोवाच ।

साधु विप्राग्र्य ! हे साधो ! त्वया प्रोक्तं ममानघ ! ।
पुरुषोत्तममाहात्म्यं शृण्वतां पापनाशनम् ॥ ७ ॥
ब्रूहि तत्तीर्थयात्रायां विधिं श्रुतिसमन्वितम् ।
विधिना केन सम्पूर्णफलप्राप्तिर्नृणां भवेत् ॥ ८ ॥

ब्राह्मण उवाच ।

शृणु राजन्प्रवक्ष्यामि तीर्थयात्राविधिं शुभम् । येन सम्प्राप्यते देवःसुरासुरनमस्कृतः ॥
वलीपलितदेहो वा यौवनेनान्वितोऽपि वा ।
ज्ञात्वा मृत्युमनिस्तीर्यं हरिं शरणमाव्रजेत् ॥ १० ॥
तत्कीर्तने तच्छ्रवणे वन्दने तस्य पूजने । मतिरेव प्रकर्तव्या नान्यत्र वनितादिषु ॥ ११ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वं नश्वरमालोक्य क्षणस्थायि सुदुःखदम् । जन्ममृत्युजरातीतं भक्तिवल्लभमच्युतम्
क्रोधात्कामाद्भयाद्द्वेषाल्लोभाद्दम्भान्नरःपुनः । यथा कथञ्चिद्विभजन्न सदुःखं समश्नुते
स हरिज्ञायते साधुसङ्गमात्पापवर्जितात् । येषां कृपातःपुरुषा भवन्त्यसुखवर्जिताः ॥
ते साधवः शान्तरागाः कामलोभविवर्जिताः ।
ब्रुवन्ति यन्महाराज तत्संसारनिवर्तकम् ॥ १५ ॥
तीर्थेषु लभ्यते साधू रामचन्द्रपरायणः । यद्दर्शनं नृणां पापराशिदाहाशुशुक्षणिः ॥
तस्मात्तीर्थेषु गन्तव्यं नरैःसंसारभीरुभिः । पुण्योदकेषु सततं साधुश्रेणिविराजिषु ॥
तानि तीर्थानि विधिना दृष्टानि प्रहरन्त्यघम् ।
तं विधिं नृपशार्दूल ! कुरुष्व श्रुतिगोचरम् ॥१८॥
विरागं जनयेत्पूर्वं कलत्रादि कुटुम्बके । असत्यभूतं तज्ज्ञात्वा हरिं तु मनसा स्मरेत्
क्रोशमात्रं ततो गत्वा रामरामेति च ब्रुवन् ।
तत्र तीर्थादिषु स्नात्वा क्षौरं कुर्याद्विधानवित् ॥ २० ॥
मनुष्याणां च पापानि तीर्थानि प्रति गच्छताम् ।
केशानाश्रित्य तिष्ठन्ति तस्माद्वपनमाचरेत् ॥ २१ ॥
ततो दण्डं तु निर्ग्रन्थि कमण्डलुमथाजिनम् । बिभृयाल्लोभनिर्मुक्तस्तीर्थवेषधरो नरः ॥
विधिनागच्छतां नृणां फलावाप्तिर्विशेषतः । तस्मात्सर्वप्रयत्नेन तीर्थयात्राविधिं चरेत्
यस्य हस्तौ च पादौ च मनश्चैव सुसंहितम् । विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते
हरेकृष्ण हरेकृष्ण भक्तवत्सल गोपते । शरण्य भगवन्विष्णो मां पाहि बहुसंसृतेः ॥
इति ब्रुवन्रसनया मनसा च हरिं स्मरन् । पादचारी गतिं कुर्यात्तीर्थंप्रति महोदयः ॥
यानेन गच्छन्पुरुषःसमभागफलं लभेत् । उपानद्भ्यां चतुर्थांशं गोयाने गोवधादिकम्
व्यवहर्ता तृतीयांशं सेवयाऽष्टमभागभाक् । अनिच्छया व्रजंस्तत्र तीर्थमर्धफलं लभेत्
यथायथं प्रकर्तव्या तीर्थानामभियात्रिका । पापक्षयो भवत्येव विधिदृष्टया विशेषतः
तत्र साधून्नमस्कुर्यात्पादवन्दनसेवनैः । तद्द्वारा हरिभक्तिर्हि प्राप्यते पुरुषोत्तमे ॥३०॥
इति तीर्थविधिः प्रोक्तः समासेन न विस्तरात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं विधिं समाश्रित्य गच्छत्वं पुरुषोत्तमम् ॥ ३१ ॥

तुभ्यं तुष्टो महाराज ! दास्यते भक्तिमच्युतः । यथा संसारनिर्वाहःक्षणादेव भविष्यति
तीर्थयात्राविधिं श्रुत्वा सर्वपातकनाशनम् । मुच्यते सर्वपापेभ्यः उग्रेभ्यःपुरुषर्षभ ॥

सुमतिरुवाच ।

इतिवाक्यं समाकर्ण्य ववन्दे चरणौ महान् । तत्तीर्थदर्शनौत्सुक्यविह्वलीकृतमानसः ॥
आदिदेश निजामात्यं मन्त्रवित्तममुत्तमम् । तीर्थयात्रेच्छया सर्वान्सह नेतुं मनोऽदधत्
मन्त्रिन्पौरजनान्सर्वानादिशत्वं ममाज्ञया । पुरुषोत्तम पादाब्जदर्शनप्रीतिहेतवे ॥३६॥

ये मदीये पुरे लोका ये च मद्वाक्यकारकाः ।
सर्वे निर्यान्तु मत्पुर्या मया सह नरोत्तमाः ॥ ३७ ॥

ये तुमद्वाक्यमुल्लङ्घ्य स्थास्यन्ति पुरुषा गृहे । ते दण्ड्यायमदण्डेन पापिनोऽधर्महेतवः
किं तेन सुतवृन्देन बान्धवैःकिं सुदुर्नयैः । यैर्न दृष्टःस्वचक्षुर्भ्यां पुण्यदःपुरुषोत्तमः ।
सूकरीयूथवत्तेषां प्रसूतिर्विट् प्रभक्षिका । येषां पुत्राश्च पौत्रा वा हरिं न शरणं गताः
यो देवो नाममात्रेण सर्वान्पावयितुं क्षमः । तं नमस्कुरुत क्षिप्रं मदीयाःप्रकृतिव्रजाः ॥

इति वाक्यं मनोहारि भगवद्गुणगुम्फितम् ।
प्रजहर्ष महामात्य उत्तमः सत्यनामधृत् ॥ ४२ ॥

हस्तिनं वरमारोप्य पटहेन व्यघोषयत् । यदादिष्टं नृपेणेह तीर्थयात्रां समिच्छता ॥
गच्छन्तु त्वरिता लोका राज्ञासह महागिरिम् । दृश्यतां पापसंहारी पुरुषोत्तमनामधृत्
क्रियतां सर्वसंसारसागरो गोष्पदं पुनः । भूष्यतां शङ्खचक्रादि चिह्नैःस्वस्वतनुर्नरैः ॥

इत्यादि घोषयामास राज्ञाऽऽदिष्टं यदद्भुतम् ।
सचिवो रघुनाथाङ्घ्रिध्याननिर्वारितश्रमः ॥ ४६ ॥
तच्छ्रुत्वा ताः प्रजाः सर्वा आनन्दरससम्प्लुताः ।
मनो दधुः स्वनिस्तारै पुरुषोत्तमदर्शनात् ॥ ४७ ॥

निर्ययुर्ब्राह्मणास्तत्र शिष्यैःसह सुवेषिणः । आशिषं वरदानाढ्यां ददतो भूमिपं प्रति ॥

क्षत्रिया धन्विनो वीरा वैश्या वस्तुक्रयाश्रिताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शूद्राः संसारनिस्तारहर्षितस्वीयविग्रहाः ॥ ४९ ॥

रजकाश्चर्मकाः क्षौद्राः किराता भित्तिकारकाः ।

सूचीवृत्त्या च जीवन्तस्ताम्बूलक्रयकारकाः ॥ ५० ॥

तालवाद्यधरा ये च ये च रङ्गोपजीविनः । तैलविक्रयिणश्चैव वस्त्रविक्रयिणस्तथा ॥

सूतावदन्तःपौराणीं वार्तां हर्षसमन्विताः । मागधा वन्दिनस्तत्र निर्गता भूमिपाज्ञया

भिषग्वृत्त्या च जीवन्तस्तथा पाशककोविदाः ।

पाकस्वादुरसाभिज्ञा हास्यवाक्यानुरञ्जकाः ॥ ५३ ॥

ऐन्द्रजालिकविद्याढ्यास्तथा वार्तासु कोविदाः । प्रशंसन्तो महाराजं निर्ययुःपुरमध्यतः

राजाऽपि तत्र निर्वर्त्य प्रातः सन्ध्यादिकाः क्रियाः ।

ब्राह्मणं तापसश्रेष्ठमानिनाय सुनिर्मलम् ॥ ५५ ॥

तदाज्ञया महाराजो निर्जगाम पुराद्बहिः । लोकैरनुगतो राजा बभौ चन्द्र इवोडुभिः

क्रोशमात्रं स गत्वाऽथ क्षौरं कृत्वा विधानतः ।

दण्डं कमण्डलुं बिभ्रन्मृगचर्म तथा शुभम् ॥ ५७ ॥

शुभवेषेण संयुक्तो हरिध्यानपरायणः । कामक्रोधादि रहितं मनो बिभ्रन्महायशाः ॥

तदा दुन्दुभयो भेर्य आनकाःपणवास्तथा । शङ्खवीणादिकाश्चैवाध्मातास्तद्वादकैर्मुहुः ॥

जय देवेश ! दुःखघ्न ! पुरुषोत्तमसंज्ञित ! । दर्शय स्वतनुं मह्यं वदन्तो निर्ययुर्जनाः ॥

इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसंवादेरामाश्वमेधेरत्नग्रीवस्य तीर्थप्रयाणं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः

### गण्डकीशालग्राममाहात्म्यवर्णनम्

सुमतिरुवाच ।

अथ प्रयाते भूपाले सर्वलोकसमन्विते । महाभागैर्वैष्णवैश्च गायकैःकृष्णकीर्तनम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुश्रावासौ महाराजो मार्गे गोविन्दकीर्तनम् ।
जय माधव भक्तानां शरण्य पुरुषोत्तम ! ॥ २ ॥
मार्गे तीर्थान्यनेकानि कुर्वन्पश्यन्महोदयम् । तापसब्राह्मणात्तेषां महिमानमथाश्रृणोत्
विचित्रविष्णुवार्ताभिर्विनोदितमना नृपः ।
मार्गे मार्गे महाविष्णुं गापयामास गायकान् ॥ ४ ॥
दीनान्धकृपणानां च पङ्गूनां वासनोचितम् ।
दानं ददौ महाराजो बुद्धिमान्विजितेन्द्रियः ॥ ५ ॥
अनेकतीर्थविरजस्मात्मानं भव्यतां गतम् । कुर्वन्ययौस्वीयलोकैर्हरिध्यानपरायणः ॥
नृपो गच्छन्ददर्शाग्रे नदीं पापप्रणाशिनीम् । चक्राङ्कितग्रावयुतां मुनिमानसनिर्मलाम्
अनेकमुनिवृन्दानां बहुश्रेणिराजिताम् । सारसादि पतत्त्रीणां कूजितैरुपशोभिताम् ॥
दृष्ट्वा पप्रच्छ विप्राग्र्यं तापसं धर्मकोविदम् ।
अनेकतीर्थमाहात्म्यविशेषज्ञानजृम्भितम् ॥ ६ ॥
स्वामिन्केयं नदीपुण्या मुनिवृन्दनिषेविता । करोति मम चित्तस्य प्रमोदभरनिर्भरम्
इति श्रुत्वा वचस्तस्य राजराजस्य धीमतः । वक्तुं प्रचक्रमे विद्वांस्तीर्थमाहात्म्यमुत्तमम्

ब्राह्मण उवाच ।

गण्डकीयं नदी राजन्सुरासुरनिषेविता । पुण्योदकपरीवाहहतपातकसञ्चया ॥ १२ ॥
दर्शनान्मानसं पापं स्पर्शनात्कर्मजं दहेत् । वाचिकं स्वीयतोयस्य पानतः पापसञ्चयम्
पुरा दृष्ट्वा प्रजानाथः प्रजाः सर्वा विपापिनीः ।
स्वगण्डविप्रुषोऽनेकपापघ्नीं सृष्टवानिमाम् ॥ १४ ॥
एनां नदीं ये पुण्योदां स्पृशन्ति सुतरङ्गिणीम् । ते गर्भभाजो नैवस्युरपि पापकृतोनराः
अस्यां भवा ये चाश्मानश्चक्रचिह्नैरलङ्कृताः । ते साक्षाद्भगवन्तो हि स्वस्वरूपधराःपराः
शिलां सम्पूजयेद्यस्तु नित्यं चक्रयुतां नरः । न जातु स जनन्या वै जठरं समुपाविशेत्
पूजयेद्यो नरो धीमाञ्शालग्रामशिलां वराम् ।
तेनाचारवता भाव्यं दम्भलोभवियोगिना ॥ १८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परदारपरद्रव्यविमुखेन नरेण हि। पूजनीयःप्रयत्नेन शालग्रामः सचक्रकः ॥ १६ ॥
द्वारवत्यां भवंचक्रं शिला वै गण्डकीभवा। पुंसां क्षणाद्धरत्येव पापं जन्मशतार्जितम्

अपि पापसहस्राणां कर्ता तावन्नरो भवेत् ।
शालग्रामशिलातोयं पीत्वा पूतो भवेत्क्षणात् ॥ २१ ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वेदपथि स्थितः ।
शालग्रामं पूजयित्वा गृहस्थो मोक्षमाप्नुयात् ॥ २२ ॥

न जातुचित्स्त्रियाकार्यंशालग्रामस्य पूजनम्। भर्तृहीनाऽथ सुभगा स्वर्गलोकहितैषिणी

मोहात्स्पृष्ट्वाऽपि महिला जन्मशीलगुणान्विता ।
हित्वा पुण्यसमूहं सा सत्वरं नरकं व्रजेत् ॥ २४ ॥

स्त्रीपाणिमुक्तपुष्पाणि शालग्रामशिलोपरि। पवेरधिकपातानि वदन्ति ब्राह्मणोत्तमाः
चन्दनं विषसंकाशं कुसुमं वज्रसन्निभम्। नैवेद्यं कालकूटाभं भवेद्भगवतः कृतम् ॥२६

तस्मात्सर्वात्मना त्याज्यः स्त्रिया स्पर्शः शिलोपरि।
कुर्वती याति नरकं यावदिन्द्राश्चतुर्दश ॥ २७ ॥
अपि पापसमाचारो ब्रह्महत्यायुतोऽपि वा ।
शालग्रामशिलातोयं पीत्वा याति परां गतिम् ॥ २८ ॥
तुलसी चन्दनं वारि शङ्खो घण्टाऽथ चक्रकम् ।
शिला ताम्रस्य पात्रं तु विष्णोर्नाम पदामृतम् ॥ २६ ॥

पदामृतं तु नवभिःपापराशिप्रदाहकम्। वदन्ति मुनयःशान्ताःसर्वशास्त्रार्थकोविदाः
सर्वतीर्थपरिस्नानात्सर्वक्रतुसमर्चनात् । पुण्यं भवति यद्राजन्बिन्दौ बिन्दौ तदद्भुतम्
शालग्रामशिला यत्र पूज्यते पुरुषोत्तमैः। तत्र योजनमात्रं तु तीर्थकोटिसमन्वितम् ॥

शालग्रामाः समाः पूज्याः समेषु द्वितयं न हि ।
विषमा एव सम्पूज्याः विषमेषु त्रयं न हि ॥ ३३ ॥

द्वारावतीभवं चक्रं तथा वै गण्डकीभवम् । उभयोःसङ्गमो यत्र तत्र गङ्गा समुद्रगा

रूक्षाः कुर्वन्ति पुरुषानायुःश्रीबलवर्जितान्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मात्स्निग्धा मनोहारि रूपिण्यो ददति श्रियम् ॥ ३५ ॥
आयुष्कामो नरो यस्तु धनकामो हि यः पुमान् ।
पूजयन्सर्वमाप्नोति पारलौकिकमैहिकम् ॥ ३६ ॥
प्राणान्तकाले पुंसस्तु भवेद्भाग्यवतो नृप ! । वाचिनामहरेःपुण्यं शिला हृदि तदन्तिके ॥
गच्छत्सु प्राणमार्गेषु यस्य विश्रम्भतोऽपि चेत् ।
शालग्रामशिलास्फूर्तिस्तस्य मुक्तिर्न संशयः ॥ ३८ ॥
पुरा भगवता प्रोक्तमम्बरीषाय धीमते। ब्राह्मणान्यासिनःस्निग्धाःशालग्रामशिलास्तथा
स्वरूपत्रितयं मह्यमेतद्धि क्षितिमण्डले । पापिनां पापनिर्हारं कर्तुं धृतमुदञ्चता ॥४०
निन्दन्ति पापिनो ये वा शालग्रामशिलां शकृत् ।
कुम्भीपाके प्रपच्यन्ते यावदाभूतसम्प्लवम् ॥ ४१ ॥
पूजां समुद्यतं कर्तुं यो वारयति मूढधीः । तस्य माता पिता बन्धुवर्गा नरकभागिनः
यो वा कथयति प्रेष्ठं शालग्रामार्चनं कुरु । सकृतार्थो नयत्याशु वैकुण्ठं स्वस्य पूर्वजान्
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । मुनयो वीतरागाश्च कामक्रोधविवर्जिताः ॥
पुरा कीकटसंज्ञे वै देशे धर्मविवर्जिते । आसीत्पुल्कसजातीयो नरः शबरसंज्ञितः ॥
नित्यं जन्तुवधोद्युक्तःशरासनधरो मुहुः । तीर्थंप्रति यियासूनां बलाद्धरति जीवितम्
अनेकप्राणि हत्याकृत्परस्वे निरतःसदा । सदा रागादिसंयुक्तःकामक्रोधादि संयुतः ॥
विचरत्यनिशं भीमे वने प्राणिवधङ्करः । विषसंसक्तबाणाग्ररूढचापगुणोद्धुरः ॥
स कदा पर्यटन्व्याधःप्राणिमात्रभयङ्करः । कालं प्राप्तं न जानाति समीपेऽप्युग्रमानसः
यमदूतास्तु सम्प्राप्ताःपाशमुद्गरपाणयः । ताम्रकेशा दीर्घनखा लम्बदंष्ट्रा भयानकाः ॥
श्यामा लोहस्य निगडान्बिभ्रतो मोहकारकाः ।
बध्नन्तु पापिनं ह्येनं प्राणिमात्रभयङ्करम् ॥ ५१ ॥
कदाचिन्मनसा नायं प्राणिमात्रोपकारकः । परदारपरद्रव्यपरद्रोहपरायणः ॥ ५२ ॥
एतस्य जिह्वां महतीमहं निष्कासयाम्यतः । एको वदति चैतस्य चक्षुरुत्पाटयाम्यहम्
एको वदति चैतस्य करौ कृन्तामि पापिनः । अन्यो वदत्यहं कर्णौ कर्तयामि दुरात्मनः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं वदन्तः सुभृशं दन्तैर्दन्तनिपीड़काः। आगत्य तं दुरात्मानं सायुधास्तस्थुरुन्मदाः
एकोदूतस्तदा सर्परूपं धृत्वाऽदशत्पदे। स दष्टमात्रःसहसा गतासुःपर्यजायत ॥ ५६ ॥

तदा तं लोहपाशेन वद्ध्वा ते यमकिङ्कराः।
कशाभिस्ताडयामासुर्मुद्गरैः प्राहरन्क्रुधा ॥ ५७ ॥
अहो दुष्ट! दुरात्मंस्त्वं कदाचिन्नाचरः शुभम्।
मनसाऽपि यतस्त्वां वै क्षेप्स्यामो रौरवेषु च ॥५८॥

त्वङ्मासं वायसा रौद्रा भक्षयिष्यन्ति वै क्रुधा। आजन्मतस्तु भवता न कृतं हरिसेवनम्

त्वया कलत्रपुत्राद्या द्रोहं कृत्वा सुपोषिताः।
न कदाचित्स्मृतो देवः पापहारी जनार्दनः॥ ६० ॥

तस्मात्त्वां लोहशङ्कौ वा कुम्भीपाके च रौरवे। धर्मराजाज्ञया सर्वे नेष्यामो बहुताडनैः
एवमुक्त्वा यदा नेतुं समैच्छन्यमकिङ्कराः। तावत्प्राप्तो महाविष्णुचरणाब्जपरायणः
यमदूतास्तदा दृष्टा वैष्णवेन महात्मना। पाशमुद्गरदण्डादिदुष्टायुधधरा गणाः ॥६३

पुल्कसं लोह निगडैर्बध्द्वा यातुं समुद्यताः।
वन्ध बन्ध ग्रस च्छिन्धि भिन्धि भिन्धीति वादिनः ॥ ६४ ॥

तदा कृपालुस्तं प्रेक्ष्य पद्मनाभपरायणः। अत्यन्तकृपयायुक्तं चेतस्तत्र तदाऽकरोत् ॥
असौ महादुष्टपीडां मा यातु मम सन्निधौ। मोचयाम्यहमद्यैव यमदूतेभ्य एवं च ॥

इति कृत्वा मतिं तस्मिन्कृपायुक्तो मुनीश्वरः।
शामग्रामशिलां हस्ते गृहीत्वाऽस्य गतोऽन्तिके ॥ ६७ ॥

तस्य पादोदकं पुण्यं तुलसीदलमिश्रितम्। मुखे विनिक्षिपन्कर्णे रामनाम जजाप ह ॥

तुलसीं मस्तके तस्य धारयामास वैष्णवः।
शिलां हृदि महाविष्णोर्धृत्वा प्राह स वैष्णवः॥ ६९ ॥

गच्छन्तु यमदूता वै यातनासुपरायणः। शालग्रामशिलास्पर्शो दहतात्पातकं महत् ॥

इत्युक्तवति तस्मिन्वै गणा विष्णोर्महाद्भुताः।
आययुस्तस्य सविधे शिलास्पर्शाद् गतांहसः ॥ ७१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पीतवस्त्राःशङ्खचक्रगदापद्मविराजिताः । आगत्य मोचयामासुर्लोहपाशाद्दुरासदात् ॥
मोचयित्वा महापापकारकं पुल्कसंनरम् । ऊचुः किमर्थं बद्धोऽयंवैष्णवः पूज्य देहभृत्
कस्याज्ञाकारका यूयं यद्धर्मप्रकारकाः । मुञ्चन्तु वैष्णवं त्वेनं किमर्थं विधृतोह्ययम्
इति वाक्यं समाकर्ण्य जगदुर्यमकिङ्कराः । धर्मराजाज्ञया प्राप्ता नेतुं पापिनमुद्यताः ॥

नासौ कदाचिन्मनसा प्राणिमात्रोपकारकः ।
प्राणिहत्यामहापापकारी दुष्टशरीरभृत् ॥ ७६ ॥
नॄन्बहूंस्तीर्थयात्रायां गच्छतोऽसौ व्यलुण्ठयत् ।
परदाररतो नित्यं सर्वपापाधिकारकः ॥ ७७ ॥

तस्मान्नेतुं वयं प्राप्ताःपापिनं पुल्कसं नरम् । भवद्भिर्मोचितःकस्मादकस्मादागतैर्भटैः ॥

विष्णुदूता ऊचुः

ब्रह्महत्यादिकं पापं प्राणिकोटिवधोद्भवम् । शालग्रामशिलास्पर्शःसर्वं दहति तत्क्षणात्
रामेति नाम यच्छ्रोत्रे विश्रम्भादागतं यदि । करोति पापसन्दोहं तूलं वह्निकणो यथा
तुलसी मस्तके यस्य शिलाहृदि मनोहरा । मुखे कर्णेऽथ वा राम नाम मुक्तस्तदैव सः
तस्मादनेन तुलसी मस्तके विधृता पुरा । श्रावितं रामनामाशु शिलाहृदि सुधारिता ॥

तस्मात्पापसमूहोऽस्य दग्धः पुण्यकलेवरः ।
यास्यते परमं स्थानं पापिनां यत्सुदुर्लभम् ॥ ८३ ॥
वर्षायुतं तत्र भुक्त्वा भोगान्सर्वमनोहरान् ।
भारते जन्म सम्प्राप्य समाराध्य जगद्गुरुम् ॥ ८४ ॥

प्राप्स्यते परमं स्थानं सुरासुरसुदुर्ल्लभम् । न ज्ञातो महिमा सम्यक्छिलायाःपरमेष्ठिनः

दृष्टा स्पृष्टाऽर्चिता वापि सर्वपापहरा क्षणात् ।
इत्युक्त्वा विरताः सर्वे महाविष्णोर्गणा मुदा ॥ ८६ ॥

याम्यास्ते किङ्करा राज्ञे कथयामासुरद्भुतम् । वैष्णवो हर्षमापेदे रघुनाथपरायणः ॥

मुक्तोऽसौ यमपाशाच्च गमिष्यति परं पदम् ।
तदाऽऽजगाम विमलं किङ्किणीजालमण्डितम् ॥ ८८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विमानं देवलोकात्तु मनोहारि महाद्भुतम् । तत्रारुह्य गतःस्वर्गं महापुण्यैर्निषेवितम् ॥
भोगान्भुक्त्वा स विपुलानाजगाम महीतलम् ।
काश्यां जन्म समासाद्य शुचिवाडवसत्कुले ॥ ६० ॥
आराध्य जगतामीशं गतवान्परमं पदम् ।
स पापी साधुसङ्गत्या शालग्रामशिलां स्पृशन् ॥ ६१ ॥
महापीडाविनिर्मुक्तो गतवान्परमं पदम् । मया तेऽभिहितं राजन्गण्डकीचरितं महत् ॥
श्रुत्वा विमुच्यते पापैर्भुक्तिं मुक्तिं च विन्दति ।
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे
गण्डकीमाहात्म्यं नाम विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः

### रत्नग्रीवेण नीलगिरिं गत्वा तत्र पुरुषोत्तमस्तोत्रकरणम्

सुमतिरुवाच ।
एतन्माहात्म्यमतुलं गण्डक्याःकर्णगोचरम् । कृत्वा कृतार्थमात्मानममन्यत नृपोत्तमः ॥
स्नात्वा तीर्थे पितॄन्त्सर्वान्त्सन्तर्प्य जहृषे महान् ।
शालग्रामशिलापूजां कुर्वन्वाडववाक्यतः ॥ २ ॥
चतुर्विंशच्छिलास्तत्र गृहीत्वा स नृपोत्तमः । पूजयामासप्रेम्णा च चन्दनाद्युपचारकैः
तत्र दानानि दत्त्वा च दीनान्धेभ्यो विशेषतः । गन्तुं प्रचक्रमे राजा पुरुषोत्तममन्दिरम्
एवं क्रमेण सम्प्राप्तो गङ्गासागरसङ्गमम् । कृत्वाऽक्षिगोचरं तं च ब्राह्मणं पृष्टवान्मुदा
स्वामिन्वद कियद् दूरे नीलाख्यः पर्वतो महान् ।
पुरुषोत्तमसंवासः सुरासुरनमस्कृतः ॥ ६ ॥
तदा श्रुत्वा महद्वाक्यं रत्नग्रीवस्य भूपतेः । उवाच विस्मयाविष्टो राजानं प्रति सादरम्
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजन्नेतत्स्थलं नीलपर्वतस्य नमस्कृतम् । किमर्थं दृश्यते नैव महापुण्यफलप्रदम् ॥८॥
पुनःपुनरुवाचेदं स्थलं नीलस्य भूभृतः । कथं न दृश्यते राजन्पुरुषोत्तमवासभृत् ॥६॥
अत्र स्नातं मया सम्यग्भिल्लाश्चात्राक्षिगोचराः । अनेनैव पथा राजन्नारूढं पर्वतोपरि ॥
इति तद्वाक्यमाकर्ण्य चिन्त्यथे मानसे नृपः । नीलभूधरदर्शाय कुर्वन्नुत्कण्ठितं मनः ॥
उवाच तत्कथं विप्र ! दृश्येत पुरुषोत्तमः । कथं वा दृश्यते नीलस्तदुपायं वदस्व नः ॥

तदा वाक्यं समाकर्ण्य रत्नग्रीवस्य भूपतेः ।
तापसो ब्राह्मणो वाक्यमुवाच नृप ! विस्मितः ॥ १३ ॥
गङ्गासागरसंयोगे स्नात्वाऽस्माभिर्महीपते ।
स्थातव्यं तावदेवात्र यावन्नीलो न दृश्यते ॥ १४ ॥

गीयते पापहा देवःपुरुषोत्तमसंज्ञितः । करिष्यते कृपामाशु भक्तवत्सलनामधृत् ॥१५॥
त्यजत्यसौ न वै भक्तान्देवदेवशिरोमणिः । अनेके रक्षिता भक्तास्तद्गायस्व महामते ! ॥

इति वाक्यं समाकर्ण्य राजा व्यथितचेतसा ।
स्नात्वा गङ्गाब्धिसंयोगे ततोऽनशनमादधात् ॥ १७ ॥

करिष्यति कृपां यर्हि दर्शने पुरुषोत्तमः । पूजां कृत्वाऽशनं कुर्यामन्यथाऽनशनं व्रतम्
इति कृत्वा सनियमं गङ्गासागररोधसि । गायन्हरिगुणग्राममुपवासमथाचरत् ॥१६॥

राजोवाच ।

जय दीनदयाकर ! प्रभो ! जय दुःखापह ! मङ्गलाह्वय ! ।
जय भक्तजनार्तिनाशन ! कृतवर्ष्मक्षय ! दुष्टघातक ! ॥ २० ॥
अम्बरीषमथ वीक्ष्य दुःखितं विप्रशापहतसर्वमङ्गलम् ।
धारयन्निजकरे सुदर्शनं संररक्ष जठराधिवासतः ॥ २१ ॥
दैत्यराजपितृकारितव्यथः शूलपाशजलवह्निपातनैः ।
श्रीनृसिंहतनुधारिणा त्वया रक्षितः सपदि पश्यतः पितुः ॥ २२ ॥
ग्राहवक्त्रपतिताङ्घ्रिमुद्भटं वारणेन्द्रमतिदुःखपीडितम् ।
वीक्ष्य साधु करुणार्द्रमानसस्त्वं गरुत्मति कृतारुहक्रियः ॥ २३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यक्तपक्षिपतिरात्तचक्रको वेगकम्पयुतमालिकाम्बरः ।
गीयसेऽसुभिरमुष्य नक्रतो मोचकः सपदि तद्विनाशकः ॥ २४ ॥
यत्र यत्र तव सेवकार्दनं तत्र तत्र बत देहधारिणा ।
पाल्यते च भवता निजः प्रभो पापहारि चरितैर्मनोहरैः ॥ २५ ॥
दीननाथ ! सुरमौलिहीरकाघृष्टपादतलभक्तवल्लभ ! ।
पापकोटिपरिदाहक ! प्रभो ! दर्शयस्व मम पादपङ्कजम् ॥२६॥
पापकृद्यदि जनोऽयमागतो मानसे तव तथा हि दर्शय ।
तावका वयमघौघनाशनं विस्मृतं न हि सुरासुरार्चित ! ॥ २७ ॥
ये वदन्ति तव नाम निर्मलं ते तरन्ति सकलाघसागरम् ।
संस्मृतिर्यदि कृता तदा मया प्राप्यतां सकलदुःखवारक ! ॥ २८ ॥

सुमतिरुवाच ।

एवं गायन्गुणान्रात्रौ दिवा वापि महीपतिः ।
क्षणमात्रं न विश्रान्तो निद्रामाप न वै सुखम् ॥ २९ ॥
गायन्नाच्छन्नृणंस्तिष्ठन्वदत्येतदहर्निशम् । दर्शयस्व कृपानाथ स्वतनुं पुरुषोत्तम ! ॥
एवं राज्ञःपञ्चदिनं गतं गङ्गाब्धिसङ्गमे । तदा कृपाब्धिःकृपया चिन्तयामास गोपतिः ॥
असौ राजा मदीयेन गानेन विगताघकः । पश्यतान्मामकींप्रेष्ठां सुरासुरनमस्कृताम् ॥
इति सञ्चिन्त्य भगवान्कृपापूरितमानसः ।
संन्यासिवेषमास्थाय ययौ राज्ञोऽन्तिकं विभुः ॥ ३३ ॥
तत्र गत्वा महाराज त्रिदण्डियतिवेषधृत् ।
भक्तानुकम्पया प्राप्तो वीक्षितस्तापसेन हि ॥ ३४ ॥
ॐनमो विष्णवेत्युक्त्वा नमश्चक्रे नृपोत्तमः । अर्घ्यपाद्यासनैःपूजां चकार हरिमानसः ॥
उवाच भाग्यमतुलं यद्भवानक्षिगोचरः । अतःपरं दास्यते मे गोविन्दो निजदर्शनम् ॥
इति श्रुत्वा तु तद्वाक्यं संन्यासी निजगाद तम् ।
राजञ्छृणुष्व कथितं मम वाक्यं विनिःसृतम् ॥ ३७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहं ज्ञानेन जानामि भूतं भव्यं भवच्च यत्। तस्मादहं ब्रुवे किञ्चिच्छृणुष्वैकाग्रमानसः

श्वो मध्याह्ने हरिर्दाता दर्शनं ब्रह्म दुर्ल्लभम्।
पञ्चभिः स्वजनैः साकं यास्यसे परमं पदम् ॥ ३९ ॥

त्वममात्यश्च महिला तव तापस वाडवः। पुरे तव करम्बाख्यःसाधुश्च तन्तुवायकः ॥
एतैःपञ्चभिरेतस्मिन्नीले पर्वतसत्तमे। यास्यसे ब्रह्मदेवेन्द्रवन्दितं सुरपूजितम् ॥ ४१ ॥

इत्युक्त्वाऽदृश्यतां प्राप्तो यतिः क्वापि न दृश्यते।
तदाकर्ण्य नृपो हर्षं प्राप चाशु स विस्मयम् ॥ ४२ ॥

राजोवाच।

स्वामिन्कोऽसौ समागत्य संन्यासी मां यदूचिवान्।
न दृश्यते पुनः कुत्र गतोऽसौ चित्तहर्षदः ॥ ४३ ॥

तापस उवाच।

राजंस्तव महाप्रेम्णा कृष्टचित्तःसमभ्यगात्। पुरुषोत्तम नामायं सर्वपापप्रणाशनः ॥

श्वो मध्याह्ने तव पुरो भविष्यति महान्गिरिः।
तमारुह्य हरिं दृष्ट्वा कृतार्थस्त्वं भविष्यसि ॥ ४५ ॥
इति वाक्यसुधापूरनाशितस्वान्तसञ्ज्वरः।
हर्षं यमाप स नृपो ब्रह्माऽपि न हि वेत्ति तम् ॥ ४६ ॥

तदा दुन्दुभयो नेदुर्वीणापणवगोमुखाः। महानन्दस्तदा ह्यासीद्राजराजस्य चेतसि ॥
गायन्हरिं क्षणं तिष्ठन्हसञ्जल्पन्ब्रुवन्नमन्। आनन्दं प्राप सुघनं सर्वसन्तापनाशनम् ॥

इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधेसंन्यासिदर्शनं नामैकविंशोऽध्यायः ॥ २१ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# द्वाविंशोऽध्यायः

## रत्नग्रीवेण स्वप्ने भगवद्दर्शनम्

### सुमति रुवाच

अथ सर्वं दिनं नीत्वा हरिस्मरणकीर्तनैः । रात्रौ सुष्वाप गङ्गाया रोधस्युरुफलप्रदे ॥
ददर्श स्वप्नमध्ये तु स स्वात्मानं चतुर्भुजम् । शङ्खचक्रगदापद्मशार्ङ्गकोदण्डधारिणम् ॥

नृत्यन्तं पुरुषोत्तमस्य पुरतः शर्वादि देवैःसह,
श्रीमद्भिः स्वतनूयुतैररिगदाम्बूत्थाब्जहेत्यादिभिः ।
विष्वक्सेनवरैर्गणैः सुतनुभिः श्रीशं सदोपासितं,
दृष्ट्वा विस्मयमाप लोकविषयं हर्षं तथाऽत्यद्भुतम् ॥ ३ ॥

ददतं मनसोऽभीष्टं पुरुषोत्तमसंज्ञितम् । आत्मानं च कृपापात्रममन्यत महामतिः ॥
इत्येवं स्वप्नविषये ददर्श नृपसत्तमः । प्रातःप्रबुद्धो विप्राय जगाद स्वप्नमीक्षितम् ॥५॥

तच्छ्रुत्वा वाडवो धीमान्कथयामास विस्मितः ।
राजंस्त्वयाऽसौ दृष्टो यः पुरुषोत्तमसंज्ञितः ॥ ६ ॥

दास्यते शङ्खचक्रादि चिह्नितां स्वतनुं हरिः । इति श्रुत्वा तु तद्वाक्यं रत्नग्रीवो महामना

दापयामास दानानि दीनानां मानसोचितम् ।
स्नात्वा गङ्गाब्धिसंयोगे तर्पयित्वा पितॄन्सुरान् ॥ ८ ॥

गायन्हरिगुणग्रामं प्रत्यैक्षत च दर्शनम् । ततो मध्याह्नसमयेदिवि दुन्दुभयो मुहुः ॥९॥
नेदुःसुरकराघातबहुशब्दसुशब्दिताः । अकस्मात्पुष्पवृष्टिश्च बभूव नृपमस्तके ॥ १० ॥

धन्योऽसि नृपवर्य ! त्वं नीलं पश्याक्षिगोचरम् ।
शृणोतीति यदा वाक्यं नृपो देवप्रणोदितम् ॥ ११ ॥
तदा स सूर्यकोटीनामधिकान्तिधरोऽद्भुतः ।
राज्ञोऽक्षिगोचरो जातो नीलनामा महागिरिः ॥ १२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजतैः कानकैः शृङ्गैः समन्तात्परिराजितः। किमग्निः प्रज्वलत्येष द्वितीयः किमु भास्करः

क्रिमयं वैद्युतः पुञ्जो ह्यकस्मात्स्थिरकान्तिधृत्।

तापसब्राह्मणो दृष्ट्वा नीलप्रस्थं सुशोभितम्॥ १४॥

राज्ञे निवेदयामास एष पुण्यो महागिरिः। तच्छ्रुत्वा नृपतिश्रेष्ठः शिरसा प्रणनाम ह॥

धन्योऽस्मि कृतकृत्योऽस्मि नीलो मे दृष्टिगोचरः

अमात्यो राजपत्नी च करम्बस्तन्तुवायकः॥ १६॥

नीलदर्शनसंहृष्टा बभूवुः पुरुषर्षभ!। पञ्चैते विजये काले नीलपर्वतमारुहन्॥ १७॥

महादुन्दुभिनिर्घोषाञ्छृण्वन्तो ह्यमरैः कृतान्। तस्योपरितने शृङ्गे चित्रपादपराजिते॥

ददर्श हाटकाबद्धं देवालयमनुत्तमम्। ब्रह्मागत्य सदा पूजां करोति परमेष्ठिनः॥१९॥

नैवेद्यं कुरुते यत्र हरिसन्तोषकारकम्। दृष्ट्वाऽथ तत्र विमलं देवायतनमुत्तमम्॥

प्रविवेश परीवारैः पञ्चभिः सह संवृतः। तत्र दृष्ट्वा जातरूपे महामणिविचित्रिते॥

सिंहासने विराजन्तं चतुर्भुजमनोहरम्। चण्डप्रचण्डविजयजयादिभिरुपासितम्॥२२॥

प्रणनाम सपत्नीको राजा सेवकसंयुतः। प्रणम्य परमात्मानं महाराजः सुरोत्तमम्॥

स्नापयामास विधिवद्वेदोक्तैः स्नानमन्त्रकैः। अर्घ्यपाद्यादिकं चक्रे प्रीतेन मनसा नृपः॥

चन्दनेन विलिप्यैनं सुवस्त्रे विनिवेद्य च। धूपमारार्तिकं कृत्वा सर्वस्वादु मनोहरम्॥

नैवेद्यं भगवन्मूर्त्यै न्यवेदयदथो नृपः। प्रणम्य च स्तुतिं चक्रे तापसब्राह्मणेन च॥

यथामति गुणग्रामगुम्फितस्तोत्रसञ्चयैः॥ २७॥

राजोवाच।

एकस्त्वं पुरुषः साक्षाद्भगवान्प्रकृतेः परः। कार्यकारणतो भिन्नो महत्तत्त्वादिपूजितः

त्वन्नाभिकमलाज्जज्ञे ब्रह्मा सृष्टिविचक्षणः। तथा संहारकर्त्ता च रुद्रस्त्वन्नेत्रसम्भवः

त्वयाऽऽज्ञप्तः करोत्यस्य विश्वस्य परिचेष्टितम्।

त्वत्तो जातं पुराणाद्यज्जगत्स्थास्नु चरिष्णु च॥ ३०॥

चेतनाशक्तिमाविश्य त्वमेनं चेतयस्यहो। तव जन्म तु नास्त्येव नान्तस्तव जगत्पते

वृद्धिक्षयपरीणामास्त्वयि सन्त्येव नो विभो।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथापि भक्तरक्षार्थं धर्मस्थापनहेतवे ॥ ३२ ॥
करोषि जन्मकर्माणि ह्यनुरूपगुणानि च । त्वयामात्स्यंवपुर्धृत्वाशङ्खस्तुनिहतोऽसुरः
वेदाः सुरक्षिताः ब्रह्मन्महापुरुष ! पूर्वज ! । शेषो न वेत्ति नापित्वां भारत्यपि महेश्वरी
किमुतान्ये महाविष्णो ! माद्दृशास्तु कुबुद्धयः ।
मनसा त्वां न चाप्नोति वागियं परमेश्वरी ॥ ३५ ॥
तस्मादहं कथं त्वां वै स्तोतुं स्यामीश्वरः प्रभो ! ।
इति स्तुत्वा स शिरसा प्रणाममकरोन्मुहुः ॥ ३६ ॥
गद्गदस्वरसंयुक्तो रोमहर्षाङ्किताङ्गकः । इति स्तुत्या प्रहृष्टात्मा भगवान्पुरुषोत्तमः ॥
उवाच वचनं सत्यं राजानं प्रति सार्थकम् ॥ ३७ ॥
श्रीभगवानुवाच ।
स्तव स्तुत्या प्रहर्षोऽभून्ममराजन्महामते । जानीहि त्वं महाराज मां च प्रकृतितःपरम्
नैवेद्यभक्षणं त्वं हि शीघ्रं कुरु मनोहरम् । चतुर्भुजत्वमाप्तः सन्गन्ताऽसि परमं पदम्
त्वत्कृतस्तुतिरत्नेन योमांस्तोष्यतिमानवः । तस्यापिदर्शनंदास्ये भुक्तिमुक्तिवरप्रदम् ॥
इत्येवं वचनं राजा श्रुत्वा भगवतोदितम् । नैवेद्यभक्षणं चक्रे चतुर्भिःसह सेवकैः ॥
ततो विमानं सम्प्राप्तं किङ्किणीजालमण्डितम् ।
अप्सरोवृन्दसंसेव्यं सर्वभोगसमन्वितम् ॥ ४२ ॥
पुरुषोत्तमसंज्ञं च पश्यन्राजा स धार्मिकः । ववन्दे चरणौ तस्य कृपापात्रकृतात्मकः
तदाज्ञया विमाने स आरुह्य महिलायुतः । जगाम पश्यतस्तस्य दिवि वैकुण्ठमद्भुतम्
मन्त्रीधर्मपरो राज्ञः सर्वधर्म विदुत्तमः । ययौ साकं विमानेन ललनावृन्दसेवितः ॥
तापसब्राह्मणस्तत्र सर्वतीर्थावगाहकः । चतुर्भुजत्वं सम्प्राप्तो ययौ देवैर्विमानिभिः ॥
करम्बोऽपिमहाराज ! गानपुण्येन दर्शनम् ! ।
प्राप्तो ययौ सुरावासं सर्वदेवादि दुर्लभम् ॥ ४७ ॥
सर्वे प्रचलिता विष्णुलोकं परमद्भुतम् ।
चतुर्भुजाः ! शङ्खचक्र ! गदापाथोज ! धारिणः ॥ ४८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वे मेघश्रियःशुद्धा लसदम्भोजपाणयः । हारकेयूरकटकैर्भूषिताङ्गा ययुर्दिवम् ॥ ४९ ॥
तद्विमानावलीर्दृष्ट्वा लोकैःप्रकृतिभिस्तदा । दुन्दुभीनां तु निर्घोषस्तैःकृतःकर्णगोचरः
तदैको ब्राह्मणो ह्यासीद्विष्णुपादाब्जवल्लभः । गतस्तद्विरहाकृष्टचेता जातश्चतुर्भुजः ॥

तच्चित्रं वीक्ष्य लोकास्ते प्रशंसन्तो महोदयम् ।
गङ्गासागरसंयोगे स्नात्वाऽगुस्तं पुरम्प्रति ॥ ५२ ॥

अहोभाग्यं भूमिपते रत्नग्रीवस्य सन्मतेः । जगामानेन देहेन तद्विष्णोः परमं पदम् ॥
राजन्नसौ नीलगिरिः पुरुषोत्तमसत्कृतः । यं वीक्ष्यैव व्रजन्त्यद्धा वैकुण्ठं परमायनम्

एतन्नीलस्य माहात्म्यं यः शृणोति स भाग्यवान् ।
यः श्रावयति लोकान्वै तौ गच्छेतां परम्पदम् ॥ ५५ ॥
एतच्छ्रुत्वा तु दुःस्वप्नो नश्यति स्मृतिमात्रतः ।
प्रान्ते संसार निस्तारं ददाति पुरुषोत्तमः ! ॥ ५६ ॥
योऽसौ नीलाधिवासी च स रामः पुरुषोत्तमः ! ।
सीता ! साक्षान्महालक्ष्मीः ! सर्वकारण कारणम् ॥ ५७ ॥

हयमेधं चरित्वा स लोकान्वै पावयिष्यति । यन्नाम ब्रह्महत्यायाःप्रायश्चित्तेप्रदिश्यते
इदानीं त्वद्धयः प्राप्तो नीले पर्वतसत्तमे । पुरुषोत्तम देवं ! त्वं नमस्कुरु महामते ! ॥

तत्र निष्पापिनो भूत्वा यास्यामः परमम्पदम् ।
यस्य प्रसादाद्बहवो निस्तीर्णा भवसागरात् ॥ ६० ॥

एवं प्रवदतस्तस्य प्राप्तोऽश्वो नीलपर्वतम् । वायुवेगेन पृथिवीं कुर्वन्संक्षुण्णमण्डलाम्

तदा राजाऽपि तत्पृष्ठचारी नीलाभिधं गिरिम् ।
प्राप्तो गङ्गाब्धिसंयोगे स्नात्वाऽगात्पुरुषोत्तमम् ॥ ६२ ॥

स्तुत्वा नत्वा च देवेशं ! सुरासुरनमस्कृतम् । जातं कृतार्थमात्मानममन्यत स शत्रुहा

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे
नीलगिरिमहिमवर्णनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# त्रयोविंशोऽध्यायः

## हयस्य सुबाहुराजपालित चक्राङ्कनगरम्प्रत्यागमनम् ।

शेष उवाच ।

क्षणं स्थित्वा तृणं जग्ध्वा ययौ वाजी मनोजवः ।
वीरश्रेणीवृतः पत्रं भाले धृत्वा सचामरः ॥ १ ॥
शत्रुघ्नेन सुवीरेण लक्ष्मीनिधिनृपेण च । पुष्कलेनोग्रवाहेन प्रतापाग्र्येण रक्षितः ॥२॥
ययौ पुरीं स चक्राङ्कां सुबाहुपरिरक्षिताम् । अनेकवीरकोटीभीरक्षितोऽनुगतः प्रभो ॥
तदा पुत्रोऽस्य दमनो मृगयामास्थितो महान् ।
ददर्शाश्वं भालपत्रं चन्दनादिकचर्चितम् ॥ ४ ॥
विलोक्य सेवकं प्राह कस्याश्वो मेऽक्षिगोचरः ।
भाले पत्रं धृतं किंनु चामरं किन्तु शोभनम् ॥ ५ ॥
इति राज्ञो वचःश्रुत्वा सेवकःप्रययौ ततः । यत्रासौ वर्तते वाजी भालपत्रःसुशोभनः ॥
गृहीत्वा तं केशसङ्घे रत्नमालाविभूषितम् । निनाय चाग्रे भूपस्य सुबाहुकुलधारिणः ॥
सपत्रं वाचयामास सुन्दराक्षरशोभितम् । अयोध्याधिपतिश्चासीद्राजा दशरथो बली ॥
तस्यात्मजो रामभद्रः सर्वशूरशिरोमणिः ।
नान्योऽस्ति तत्समः पृथ्व्यां धनुर्धरणविक्रमः ॥ ६ ॥
तेनासौ मोचितो वाजी चन्दनादिकचर्चितः । तं पालयति धर्मात्मा शत्रुघ्नःपरवीरहा
ये च शूरा वयं वीरा धनुर्हस्ता इमे वयम् । ते गृह्णन्तु बलाद्वाहं रत्नमालाविभूषितम्
तं च मोक्ष्यति शत्रुघ्नः सर्ववीरशिरोमणिः ।
अन्यथा पादयोस्तस्य प्रणतिं यान्तु धन्विनः ॥ १२ ॥
इत्यभिप्रायमालोक्य जगाद नृपनन्दनः । राम एव धनुर्धारी न वयं क्षत्त्रियाःस्मृताः ॥
* ताते मेऽवस्थिते पृथ्व्यां कोऽयं गर्वो महान् भुवि ।

---

* ताते मम स्थिते इति आनन्द श्रम मुद्रित पुस्तके पाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप्नोतु गर्वस्य फलं मम निर्मुक्तसायकैः ॥ १४ ॥
अद्य मे निशिता बाणाःशत्रुघ्नं किंशुकं यथा । पुष्पितं विदधत्वद्धाक्षतावृतशरीरकम्
दारयन्तु कपोलांश्च सायका मम दन्तिनाम् ।
अश्वान्पश्यन्तु शतशो रुधिरौघपरिप्लुतान् ॥ १६ ॥
पिबन्तु योगिनीसङ्घा रुधिराणि नृमस्तकैः ।
शिवा भवन्तु सन्तुष्टा मद्वैरिक्रव्यभक्षणैः ॥ १७ ॥
पश्यन्तु सुभटास्तस्य मम बाहुबलं महत् । कोदण्डदण्डनिर्मुक्ताःशरकोटीर्विमुञ्चतः ॥
इत्थमुक्त्वा महीपस्य तनुजो दमनाभिधः । स्वपुरं प्रेषयित्वा तं प्रहृष्टोऽभवदुद्भटः ॥
सेनापतिमुवाचेदं सज्जीकुरु महामते ! । सेनां परिमितां मह्यं वैरिवृन्दनिवारणे ॥२०॥
सज्जां सेनां विधायाऽऽशु संमुखो रणमण्डले ।
स्थितवान्यावदत्युग्रस्तावत्प्राप्ता हयानुगाः ॥ २१ ॥
क्वाऽसौ हयो महाराज्ञो भालपत्रेण चिह्नितः ।
पप्रच्छुस्ते तु चान्योन्यमतिव्याकुलिता मुहुः ॥ २२ ॥
तावद्ददर्श पुरतःप्रतापाग्र्यःपरन्तपः । सज्जीभूतं तु कटकं वीरशब्दनिनादितम् ॥२३॥
तत्रावदञ्जनाःकेचिन्नीतोऽश्वोऽनेन भूपते । अन्यथा संमुखस्तिष्ठेत्कथं वीरोबलानुगः ॥
इत्याकर्ण्य प्रतापाग्र्यःप्रेषयामास सेवकम् । सगत्वा तत्र पप्रच्छ कुत्राश्वो रामभूपतेः
केन नीतःकुतो नीतो रामं जानाति नो कुधीः । यं शक्रप्रमुखा देवा बलिमादाय सन्नताः
तस्य वै धर्मराजस्य कुपितं तु बलं महत् ।
सर्वथा हि ग्रसेतैनं प्रणतिं चेन्न यास्यति ॥ २७ ॥
इत्थमुक्तं समाकर्ण्य तदा राजसुतो बली । तं वै धिक्कारयामास वाग्जालेन सुदुर्मनाः
मयानीतो यज्ञहयःपत्रचिह्नाद्यलङ्कृतः । ये शूरास्ते तु मां जित्वा मोचयन्तु बलादिह
सेवकस्तद्वचःश्रुत्वा रोषपूर्णो हसन्ययौ । राज्ञे निवेदयामास यथावदुपवर्णितम् ॥३०
तच्छ्रुत्वा रोषताम्राक्षःप्रतापाग्र्यो महाबलः । ययौ योद्धुं राजपुत्रं महावीरपुरस्कृतम्
रथेन कनकाङ्गेन चतुर्वाजिसुशोभिना ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुकूबरेण सर्वास्त्रपूरितेन ययौ बली ॥ ३२ ॥

धनुष्टङ्कारयामास महाबलसमन्वितः । पुनःपुनर्जहासोच्चैःकोपादुद्गमिताश्रुकः ॥३३॥

अश्ववाहगजारूढाःखड्गोल्लसितपाणयः । अन्वयुस्ते प्रतापाग्र्यं रोषपूर्णाकुलेक्षणम् ॥

हस्तिनःपत्तयश्चैव कोटिशःप्रधनोद्यताः । चिरकालमभीप्सन्तो रणं वीरेण कारितम् ॥

तदोद्यतं समाज्ञाय रिपुसैन्यं नृपात्मजः । प्रत्युज्जगाम वीराग्र्यो महाबलपरीवृतः ॥

सन्नद्धःकवची खड्गी शरासनधरो युवा । लीलयैव ययौ योद्धुं मृगराड्गजतामिव ॥

तदा योधाः प्रकुपिताः परस्परवधैषिणः ।
छिन्धि भिन्धीति भाषन्तो रणकार्यविशारदाः ॥ ३८ ॥

पत्तयः पत्तिसङ्घेन गजारूढाश्च सादिभिः ।
रथारूढा रथस्थैश्च वाहारूढाश्च वाहगैः ॥ ३९ ॥

गजाभिन्ना द्विधा जाता हयाश्च द्विदलीकृताः । अनेकनरमस्तिष्कैर्मेदिनीपूरिताह्यभूत्

तदा प्रकुपितो राजा प्रतापाग्र्यो महाबलः । स्वसैन्यकदनोद्युक्तं राजपुत्रं समीक्ष्य च

उवाच सारथिं तत्र प्रापयाश्वान्यतो मम । सैन्यस्य कदनासक्तो राजपुत्रो महारथः ॥

अथ वीरशिरोरत्ननमिताङ्घ्रिर्नृपात्मजः ।
ययौ संमुखमेवाऽस्य प्रतापाग्र्यस्य वीर्यवान् ॥ ४३ ॥

सारथिः प्रापयामास प्रतापाग्र्यस्य वाजिनः ।
यत्रासौ दमनो वीरः सर्वशूरशिरोमणिः ॥ ४४ ॥

गत्वा तमाह्वयामास राजपुत्रं रणोद्यतम् । रथे पुरटनिर्णिक्ते तिष्ठन्कोदण्डदण्डभृत् ॥

रे राजपुत्रक! शिशो ! त्वया बद्धोऽश्वसत्तमः। न जानासि महाराजं सर्ववीरेन्द्रसेवितम्

यस्य प्रतापं दैत्येन्द्रो न शक्तः सोढुमद्भुतम् ।
तस्य त्वं वाजिनं नीत्वा गतोऽसि पुटभेदनम् ॥ ४७ ॥

मां जानीहि पुरःप्राप्तं कालरूपं तु वैरिणम् । मुञ्चाश्वमर्भ ! गच्छाशु बालक्रीडनकं कुरु

कस्यात्मजस्त्वं कुत्रत्यः कथं नोऽदीर्घदर्शिना ।
धृतोऽश्वस्त्वया संजाता क्षुधा मम शिशो ! त्वयि ॥ ४९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्थमाकर्ण्य दमनःस्मितं चक्रे महामनाः । उवाच च प्रतापाग्र्यं तृणीकुर्वंश्च तद्बलम्

दमन उवाच ।

मयाबद्धो बलादश्वो नीतःस्वपुटभेदनम् । नार्पयिष्येऽद्य सप्राणःकुरु युद्धं महाबल ! ॥

त्वया यदुक्तं बालस्त्वं गत्वा क्रीडनकं कुरु । तन्मे पश्य महाराज ! क्रीडनं रणमूर्धनि

शेष उवाच ।

इत्युक्त्वा सगुणं चापं विधाय भूभुजोऽङ्गज । शराणां शतमाधत्त प्रतापाग्र्यस्य वक्षसि

सन्धाय बाणशतकं शङ्खं दध्मौ प्रतापवान् । तेन शङ्खनिनादेन कातराणां भयं ह्यभूत् ॥

ताडयामास हृदये बाणानां शतकेन सः । प्रतापाग्र्य प्रचिच्छेद लघुहस्त सुपर्वणः ॥

स बाणच्छेदनं दृष्ट्वा कुपितो व्यसृजच्छरान् ।

कङ्कपक्षान्वितांस्तीक्ष्णभल्लान्राजात्मजो बली ॥ ५६ ॥

आकाशे भुवि मध्ये च बाणा ददृशिरेऽश्रिताः ।

स्वनामचिह्नितास्तीक्ष्णधारापातसुशोभिताः ॥ ५७ ॥

शरास्तद्बाहु हृदये लग्ना वह्निकणान्बहून् । सृजन्तःकुर्वते सैन्यदाहनं तदभून्महत् ॥

प्रतापाग्र्यःप्रकुपितस्तिष्ठ तिष्ठेति च ब्रुवन् । शरेण दशसङ्ख्येन ताडयामास मूर्धनि ॥

ते बाणा राजपुत्रस्य ललाटे परिनिष्ठिताः । विराजन्तेस्म च मुनेदशशाखास्तरोरिव ॥

तेन बाणप्रहारेण विव्यथे न महामनाः । यष्टिकाप्रहतो यद्वत्कुञ्जरः सप्तवर्षकः ॥ ६१ ॥

बाणान्धनुषि सन्धाय मुमोच त्रिशताञ्छुभान् ।

सुवर्णपुङ्खरचितान्महाकालानलोपमान् ॥ ६२ ॥

ते बाणास्तु प्रतापाग्र्यवक्षो भित्वा गता ह्यधः ।

शोणिताक्ता यथा रामचन्द्रभक्तिपराङ्मुखाः ॥ ६३ ॥

प्रतापाग्र्यःप्रकुपितःशरान्मुञ्चन्सहस्रशः । अकरोद्विरथं सूनुं सुबाहोस्तत्क्षणादद्भुतम् ॥

चतुर्भिश्चतुरोवाहान्द्वाभ्यां ध्वजमशातयत् । एकेन सारथेःकायाच्छिरो मह्यामपातयत्

चतुर्भिस्ताडयामास तं सूनुं नृपतेःपुनः । तत्क्षणाच्चापमेकेन गुणयुक्तं तु चिच्छिदे ॥

सोऽन्यं रथं समारुह्य हयरत्नसुशोभितम् । धनुःकरे समादाय सज्यं चक्रे महामनाः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्युवाच प्रतापाग्र्यं त्वया विक्रान्तमद्भुतम् ।
पश्येदानीं पराक्रान्तिं धनुषो मम सङ्कट ! ॥ ६८ ॥

एवमुक्त्वा तु दमनो बाणान्दश समाददे । चतुर्भिश्चतुरोवाहान्निनाय यमसादनम् ॥
चतुर्भिस्तिलशःकृत्तो रथश्चक्रसमन्वितः । एकेन हृदि विव्याध बाणेनैकेन सारथिम् ॥
जगर्ज शङ्खमापूर्य शङ्खशब्दसमन्वितः । तत्कर्म पूजयामास साधु वीर महाबल ! ॥७१॥

इति विक्रान्तमालोक्य प्रतापाग्र्यो रुषान्वितः ।
अन्यं रथं समास्थाय ययौ योद्धुं नृपात्मजम् ॥ ७२ ॥
उवाच वीर ! पश्य त्वं मम विक्रान्तमद्भुतम् ।
इत्युक्त्वाऽऽशु मुमोचौघाञ्छराणां शितपर्वणाम् ॥ ७३ ॥

शराःसर्वत्र दृश्यन्ते कुञ्जरेषु हयेषु च । परब्रह्मेव सर्वत्र व्याप्ताश्चान्तरगोचराः ॥ ७४ ॥

तं राजपुत्रं शितबाणकोटिभिर्व्याप्तं विधायाऽऽशु जगर्ज विक्रमी ।
संहर्षयन्स्वीयगणान्परान्महान्कुर्वन्हृदा शून्यतमान्गतासुकान् ॥ ७५ ॥
स राजपुत्रः शितसायकव्रजैः सम्पूर्णमात्मानमवेक्ष्य रोषितः ।
जग्राह शस्त्राणि दुरन्तविक्रमो धनुश्च धुन्वन्भुजदण्डयोर्महान् ॥ ७६ ॥
चकर्त सर्वाण्यस्त्राणि शस्त्राणि च महाबलः ।
रोषताम्रेक्षणो मुञ्चञ्छरान्वैरिविदारिणः ॥ ७७ ॥

तच्छस्त्रजालं निर्धूय राजपुत्रो जगाद तम् । क्षमस्वैकं प्रहारं मे यदि शूरोऽसि मारिष!
यद्यनेन भवन्तं वै रथाच्चेत्पातयामि न । प्रतिज्ञां शृणु मे वीर ! मम गर्वेण निर्मिताम्
वेदं निन्दन्ति ये मत्ता हेतुवादविचक्षणाः । तेषां पापं ममैवास्तु नरकार्णवमज्जकम्

इत्युक्त्वा बाणमासाद्य कोदण्डे कालसन्निभम् ।
ज्वालामालाकुलं तीक्ष्णं निषङ्गादुद्धृतं वरम् ॥ ८१ ॥

स मुक्तो नृपवर्येण हृदि लक्ष्यीकृतःशरः । जगाम तरसा तं वै कालानलसम्प्रभः ॥
प्रतापाग्र्यःशरं दृष्ट्वा स्वपातनसमुद्यतम् । बाणान्धनुष्यथाधत्त शरच्छेदाय वै शितान्
सबाणःसर्वबाणांस्तांश्छिन्दन्नध्यत एव हि । जगाम वै प्रतापाग्र्य हृदयं धैर्यसंयुतम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संलग्नो हृदि नालीकःप्रविवेश तदन्तरम् । राजा कृतप्रहारस्तु पपात धरणीतले ॥८५॥
मूर्च्छितं चेतनाहीनं रथोपस्थाद्गतं भुवि । सारथिस्तं समादायापोवाह रणमण्डलात्
हाहाकारो महानासीद्बलं भग्नं गतं ततः । यत्र शत्रुघ्ननामासौ वीरकोटिपरीवृतः ॥

राजात्मजो जयं प्राप्य प्रतापाग्र्यं विजित्य सः ।
प्रतीक्षां तु चकाराऽस्य शत्रुघ्नस्य च भूपतेः ॥ ८८ ॥

इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
राजपुत्रयुद्धकथनं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशोऽध्यायः

### दमनपुष्कलयोर्युद्धवर्णनम् ।

शेष उवाच ।

शत्रुघ्नस्तु क्रुधाविष्टो दन्तान्दन्तैर्विनिष्पिषन् । हस्तौ धुन्वँल्लेलिहानमधरं जिह्वयाऽसकृत्
पुनःपुनस्तान्पप्रच्छ केनाश्वो नीयते मम । प्रतापाग्र्यःकेन जितःसर्वशूरशिरोमणिः ॥
सेवकास्ते तदा प्रोचुर्दमनो नाम शत्रुहन् । सुबाहुजःप्रतापाग्र्यं जितवान्हयमाहरत् ॥
इति श्रुत्वा हयं नीतं दमनेन स्ववैरिणा । आजगाम सवेगेन यत्राभूद्रणमण्डलम् ॥
तत्रापश्यत्स शत्रुघ्नो गजान्दीर्णकपोलकान् । पर्वतानिव रक्तोदे मज्जमानान्मदोद्धतान्
हयास्तत्रनिजारोह कर्तृभिःसहिताःक्षताः । मृता वीरेण ददृशे शत्रुघ्नेन सुकोपिना ॥
नरान्रथान्गजान्भग्नान्वीक्षमाणः स शत्रुहा । अतीव चुक्रुधे यद्वत्प्रलये प्रलयार्णवः ॥
पुरतो दमनं वीक्ष्य हयनेतारमुद्भटम् । प्रतापाग्र्यस्य जेतारं तृणीकृत्य निजं बलम् ॥

तदा राजा इत्युवाच योधान्कोपाकुलेक्षणः ।
कोऽसौ दमनजेताऽत्र सर्वशस्त्रास्त्रधारकः ॥ ६ ॥

यो वै राजसुतं वीरं रणकर्मविशारदम् । जेष्यत्यस्त्रेण निर्भीतःसज्जीभूतो भवत्वयम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति वाक्यं समाकर्ण्य पुष्कलःपरवीरहा। दमनं जेतुमुद्युक्तो जगाद वचनं त्विदम्॥
स्वामिन्काऽयं दमनकःकृतेऽपरिमितं बलम्। जेष्येऽहं त्वत्प्रतापेन गच्छाम्येष महामते
सेवके मयि युद्धाय स्थिते कैर्नीयते हयः। रघुनाथप्रतापोऽयं सर्वं कृत्यं करिष्यति

स्वामिञ्छृणु प्रतिज्ञां मे तव मोदप्रदायिनीम्।
विजेष्ये दमनं युद्धे रणकर्म विचक्षणम्॥ १४॥

रामचन्द्रपदाम्भोजमध्वास्वादवियोगिनाम्। यदघं तु भवेत्तन्मे दमनं न जये यदि॥
पुत्रो यो मातृपादान्यत्तीर्थं मत्वा तया सह। विरुद्धयेत्तत्तमो मह्यं न जये दमनं यदि
अद्य मद्बाणनिर्भिन्नमहोरस्को नृपाङ्गजः। अलङ्करोतु प्रधने भूतलं शयनेन हि॥१७॥

शेष उवाच।

इति प्रतिज्ञामाकर्ण्य पुष्कलस्य रघूद्वहः। जहर्ष चित्ते तेजस्वी निदिदेश रणम्प्रति॥
आज्ञप्तोऽसौ ययौ सैन्यैर्बहुभिःपरिवारितः। यत्रास्ते दमनो राजपुत्रः शूरकुलोद्भवः॥
दमनोऽपि तमाज्ञाय ह्यागतं रणमण्डले। प्रत्युज्जगाम वीराग्र्यःस्वसैन्यपरिवारितः॥

अन्योन्यं तौ संमिलितौ रथस्थौ रथशोभिनौ।
समरे शक्रदैत्यौ किं युद्धार्थं रणमागतौ॥ २१॥

उवाच पुष्कलस्तं वै राजपुत्रं महाबलम्। राजपुत्र! दमनक! मां जानीहि समागतम्
सप्रतिज्ञं तु युद्धाय भरतात्मजमुद्भटम्। पुष्कलेन स्वनाम्ना च लक्षितं विद्धि सत्तम!
रघुनाथपदाम्भोजनित्यसेवामधुव्रतम्। त्वां जेष्ये शस्त्रसङ्घेन सज्जीभव महामते!
इति वाक्यं समाकर्ण्य दमनःपरवीरहा। प्रत्युवाच हसन्वाग्मी निर्भयो दृष्टविक्रमः॥
सुबाहुपुत्रं दमनं पितृभक्तिहृताघकम्। विद्धि मामश्वनेतारं शत्रुघ्नस्य महीपतेः॥२६॥
जयो दैवविसृष्टोऽयं यस्य चाऽलङ्करिष्यति। स प्राप्नोति निरीक्षस्व बलं वै रणमूर्धनि

इत्युक्त्वा सशरं चापं विधायाकर्णपूरितम्।
मुमोच बाणान्निशितान्वैरिप्राणापहारिणः॥ २८॥
ते बाणास्त्वाविलीभूताश्छादयामासुरम्बरम्।
सूर्यभानुप्रभा यत्र बाणच्छाया निवारिता॥ २९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गजानां कटभित्त्योघे लग्नासायकसन्ततिः। अलङ्करोति धातूनां रागा इव विचित्रिताः॥
पतितास्तत्र दृश्यन्ते नरा वाहा गजा रथाः। शरव्रातेन नृपतेःसुतेन परिताडिताः॥
तद्विक्रान्तं समालोक्य पुष्कलःपरवीरहा। शराणां छायया व्याप्तं रणमण्डलमीक्ष्य च

शरासने समाधत्त बाणं वह्न्यभिमन्त्रितम्।
आचम्य सम्यग्विधिवन्मोचयामास सायकम्॥ ३३॥
ततोऽग्निःप्रादुरभवत्तत्र सङ्ग्राम मूर्धनि।
ज्वालाभिर्विलिहन्व्योम प्रलयाग्निरिवोत्थितः॥ ३४॥

ततोऽस्य सैन्यं निर्दग्धं त्रासं प्राप्तं रणाङ्गणे। पलायनपरं जातं वह्निज्वालाभिपीडितम्

छत्राणि तु प्रदग्धानि चन्द्राकाराणि धन्विनाम्।
दृश्यन्ते जातरूपाभकान्तिधारीणि तत्र ह॥ ३६॥

हया दग्धाःपलायन्ते केसरेषु च वैरिणाम्। रथा अपि गता दाहं सुकूबरसमन्विताः

मणिमाणिक्यरत्नानि वहन्तःकरभास्ततः।
पलायन्ते दहनभूज्वालामालाभिपीडिताः॥ ३८॥

कुत्रचिद्दन्तिनो नष्टाःकुत्रचिद्धयसादिनः। कुत्रचित्पत्तयो नष्टा वह्निदग्धकलेवराः॥
शराःसर्वे नृपसुतप्रमुक्ताः प्रलयं गताः। आशुशुक्षणिकीलाभिर्भस्मीभूताःसमन्ततः॥
तदा स्वसैन्ये दग्धे च दमनो रोषपूरितः। सर्वास्त्रवित्तच्छान्त्यर्थं वारुणास्त्रमथाददे॥
वारुणं वह्निशान्त्यर्थं मुक्तं तेन महीभृता। आप्लावयद्बलं तस्य रथवाजिसमाकुलम्॥

रथा विप्लावितास्तोयैर्दृश्यन्ते परिपन्थिनाम्।
गजाश्चापि परिप्लुष्टाः स्वीयाः शान्तिमुपागताः॥ ४३॥
वह्निश्च शान्तिमगमदग्न्यस्त्रपरिमोचितः।
शान्तिमाप बलं स्वीयं वह्निज्वालाभिपीडितम्॥ ४४॥
कम्पिताः शीततोयेन सीत्कुर्वन्ति च वैरिणा।
करका वृष्टिभिः क्षिप्ता वायुना च प्रपीडिताः॥ ४५॥

तदा स्वबलमालोक्य तोयपूरेण पीडितम्। कम्पितं क्षुभितं नष्टं वारुणेन विनिर्हतम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदाऽतिकोपताम्राक्षःपुष्कलो भरतात्मजः । वायव्यास्त्रं समाधत्त धनुष्येकं महाशरम्
ततो वायुर्महानासीद्वायव्यास्त्रप्रचोदितः । नाशयामास वेगेन घनानीकमुपस्थितम् ॥

वायुना स्फालिता नागाःपरस्पर समाहताः ।
अश्वाश्च संहतान्योन्यं स्वस्वारोहसमन्विताः ॥ ४६ ॥

नराःप्रभञ्जनोद्धूता मुक्तकेशा निरोजसः । पतन्तोऽत्र समीक्ष्यन्ते वेताला इव भूगताः
वायुना स्वबलं सर्वं परिभूतं विलोक्य सः । राजपुत्रःपर्वतास्त्रं धनुष्येवं समादधे ॥

तदा तु पर्वताः पेतुर्मस्तकोपरि युध्यताम् ।
वायुः सञ्छादितस्तैस्तु न प्रचक्राम कुत्रचित् ॥ ५२ ॥

पुष्कलो वज्रसंज्ञं तु समाधत्त शरासनम् । वज्रेण कृत्तास्ते सर्वे जाताश्च तिलशःक्षणात्

वज्रं नगात्रजःशेषान्कृत्वा बाणाभिमन्त्रितम् ।
राजपुत्रोरसि प्रोच्चैः पपात स्वनवद् भृशम् ॥ ५४ ॥
सस्वाकुलितचेतस्को हृदि विद्धः क्षतो भृशम् ।
विव्यथे वलवान्वीरःकश्मलं परमाप सः ॥ ५५ ॥

तं वै कश्मलितं दृष्ट्वा सारथिर्नयकोविदः । अपोवाहरणात्तस्मात्क्रोशमात्रं नरेन्द्रजम्
ततो योधा राजसूनोःप्रनष्टाःप्रपलायिताः । गत्वा पुरीं समाचख्युःकश्मलस्थंनृपात्मजम्
पुष्कलो जयमाप्यैवं रणमूर्धनि धर्मवित् । न प्रहर्तुं पुनः शक्तो रघुनाथवचः स्मरन् ॥
ततो दुन्दुभि निर्घोषो जयशब्दो महानभूत् । साधु साध्विति वाचश्च प्रावर्तन्त मनोहराः
हर्षं प्राप स शत्रुघ्नो जयिनं वीक्ष्य पुष्कलम् । प्रशशंस सुमत्यादिमन्त्रिभिःपरिवारितः

इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे पुष्कलविजयो नाम चतुर्विंशतितमोऽध्यायः ॥२४॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# पञ्चविंशोऽध्यायः

## सुबाहोः सैन्येन सह युद्धभूमिम्प्रत्यागमनवर्णनम्

शेष उवाच ।

अथ वीक्ष्य भटान्निजान्नृपो रुधिरौघेण परिप्लुताङ्गकान् ।
दुखमाप न वै शुशोच तान्परिपप्रच्छ सुतस्य चेष्टितम् ॥ १ ॥
गदताऽखिलकर्म तस्य वै स कथं चाहरदश्ववर्यकम् ।
कथयन्तु पुनःकियद्बलं बत वीराः कति योद्धुमागताः ॥ २ ॥
अथ शत्रुबलोन्मुखःकथं मम वीरो दमनो रणं व्यधात् ।
विजयं च विधाय दुर्जयं किल वीरं बत कोऽप्यशातयत् ॥ ३ ॥
इत्याकर्ण्य वचो राज्ञः प्रत्यूचुस्तेऽस्य सेवकाः ।
क्षतजेन परिक्लिन्नगात्रवस्त्रादिधारिणः ॥ ४ ॥
राजन्नश्वं समालोक्य पत्रचिह्नाद्यलङ्कृतम् । ग्राहयामास गर्वेण तृणीकृत्य रघूत्तमम्
ततो हयानुगःप्राप्तःस्वल्पसैन्यसमावृतः । तेन साकमभूद्युद्धं तुमुलं रोमहर्षणम् ॥ ६ ॥
तं मूर्च्छितं ततःकृत्वा तव पुत्रःस्वसायकैः । यावत्तिष्ठत्यथायातःशत्रुघ्नभ्रातृपुत्रकः ॥
ततो युद्धं महदभूच्छस्त्रास्त्रपरिबृंहितम् । बहुशो जयमापेदे तव पुत्रो महाबलः ॥ ८ ॥
इदानीं मुक्तमस्त्रं तु शत्रुघ्नभ्रातृसूनुना । मूर्च्छितःप्रधने राजन्कृतो वीरःसुतस्तव ॥ ९ ॥
इति वाक्यं समाकर्ण्य रोषशोकसमन्वितः । स्थगिताङ्ग इवासीत्स समुद्र इव पर्वणि
उवाच सेनाधिपतिं रोषप्रस्फुरिताधरः । दन्तैर्दन्ताँल्लिहन्नोष्ठं जिह्वया शोककर्शितः ॥
सेनापते ! कुरुष्वारान्मम सेनां तु सज्जिताम् ।
योत्स्ये रामस्य सुभटैर्मम पुत्रोपघातकैः ॥ १२ ॥
अद्याऽहं मम पुत्रस्य दुःखदं निशितैःशरैः । पातयिष्ये यदि ह्येनं रक्षिताऽपि महेश्वरः ॥
सेनापतिरिदं वाक्यं प्रोक्तं सुभुजभूपतेः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निशम्य च तथा कृत्वा सज्जीभूतोऽभवत्स्वयम् ॥ १४ ॥
राज्ञे निवेदयामास स सज्जां चतुरङ्गिणीम् ।
सेनां कालबलप्रख्यां हतदुर्जनकोटिकाम् ॥ १५ ॥
श्रुत्वा सेनापतेर्वाक्यं सुबाहुःपरवीरहा । निर्जगाम ततो यत्र शत्रुघ्नःस्वसुतार्दनः ॥१६
कुञ्जरैश्च मदोन्मत्तैर्हयैश्चापि मनोजवैः । रथैश्च सर्वशस्त्रास्त्रपूरितै रिपुजेतृभिः ॥ १७ ॥
भूश्चकम्पे तदा तत्र सैन्यभारेण भूरिणा । संमर्दःसुमहानासीत्तत्र सैन्ये विसर्पति ॥१८
राजानं निर्गतं दृष्ट्वा रथेन कनकाङ्गिना । शत्रुघ्नबलमुद्युक्तं सर्ववैरिप्रहारकम् ॥ १९ ॥
सुकेतुस्तस्य वै भ्राता गदायुद्धविशारदः । रथेनाश्वाजगामायं सर्वशस्त्रास्त्रपूरितः ॥२०
चित्राङ्गस्तु सुतो राज्ञःसर्वयुद्ध विचक्षणः । जगाम स्वरथेनाशु शत्रुघ्नबलमुन्मदम् ॥
तस्यानुजो विचित्राख्यो विचित्ररणकोविदः । ययौ रथेन हैमेन भ्रातृदुःखेन पीड़ितः
अन्ये शूरा महेष्वासाःसर्वशस्त्रास्त्रकोविदाः । ययुर्नृपसमादिष्टाःप्रधनं वीरपूरितम्
राजा सुबाहुःसंरोषादागतःप्रधनाङ्गणे । विलोकयामास सुतं मूर्च्छितं शरपीडितम् ॥
रथोपस्थस्थितं मूढं स्वसुतंदमनाभिधम् । वीक्ष्य दुःखं मुहुःप्राप वीजयामास पल्लवैः
जलेन सिक्तःसंस्पृष्टो राज्ञा कोमलपाणिना । संज्ञामाप शनैर्वीरो दमनःपरमास्त्रवित्
उत्थितःक्व धनुर्मेऽस्ति क्व पुष्कल इतो गतः ।
संसज्य समरं त्यक्त्वा मद्बाणव्रणपीडितः ॥ २७ ॥
इति वाक्यं समाकर्ण्य सुबाहुः पुत्रभाषितम् । परमं हर्षमापेदे परिरभ्य सुतं स्वकम्
दमनो वीक्ष्य जनकं नृपं नम्रशिरोधरः । पपात पादयोर्भक्त्या क्षतदेहोऽस्त्रराजिभिः ॥
स्वसुतं रथसंस्थं तु विधाय नृपतिःपुनः । जगाद सेनाधिपतिं रणकर्मविशारदः ॥
व्यूहं रचय संग्रामे क्रौञ्चाख्यं रिपुदुर्जयम् । यमाविश्य जये सैन्यं शत्रुघ्नस्य महीपतेः
तद्वाक्यमाकर्ण्य सुबाहुभूपतेः क्रौञ्चाख्यसद्व्यूहविशेषमादधात् ।
यन्नो विशन्ते सहसा रिपोर्गणा महाबलाः शस्त्रसमूहधारिणः ॥ ३२ ॥
मुखे सुकेतुस्तस्यासीद्गले चित्राङ्गसंज्ञकः । पक्षयो राजपुत्रौ द्वौ पुच्छे राजा प्रतिष्ठितः
मध्ये सैन्यं महत्तस्य चतुरङ्गैस्तु शोभितम् । कृत्वा न्यवेदयद्राज्ञे क्रौञ्चव्यूहं विचित्रितम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा दृष्ट्वा सुसन्नद्धं क्रौञ्चव्यूहं सुनिर्मितम् । रणाय स्वमतिं चक्रे शत्रुघ्नकटके स्थितैः

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे सुबाहुसैन्यसमागमो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## षड्विंशोऽध्यायः

### सुमतिमन्त्रिणा शत्रुघ्नम्प्रति सुबाहुबलनिरूपणम् ।

शेष उवाच ।

शत्रुघ्नस्तद्बलं दृष्ट्वा भीषणाकृतिमेघवत् । हस्त्यश्वरथपादातैर्बहुभिःपरिवारितम् ॥
सुमतिं प्रत्युवाचेदं वचो गम्भीरशब्दयुक् । नानावाक्यविचारज्ञैःपण्डितैःपरिसेवितः ॥

शत्रुघ्न उवाच ।

सुमते ! कस्य नगरं प्राप्तो मे हयसत्तमः । बलमेतन्निरीक्षेऽहं* पयोनिधितरङ्गवत् ॥
कस्यैतद्बलमुद्धर्षं चतुरङ्गसमन्वितम् । पुरतो भाति युद्धाय समुपस्थितमादरात् ॥
एतत्सर्वं समाचक्ष्व यथावत्पृच्छतो मम ।
यज्ज्ञात्वा युद्धसंस्थायै निर्दिशामि स्वकान्भटान् ॥ ५ ॥
इति वाक्यं समाकर्ण्य सुमतिःशुभबुद्धिमान् । उवाच वचनं प्रीतःशत्रुघ्नं वैरितापनम्

सुमतिरुवाच ।

चक्राङ्का नगरी राजन्वर्तते सविधे शुभा । यस्यां सन्ति नराःपापरहिता विष्णुभक्तितः
तस्याःपुर्याःपतिरयं सुबाहुर्धर्मवित्तमः । तवाऽयं पुरतो भाति पुत्रपौत्रसमावृतः ॥
स्वदारनिरतो नित्यं परदारपराङ्मुखः ।
विष्णोःकथाऽस्य कर्णस्था नापरार्थप्रकाशिनी ॥ ६ ॥
परस्वं न समादत्ते षष्ठांशादधिकं नृपः । ब्राह्मणा विष्णुभक्त्यैव पूज्यन्ते तेन धर्मिणा

---

* तन्निरीक्षेत इति आनन्दाश्रम पुस्तके पाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्यं सेवारतो विष्णुपादपद्ममधुव्रतः । एष स्वधर्मनिरतःपरधर्मपराङ्मुखः ॥ ११ ॥
एतस्य बलतुल्यं हि न वीराणां बलं क्वचित् । पुत्रस्य पतनं श्रुत्वा रोषशोकसमाकुलः

चतुरङ्गसमेतोऽयं युद्धाय समुपस्थितः ।
तवाऽपि वीरा बहवो लक्ष्मीनिधिमुखा अमून् ॥ १३ ॥
जेष्यन्ति शस्त्रसङ्घेन निर्दिशाऽऽशु परं हि तान् ।
शत्रुघ्नस्तद्वचःश्रुत्वा प्रोवाच स्वभटान्वरान् ॥ १४ ॥

रणप्राप्तिभवोद्धर्षपूरपूरितमानसान् । क्रौञ्चव्यूहोऽद्य रचितःसुबाहुपरिसैनिकैः ॥ १५ ॥

मुखपक्षस्थिता योधास्तान्को भेत्स्यति शस्त्रवित् ।
यस्य भेदे निजा शक्तिर्यो वीरविजयोद्यतः ॥ १६ ॥

स गृह्णातु मदीयाद्धि पाणिपद्माच्च वीटकम् । तदालक्ष्मीनिधिर्वीरो जग्राह क्रौञ्चभेदने
सर्वशस्त्रास्त्रविद्वीरैर्बहुभिःपरिवारितः । उवाच वचनं राजन्यास्येऽहं क्रौञ्चभेदने ॥

भार्गवः पूर्वमेवासीत्क्रौञ्चभेत्ता तथा ह्यहम् ।
तथाऽन्यं वीरमावोचत्कोऽस्य सार्धं गमिष्यति ॥ १९ ॥

पुष्कलःपृष्ठतस्तस्य यातुं चक्रे मतिं ततः । रिपुतापो नीलरत्न उग्राश्वो वीरमर्दनः ॥
सर्वे शत्रुघ्नसन्देशाद्ययुस्तत्क्रौञ्चभेदने । शत्रुघ्नोऽपि रथ*स्थश्च सर्वायुधधरःपरः ॥
पृष्ठतोऽस्य परीयाय बहुभिःसैनिकैर्वृतः । तदा प्रचलितौ दृष्टावन्योन्यबलवारिधी ॥
प्रलयं कर्तुमुद्युक्तौ जगतःसुतरङ्गिणौ । तदा भेर्यःसमाजघ्नुरुभयोःसेनयोर्दृढाः ॥२३॥
रणभेर्यःशङ्खनादाः श्रूयन्ते तत्र तत्र ह । हेषन्ते वाजिनस्तत्र गर्जन्ति द्विरदाभृशम् ॥
हुंहुं कुर्वन्ति वीराग्र्या नदन्ति रथनेमयः । तत्र प्रकुपिताःशूराःसुबाहुबलदर्पिताः ॥२५॥
छिन्धि भिन्धीति भाषन्तो दृश्यन्ते बहवो रणे । एवम्भूते रणोद्युक्ते सैन्ये शत्रुघ्नवैरिणः

मुखसंस्थं सुकेतुं तं लक्ष्मीनिधिरुवाच ह ॥ २६ ॥

लक्ष्मीनिधिरुवाच ।

जनकस्य सुतं विद्धि लक्ष्मीनिधिरिति स्मृतम् ।

---

* रथे संस्थ इति आनन्दाश्रम पुस्के पाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वशस्त्रास्त्रकुशलं सर्वयुद्धविशारदम् ॥ २७ ॥
मुञ्चाऽश्वं रामचन्द्रस्य सर्वदानवदंशितुः ।
नो चेन्मद्बाणनिर्भिन्नो यास्यसे यमसादनम् ॥ २८ ॥
इति ब्रुवन्तं वीराग्र्यं सुकेतुः सहसा त्वरन् ।
सज्यं चापं विधायाशु बाणान्मुञ्चन्स्थिरोऽभवत् ॥ २९ ॥
ते बाणाःशितपर्वाणःस्वर्णपुङ्खाःसमन्ततः । दृश्यन्ते व्यापिनस्तत्र रणमध्ये सुदुर्भराः ॥
तद् बाणजालं तरसा निहत्य लक्ष्मीनिधिश्चापमथाततज्यम् ।
विधाय तस्योरसि बाणषट्कं मुमोच तीक्ष्णं शितपर्वशोभितम् ॥ ३१ ॥
तद्बाणाःसुभुजभ्रातुर्हृदयं संविदार्य च । गतास्ते भुवि दृश्यन्ते रुधिराक्ता मलीमसाः ॥
तद्बाणभिन्नहृदयःसुकेतुःकोपपूरितः । जघान शरविंशत्या तीक्ष्णया नतपर्वया ॥३३॥
उभौ बाणविभिन्नाङ्गावुभौ क्षतजविप्लुतौ ।
सैनिकैः परिदृश्यन्ते किंशुकाविव पुष्पितौ ॥ ३४ ॥
मुञ्चन्तौ बाणकोटीश्च सन्दधन्तौ द्रुतं शरान् । न केनापि विलक्ष्येते लघुहस्तौ महाबलौ
कुण्डलीकृतसच्चापौ वर्षन्तौ बाणधारया । नवाम्बुदाविव दिवि शक्रनिर्देशकारिणौ ॥
तयोर्बाणा गजान्वाहान्नराञ्छूरान्विमस्तकान् ।
कुर्वन्तः केवलं दृष्टा न च सन्धानमोक्षणे ॥ ३७ ॥
पृथिवी सुभटैःपूर्णा सकिरीटैःसकुण्डलैः । धनुर्बाणकरै रोषसन्दष्टाधरयुग्मकैः ॥३८॥
तयोःप्रयुध्यतोर्दर्पात्सर्वशस्त्रास्त्रवेदिनोः । युद्धं समभवद्धोरं देवविस्मापनं महत् ॥
संमर्दोऽभवदत्यन्तं वीरकोटिविदारणः । न केनचित्कचिद्दृष्टं वरजालान्तरेऽम्बरम् ॥
तस्मिंस्तु समये लक्ष्मीनिधिर्वीरोऽरिमर्दनः ।
बाणांश्चापे समाधत्त वसुसङ्ख्यान्दृढाञ्छितान् ॥ ४१ ॥
चतुर्भिस्तुरगान्वीरःसुकेतोरनयत्क्षयम् । एकेन ध्वजमत्युग्रं चिच्छेद तरसा हसन् ॥
एकेन सारथेःकायाच्छिरो भूमावपातयत् । एकेन चापं सगुणमच्छिनद्रोषपूरितः ॥४३
एकेन हृदि विव्याध सुकेतोर्वेगवान्नृपः । तत्कर्माद्भुतमुद्वीक्ष्य वीरा विस्मयमाययुः ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सच्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
महतीं स गदां धृत्वा योद्‌धुकामोऽभ्युपेयिवान् ॥ ४५ ॥
तमायान्तं समालक्ष्य गदायुद्धविशारदम् । महत्या गदयायुक्तं रथादवततार सः ॥
गदामादाय महतीं सर्वायस विनिर्मिताम् । जातरूपविचित्राङ्गीं सर्वशोभापुरस्कृताम्
लक्ष्मीनिधिर्भृशं क्रुद्धः सुकेतोर्वक्षसि त्वरन् ।
पातयामास सुदृढं गदां वज्राग्निसन्निभाम् ॥ ४८ ॥
गदया ताडितो वीरो नाकम्पत महामुने ! । मदोन्मत्तो यथादन्ती बालेन स्रग्भिराहतः
उवाच तं स वीराग्र्यो नृपं लक्ष्मीनिधिं तदा । सहस्वैकं प्रहारं मे यदि शूरःपरन्तप !
इत्युक्त्वा ताडयामास ललाटे गदया भृशम् ।
गदया ताडितो भालेऽसृग्वमन्कुपितो भृशम् ॥ ५१ ॥
मूर्ध्नि तं ताडयामास गदया कालरूपया । सुकेतुरपि तं स्कन्धे ताडयामास धर्मवित्
एवं भृशं प्रकुपितौ गदायुद्धविशारदौ । गदायुद्धं प्रकुर्वाणौ परस्परजयैषिणौ ॥ ५३ ॥
अन्योन्याघातविमतौ परस्परवधोद्यतौ । न कोऽपि तत्र हीयेत न को जीयेत संयुगे ॥
मूर्ध्नि भाले तथा स्कंधे हृदि गात्रेषु सर्वतः ।
रुधिरौघपरिक्लिन्नौ महाबलपराक्रमौ ॥ ५५ ॥
तदा लक्ष्मीनिधिःक्रुद्धो गदामुद्यम्य वेगवान् । जगाम प्रबलं हन्तुं हृदि राजानुजं बली
तमायान्तमथालोक्य स्वगदां महतीं दधत् । ययौ तं तरसा हन्तुं राजभ्राता बलाद्‌बलम्
गदां तेन विनिक्षिप्तां स्वकरे धृतवानयम् । तयैव गदया तस्या हृदि जघ्ने महाबलः ॥
स्वगदां तेन वै नीतां दृष्ट्वा लक्ष्मीनिधिर्नृपः । बाहुयुद्धेन तं योद्‌धुमियेष बलवत्तमम्
तदा राजानुजःक्रुद्धो बाहुभ्यामुपगृह्य तम् । युयुधे सर्वयुद्धस्य ज्ञाता वीरेषु सत्तमः ॥
तदा लक्ष्मीनिधिस्तस्य हृदि जघ्ने स्वमुष्टिना ।
तदा सोऽपि शिरस्येनं मुष्टिमुद्यम्य चाहनत् ॥ ६१ ॥
मुष्टिभिर्वज्रसङ्काशैस्तलस्फोटैश्च दारुणैः । अन्योन्यं जघ्नतुःक्रुद्धौ सन्दष्टाधरपल्लवौ ॥
मुष्टीमुष्टि दन्तादन्ति कचाकचि नखानखि । उभयोरभवद्युद्धं तुमुलं रोमहर्षणम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदा प्रकुपितो भ्राता नृपतेश्चरणे नृपम् । गृहीत्वा भ्रामयित्वाऽथ पातयामास भूतले ॥
लक्ष्मीनिधिःकरैगृह्य तं नृपानुजमुच्चकैः । भ्रामयित्वा शतगुणं गजोपस्थे जघान तम् ॥
स तदा पतितो भूमौ संज्ञां प्राप्य क्षणादनु । तथैव भ्रामयामास व्योम्नि वेगेन विक्रमी
एवं प्रयुध्यमानौ तौ बाहुयुद्धं गतौ पुनः । पादे पादं करे पाणिं हृदि हृद्वदने मुखम् ॥
एवं परस्परं श्लिष्टौ परस्परवधैषिणौ । उभावपि पराक्रान्तावुभावपि मुमूर्च्छतुः ॥

तद् दृष्ट्वा विस्मयं प्राप्ताः प्रशशंसुः सहस्रशः ।
धन्यो लक्ष्मीनिधिर्भूपो धन्यो राजानुजो बली ॥ ६६ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
गदायुद्धं नाम षड्विंशतितमोऽध्यायः ॥ २६ ॥

---

## सप्तविंशतितमोऽध्यायः

### चित्राङ्गपुष्कलयोर्युद्धे चित्राङ्गवधवर्णनम् ।

शेष उवाच ।

चित्राङ्गः क्रौञ्चकण्ठस्थो रथस्थो वीरशोभितः ।
गाहयामास तत्सैन्यं वाराह इव वारिधिम् ॥ १ ॥
धनुर्विस्फार्य सुदृढं मेघनादनिनादितम् ।
मुमोच बाणान्निशितान्वैरिकोटिविदाहकान् ॥ २ ॥

तद्बाणभिन्नसर्वाङ्गाःशेरते सुभटाभृशम् । सकिरीटतनुत्राणाःसन्दष्टदशनच्छदाः ॥
एवं प्रवृत्ते सङ्ग्रामे ययौ योद्धुं सपुष्कलः । मणिचित्रितमादाय चापं वैरि प्रतापनम्
तयोःसङ्गतयो रूपं दृश्यतेऽतिमनोहरम् । पुरा तारकसङ्ग्रामे स्कन्दतारकयोर्यथा ॥
विस्फारयन्धनुःशीघ्रं सव्यसाची तु पुष्कलः । ताडयामास तं क्षिप्रं शरैःसन्नतपर्वभिः
चित्राङ्गोऽपि रुषाक्रान्तःशरासन इषूञ्छितान् । दधद्वयमुञ्चद्बहुशो रणमण्डलमूर्धनि ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नादानं न च सन्धानं न मोचनमथापि वा । दृष्टं तावेच सन्दृष्टौ कुण्डलीकृतचापिनौ
तदाऽसौ पुष्कलः क्रुद्धः शराणां शतकेनतम् । विव्याध वक्षःस्थलके महायोद्धारमुद्भटम्

चित्राङ्गस्ताञ्छरान्सर्वांश्चिच्छेद तिलशः क्षणात् ।
ताडयामास चाङ्गेषु पुष्कलं शितसायकैः ॥ १० ॥

पुष्कलस्तद्रथं दिव्यं भ्रामकास्त्रेण शोभिना । नभसि भ्रामयामास तदद्भुतमिवाभवत्
भ्रान्त्वा मुहूर्तमात्रं तु स रथो हयसंयुतः । स्थितिं लेभेऽतिकष्टेन सन्धृतो रणमण्डले

स चास्य विक्रमं दृष्ट्वा चित्राङ्गः कुपितो भृशम् ।
उवाच पुष्कलं धीमान्सर्वास्त्रेषु विशारदः ॥ १३ ॥

चित्राङ्ग उवाच ।

त्वया साधु कृतं कर्म सुभटैर्युधि संमतम् ।
मद्रथो वाजिसंयुक्तो भ्रामितो नभसि क्षणम् ॥ १४ ॥

पराक्रमं समीक्षस्व ममापि सुभटैरितम् । आकाशचारी तु भवान्भव त्वमरपूजितः ॥
इत्युक्त्वा स मुमोचास्त्रं रणे परमदारुणम् । धनुषा परमास्त्रज्ञः सर्वधर्मविदुत्तमः ॥
तेन बाणेन संविद्धः खे बभ्राम पतङ्गवत् । सरथः सहयः सङ्ख्ये सध्वजश्च ससारथिः

भ्रान्त्वा सरथवर्यस्तु नभसि त्वरयान्वितः ।
यावत्स्थितिं न लभते तावन्मुक्तोऽपरः शरः ॥ १८ ॥

पुनश्च परिबभ्राम रथः सूतसमन्वितः । तत्कर्म वीक्ष्य पुत्रस्य राज्ञो विस्मयमाप सः
कथंचित्स्थितिमप्याप पुष्कलः परवीरहा । रथं जघान बाणैश्च ससूतहयमस्य च ॥
सभग्नस्यन्दनो वीरः पुनरन्यं समाश्रितः । सोऽपि भग्नः शरैराशु पुष्कलेन रणाङ्गणे ॥
पुनरन्यं समास्थाय यावदायाति संमुखम् । तावद्बभञ्ज निशितैः सायकैस्तद्रथं पुनः
एवं दशरथा भग्ना नृपतेरात्मजस्य हि । पुष्कलेन तु वीरेण महासंयुगशालिना ॥२३॥

तदा चित्राङ्गकः सङ्ख्ये रथे स्थित्वा विचित्रिते ।
आजगाम ह वेगेन पुष्कलं प्रति योधितुम् ॥ २४ ॥

पुष्कलं पञ्चभिर्बाणैस्ताडयामास संयुगे । तैर्बाणैर्निहतोऽत्यन्तं विव्यथे भरतात्मजः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स क्रुद्धश्चापमुद्यम्य बाणान्दशशितान्महान् । मुमोच हृदये तस्य स्वर्णपुङ्खसुशोभितान्
ते बाणाः पपुस्तस्य रुधिरं बहु दारुणाः ।
पीत्वा पेतुः क्षितौ कूटसाक्षिणः पूर्वजा इव ॥ २७ ॥
तदा चित्राङ्गकः क्रुद्धो भल्लान्पञ्च समाददे । मुमोच भाले पुत्रस्य भरतस्य महौजसः ॥
तैर्भल्लैराहतः क्रुद्धः शरासनवरे शरम् । दधत्प्रतिज्ञामकरोच्चित्राङ्गनिधनं प्रति ॥२९॥
शृणु वीर ! मम क्षिप्रं प्रतिज्ञां त्वद्वधाश्रिताम् ।
तज्ज्ञात्वा सावधानेन योद्धव्यं च त्वयाऽत्र हि ॥ ३० ॥
बाणेनानेन चेत्त्वां वै न कुर्यां प्राणवर्जितम् ।
सतीं सन्दूष्य वनितां शीलाचारसुशोभिताम् ॥ ३१ ॥
यो लोकः प्राप्यते लोकैर्यमस्य वशवर्तिभिः ।
स लोको मम वै भूयात्सत्यं मम प्रतिश्रुतम् ॥ ३२ ॥
इति श्रेष्ठं वचः श्रुत्वा जहास परवीरहा । उवाच मतिमान्वीरः पुष्कलं वचनं शुभम् ॥
मृत्युर्वै प्राणिनां भाव्यः सर्वत्रैव च सर्वदा ।
तस्मान्मे निधने दुःखं नास्ति शूरशिरोमणे ! ॥ ३४ ॥
प्रतिज्ञा या कृता वीर ! त्वया वीरत्वशालिना ।
सा सत्यैव पुनर्मेऽद्य श्रूयतां व्याहृतं महत् ॥ ३५ ॥
त्वद्वाणं मद्वधोद्युक्तं न च्छिन्द्यां यदित्रेदहम् । तदा प्रतिज्ञां शृणु मे सर्ववीराभिमानिनः
तीर्थं जिगमिषोर्यो वै कुर्यात्स्वान्तविखण्डनम् ।
एकादशीव्रतादन्यज्जानाति व्रतमुच्चकैः ॥ ३७ ॥
तस्य पापं ममैवास्तु प्रतिज्ञापरिघातिनः । इति वाक्यमुदीर्यैव तूष्णीम्भूतो धनुर्दधे ॥
तदाऽनेन निषङ्गात्स्वादुद्धृत्य सायकं वरम् । कथयामास विशदं वाक्यं शत्रुवधावहम्

पुष्कल उवाच ।

यदि रामाङ्घ्रियुगलं निष्कापट्येन चेतसा । उपासितं मया तर्हि मम वाक्यमृतंभवेत्
यदि स्वमहिलां भुक्त्वा नान्यां जानामि चेतसा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन सत्येन मे वाक्यं सत्यं भवतु सङ्गरे ॥ ४१ ॥
इति वाक्यमुदीर्याशु बाणं धनुषि संहितम् ।
कालानलोपमं वीर ! शिरश्छेदनमाक्षिपत् ॥ ४२ ॥
तं बाणं मुक्तमालोक्य स तु राजसुतो बली । बाणं शरासनेऽधत्ततीक्ष्णं कालानलोपमम्
तेन बाणेन संछिन्नो बाणः स्ववध उद्यतः ।
हाहाकारो महानासीच्छिन्ने तस्मिञ्छरे तदा ॥ ४४ ॥
परार्धं पतितं भूमौ पूर्वार्धं फलसंयुतम् । शिरोधरां चकर्ताशु पद्मनालमिव क्षणात् ॥
तदा भूमौ पतन्तं तु दृष्ट्वा तत्तस्य सैनिकाः । हाहा कृत्वा भृशं सर्वे पलायनपरागताः
पृथ्व्यां तन्मस्तकं श्रेष्ठं सकिरीटं सकुण्डलम् ।
शुशुभेऽतीव पतितं चन्द्रबिम्बं दिवो यथा ॥ ४७ ॥
तं वीक्ष्य पतितं वीरः पुष्कलो भरतात्मजः । व्यगाहत व्यूहमिमं सर्ववीरैकशोभितम्
इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे चित्राङ्गवधो नाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशतितमोऽध्यायः

### चित्राङ्गवधात्सुबाहुराज्ञः पुत्रशोकः

शेष उवाच ।

अथ पुत्रं समालोक्य पतितं व्यसुमुद्धतम् । विललाप भृशं राजा सुतदुःखेन दुःखितः
मूर्ध्नि सन्ताडयामास पाणिभ्यामतिदुःखितः ।
कम्पमानो भृशं चाश्रूण्यमुञ्चन्नयनाब्जयोः ॥ २ ॥
गृहीत्वा पतितं वक्त्रं चन्द्रबिम्बमनोरमम् ।
पुष्कलेषुक्षतासृग्भिः क्लिन्नं कुण्डलशोभितम् ॥ ३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुटिलभ्रूयुगं श्रेष्ठं सन्दष्टाधरपल्लवम्। सचुम्बन्मुखपाङ्केन विलपन्निदमब्रवीत्॥ ४॥

हापुत्र वीर ! कथमुत्सुकचेतसं मां किं नेक्षसे विशदनेत्रयुगेन शूर ! ।

किमद्विनोदकथया रहितस्त्वमेवं रोषोदधिप्लुतमनाः किल लक्ष्यसे च ॥५

वद पुत्र ! कथं मां त्वं प्रब्रूषे न हसन्पुनः । अमृतैर्मधुरास्वादैर्विनोदयसि पुत्रक ! ॥६

शत्रुघ्नाश्वं गृहाण त्वं सितचामरशोभितम् । स्वर्णपत्रेण शोभाढ्यं त्यज निद्रां महामते

एष प्रतापविशदः प्रतापाग्र्यः परन्तपः । धनुर्बिभ्रत्पुरो भाति पुष्कलः परवीरहा ॥८॥

एनं वारयसत्तीक्ष्णैर्बाणैः कोदण्डनिर्गतैः। कथं त्वं रणमध्ये वै शेषे वीर ! विमोहितः

हस्तिनः पत्तयश्चैव रथारूढा भयार्दिताः ।

शरणं त्वां समायान्ति तानीक्षस्व महामते ! ॥ १० ॥

पुत्र ! त्वया विना सोढुं कथं शक्तो रणाङ्गणे ।

शत्रुघ्नसायकांस्तीक्ष्णांश्चण्डकोदण्डनिर्गतान् ॥ ११ ॥

अतो मां तु त्वया हीनं को वा पालयितुं क्षमः ।

यदि त्यक्ष्यसि निद्रां त्वं जयायाहं क्षमस्तदा ॥ १२ ॥

इत्थं विलप्य सुभृशं तताड हृदयं स्वकम् । बहुशः पाणिना राजा पुत्रदुःखेन दुःखितः

तदा विचित्रदमनौ स्वस्वस्यन्दनसंस्थितौ । पितुश्चरणयोर्नत्वा ऊचतुः समयोचितम्

राजन्नस्मासु जीवत्सु किं दुःखं हृदि तद्वद ।

वीराणां प्रधने मृत्युर्वाञ्छितो जायते महान् ॥ १५ ॥

धन्योऽयं वत चित्राङ्गो यो वीरभुवि शोभते । सकिरीटस्तु सन्दष्टदन्तच्छदयुगः प्रभुः

कथयाशु किमद्यैव कुर्वस्ते कार्यमीप्सितम् ।

शत्रुघ्नवाहिनीं सर्वां हन्व आवामनाथिनीम् ॥ १७ ॥

अद्यैव पुष्कलं भ्रातुर्वधकारिणमाहवे । पातयावो रथाच्छित्त्वा शिरोमुकुटमण्डितम् ॥

त्यज शोकं सुदुःखार्तः कथं भासि महामते !। आज्ञापयावां मानार्ह ! कुरुयुद्धे मतिं तथा

इति वाक्यं समाकर्ण्य पुत्रयोर्वीरमानिनोः ।

शोकं त्यक्त्वा महाराजो युद्धाय मतिमादधात् ॥ २० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तावपि प्रतियोद्धारं वाञ्छन्तौ रणदुर्मदौ। जग्मतुः कटके शत्रोरनन्तभटपूरिते ॥२१॥
रिपुतापेन दमनो नीलरत्नेन चेतरः। युयुधाते रणे वीरौ प्रावृषीव बलाहकौ ॥ २२ ॥
राजा कनकसन्नद्धे रथे मणिविचित्रिते। रत्नकूबरशोभाढ्ये तिष्ठंश्चापधरो बली ॥२३॥
ययौ योद्धुं तु शत्रुघ्नं वीरकोटिभिरावृतम्। तृणीकुर्वन्महावीरान्धनुर्विद्याविशारदान्
तं योद्धुमागतं दृष्ट्वा सुबाहुं रोषपूरितम्। पुत्रनाशेन कुर्वन्तं सर्वसैन्यवधादिकम् ॥

शत्रुघ्नपार्श्वसञ्चारी हनूमांस्तमुपाद्रवत्।
नखायुधो महानादं कुर्वन्मेघ इवाहवे ॥ २६ ॥

सुबाहुस्तं हनूमन्तमागच्छन्तं महारवम्। उवाच प्रहसन्वाक्यं रोषपूरितलोचनः ॥
क्व गतः पुष्कलो हत्वा मत्पुत्रं रणमण्डले। पातयाम्यद्य तस्याशु शिरोज्वलितकुण्डलम्

क्व शत्रुघ्नो वाहपालः क्व च रामः कुतो भटाः।
प्राणहन्तारमायान्तं पश्यन्तु प्रधने तु माम् ॥ २९ ॥

इति तद्वाक्यमाकर्ण्य हनूमान्निजगाद तम्। शत्रुघ्नो लवणच्छेत्ता वर्तते सैन्यपालकः!
स कथं प्रधने युध्येत्सेवकेऽग्रे स्थिते नृप!। मां विजित्य रणे तं च त्वं गन्तासि नरर्षभ!
इत्युक्तवन्तं तरसा विव्याध दशसायकैः। हृदि वानरमत्युग्रं पर्वताग्र्यमिवस्थितम् ॥

स बाणानागतास्तांश्च गृहीत्वा करसम्पुटे।
चूर्णयामास तिलशः शितान्वैरिविदारणान् ॥ ३३ ॥
चूर्णयित्वा शरांस्तांस्तु निनदन्घनगर्जितैः।
पुच्छेनावेष्ट्य तस्योच्चै रथं निन्ये महाबलः ॥ ३४ ॥

तदा तं नृपवर्योऽसावाकाशे स्थित एष सः। लांगूलं ताडयामास शिताग्रैः सायकैर्मुहुः
स ताडितस्तु पुच्छाग्रे शरैः सन्नतपर्वभिः। मुमोच तद्रथं दिव्यं कनकेन विचित्रितम्
स मुक्तस्तेन तरसा शरैस्तीक्ष्णैर्जघान तम्। हनूमन्तं कपिवरं रोषसम्पूरितेक्षणः ॥
हनूमान्बाणविच्छिन्नः सर्वत्र रुधिराप्लुतः। महारोषं समाधत्त नृपोपरि कपीश्वरः ॥
गृहीत्वा तस्य दंष्ट्राभी रथं हयसमन्वितम्। चूर्णयामास वेगेन तदद्भुतमिवाभवत् ॥
स्वरथं भज्यमानं तु दृष्ट्वा राजा त्वरन्बली। अन्यं रथं समास्थाय युयुधे तं महाबलम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुच्छे मुखेऽथोरसि च भुजे चरणयोर्नृपः ।
जघान शरसन्धानकोविदः परमास्त्रवित् ॥ ४१ ॥
तदा क्रुद्धः कपिवरस्ताडयामास वक्षसि । पादेनोत्प्लुत्य वेगेन राज्ञः सुभटशोभिनः
स पदा प्रहतो भूमौ पपात किल मूर्च्छितः ।
मुखाद्वमन्नसृक्स्रोष्णं श्वासपूरप्रवेपितः ॥ ४३ ॥
तदा प्रकुपितोऽत्यन्तं हनूमान्प्रधनाङ्गणे । अश्वान्वीरान्गजांश्चापि चूर्णयामास वेगतः
तदा सुकेतुस्तद्भ्राता तथा लक्ष्मीनिधिर्नृपः ।
उभावपि सुसन्नद्धौ युद्धाय समुपस्थितौ ॥ ४५ ॥
राजानं मूर्च्छितं दृष्ट्वा प्रपलाय्यगता नराः । इतस्ततो बाणसङ्घैःक्षताःपुष्कलवर्षितैः
तद्भज्यमानं स्वबलं वीक्ष्य राजात्मजोबली । दमनःस्तम्भयामास सेतुर्वाधिमिवोच्चलम्
तदा तु मूर्च्छितो राजा स्वप्नमेकं ददर्शह । रणमध्ये कपिवरप्रपदाघाततताडितः ॥
रामचन्द्रस्त्वयोध्यायां सरयूतीरमण्डपे । ब्राह्मणैर्याज्ञिकश्रेष्ठैर्बहुभिःपरिवारितः ॥४६॥
तत्र ब्रह्मादयोदेवास्तत्र ब्रह्माण्डकोटयः । कृतप्राञ्जलयस्ते वै स्तुवन्ति स्तुतिभिर्मुहुः
रामं श्यामं सुनयनं मृगश्रृङ्गपरिग्रहम् । गायन्ति नारदाद्याश्च वीणोल्लसितपाणयः
नृत्यन्त्यप्सरसस्तत्र घृताची मेनकादयः । वेदा मूर्तिधरा भूत्वा उपतिष्ठन्ति राघवम् ॥
यच्च किञ्चिद्वस्तुजातं सर्वशोभासमन्वितम् ।
तस्य दातारमखिलं भक्तानां भोगदायकम् ॥ ५३ ॥
इत्येवमादिसम्पश्यञ्जाग्रत्संज्ञामवाप सः । ब्रह्मशापहतज्ञानःकिं दृष्टमिति वै वदन् ॥
उत्थाय प्रययौ पद्भ्यां शत्रुघ्नचरणं प्रति । भृत्यकोटिपरीवारो रथकोटिपरीवृतः ॥
सुकेतुं तु समाहूय विचित्रं दमनं तथा । युद्धंकर्तुं समुद्युक्तान्वारयामास धर्मवित् ॥
उवाच तान्महाराजो धर्मात्मा धर्मसंयुतः ।
भ्रातःपुत्रौ शृणुत मे वाक्यं धर्मसमन्वितम् ॥ ५७ ॥
मा युद्धं कुरुत क्षिप्रमनयस्तु महानभूत् । यद्रामचन्द्रवाहं त्वमगृह्णादमनोर्जितम् ॥
एष रामःपरंब्रह्म कार्यकारणतःपरम् । चराचरजगत्स्वामी न मानुषवपुर्धरः ॥५८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतद्धि ब्रह्मविज्ञानमधुना ज्ञातवानहम् । पुराऽसिताङ्गशापेन हृतज्ञानघनोऽनघाः ॥६०॥
अहं पुरा तीर्थयात्रां गतस्तत्त्वविवित्सया । तत्रानेके मया दृष्टा मुनयो धर्मचित्तमाः
असिताङ्गं मुनिमहं गतवाञ्ज्ञातुमिच्छया । तदा प्रोवाच मां विप्रःकृपां कृत्वा ममोपरि

योऽसावयोध्याधिपतिः स परब्रह्मशब्दितः ।

तस्य या जानकी देवी साक्षात्सा चिन्मयी स्मृता ॥ ६३ ॥

एनं तु योगिनःसाक्षादुपासते यमादिभिः । दुस्तरापारसंसारवारिधिं सन्तितीर्षवः
स्मृतमात्रो महापापहारी स गरुडध्वजः । य एनं सेवते विद्वान्स संसारं तरिष्यति॥
तदाहमहसं विप्रं कोऽयं रामस्तु मानुषः । केयं सा जानकीदेवी हर्षशोकसमाकुला ॥
अजन्मनःकथं जन्म अकर्तुःकृत्यमत्र किम् । जन्मदुःखजरातीतं कथयस्व मुने ! मम ॥
इत्युक्तवन्तं मां क्रुद्धःशशाप स मुनीश्वरः । अज्ञात्वा तत्स्वरूपं त्वं प्रतिब्रूषे ममाधम!

एनं निन्दसि रामं त्वं मानुषोऽयमिदं हसन् ।

तस्मात्त्वं तत्त्वसंमूढो भविष्यस्युदरम्भरिः ॥ ६६ ॥

तदाऽहं तस्य चरणान्वगृह्णन्सदयायुतः । दृष्ट्वा मे विनयं मांतु प्रावोचत्करुणानिधिः

त्वं रामस्य मखे विघ्नं करिष्यसि यदा नृप ! ।

तदाऽङ्घ्रिणा हनूमांस्त्वां ताडयिष्यति वेगतः ॥ ७१ ॥

तदा त्वं ज्ञास्यसे राजन्नान्यथा स्वमनीषया । पुराऽहमुक्तस्तेनैवं तद्दृष्टमधुना मया॥
यदा मां हनुमान्क्रुद्धस्ताडयामास वक्षसि । तदाऽदर्शं रमानाथ ! पूर्णब्रह्मस्वरूपिणम्

तस्मादश्वं तु शोभाढ्यमानयन्तु महाबलाः ।

धनानि चैव वासांसि राज्यं चेदं समर्पये ॥ ७४ ॥

रामं दृष्ट्वा कृतार्थःस्यामहं यज्ञेऽति पुण्यदे । आनयन्तु हयं मह्यं रोचते तु तदर्पणम्॥

इति श्रीपाद्मेमहापुराणे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
सुबाहुपराजयो नामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# एकोनत्रिंशोऽध्यायः

## सुबाहुशत्रुघ्नसमागमवर्णनम् ।

शेष उवाच ।

ते तु तातवचःश्रुत्वा हर्षिताःसम्प्रहारिणः । तथेत्यूचुर्महाराजं रामदर्शनलालसम् ॥१॥

पुत्रा ऊचुः ।

राजन्भवत्पदाम्भोजान्नान्यं जानीमहे वयम् । यत्तव स्वान्ततो जातं तद्भवत्वद्य वेगतः

अश्वोऽयं नीयतां तत्र सितचामरभूषितः । रत्नमालातिशोभाढ्यश्चन्दनादिकचर्चितः ॥

राज्यमाज्ञाफलं स्वामिन्कोशा बहुसमृद्धयः ।
वासांसि सुमहार्हाणि सूक्ष्माणि सुगुणानि च ॥ ४ ॥

चन्दनं चन्द्रकं चैव वाजिनःसुमनोहराः । हस्तिनस्तु मदोद्धूता रथाःकाञ्चनकूबराः ॥

विचित्रतरवर्णादि नानाभूषणभूषिताः । दास्यःशतसहस्रं च दासाश्च सुमनोरमाः ॥

मणयःसूर्यसङ्काशा रत्नानि विविधानि च ।
मुक्ताफलानि शुभ्राणि गजकुम्भभवानि च ॥ ७ ॥

विद्रुमाःशतसाहस्रा यद्यद्वस्तु महोदयम् । तत्सर्वं रामचन्द्राय देहि राजन्महामते ! ॥

सुतानस्मान्किङ्कराश्च सर्वानर्पय भूपते ! । कथं न कुरुषे राजंस्तदधीनं नृपासनम् ॥

शेष उवाच ।

इति पुत्रवचःश्रुत्वा हर्षितोऽभून्महीपतिः । उवाच च सुतान्वीरान्स्ववाक्यकरणोद्यतान्

राजोवाच ।

आनयन्तु हयं सर्वे सन्नद्धाःशस्त्रपाणयः । नानारथपरीवारास्ततो यास्ये नृपं प्रति ॥

शेष उवाच ।

इति राज्ञोवचःश्रुत्वा विचित्रो दमनस्तथा । सुकेतुःसमरे शूरा जग्मुस्तस्याज्ञयोद्यताः

ते गत्वाऽथ पुरीं शूरा वाजिनं सुमनोरमम् । सितचामरसंयुक्तं स्वर्णपत्राद्यलङ्कृतम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रत्नमालाविभूषाढ्यं चित्रपत्रेण शोभितम् ।
विचित्रमणिभूषाढ्यं मुक्ताजालस्वलङ्कृतम् ॥ १४ ॥
रज्ज्वाधृतं महावीरैः पूर्वतःपृष्ठतो भटैः । महाशस्त्रास्त्रसंयुक्तैःसर्वशोभासमन्वितैः ॥
सितातपत्रमस्योच्चैर्भाति मूर्धनि वाजिनः । सुचामरद्वयं यस्य ध्रियते पुरतो मुहुः ॥
कृष्णागर्वादि धूपैश्च धूपितं वायुवेगिनम् । राज्ञःपुरो निनायाश्वं हयमेधस्य सत्क्रतोः
तमानीतं हयं दृष्ट्वा रत्नमालाविभूषितम् । मनोजवं कामरूपं जहर्ष मतिमान्नृपः ॥
जगाम पद्भ्यां शत्रुघ्नं राजचिह्नाद्यलङ्कृतः । स्वपुत्रपौत्रैःसंयुक्तो राजा परमधार्मिकः
ययौ कर्तुं धनानां स सद्व्ययं चलगामिनाम् ।
एतद्धिनश्वरं मत्वा दुःखदं सक्तचेतसाम् ॥ २० ॥
शत्रुघ्नं स ददर्शाथ सितच्छत्रेण शोभितम् । चामरैर्वीज्यमानञ्च सेवकैःपुरतःस्थितैः ॥
सुमतिं परिपृच्छन्तं रामचन्द्रकथानकम् । भयवार्ताविनिर्मुक्तं वीरशोभास्वलङ्कृतम्
वीरैः कोटिभिराकीर्णं नेत्रपाताभिकाङ्क्षिभिः ।
वानराणां सहस्रैश्च समन्तात्परिवारितम् ॥ २३ ॥
दृष्ट्वा शत्रुघ्नचरणौ प्रणनाम सपुत्रकः । धन्योऽहमिति संहृष्टो वदन्रामैकमानसः ॥
शत्रुघ्नस्तं प्रणयिनं दृष्ट्वा राजानमुद्भटम् ।
उत्थायासनतः सर्वैं र्भटैर्दोर्भ्यां स सस्वजे ॥ २५ ॥
दृढं सम्पूज्य राजा तं शत्रुघ्नं परवीरहा । उवाच हर्षमापन्नो गद्गदस्वरया गिरा ॥२६

सुबाहुरुवाच ।

अद्य धन्योऽस्मि ससुतःसकुटुम्बःसवाहनः । यद्युष्मच्चरणौ द्रक्ष्ये नृपकोटिभिरीडितौ
अज्ञानिना सुतेनायं गृहीतो वाजिनांवरः । दमनेनानयंत्वस्य क्षमस्व करुणानिधे ! ॥
न जानाति रघूत्तंसं सर्वदेवाधिदैवतम् । लीलया विश्वस्रष्टारं हन्तारमपि पालकम् ॥
इदं राज्यं समृद्धाङ्गं समृद्धबलवाहनम् । इमे कोशा धनैःपूर्णा इमे पुत्रा इमे वयम् ॥
सर्वे वयं रामनाथास्त्वदाज्ञा प्रतिपालकाः। गृहाण सर्वं सफलं न मेऽस्ति क्वचिदुन्मतम्
क्वासौ हनूमान्नामस्य चरणाम्भोजषट्पदः । यत्प्रसादादहं प्राप्स्ये राजराजस्यदर्शनम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साधूनां सङ्गमे किं किं प्राप्यते न महीतले। यत्प्रसादादहं मूढो ब्रह्मशापमतीत्वरम् ॥
दृष्ट्वा त्वद्य महाराजं पद्मपत्रनिभेक्षणम्। प्राप्स्यामि जन्मनःसर्वफलं दुर्लभमत्र च
मम तावद्गतं चायुर्बहु रामवियोगिनः। स्वल्पमुर्वरितं तत्र कथं द्रक्ष्ये रघूत्तमम् ॥३५॥
मह्यं दर्शयतं रामं यज्ञकर्मविचक्षणम्। यदङ्घ्रिरजसा पूता शिलाभूता मुनिप्रिया ॥

काकः परं पदं प्राप्तो यद्बाणस्पर्शनात्खगः।
अनेके यस्य वक्त्राब्जं वीक्ष्य सङ्ख्ये पदं गताः ॥ ३७ ॥
ये त्वस्य रघुनाथस्य नाम गृह्णन्ति सादराः।
ते यान्ति परमं स्थानं योगिभिर्यद्विचिन्त्यते ॥ ३८ ॥
धन्योऽयोध्याभवो लोको यो राममुखपङ्कजम्।
स्वलोचनपुटैः पीत्वा सुखं याति महोदयम् ॥ ३६ ॥
इति सम्भाष्य नृपतिं बाहं राज्यं धनानि च।
सर्वं समर्प्य चावोचत्किङ्करोऽस्मि महीपते ! ॥ ४० ॥

इति वाक्यं समाकर्ण्य राज्ञःपरपुरञ्जयः। प्रत्युवाचेति तं भूपं वाग्मी वाक्यविशारदः ॥

शत्रुघ्न उवाच।

कथं राजन्निदं ब्रूषेत्वं वृद्धो मम पूजितः। सर्वं त्वदीयं त्वद्राज्यं दमनो विदधात्वयम्

क्षत्रियाणामिदं कृत्यं सङ्ग्रामकरणं तु यत्।
सर्वं राज्यं धनं चेदं प्रतियातु ममाज्ञया ॥ ४३ ॥
यथा मे रघुनाथस्तु पूज्यो वाङ्मनसा सदा।
तथा त्वमपि मत्पूज्यो भविष्यसि महीपते ! ॥४४॥

भवान्सज्जो भवत्वद्य हयस्यानुगमं प्रति। सन्नद्धःकवची खड्गी गजाश्वरथसंयुतः
इतिवाक्यं समाकर्ण्य शत्रुघ्नस्य महीपतिः। पुत्रं राज्येऽभिषेच्यैव शत्रुघ्नेन सुपूजितः ॥
महारथैःपरिवृतो निजं पुत्रं रणाङ्गणे। पुष्कलेन हतं भूपः संस्कृत्य विधिपूर्वकम् ॥
क्षणं शुशोच तत्त्वज्ञो लोकदृष्ट्या महारथः। ज्ञानेनानाशयच्छोकं रघुनाथमनुस्मरन् ॥
सज्जीभूतो रथे तिष्ठन्महासैन्यसमावृतः। आजगाम सशत्रुघ्नं महारथिपुरस्कृतः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा तमागतं दृष्ट्वा सर्वसैन्यसमन्वितम् । गन्तुं चकार धिषणां हयवर्यस्य पालने ॥
सोऽश्वो विमोचितस्तेन भाले पत्रेण चिह्नितः ।
वामावर्तं भ्रमन्प्रायात्पौर्वाञ्जनपदान्बहून् ॥ ५१ ॥
तत्र तत्रत्यभूपालैर्महाशूराभिपूजितः । प्रणतिःक्रियते तस्य न कोऽपि तमगृह्णत ॥५२॥
केचिद्वासांसि चित्राणि केचिद्राज्यं स्वकं महत् ।
केचिद्धनं जनं केचिदानीय प्रणमन्ति तम् ॥ ५३ ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे शत्रुघ्नस्य सुबाहुनासहनिर्याणं नामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥

---

## त्रिंशोऽध्यायः

### अश्वसमेतस्य शत्रुघ्नस्य तेजःपुरम्प्रति गमनम्

शेष उवाच ।

अथ तेजःपुरं प्राप्तस्तुरगःपत्रशोभितः । यस्यां पालयते राजा प्रजाःसत्येन सत्यवान्
रथकोटिपरीवारो रघुनाथानुजस्ततः । हयानुगो ययौ तस्य पुरतःपुरधर्षणः ॥ २ ॥
तद् दृष्ट्वा नगरं रम्यं चित्रप्राकारशोभितम् ।
काञ्चनैः कलशैस्तत्र परितः प्रतिभासितम् ॥ ३ ॥
देवायतनसाहस्रैःसर्वतश्च विराजितम् । यतीनां तु मठास्तत्र शोभन्ते यतिपूरिताः ॥
वहत्यत्र महादेवी शिखिलोचनमूर्धगा । हंसकारण्डवाकीर्णा मुनिवृन्दनिषेविता ॥
ब्राह्मणानां प्रत्यगारमग्निहोत्रभवः पुनः । धूमस्तत्र पुनात्यङ्गपातकाप्लुतमानसान् ॥६॥
उवाच सुमतिं राजा शत्रुघ्नःशत्रुतापनः । तत्पुरप्रेक्षणोद्भूतहर्षविस्मितमानसः ॥ ७ ॥

शत्रुघ्न उवाच ।

मन्त्रिन्कथय कस्येदं पुरं मे दृष्टिगोचरम् । करोति मानसाह्लादं धर्मेण प्रतिपालितम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शेष उवाच ।

इति वाक्यं समाकर्ण्य शत्रुघ्नस्य महीपतेः । उवाच सुमतिःसर्वं यथातथमनुद्धतम् ॥९॥

सुमतिरुवाच ।

शृणुष्वावहितः स्वामिन्वैष्णवस्य कथाः शुभाः ।
याः श्रुत्वा मुच्यते पापाद् ब्रह्महत्यासमादपि ॥ १० ॥
जीवन्मुक्तो वरीवर्ति रामाङ्घ्रयम्बुजषट्पदः ।
सत्यवान्यज्ञयज्ञाङ्गज्ञाता कर्ताऽविता महान् ॥ ११ ॥

धेनुं प्रसाद्य बहुभिर्गतैर्यं प्राप तत्पिता । ऋतम्भराख्यो जगति ख्यातःपरमधार्मिकः
गौः प्रसन्नाददौपुत्रमनेकगुणसंस्कृतम् । सत्यवन्तं सुशोभाढ्यं तं जानीहि नृपोत्तमम् ॥

शत्रुघ्न उवाच ।

को वा ऋतम्भरो राजा किमर्थं धेनुपूजनम् ।
कथं प्राप्तः सुतस्तस्य वैष्णवो विष्णुसेवकः ॥ १४ ॥

सर्वमेतत्समाचक्ष्व वैष्णवस्य कथानकम् । श्रुतं हरति जन्तूनां महापातकपर्वतम् ॥

शेष उवाच ।

इति वाक्यं समाकर्ण्य शत्रुघ्नस्य महार्थकम् । कथयामास विशदं तदुत्पत्तिकथानकम्
ऋतम्भरो नरपतिरनपत्यः पुराऽभवत् । कलत्राणि बहून्यस्य न पुत्रं प्राप तेषु वै ॥
तदा जावालिनामानं मुनिं दैवादुपागतम् । पप्रच्छ कुशलोद्युक्तःस पुत्रोत्पत्तिकारणम्

ऋतम्भर उवाच ।

स्वामिन्वन्ध्यस्य मे ब्रूहि पुत्रोत्पत्तिकरं वचः । यत्कृत्वा जायतेऽपत्यं ममवंशधरं परम्
तज्ज्ञात्वा भवतो भव्यं प्रकुर्यान्निश्चितं वचः ।
दानं व्रतं वा तीर्थं वा मखं वा मुनिसत्तम ! ॥२०॥

इति राज्ञो वचः श्रुत्वा जगाद मुनिसत्तमः । सुतोत्पत्तिकरं वाक्यं प्रणतायसुतार्थिनः
अपत्यप्राप्तिकामस्य सन्त्युपायास्त्रयः प्रभो ! ।
विष्णोः प्रसादो गोश्चापि शिवस्याप्यथवा पुनः ॥ २२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मात्त्वं कुरु वै पूजां धेनोर्दैवतनोर्नृप। यस्याःपुच्छे मुखे शृङ्गे पृष्ठेदेवाःप्रतिष्ठिताः

सा तुष्टा दास्यति क्षिप्रं वाञ्छितं धर्मसंयुतम्।

एवं विदित्वा गोपूजां विधेहि त्वमृतम्भर! ॥२४॥

यो वै नित्यं पूजयति गां गेहे यवसादिभिः।

तस्य देवाश्च पितरो नित्यं तृप्ता भवन्ति हि ॥ २५ ॥

यो वै गवाह्निकं दद्यान्नियमेन शुभव्रतः। तेन सत्येन तस्यस्युःसर्वे पूर्णा मनोरथाः॥

तृषिता गौर्गृहे बद्धा गेहे कन्या रजस्वला।

देवता च सनिर्माल्या हन्ति पुण्यं पुराकृतम् ॥ २७ ॥

यो वै गां प्रतिषिद्ध्येत चरन्तीं स्वं तृणं नरः।

तस्य पूर्वे च पितरः कम्पन्ते पतनोन्मुखाः ॥ २८ ॥

यो वै यष्ट्या ताडयति धेनुंमर्त्यो विमूढधीः। धर्मराजस्य नगरं स याति करवर्जितः

यो वै दंशान्वारयति तस्य पूर्वे ह्यधोगताः।

नृत्यन्ति मत्सुतो ह्यस्मांस्तारयिष्यति भाग्यवान् ॥ ३० ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम्। जनकस्य पुरावृत्तं धर्मराजपुरेऽद्भुतम् ॥३१॥

एकदा जनको राजा योगेनासून्समत्यजत्।

तदा विमानं सम्प्राप्तं किङ्किणीजालभूषितम् ॥ ३२ ॥

तदाऽऽरुह्य गतो राजा सेवकैरूढदेहवान्। मार्गे जगाम धर्मस्य संयमिन्याःपुरोऽन्तिके

तदा नरककोटीषु पीड्यन्ते पापकारिणः। जनकस्याङ्गपवनं प्राप्य सौख्यं प्रपेदिरे।

निरये दाहजा पीडा जातैषां सुखकारिणी। महादुःखं तदा नष्टं जनकस्याङ्गवायुना।

तदा तं निर्गतं दृष्ट्वा जन्तवः पापपीडिताः।

अत्यन्तं चुक्रुशुर्भीतास्तद्वियोगमनिच्छवः ॥ ३६ ॥

ऊचुस्ते करुणां वाचं मा गच्छ सुकृतिन्नितः।

त्वदङ्गवायुसंस्पर्शात्सुखिनः स्याम पीडिताः ॥ ३७ ॥

इतिवाक्यं समाकर्ण्य राजा परमधार्मिकः। मानसे चिन्तयामास करुणापूरपूरितः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चेन्मत्तः प्राणिनां सौख्यं भवेदिह तदा पुनः। अत्रैव च पुरे स्थास्ये स्वर्ग एषमनोरमः
एवं कृत्वा नृपस्तस्थौ तत्रैव निरयाग्रतः। विदधत्प्राणिनांसौख्यमनुकम्पितमानसः ॥

तत्र धर्मस्तु सम्प्राप्तो निरयद्वारि दुःखदे।
कारयन्यातनास्तीव्रा नानापातककारिणाम् ॥ ४१ ॥

तदा ददर्श राजानं जनकं द्वारिसंस्थितम्। विमानेन महापुण्यकारिणं दययायुतम् ॥
तमुवाच प्रेतपतिर्जनकं स हसन्गिरा। राजन्कुतस्त्वं सम्प्राप्तः सर्वधर्मशिरोमणिः ॥

एतत्स्थानं पातकिनां दुष्टानां प्राणघातिनाम्।
नायान्ति पुरुषा भूप! त्वादृशाः पुण्यकारिणः ॥ ४४ ॥

अत्रायान्ति नरास्ते वै ये परद्रोहतत्पराः। परापवादनिरताः परद्रव्यपरायणाः ॥
यो वै कलत्रं धर्मिष्ठं निजसेवापरायणम्। अपराधादृते जह्यात्स नरोऽत्र समाव्रजेत् ॥
मित्रं वञ्चयते यस्तु धनलोभेन लोभितः। आगत्याऽत्र नरःपीडां मत्तःप्राप्नोतिदारुणाम्
यो रामं मनसावाचा कर्मणादम्भतोऽपिवा। द्वेषाद्वाचोपहासाद्वा न स्मरत्येवमूढधीः

तं वध्नामि पुनस्त्वेषु निक्षिप्य श्रपयामि च।
यैः स्मृतो न रमानाथो नरकक्लेशवारकः ॥ ४६ ॥

तावत्पापं मनुष्याणामङ्गेषु नृप! तिष्ठति। यावद्रामं न रसना गृणाति कलिदुर्मतेः ॥
महापापकराराजन्ये भवन्ति महामते!। ताननयन्ति मद्भृत्यास्त्वादृशान्द्रष्टुमक्षमाः ॥

तस्माद्गच्छ महाराज! भुक्ष्वभोगाननेकशः।
विमानवरमारुह्य भुङ्क्ष्व पुण्यमुपार्जितम् ॥ ५२ ॥

इतिवाक्यं समाकर्ण्य धर्मराजस्य तत्पतेः। उवाच धर्मराजं स करुणापूरपूरितः ॥

जनक उवाच।

अहं गच्छामि नो नाथ! जीवानामनुकम्पया।
मदङ्गवायुना ह्येते सुखं प्राप्ताः स्म संस्थिताः ॥ ५४ ॥
एतान्मुञ्चसि चेद्राजन्सर्वान्वै निरयस्थितान्।
ततो गच्छामि सुखितः स्वर्गपुण्यजनाश्रितम् ॥ ५५ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जाबालिरुवाच ।

इति वाक्यमथाश्रुत्य जनकं प्रत्युवाच सः । प्रत्येकं निर्दिशञ्जीवान्निरयस्थाननेकशः ॥

धर्म उवाच ।

अयं मित्रकलत्रं वै विश्वस्तमनुजग्मिवान् । तस्मादेनं लोहशङ्कौ वर्षायुतमपीपचम् ॥
पश्चादेनं सूकराणां योनौ निक्षिप्य दोषिणम् । मानुषेष्ववतार्योऽयं षण्ढचिह्नेनचिह्नितः
अनेन परदाराश्च बलादालिङ्गिता मुहुः । तस्मादयं पच्यतेऽत्र रौरवे शतहायनम् ॥
अयं तु परकीयं स्वं मुषित्वा बुभुजे कुधीः । तस्मादस्य करौ छित्त्वा पचेयं पूयशोणिते
अयं सायन्तने प्राप्तमतिथिं क्षुधयार्दितम् । वाण्यापिनो सच्चकारनाब्रवीत्स्वागतं वचः
तस्मादयं पातनीयस्तामिस्रेऽन्धेन पूरिते । भ्रमरैःपीडितो यातु यातनां शतहायनम् ॥
अयं तावत्परस्योच्चर्निन्दां कुर्वन्नलज्जितः । अयमप्यश्रृणोत्कर्णौ प्रेरयन्बहुशस्तुताम्

तस्मादिमावन्धकूपे पतितौ दुःखदुःखितौ ।
अयं मित्रध्रुगुद्विग्नः पच्यते रौरवे भृशम् ॥ ६४ ॥
तस्मादेतान्पापभोगान्कारयित्वा विमोचये ।
त्वं गच्छ नरशार्दूल ! पुण्यराशिविधायकः ॥ ६५ ॥

जाबालिरुवाच ।

एवं स निर्दिशञ्जीवांस्तूष्णीमासाघकारिणः ।
प्रोवाच रामभक्तोऽसौ करुणापूरितेक्षणः ॥ ६६ ॥

जनक उवाच ।

कथंनिरयनिर्मुक्तिर्जीवानां दुःखिनां भवेत् । तदाशु कथय त्वं वै यत्कृत्वा सुखमाप्नुयुः

धर्म उवाच ।

नैमिराराधितो विष्णुर्नैमिस्तस्य कथाः श्रुताः ।
कथं निरयनिर्मुक्तिर्भवेद्वै पापकारिणाम् ॥ ६८ ॥
यदि त्वं मोचयस्येतान्महापापकरानपि । तर्ह्यर्पय महाराज ! पुण्यं तत्कथयामि यत् ॥
एकदा प्रातरुत्थाय शुद्धभावेन चेतसा । ध्यातःश्रीरघुनाथोऽसौ महापापहराभिधः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राम रामेति यच्चोक्तं त्वया शुद्धेन चेतसा। तत्पुण्यमर्पयैतेभ्यो येनस्यान्निरयाच्च्युतिः

जबालिरुवाच।

एतच्छ्रुत्वा वचस्तस्य धर्मराजस्य धीमतः। पुण्यं ददौ महाराज आजन्म समुपार्जितम्
यदाजन्मकृतैः पुण्यै रघुनाथार्चनोद्भवैः। एतेषां निरयान्मुक्तिर्भवत्वत्र मनोरमा ॥
एवं कथयतस्तस्य जीवा निरयसंस्थिताः। तत्क्षणान्निरयान्मुक्ता जाता दिव्यवपुर्धराः

ऊचुस्ते जनकं राजंस्त्वत्प्रसादाद्वयं क्षणात्।
दुःखदान्निरयान्मुक्ता यास्यामः परमं पदम् ॥ ७५ ॥

तान्दृष्ट्वा सूर्यसङ्काशान्नरान्निरयनिःसृतान्। तुतोष चित्तेसुभृशं सर्वभूतदयापरः ॥
ते सर्वे प्रययुर्लोकं दिवं देवैरलङ्कृतम्। जनकं तु प्रशंसन्तो महाराजं दयानिधिम् ॥७७॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे सत्यवदाख्याने जनकेन नरकस्थप्राणिमोचनं नाम त्रिंशोऽध्यायः ॥३०॥

———

# एकत्रिंशोऽध्यायः

## जनकस्य नगरमार्गगमनकारणवर्णनम्।

जाबलिरुवाच।

अथ तेषु प्रयातेषु नरकस्थेषु वै नृषु। राजा पप्रच्छ कीनाशं सर्वधर्मविदांवरम् ॥ १ ॥

राजोवाच।

धर्मराज! त्वया प्रोक्तंयत्पातककरा नराः। आयान्ति तव संस्थानं न चधर्मकथारताः
मदागमनमत्राभूत्केन पापेन धार्मिक!। तद्वै कथय सर्वं मे पापकार्यं यथा तथा ॥३॥
इति श्रुत्वा तु तद्वाक्यं धर्मराजः परन्तप!। कथयामास तस्यैवं यमपुर्यागमं तदा ॥४॥

धर्मराज उवाच।

राजंस्तवमहत्पुण्यं नैतादृक्कस्य भूतले। रघुनाथपदद्वन्द्वमकरन्दमधुव्रत! ॥ ५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वत्कीर्तिस्वर्धुनी सर्वान्पापिनो मलसंयुतान् ।
पुनाति परमाह्लादकारिणी दुष्टतारिणी ॥ ६ ॥
तथापि पापलेशस्ते वर्तते नृपसत्तम ! । येन संयमिनीपार्श्वमागतः पुण्यपूरितः ॥७॥
एकदा तु चरन्तीं गां वारयामास वै भवान् । तेन पापविपाकेन निरयद्वारदर्शनम् ॥८
इदानीं पापनिर्मुक्तो बहुपुण्यसमन्वितः ।
भुङ्क्ष्व भोगान्सुविपुलान्निजपुण्यार्जितान्बहून् ॥ ६ ॥
एतेषां करुणावार्धौ रघुनाथो सुखं हरन् ।
संयमिन्या महामार्गे प्रेरयामास वैष्णवम् ॥ १० ॥
नागमिष्यो यदि त्वं वै मार्गेणानेन सुव्रत ! । अभविष्यत्कथं तेषां निरयात्परिमोचनम्
त्वादृशाःपरदुःखेन दुःखिताः करुणालयाः । प्राणिनां दुःखविच्छेदं कुर्वन्त्येव महामते!

जाबालिरुवाच ।

एवं वदन्तं शमनं प्रणम्य स दिवंगतः । दिव्येन सुविमानेन अप्सरोगणशोभिना ॥१३
तस्माद्गावोऽनिशं पूज्या मनसापि न गर्हयेत् ।
गर्हयन्निरयं याति यावदिन्द्राश्चतुर्दश ॥ १४ ॥
तस्मात्त्वं नृपतिश्रेष्ठ ! गोपूजां वैसमाचर । सातुष्टादास्यति क्षिप्रं पुत्रं धर्मपरायणम् ॥

सुमतिरुवाच ।

तच्छ्रुत्वा धेनुपूजां स पप्रच्छ कथमादरात् । पूजनीया प्रयत्नेन कीदृशं कुरुते नरम् ॥
जाबालिः कथयामास धेनुपूजां यथाविधि ।
प्रत्यहं विपिनं गच्छेच्चारणार्थं व्रती तु गोः ॥१७॥
गवे यवांस्तु सम्भोज्य गोमयस्थान्समाहरेत् ।
भक्षणीया यवास्ते तु पुत्रकामेन भूपते ! ॥१८॥
सा यदा पिबते तोयं तदा पेयं जलं शुचि ।
सोच्चैः स्थाने यदा तिष्ठेत्तदानीं चासनस्थितः ॥१६॥
दंशान्निवारयेन्नित्यं यवसं स्वयमाहरेत् । एवं प्रकुर्वतःपुत्रं दास्यते धर्मतत्परम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुमतिरुवाच ।

इतिवाक्यं समाकर्ण्य पुत्रकाम ऋतम्भरः । व्रतंचकार धर्मात्मा धेनुपूजां समाचरन् ॥
प्रत्यहं कुरुते गां वै यवसाद्येन तोषिताम् । दंशान्न्यवारयद्धीमान्यवभक्षकृतादरः ॥
एवं धेनुं पूजयतो गतास्तु दिवसाघनाः । वनमध्ये तृणादींश्च चरन्तीमकुतोभयाम् ॥
एकदा नृपतिस्तस्य वनस्य श्रीनिरीक्षणे । न्यस्तदृष्टिःसपरितो बभ्राम सकुतूहली ॥

तदाऽऽगत्याहनद्गां वै पञ्चास्यः काननान्तरात् ।
क्रोशन्तीं बहुधा दीनां सिंहभारेण दुःखिताम् ॥ २५ ॥

तदा नृपःसमागत्य विलोक्य निजमातरम् । सिंहेन निहतां पश्यन्रु रोदातीवविह्वलः ॥
स दुःखितःसमागत्य जाबालिं मुनिसत्तमम् । निष्कृतिं तस्य पप्रच्छगोवधस्य प्रमादतः

ऋतम्भर उवाच ।

स्वामिंस्त्वदाज्ञया धेनुं पालयन्वनमास्थितः ।
कुतोऽप्यागत्य तां सिंहो जघानादृष्टिगोचरः ॥२८॥
तस्य पापस्य निष्कृत्यै किं करोमि त्वदाज्ञया ।
कथं वा व्रतसम्पूर्तिर्मम पुत्रप्रदायिनी ॥ २९ ॥

इत्युक्तवन्तं तं भूपं जगाद मुनिसत्तमः । सन्त्युपाया महीपाल ! पापस्यास्यापनुत्तये ॥
ब्रह्मघ्नस्य कृतघ्नस्य सुरापस्य महामते ! । प्रायश्चित्तानि वर्तन्ते सर्वपापहराणि च ॥
कृच्छ्रैश्चान्द्रायणैर्दानैर्व्रतैःसनियमैर्यमैः । पापानि प्रलयं यान्ति नियमादनुतिष्ठतः ॥

द्वयोश्च निष्कृतिर्नास्ति पापपुञ्जकृतोस्तयोः ।
मत्या गोवधकर्तुश्च नारायणविनिन्दितुः ॥ ३३ ॥

गवां यो मनसादुःखं वाञ्छत्यधमसत्तमः । सयाति निरयस्थानं यावदिन्द्राश्चतुर्दश ॥
योऽपि देवं हरिंनिन्देत्सकृद्दुर्भाग्यवान्नरः । सचापि नरकं पश्येत्पुत्रपौत्रपरीवृतः ॥

तस्माज्ज्ञात्वा हरिं निन्दन्गोषु दुःखं समाचरन् ।
कदापि नरकान्मुक्तिं न प्राप्नोति नरेश्वर ! ॥३६॥

अज्ञानप्राप्तगोहत्याप्रायश्चित्तं तु विद्यते । रामभक्तं तुधीमन्तं याहि त्वमृतुपर्णकम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स वै समदृशा सर्वाञ्छत्रून्मित्राणि पश्यति ।
कथयिष्यति ते क्षिप्रं गोवधस्यास्य निष्कृतिम् ॥ ३८ ॥
तस्य देशांस्त्वमाक्रामंस्तेन निर्वासितः पुरा ।
वैरिभावं परित्यज्य गच्छत्वमृतुपर्णकम् ॥ ३९ ॥
स यद्वदिष्यति क्षिप्रं तत्कुरुष्व समाहितः ।
यथा त्वत्कृतपापस्य निष्कृतिर्हि भविष्यति ॥ ४० ॥
स तुतद्वचनं श्रुत्वा जगाम ऋतुपर्णकम् । रामभक्तंरिपौ मित्रे समदृष्ट्यासमञ्जसम् ॥
स तस्मै कथयामास यज्ञातं गोवधादिकम् ।
तस्य पापस्य निष्कृत्यै ह्युपायं सोऽप्यचिन्तयत् ॥ ४२ ॥
क्षणं ध्यात्वाऽथ तं राजाऋतुपर्ण ऋतम्भरम् । उवाचप्रहसन्वाक्यं बुद्धिमान्धर्मकोविदः
कोऽहं राजन्मुनीनां वै पुरतः शास्त्रवेदिनाम् ।
तान्हित्वा किंतु मां प्राप्तो मूर्खं पण्डितमानिनम् ॥ ४४ ॥
तव मय्यस्ति चेच्छ्रद्धा तदा किंचिद् ब्रवीम्यहम् ।
शृणुष्व नरशार्दूल ! गदितं मम सादरः ॥४५॥
भज श्रीरघुनाथं त्वं कर्मणा मनसा गिरा । नैष्कापट्येन लोकेशं तोषयस्व महामते ! ॥
स तुष्टो दास्यते सर्वं त्वद्धृदिस्थं मनोरथम् । अज्ञानकृतगोहत्यापापनाशं करिष्यति
रामं स्मरंस्त्वं धर्मात्मन्धेनुं पालय सत्तम ! ।
दत्त्वा द्विजाय कनकं पापनिष्कृतिमाप्स्यसि ॥ ४८ ॥

सुमतिरुवाच ।

एतच्छ्रुत्वा तुतद्वाक्यमृतम्भरनृपस्तदा । विधाय रामस्मरणं पूतात्मा व्रतमाचरत् ॥
पूर्ववत्पालयन्धेनुं जगाम विपिनं महत् । रामनाम स्मरन्नित्यं सर्वभूतहिते रतः ॥५०॥
तस्मै तुष्टा तुसुरभिःप्रोवाच परितोषिता । राजन्वरय मत्तो वै वरंहृत्स्थं मनोरथम् ॥
तदा प्रोवाच वैराजा पुत्रं देहि मनोरमम् । रामभक्तं पितृरतं स्वधर्मप्रतिपालकम् ॥
तुष्टा दत्त्वा वरं साऽपि तस्मै राज्ञे सुतार्थिने ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जगामादर्शनं देवी कामधेनुः कृपावती ॥५३॥
स काले प्राप्तवान्पुत्रं वैष्णवं रामसेवकम् । सत्यवत्संज्ञयायुक्तमकरोत्तत्र तत्पिता ॥
सत्यवन्तं सुतं लब्ध्वा पितृभक्तिपरं महान् ।
परमं हर्षमापेदे शक्रतुल्यपराक्रमम् ॥ ५५ ॥
स राजा धार्मिकं पुत्रं प्राप्य हर्षेण निर्भरः ।
राज्यं तस्मिन्महन्न्यस्य जगाम तपसे वनम् ॥ ५६ ॥
तत्राराध्य हृषीकेशं भक्तियुक्तेन चेतसा । निर्धूतपापःसतनुरगाद्धरिपदं नृपः ॥ ५७ ॥
इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे सत्यवदाख्याने धेनुव्रतवर्णनं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशोऽध्यायः

### सत्यवद्राजवृत्तान्तवर्णनम् ।

सुमतिरुवाच ।

असावपि नृपःसौम्य ! सत्यवान्नाम विश्रुतः । निजधर्मेण लोकेशं रघुनाथमतोषयत् ॥
अस्मैतुष्टो रमानाथो ददौ भक्तिमचञ्चलाम् । निजांघ्रिपद्मे यजतां दुर्लभां पुण्यकोटिभिः
नित्यं श्रीरघुनाथस्य कथानकमनातुरः । कुरुते सर्वलोकानां पावनं कृपयायुतः ॥
यो न पूजयते देवं रघुनाथं रमापतिम् । स तेन ताड्यते दण्डैर्यमस्यापि भयावहैः ॥
अष्टमाद्वत्सरादूर्ध्वमशीतिवत्सरो भवेत् ।
तावदेकादशी सर्वैर्मानुषैः कारिताऽमुना ॥ ५ ॥
तुलसी वल्लभा यस्य कदाचिद्यच्छिरोधराम् । न मुञ्चति रमानाथपादपद्मस्रगुत्तमा ॥
ऋषीणामपि पूज्योऽयमितरेषां कथं न हि । रघुनाथस्मृति प्रीतिर्धूतपाप्मा हताशुभः
ज्ञात्वाऽयं रामचन्द्रस्य वाजिनं परमाद्भुम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आगत्य तुभ्यं सन्दास्यत्येतद्राज्यमकण्टकम् ॥ ८ ॥
त्वया यद्गदितं राजंस्तत्ते कथितमुत्तमम् ।
पुनः किं पृच्छसे स्वामिन्नाज्ञापय करोमि तत् ॥ ९ ॥

शेष उवाच ।

गतोऽश्वस्तत्पुरान्तस्तु नानाश्चर्यसमन्वितः । तं दृष्ट्वा जनताःसर्वा राज्ञेगत्वान्यवेदयन्

जनता ऊचुः ।

कोऽप्यश्वःसितवर्णेन गङ्गाजलसमेन वै । भाले सौवर्णपत्रेण राजमानःसमागतः ॥
तच्छ्रुत्वा वचनं रम्यं जनानां हृद्यमीरितम् । ताःप्रत्याह हसन्भूपो ज्ञायतां कस्य वै हयः
ताश्चैनं कथयामासुः शत्रुघ्नेन प्रपालितः । आयात्यश्वो महीभर्तू रामस्य पुरमध्यतः ॥
रामस्य नाम स श्रुत्वा द्व्यक्षरं सुमनोरमम् । जहर्ष चित्ते सुभृशं गद्गदस्वरचिह्नितः ॥
मयाऽयोध्यापतिर्नित्यं यो रामश्चिन्त्यते हृदि । तस्याश्वःसहशत्रुघ्नःसमायातःपुरं मम
हनूमांस्तत्र रामाङ्घ्रिसेवाकर्ता भविष्यति ।
कदाचिदपि यो रामं न विस्मरति मानसे ॥ १६ ॥
गच्छामि यत्र शत्रुघ्नो यत्र मारुतनन्दनः । अन्येऽपि यत्र पुरुषा रामपादाब्जसेवकाः ॥
अमात्यमादिदेशाथ सर्वं राजधनं महत् । गृहीत्वातु मयासार्द्धमागच्छ त्वरयायुतः ॥
यास्येऽहं रघुनाथस्य हयं पालयितुं वरम् ।
कर्तुं च रामपादाब्जपरिचर्यां सुदुर्लभाम् ॥ १९ ॥
इत्युक्त्वा निर्जगामाथ शत्रुघ्नं प्रति सैनिकैः । तावत्पुरीमथप्राप्तो रामभ्राता ससैनिकः
वीरा गर्जन्ति प्रबला रथाःसुनिनदन्ति च । जयशङ्खस्वनास्तत्र वेणुनादाश्च सर्वतः ॥
आगत्य सत्यवान्राजा मन्त्रिभिस्सुसमन्वितः ।
चरणे प्रणिपत्यास्मै राज्यं प्रादान्महाधनम् ॥ २२ ॥
शत्रुघ्नस्तं तु राजानं ज्ञात्वा राममनुव्रतम् ।
तद्राज्यं तस्य पुत्राय रुक्मनाम्ने ददौ महत् ॥ २३ ॥
हनूमन्तं परीरभ्य सुबाहुं रामसेवकम् । अन्यान्वै रामभक्तांश्च परिरभ्य महायशाः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृतार्थमिव चात्मानं मेने सत्यसमन्वितः। ननन्द चेतसि तदा शत्रुघ्नेन समन्वितः॥
हयस्तावद्गतो दूरं वीरैःसुपरिरक्षितः। शत्रुघ्नस्तेन भूपेन ययौ वीरसमन्वितः॥२६॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे सत्यवत्समागमो नाम द्वात्रिंशोऽध्यायः॥ ३२॥

---

# त्रयस्त्रिंशोऽध्यायः

## विद्युन्मालिराक्षसेनाश्वहरणम्।

शेष उवाच।

गच्छत्सु रथिवर्येषु शत्रुघ्नादिषु भूरिषु। महाराजेषु सर्वेषु रथकोटियुतेषु च॥ १॥
अकस्मादभवन्मार्गे तमःपरमदारुणम्। यस्मिन्स्वीयो न पारक्यो लक्ष्यते ज्ञातिभिर्नरैः
रजसाव्यावृतं व्योम विद्युत्स्तनितसङ्कुलम्। एतादृशे तु सम्मर्दे महाभयकरे ततः॥
मेघा वर्षन्ति रुधिरं पूयामेध्यादिकं बहु। अत्याकुला बभूवुस्ते वीराः परमवैरिणः॥

आकुलीकृतलोके तु किमिदं किमिति स्थितिः।
तमोव्याप्तानि लोकानां चक्षूंषि प्रथितौजसाम्॥ ५॥
जहाराश्वं रावणस्य सुहृत्पातालसंस्थितः।
विद्युन्मालीति विख्यातो राक्षसश्रेणिसंवृतः॥ ६॥

कामगे सुविमाने तु सर्वायसनिषेविणि। आरूढोऽश्वं तु वीराणां भयंकुर्वञ्जहारह॥

मुहूर्तात्तत्तमो नष्टमाकाशं विमलं बभौ।
वीराः शत्रुघ्नमुख्यास्ते प्रोचुः कुत्र हयोऽस्ति सः॥ ८॥

ते सर्वे हयराजं तु लोकयन्तःपरस्परम्। ददृशुर्न यदावाहं हाहाकारस्तदाऽभवत्॥
कुत्राश्वो हयमेधस्य केन नीतःकुबुद्धिना। इति वाचमवोचंस्ते तावत्स दनुजेश्वरः॥
ददृशे सुभटैःसर्वै रथस्थैःशौर्यशोभितैः। विमानवरमारूढै राक्षसाग्र्यैःसमावृतः॥११॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुर्मुखा विकरालास्या लम्बदंष्ट्रा भयानकाः ।
राक्षसास्तत्र दृश्यन्ते सैन्यग्रासाय चोद्यताः ॥ १२ ॥

तदा तं वेदयामासुःशत्रुघ्नं नृवरोत्तमम् । हयो नीतो न जानीमःखे विमानविलासिना
तमसाव्याकुलान्कृत्वा वीरानस्मान्समाययौ । जग्राह नृपशार्दूल हयं कुरु यथोचितम्

शत्रुघ्नस्तद्वचःश्रुत्वा महारोषसमावृतः ।
कोऽस्त्येष राक्षसो यो मे हयं जग्राह वीर्यवान् ॥ १५ ॥

विमानं तत्पतत्वद्य मद्बाणव्रजनिर्हतम् । पतत्वद्य शिरस्तस्य क्षुरप्रैर्मम वैरिणः ॥१६॥

सज्जीयन्तां रथाः सर्वैर्महाशस्त्रास्त्रपूरिताः ।
यान्तु तं प्रतिसंहर्तुं योद्धारो वाजिहारिणम् ॥ १७ ॥

इत्युक्त्वा रोषताम्राक्ष उवाच निजमन्त्रिणम् । नयानयविदं शूरं युद्धकार्यविशारदम्

शत्रुघ्न उवाच ।

मन्त्रिन्कथय के योज्या राक्षसस्य वधोद्यताः ।
महाशस्त्रा महाशूराः परमास्त्रविदुत्तमाः ॥ १६ ॥
कथयाशु विचार्यैवं तत्करोमि भवद्वचः ।
वीरान्कथय तस्यैवं योग्यान्सर्वास्त्रकोविदान् ॥ २० ॥

एतच्छ्रुत्वा तु सचिवःप्राह वाक्यं यथोचितम् । वीरान्रणवरे योग्यान्दर्शयंस्तरसानतान्

सुमतिरुवाच ।

जेतुं गच्छतु तद्रक्षःसमरे विजयोद्यतः । महाशस्त्रास्त्रसंयुक्तःपुष्कलःपरतापनः ॥२२॥

तथा लक्ष्मीनिधिर्या तु शस्त्रसङ्घसमन्वितः ।
करोतु तस्य यानस्य भङ्गं तीक्ष्णैः स्वसायकैः ॥ २३ ॥

हनूमान्दृष्टकर्माऽत्र राक्षसैर्योधितुं क्षमः। करोतु मुखपुच्छाभ्यां ताडनं रक्षसां प्रभो !॥

वानरा अपि ये वीरा रणकर्मविशारदाः ।
गच्छन्तु तेऽखिला योद्धुं तव वाक्यप्रणोदिताः ॥ २५ ॥
सुमदश्च सुबाहुश्च प्रतापाग्र्यश्च सत्तमाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गच्छन्तु सायकैस्तीक्ष्णैस्तान्योद्धुं राक्षसाधमान् ॥ २६ ॥

भवानपि महाशस्त्रपरिवारो रथेस्थितः । करोतु युद्धे विजयं राक्षसं हन्तुमुद्यतः ॥

एतन्मम मतं राजन्ये योधास्तत्प्रमर्दनाः । ते गच्छन्तु रणे शूराःकिमन्यैर्बहुभिर्भटैः ॥

इत्युक्तवति वीराग्र्येऽमात्ये सुमतिसंज्ञके ।

शत्रुघ्नः कथयामास वीरान्सङ्ग्रामकोविदान् ॥ २६ ॥

भो वीराःपुष्कलाद्या ये सर्वशस्त्रास्त्रकोविदाः। ते वदन्तु प्रतिज्ञां वै मत्पुरो राक्षसार्दने

कृत्वा प्रतिज्ञांविपुलां स्वपराक्रमशोभिनीम् । गच्छन्तु रणमध्ये हि भवन्तो बलसंयुताः

इति वाक्यं समाकर्ण्य शत्रुघ्नस्य महाबलाः ।

स्वां स्वां प्रतीज्ञां महतीं चक्रुस्ते तेजसान्विताः ॥ ३२ ॥

तत्रादौ पुष्कलो वीरः श्रुत्वा वाक्यंमहीपतेः ।

परमोत्साहसम्पन्नः प्रतिज्ञामूचिवानिमाम् ॥ ३३ ॥

पुष्कल उवाच ।

शृणुष्व नृपशार्दूल ! मत्प्रतिज्ञां पराक्रमात् ।

विहितां सर्वलोकानां शृण्वतां परमाद्भुताम् ॥ ३४ ॥

चेन्न कुर्यां क्षुरप्राग्रैस्तीक्ष्णैः कोदण्डनिर्गतैः ।

दैत्यं मूर्च्छासमाक्रान्तं कीर्णकेशाकुलाननम् ॥ ३५ ॥

कन्यास्वभोक्तुर्यत्पापं यत्पापं देवनिन्दने ।

तत्पापं मम वै भूयाच्चेत्कुर्यां स्ववचोऽनृतम् ॥ ३६ ॥

यदि मद्बाणनिर्भिन्नाःसैनिकाःसुमहावलाः। न पतन्ति महाराज ! प्रतिज्ञां तत्र मे शृणु

विष्णवीशयोर्विभेदं यः शिवशक्त्योः करोत्यपि ।

तत्पापं मम वै भूयाच्चेन्न कुर्यामृतं वचः ॥ ३८ ॥

सर्वं मद्वाक्यमित्युक्तं रघुनाथपदाम्बुजे । भक्तिर्मे निश्चलायाऽस्ति सैवसत्यं करिष्यति

पुष्कलस्य प्रतिज्ञां तां श्रुत्वा लक्ष्मीनिधिर्नृपः ।

प्रतिज्ञां व्यदधात्सत्यां स्वपराक्रमशोभिताम् ॥ ४० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्ष्मीनिधिरुवाच ।

वेदानां निन्दनं श्रुत्वा आस्ते यो मौनिवन्नरः ।
मानसे रोचयेद्यस्तु सर्वधर्मबहिष्कृतः ॥ ४१ ॥
ब्राह्मणो यो दुराचारो रसलाक्षादिविक्रयी ।
विक्रीणाति च गां मूढो धनलोभेन मोहितः ॥ ४२ ॥
म्लेच्छकूपोदकं पीत्वा प्रायश्चित्तं तु नाचरेत् ।
तत्पापं मम वै भूयाद्विमुखश्चेद्भवाम्यहम् ॥ ४३ ॥

तत्प्रतिज्ञामथाश्रुत्य हनूमान्रणकोविदः । रामाङ्घ्रिस्मरणं कृत्वा प्रोवाच वचनं शुभम्

मत्स्वामी हृदये नित्यं ध्येयो वै योगिभिर्मुहुः ।
यं देवाः सासुराःसर्वे नमन्ति मणिमौलिभिः ॥ ४५ ॥
रामः श्रीमानयोध्यायाः पतिर्लोकेशपूजितः ।
तं स्मृत्वा यद्ब्रुवे वाक्यं तद्वै सत्यं भविष्यति ॥ ४६ ॥

राजन्कोऽयं लघुर्दैत्यो दुर्बलःकामगेस्थितः । कथयाशु मया कार्यमेकेन विनिपातनम् ॥
मेरुं देवेन्द्रसहितं लाङ्गूलाग्रेण तोलये । जलधिं शोषये सर्वं सांवत वा पिवाम्यहम्
राज्ञःश्रीरघुनाथस्य जानक्याःकृपया मम । तन्नास्ति भूतले राजन्यदसाध्यं कदा भवेत्
एतद्वाक्यं मयाप्रोक्तमनृतंस्याद्यदि प्रभो ! । तदैव रघुनाथस्य भक्तिदूरो भवाम्यहम् ॥

यः शूद्रः कपिलां गां वै पयोबुद्ध्याऽनुपालयेत् ।
तस्य पापं ममैवास्तु चेत्कुर्यामनृतंवचः ॥ ५१ ॥

ब्राह्मणीं गच्छते मोहाच्छूद्रःकामविमोहितः । तस्य पापं ममैवास्तु चेत्कुर्यामनृतंवचः

यद्घ्राणान्नरकं गच्छेत्स्पर्शनाच्चापि रौरवम् ।
तां पिबेन्मदिरां यो वा जिह्वास्वादेन लोलुपः ॥ ५३ ॥
तस्य यज्जायते पापं तन्ममैवास्तु निश्चितम् ।
चेन्नकुर्यां प्रतिज्ञातं सत्यं रामकृपाबलात् ॥ ५४ ॥

एवमुक्ते महावीरैर्योद्धारस्तरसायुताः । चक्रुःप्रतिज्ञां महतीं स्वपराक्रमशालिनीम् ॥५५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शत्रुघ्नोपि व्यधात्तत्र प्रतिज्ञां पश्यतां नृणाम् ।
साधु साधु प्रशंसन्वै तान्वीरान्युद्धकोविदान् ॥ ५६ ॥
कथयामि पुरो वः स्वां प्रतिज्ञां सत्त्वशोभिताम् ।
तच्छृण्वन्तु महाभागा युद्धोत्साहसमन्विताः ॥ ५७ ॥
चेत्तस्य शिर आहत्य पातयामि न सायकैः ।
विमानाच्च कबन्धाच्च भिन्नं छिन्नं च भूतले ॥ ५८ ॥
यत्पापं कूटसाक्ष्येण यत्पापं स्वर्णचौर्यतः ।
यत्पापं ब्रह्मनिन्दायां तन्ममास्त्वद्य निश्चयात् ॥ ५९ ॥
इति शत्रुघ्नसद्वाक्यं श्रुत्वा ते वीरपूजिताः ।
धन्योऽसि राघवभ्रातः ! कस्त्वदन्यो वदेदिदम् ॥ ६० ॥
त्वया वै निहतोदैत्यो देवदानवदुःखदः । लवणो नाम लोकेश ! मधुपुत्रो महाबलः ॥
कोऽयं वै राक्षसो दुष्टः क्वचास्य बलमल्पकम् ।
करिष्यसि क्षणादेव तस्य नाशं महामते ! ॥ ६२ ॥
इत्युक्त्वा ते महावीराःसज्जीभूता रणाङ्गणे । प्रतिज्ञां स्वामृतांकर्तुं ययुस्ते राक्षसंमुदा
इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे वीर-
प्रतिज्ञाकथनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशोऽध्यायः

### विद्युन्मालिवधवर्णनम् ।

शेष उवाच ।

रथैःसदश्वैःशोभाढ्यैःसर्वशस्त्रास्त्रपूरितैः । नानारत्नसमायुक्तैर्ययुस्ते राक्षसाधमम् ॥
तान्दृष्ट्वा कामगेयाने स्थितःप्रोवाच राक्षसः । मेघगम्भीरयावाचा तर्जयन्निव भूरिशः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मा यान्तु सुभटा योद्धुं गच्छन्तु निजमन्दिरम् ।
मा त्यजन्तु स्वकान्प्राणान्न मोक्ष्ये वाजिनं वरम् ॥ ३ ॥
विद्युन्मालीति विख्यातो रावणस्य सुहृत्सखा ।
मत्सख्युः प्रेतभूतस्य निष्कृतिं कर्तुमेयिवान् ॥ ४ ॥
क्वासौ रामो य आहृत्य सखायं रावणं गतः ।
तस्य भ्रातापि कुत्रास्ते सर्वशूरशिरोमणिः ॥ ५ ॥
तं हत्वा निष्कृतिं तस्य प्राप्स्येरामस्य चानुजम् । पिबन्रुधिरमुद्भूतंकण्ठनालस्यबुद्बुदैः
इतिवाक्यं समाकर्ण्य योधानां प्रवरोत्तमः । पुष्कलो निजगादैनं वीर्यशौर्यसमन्वितम्

पुष्कल उवाच ।

विकत्थनं न कुर्वन्ति सङ्ग्रामे सुभटानराः । पराक्रमं दर्शयन्ति निजशस्त्रास्त्रवर्षणैः
रावणो निहतो येन स सुहृत्स्वजनैर्वृतः ।
तस्य वाजिनमाहृत्य कुत्र गन्ताऽसि दुर्मद ! ॥ ९ ॥
पतिष्यसि त्वं शत्रुघ्नबाणैः कोदण्डनिर्गतैः ।
त्वामत्स्यन्ति शिवा भूमौ पतितं प्राणवर्जितम् ॥ १० ॥
मा गर्ज दुष्ट ! रामस्य सेवके मयिसंस्थिते । गर्जन्ति सुभटा युद्धे शत्रुं जित्वामहोदयात्

शेष उवाच ।

एवं ब्रुवन्तं तं वीरं पुष्कलं रणदुर्मदम् । जघान शक्त्या सुभृशं हृदि राक्षससत्तमः ॥
आयान्तीं तां महाशक्तिमायसीं काञ्चनाश्रिताम् ।
चिच्छेद त्रिभिरत्युग्रैः शितैर्बाणैः स पुष्कलः ॥ १३ ॥
सा त्रिधा ह्यपतद् भूमौ विशिखैर्निष्प्रभीकृता ।
पतन्ती विरराजासौ विष्णोः शक्तित्रयीव किम् ॥ १४ ॥
तां छिन्नां शक्तिकां दृष्ट्वा राक्षसः परतापनः। जग्राह शूलं तरसा त्रिशिखं लोहनिर्मितम्
तीक्ष्णाग्रं ज्वलनप्रख्यं राक्षसेन्द्रो व्यमोचयत् । आयान्तं तिलशश्चक्रे बाणैःपुष्कलसंज्ञितः
छित्त्वा त्रिशूलं तरसा राघवस्य हि सेवकः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुष्कलश्चाप आधत्त बाणांस्तीक्ष्णान्मनोजवान् ॥ १७ ॥
तं बाणा हृदि तस्याशु लग्ना रागं बतासृजन् ।
वैष्णवस्य यथा स्वान्ते गुणा विष्णोर्मनोहराः ॥ १८ ॥
तद्बाणवेधदुःखार्तो विद्युन्माली सुदुर्मदः । जग्राह मुद्गरंघोरं पुष्कलं हन्तुमुद्यतः ॥
मुद्गरः प्रहितस्तेन विद्युन्माल्यभिधेनहि । हृदिलग्नोऽसृजच्छीघ्रं कश्मलंतदकारयत् ॥
मुद्गरप्रहतो वीरः कम्पमानः सवेपथुः । पपातस्यन्दनोपस्थे पुष्कलः शत्रुतापनः ॥
उग्रदंष्ट्रोऽथ तद्भ्राता लक्ष्मीनिधिमयोधयत् । शस्त्रास्त्रैर्बहुधामुक्तैर्वीरप्राणापहारकैः॥
पुष्कलस्तत्क्षणात्प्राप्य संज्ञां राक्षसमब्रवीत् ।
धन्योऽसि राक्षसश्रेष्ठ ! महीयांस्ते पराक्रमः ॥ २३ ॥
पश्येदानीं ममाप्युच्चैः प्रतिज्ञां शूरमानिताम् ।
विमानात्पातयाम्यद्य भूमौ त्वां शितसायकैः ॥ २४ ॥
इत्युक्त्वा निशितं बाणं समगृह्णाद् दुरासदम् ।
ज्वलन्तमग्नितेजस्कं महौदार्यसमन्वितम् ॥ २५ ॥
स यावत्तत्प्रतीकर्तुं विधत्ते स्वपराक्रमम् ।
तावद्धृदि गतोऽत्युग्रस्तीक्ष्णधारः स सायकः ॥ २६ ॥
तेन बाणेन विभ्रान्तो भ्रमच्चित्तः स राक्षसः। पपात कामगोपस्थाद्भूमौ विगतचेतनः
उग्रदंष्ट्रेण वै दृष्टः पतमानो निजाग्रजः । गृहीत्वा तं विमानान्तर्निनाय रिपुशङ्कितः ॥
प्राह चारिं महारोषात्पुष्कलं बलिनांवरम् । मद्भ्रातरं पातयित्वा कुत्रयास्यसि दुर्मते !
मां वै युधि विनिर्जित्य गन्तासिजयमुत्तमम् ।
स्थिते मयि तव स्वान्ते जयाशा विनिवर्त्यताम् ॥ ३० ॥
एवं ब्रुवन्तं तरसा जघान दशभिः शरैः । हृदये तस्य दुष्टस्य रोषपूरितलोचनः ॥
स ताडितो दशशरैःपुष्कलेन महात्मना । चुक्रोध हृदि दुर्बुद्धिस्तं हन्तुमुपचक्रमे ॥३२॥
दन्तान्निष्पिष्य सक्रोधो मुष्टिमुद्यम्य चाहनम् ।
व्यनदद्वज्रनिर्घातपातशङ्कां सृजन्हृदि ॥ ३३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुष्टिनाभिहतो वीरःपुष्कलःपरमास्त्रवित् । नाकम्पतविनिष्पेषं वाञ्छंस्तस्य दुरात्मनः

वत्सदन्तान्महातीक्ष्णान्मुमोच हृदि सायकान् ।
तैर्बाणैर्व्यथितो दैत्यस्त्रिशूलं तु समाददे ॥ ३५ ॥
जाज्वल्यमानं त्रिशिखं ज्वालामालातिभीषणम् ।
लग्नं हृदि महावीर ! पुष्कलस्य तु दारुणम् ॥ ३६ ॥

मूर्च्छितस्तेन शूलेन निहतो धन्विसत्तमः । कश्मलं परमंप्राप्तःपपात स्यन्दनोपरि ॥३७॥

मूर्च्छां प्राप्तं तमाज्ञाय हनूमान्पवनात्मजः ।
कोपव्याकुलितस्वान्तो बभाषे तं तु राक्षसम् ॥ ३८ ॥

कुत्र गच्छसि दुर्बुद्धे मयि योद्धरिसंस्थिते । त्वां हन्मि चरणाघातैर्वाजिहर्तारमागतम्
एवमुक्त्वा महादैत्याञ्जघान परसैनिकान् । विमानस्थान्नखाग्रेण दारयन्नभसिस्थितः
लाङ्गूलेनाहताःकेचित्केचित्पादतलाहताः । बाहुभ्यां दारिताःकेचित्पवनस्य तनूभुवा

नश्यन्ति केचिन्निहताःकेचिन्मूर्च्छन्ति संहताः ।
पलायन्ते पदाघातभयपीडाहतास्ततः ॥ ४२ ॥

अनेकेनिहितास्तत्र राक्षसाश्चातिदारुणाः । छिन्नाभिन्ना द्विधाजाताःपवनस्य सुतेनवै
कामगं तु विमानं तद्भिन्नप्राकारतोरणम् । हाहाकुर्वद्भिरसुरैःसमन्तात्परिवारितम्॥
हनूमति महाशूरे क्षणं भूमौ क्षणं दिवि । इतस्ततःप्रदृश्येत कामयानं दुरासदम् ॥४५॥
यत्रयत्र विमानं तत्तत्र तत्र समीरजः । प्रहरन्नेव दृश्येत कामरूपधरःकपिः ॥ ४६ ॥
एवं तदाकुलीभूते विमानस्थे महाजने । उग्रदंष्ट्रस्तु दैत्येन्द्रो हनूमन्तमुपेयिवान् ॥ ४७॥
कपे ! त्वया महत्कर्म कृतं यद्भटपातनम् । क्षणं तिष्ठसि चेत्कुर्वे तव प्राणवियोजनम्
एवमुक्त्वा हनूमन्तं प्रजघान सदुर्मतिः । त्रिशूलेन सुतीक्ष्णेन ज्वलत्पावककान्तिना॥
तदागतं त्रिशूलं च मुखे जग्राह वीर्यवान् । चूर्णयामास सकलं सर्वलोहविनिर्मितम्॥

चूर्णयित्वा त्रिशूलं तदायसं दैत्यमोचितम् ।
जघान तं चपेटाभिर्बह्वीभिर्हनुमान्बली ॥ ५१ ॥

स आहतःकपीन्द्रेन चपेटाभिरितस्ततः । व्यथितो व्यसृजन्मायां सर्वलोकभयङ्करीम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदा तमोऽभवत्तीव्रं यत्र को वा न लक्ष्यते ।
यत्र स्वीयो न पारक्यो विदामास जनान्बहून् ॥ ५३ ॥
शिलाःपर्वतशृङ्गाभाःपतन्ति सुभटोपरि । ताभिर्हतास्तु ते सर्वे व्याकुला अथ जज्ञिरे
विद्युतो विलसन्त्यश्च गर्जन्ति जलदाघनम् । वर्षन्ति पूयरुधिरं मुञ्चन्ति समलं जलम् ॥
आकाशात्पतमानानि कबन्धानि बहूनि च ।
दृश्यन्ते छिन्नशिर्षाणि सुकुण्डलयुतानि च ॥ ५६ ॥
नग्ना विरूपाःसुभृशं कीर्णकेशाःसुदुर्मुखाः । दृश्यन्ते सर्वतोदैत्या दारुणा भयकारिणः
तदा व्याकुलितालोकाःपरस्परभयाकुलाः । पलायनपराजाता महोत्पातममंसत ॥५८॥
तदा शत्रुघ्न आयातो रथे स्थित्वा महायशाः ।
श्रीरामस्मरणं कृत्वा चापे सन्धाय सायकान् ॥ ५९ ॥
तां मायां स विधूयाथ मोहनास्त्रेण वीर्यवान् ।
शरधाराः किरन्व्योम्नि ववर्ष समरेऽसुरम् ॥ ६० ॥
तदा दिशःप्रसेदुस्ता रविस्त्वपरिवेषवान् । मेघा यथागतं याता विद्युतःशान्तिमागताः
तदा विमानं पुरतो दृश्यते राक्षसैर्युतम् । छिन्धिभिन्धीति भाषाभिर्व्याकुलं सुतरां महत्
बाणाश्च शतसाहस्राः स्वर्णपुङ्खैश्च शोभिताः ।
पेतुर्विमाने नभसि स्थिते कामगमे मुहुः ॥ ६३ ॥
तदा भग्नं विमानं हि दृश्यते पतदुच्चकैः । स्वपुरी खण्डमेकत्र भग्नाङ्गमिव भूतले ॥
तदा प्रकुपितो दैत्यो बाणान्धनुषि सन्दधे । तैर्बाणैर्विकिरन्रामभ्रातरं चाभिगर्जितः ॥
ते बाणाः शतशस्तस्य लग्ना वपुषि भूरिशः ।
शोभामापुः शोणितौघान्वहन्तस्तीक्ष्णवक्त्रिणः ॥ ६६ ॥
शत्रुघ्नःपरयाशक्त्या संयुक्तो वायुदैवतम् । अस्त्रं धनुषि चाधत्त राक्षसानां प्रकम्पनम्
तेनास्त्रेण विमानात्खात्पतन्तो मुक्त मूर्धजाः । दृश्यन्ते भूतवेतालसङ्घा इव नभश्चराः
तदस्त्रं रघुनाथस्य भ्रात्रा मुक्तं विलोक्य सः ।
अस्त्रं च पाशुपत्यं स चापेऽधाद्दनुजात्मजः ॥ ६९ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततःप्रवृत्ताः वेताला भूताःप्रेतनिशाचराः । कपालकर्तरीयुक्ताःपिबन्तःशोणितं बहु ॥
ते वै शत्रुघ्नवीराणां रुधिराणि पपुर्मुदा । जीवतामपि दुर्वाराःकर्तरी पाणिशोभिताः

तदस्त्रं व्याप्नुवद्दृष्ट्वा सर्ववीरप्रभञ्जनम् ।
मुमोच तन्निरासाय चास्त्रं नारायणाभिधम् ॥ ७२ ॥
नारायणास्त्रं तान्सर्वान्वारयामास तत्क्षणात् ।
ते सर्वे विलयं प्रापुर्निशाचरप्रणोदिताः ॥ ७३ ॥
तदा क्रुद्धो निशाचारी विद्युन्माली समाददे
त्रिशूलं निशितं घोरं शत्रुघ्नं हन्तुमुल्बणम् ॥ ७४ ॥

शूलहस्तं समायान्तं विद्युन्मालिनमाहवे । सायकैःप्राहरत्तस्य भुजे त्वर्धशशिप्रभैः ॥७५

तैर्बाणैश्छिन्नहस्तः स शिरसा हन्तुमुद्यतः ।
हतोऽसि याहि शत्रुघ्न कस्त्वां त्राता भविष्यति ॥ ७६ ॥

इति ब्रुवाणं तरसा चिच्छेद शितसायकैः । मस्तकं तस्य बलिनःशूरस्य सहकुण्डलम्
तं छिन्नशिरसं दृष्ट्वा उग्रदंष्ट्रःप्रतापवान् । मुष्टिनाहन्तुमारेभे शत्रुघ्नं शूरसेवितम् ॥

शत्रुघ्नस्तु क्षुरप्रेण सायकेनाच्छिनच्छिरः ।
प्रधावतो रणे वीरान्सर्वशस्त्रास्त्रकोविदान् ॥ ७९ ॥

हतशेषाययुःसर्वे राक्षसा नाथवर्जिताः । शत्रुघ्नं प्रणिपत्याथ ददुर्वाजिनमाहृतम् ॥
ततो वीणानिनादाश्च शङ्खनादाःसमन्ततः । श्रूयन्ते शूरवीराणां जयनादा मनोहराः ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
विद्युन्मालिराक्षसपराजयो नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## पञ्चत्रिंशोऽध्यायः

### रेवातीरे आरण्यकाश्रमेऽश्वस्यागमनम्

शेष उवाच ।

प्राप्य तं वाजिनं राजा शत्रुघ्नो राक्षसैर्हृतम् । अत्यन्तं हर्षमापेदे पुष्कलेन समन्वितः
रुधिरैःसिक्तगात्रास्ते योधा लक्ष्मीनिधिस्तथा ।रणोत्साहेनसंयुक्तं प्रशशंसुर्महानृपम्
हते तस्मिन्महादैत्ये विद्युन्मालिनि दुर्जये । सुराःसर्वे भयंत्यक्त्वा सुखमापुर्मुने महत्

नद्यस्तु विमला जाता रविस्तु विमलोऽभवत् ।
वाता ववुः सुगन्धोदसिक्ता विमलशुष्मिणः ॥ ४ ॥
सन्नद्धास्ते महावीरा रथस्था विमलाङ्गकाः ।
राजानमूचुस्ते सर्वे जयलक्ष्म्या समन्विता ॥ ५ ॥

वीरा ऊचुः ।

दिष्ट्या हतस्त्वया दैत्यो विद्युन्माली महामते ! ।
यद्भयात्त्रासमापन्नाः सुराः स्वर्गान्निराकृताः ॥ ६ ॥
दिष्ट्या प्राप्तो महावाजी रघुनाथस्य शोभनः ।
दिष्ट्या गन्तासि सर्वत्र जयं तु क्षितिमण्डले ॥ ७ ॥

स्वामिन्मुंञ्चत्विमं वाहं मनोवेगं मनोरमम् । समयस्य विलम्बो मा भवत्वत्र महामते

शेष उवाच ।

इति श्रुत्वा तु तद्वाक्यं वीराणां समयोचितम् ।
साधु साधु प्रशस्यैतान्मुमोच हयसत्तमम् ॥ ९ ॥

स मुक्तश्चोत्तरामाशां बभ्रामाथ सुरक्षितः । रथपत्तिहयश्रेष्ठैः सर्वशस्त्रास्त्रकोविदैः ॥
तत्र यद्वृत्तमेतस्य शत्रुघ्नस्य मनोहरम् । वात्स्यायन ! शृणुष्वैतत्पापराशिप्रदाहकम् ॥
रेवातीरमथप्राप्तो मुनिवृन्दनिषेवितम् । नीलरत्नसमूहस्य रसःकिं तु पयोमिषात ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तांस्तान्मुनिवरान्सर्वान्प्रणमञ्छूरसेवितः । जगाम हयरत्नस्य पृष्ठतःकामगामिनः ॥
गच्छंस्तत्राश्रमं जीर्णं पलाशपर्णनिर्मितम् । रेवायाजलकल्लोलैःसिक्तं पापहराश्रयम् ॥
तं दृष्ट्वा सुमतिं प्राह सर्वज्ञं नयकोविदम् । शत्रुघ्नःसर्वधर्मार्थकर्मकर्तव्यकोविदः ॥

राजोवाच ।

मन्त्रिन्कथय कस्यायमाश्रमःपुण्यदर्शनः । विचारचतुरश्रेष्ठ वदैतन्मम पृच्छतः ॥ १६ ॥

शेष उवाच ।

इतिवाक्यं समाकर्ण्य सुमतिःप्राह तं नृपम् । विशदस्मेरया वाचा दर्शयन्नात्मसौहृदम्

सुमतिरुवाच ।

एनं दृष्ट्वा महाराज ! धूतपापा वयं खलु । भविष्यामो मुनिश्रेष्ठं सर्वशास्त्रपरायणम्
तस्मान्नत्वा तमापृच्छ सर्वं ते कथयिष्यति । रघुनाथपदाम्भोजमकरन्दातिलोलुपः ॥
नाम्ना त्वारण्यकंख्यातं रघुनाथाङ्घ्रिसेवकम् । अत्युग्रतपसापूर्णं सर्वशास्त्रार्थकोविदम्
इतिश्रुत्वा तु तद्वाक्यं धर्मार्थपरिबृंहितम् । जगाम तमथोद्रष्टुं स्वल्पसेवकसंयुतः ॥
हनूमान्पुष्कलो वीरःसुमतिर्मन्त्रिसत्तमः । लक्ष्मीनिधिःप्रतापाग्र्यःसुबाहुःसुमदस्तथा
एतैःपरिवृतो राजा शत्रुघ्नःप्रापदाश्रमम् । नमस्कर्तुं द्विजवरमारण्यकमुदारधीः ॥२३॥
गत्वा तं तापसश्रेष्ठं नमस्कारमथाकरोत् । सर्वैस्तैःसहितो वीरैर्विनयानतकन्धरैः ॥

तान्दृष्ट्वा सन्नतान्सर्वाञ्छत्रुघ्नप्रमुखान्नृपान् ।
अर्घ्यपाद्यादिकं चक्रे फलमूलादिभिस्तदा ॥ २५ ॥

उवाच तान्नृपान्सर्वान्भवन्तःकुत्र सङ्गताः । कथमत्र समायातास्तत्सर्वं वदतानघाः ॥
तच्छ्रुत्वा वाक्यमेतस्य मुनिवर्यस्य वाडव !। सुमतिःकथयामास वाक्यवादविचक्षणः

सुमतिरुवाच ।

रघुवंशनृपस्यायमश्वो वै पाल्यतेऽखिलैः । यागं करिष्यते वीरःसर्वसम्भारसम्भृतम् ॥
तच्छ्रुत्वा वचनं तेषां जगाद मुनिसत्तमः । दन्तकान्त्याऽखिलं घोरं तमोनिर्वारयन्निव

आरण्यक उवाच ।

किं यागैर्विविधैरन्यैःसर्वसम्भारसम्भृतैः । स्वल्पपुण्यप्रदैर्नूनं क्षयिष्णुपददातृभिः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मूढोलोको हरिं त्यक्त्वा करोत्यन्यसमर्चनम्। रघुवीरं रमानाथं स्थिरैश्वर्यपदप्रदम्
यो नरैः स्मृतमात्रोऽपि हरते पापपर्वतम्।
तं मुक्त्वा क्लिश्यते मूढो यागयोग व्रतादिभिः ॥ ३२ ॥
अहो पश्यत मूढत्वं लोकानामतिवञ्चितम्। सुलभं रामभजनं मुक्त्वा दुर्लभमाचरेत् ॥
सकामैर्योगिभिर्वापि चिन्त्यते कामवर्जितैः। अपवर्गप्रदं नृणां स्मृतमात्राखिलाघहम्
पुराऽहं तत्त्ववित्सायां ज्ञानिनं सुविचारयन्।
अगमं बहुतीर्थानि तत्त्वं कोऽपि न मेऽदिशत् ॥ ३५ ॥
तदैकं हि महाभाग्यात्प्राप्तं वै लोमशं मुनिम्।
स्वर्गलोकात्समायातं तीर्थयात्रा चिकीर्षया ॥ ३६ ॥
तमहं प्रणिपत्याथ पर्यपृच्छं महामुनिम्। महायुषं महायोगिसंसेवितपदद्वयम् ॥
स्वामिन्मयाद्य मानुष्यं प्राप्तमद्भुतदुर्ल्लभम्।
संसारघोरजलधिं किं कर्तव्यं तितीर्षुणा ॥ ३८ ॥
विचार्य कथयत्वं तद्व्रतं दानं जपोमखः। देवो वा विद्यते यो वै संसृत्यम्भोधितारकः
यज्ज्ञात्वा संसृतिं घोरां तरामि त्वत्कृपाब्धितः।
तन्मे कथय योगेश ! सर्वशास्त्रार्थपारग ! ॥ ४० ॥
इति मद्वाक्यमाकर्ण्य जगाद मुनिसत्तमः। शृणुष्वैकमना विप्र ! श्रद्धया परयायुतः ॥
सन्ति दानानि तीर्थानि व्रतानि नियमायमाः।
योगा यज्ञास्तथाऽनेके वर्तन्ते स्वर्गदायकाः ॥ ४२ ॥
परंगुह्यं प्रवक्ष्यामि सर्वपापप्रणाशनम्। तच्छृणुष्व महाभाग संसाराम्भोधितारकम्
नास्तिकाय न वक्तव्यं न चाऽश्रद्धालवे पुनः। निन्दकाय शठायापि न देयं भक्तिवैरिणे
रामभक्ताय शान्ताय कामक्रोधवियोगिने। वक्तव्यं सर्वदुःखस्य नाशकारकमुत्तमम् ॥
रामान्नास्ति परो देवो रामान्नास्ति परं व्रतम्।
न हि रामात्परोयोगो न हि रामात्परोमखः ॥ ४६ ॥
तं स्मृत्वा चैव जप्त्वा च पूजयित्वा नरःपरम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप्नोति परमामृद्धिमैहिकामुष्मिकीं तथा ॥ ४७ ॥
संस्मृतो मनसाध्यातः सर्वकामफलप्रदः ।
ददाति परमां भक्तिं संसाराम्भोधितारिणीम् ॥ ४८ ॥
श्वपाकोऽपि हि संस्मृत्य रामंयाति परां गतिम् ।
ये वेदशास्त्रनिरतास्त्वादृशास्तत्र किं पुनः ॥ ४९ ॥
सर्वेषां वेदशास्त्राणां रहस्यं ते प्रकाशितम् ।
समाचर तथा त्वं वै यथा स्यात्ते मनीषितम् ॥ ५० ॥
एको देवो रामचन्द्रो व्रतमेकं तदर्चनम् ।
मन्त्रोऽप्येकश्च तन्नाम शास्त्रं तद्ध्येव तत्स्तुतिः ॥ ५१ ॥
तस्मात्सर्वात्मना रामचन्द्रं भज मनोहरम् ।
यथा गोष्पदवत्तुच्छो भवेत्संसारसागरः ॥ ५२ ॥
श्रुत्वाऽहं तु मुनेर्वाक्यं पुनःप्रश्नमकारिषम् । कथं वा ध्यायते देवःकथं वा पूज्यते नरैः
कथयस्व महाबुद्धे ! सर्वज्ञ ! मम विस्तरात् ।
यज्ज्ञात्वाऽहं कृतार्थः स्यां त्रिलोक्यां मुनिसत्तम ! ॥ ५४ ॥
एतच्छ्रुत्वा तु मद्वाक्यं विचार्य स तु लोमशः ।
कथयामास मे सर्वं रामध्यानपुरःसरम् ॥ ५५ ॥
शृणु विप्रेन्द्र वक्ष्यामि यत्पृष्टं तु त्वयाऽनघ । यथा तुष्येद्रमानाथः संसारज्वरदाहकः
अयोध्यानगरे रम्ये चित्रमण्डपशोभिते । ध्यायेत्कल्पतरोर्मूले सर्वकामसमृद्धिदे ॥
महामरकतस्वर्णनीलरत्नादिशोभितम् । सिंहासनं चित्तहरं कान्त्या तामिस्रनाशनम् ॥
तस्योपरि समासीनं रघुराजं मनोरमम् । दूर्वादलश्यामतनुं देवदेवेन्द्रपूजितम् ॥ ५९ ॥
राकायां पूर्णशीतांशुकान्तिधिक्कारि वक्त्रिणम् ।
अष्टमी चन्द्रशकलसमभालाधिधारिणम् ॥ ६० ॥
नीलकुन्तलशोभाढ्यंकिरीटमणिरञ्जितम् । मकराकारसौन्दर्यकुण्डलाभ्यां विराजितम्
विद्रुमच्छविसत्कान्तिरदच्छदविराजितम् । तारापतिकराकारद्विजराजिसुशोभितम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जपापुष्पा भयामाढ्या जिह्वया शोभिताननम् ।
यस्यां वसन्ति निगमा ऋगाद्याः शास्त्रसंयुताः ॥६३॥
कम्बुकान्तिधरग्रीवा शोभया समलङ्कृतम् ।
सिंहवदुच्चकौ स्कन्धौ मांसलौ बिभ्रतं वरम् ॥ ६४ ॥
बाहू दधानं दीर्घाङ्गौ केयूरकटकाङ्कितौ । मुद्रिकाहीरशोभाभिर्भूषितौ जानुलम्बिनौ ॥
वक्षो दधानं विपुलं लक्ष्मीवासेन शोभितम् । श्रीवत्सादि विचित्राङ्कैरङ्कितं सुमनोहरम्
महोदरं महानाभिं शुभकट्या विराजितम् ।
काञ्च्या वै मणिमत्या च विशेषेण श्रियान्वितम् ॥ ६७ ॥
ऊरुभ्यां विमलाभ्यां वै जानुभ्यां शोभितं श्रिया ।
चरणाभ्यां वज्ररेखा यवाङ्कुशसुरेखया ॥ ६८ ॥
युताभ्यां योगिध्येयाभ्यां कोमलाभ्यां विराजितम् ।
ध्यात्वा स्मृत्वा च संसारसागरं त्वं तरिष्यसि ॥ ६९ ॥
तमेव पूजयन्नित्यं चन्दनादिभिरिच्छया । प्राप्नोति परमामृद्धिमैहिकामुष्मिकीं पराम्
त्वया पृष्टं महाराज ! रामस्य ध्यानमुत्तमम् । तत्ते कथितमेतद्वै संसारजलधिं तर ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे आरण्यकोपाख्याने लोमशारण्यकसंवादो नाम पञ्चत्रिंशत्तमोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशत्तमोऽध्यायः

### आरण्यकेन लोमशमहर्षिप्रोक्तसमयसमेतरामचरित्रवर्णनम्

शेष उवाच

एतच्छ्रुत्वा तु विप्रेन्द्रो लोमशात्परमं महत् । पुनःप्रपच्छ तमृषिं सर्वज्ञं योगिनांवरम्

आरण्यक उवाच ।

मुनिश्रेष्ठ ! वदैतन्मे पृच्छामि त्वां महामते । गुरवःकृपयायुक्ता भाषन्ते सेवकेऽखिलम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कोऽसौ रामो महाभाग ! यो नित्यं ध्यायते त्वया ।
तस्य कानि चरित्राणि वदस्व त्वं द्विजर्षभ ! ॥ ३ ॥
किमर्थमवतीर्णोऽसौ कस्मान्मानुषतांगतः । तत्सर्वं कथयाशु त्वं मम संशयनुत्तये ॥

शेष उवाच ।

इतिवाक्यं समाकर्ण्य मुनेःपरमशोभनम् । लोमशः कथयामास रामचारित्रमद्भुतम् ॥
लोकान्निरयसंमग्नाञ्ज्ञात्वा योगेश्वरेश्वरः । कीर्तिं प्रथयितुं लोके यथाघोरं तरिष्यति
एवं ज्ञात्वा दयावार्धिःपरमेशो मनोहरः । अवतारं चकारात्र चतुर्धा सश्रियान्वितः ॥
पुरा त्रेतायुगे प्राप्ते पूर्णांशो रघुनन्दनः । सूर्यवंशे समुत्पन्नो रामो राजीवलोचनः ॥
सरामो लक्ष्मणसखःकाकपक्षधरो युवा । तातस्य वचनात्तौ तु विश्वामित्रमनुव्रतौ ॥
यज्ञसंरक्षणार्थाय राज्ञादत्तौ कुमारकौ । दान्तौ धनुर्धरौ वीरौ विश्वामित्रमनुव्रतौ ॥
पथि प्रव्रजतोस्तत्र ताटका नाम राक्षसी । सङ्गता च वने घोरे तयोर्वै विघ्नकारणात्
ऋषेरनुज्ञया रामस्ताटकां यमयातनाम् । प्रावेशयद्धनुर्वेदविद्याभ्यासेन राघवः ॥१३॥
यस्य पादतलस्पर्शाच्छिला वासवयोगजा । अहल्या गौतमवधू पुनर्जाता स्वरूपिणी
विश्वामित्रस्य यज्ञे तु सुप्रवृत्ते रघूत्तमः । मारीचं च सुबाहुं च जघान परमेषुभिः ॥
ईश्वरस्य धनुर्भग्नं जनकस्य गृहेस्थितम् । रामःपञ्चदशेवर्षे षड्वर्षामथ मैथिलीम् ॥१५
उपयेमे विवाहेन रम्यां सीतामयोनिजाम् । कृतकृत्यस्तदा जातःसीतां सम्प्राप्य राघवः
ततो द्वादशवर्षाणि रेमे रामस्तयासह । सप्तविंशतिमेवर्षे यौवराज्यमकल्पयत् ॥१७॥
राजानमथ कैकेयी वरद्वयमयाचत । तयोरेकेन रामस्तु ससीतःसहलक्ष्मणः ॥ १८ ॥
जटाधरःप्रव्रजतुर्वर्षाणीह चतुर्दश । भरतस्तु द्वितीयेन यौवराज्याधिपोऽस्तु मे ॥१९॥
जानकी लक्ष्मणसखं रामं प्राव्राजयन्नृपः ।
त्रिरात्रमुदकाहारश्चतुर्थेऽह्नि फलाशनः ॥ २० ॥
पञ्चमे चित्रकूटे तु रामःस्थानमकल्पयत् । अथ त्रयोदशेवर्षे पञ्चवट्यां महामुने ॥२१॥
रामो विरूपयामास शूर्पणखां निशाचरीम् । वने विचरतस्तस्य जानक्यासहितस्य च
आगतो राक्षसस्तां तु हर्तुं पापविपाकतः । ततो माघासिताष्टम्यां मुहूर्ते वृन्दसंज्ञिते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राघवाभ्यां विनासीतां जहार दशकन्धरः ।तेनैवं ह्रियमाणा सा चक्रन्द कुररी यथा ॥

रामरामेति मां रक्ष रक्ष मां रक्षसा हृताम् ।
यथा श्येनः क्षुधाक्रान्तः क्रन्दन्तीं वर्तिकां नयेत् ॥ २५॥

तथा कामवशं प्राप्तो रावणो जनकात्मजाम् । नयत्येवं जनकजां जटायुःपक्षिराट् तदा
युयुधे राक्षसेन्द्रेण स रावणहतोऽपतत् । मार्गशुक्लनवम्यां तु वसन्तीं रावणालये ॥
सम्पातिर्दशमेमास आचख्यौ वानरेषु ताम् । एकादश्यां महेन्द्राद्रे पुप्लुवे शतयोजनम्
हनूमान्निशि तस्यां तु लङ्कायां पर्यकालयत् । तद्रात्रिशेषे सीताया दर्शनं हि हनूमतः

द्वादश्यां शिंशपावृक्षे हनूमान्पर्यवस्थितः ।
तस्यां निशायां जानक्यां विश्वासालापसंकथा ॥ ३० ॥

अक्षादिभिस्त्रयोदश्यां ततोयुद्धमवर्तत । ब्रह्मास्त्रेण चतुर्दश्यां बद्धःशक्रजिता कपिः ॥

वह्निना पुच्छयुक्तेन लङ्काया दहनं कृतम् ।
पूर्णिमायां महेन्द्राद्रौ पुनरागमनं कपे ! ॥ ३२ ॥

मार्गासितप्रतिपदःपञ्चभिः पथिवासरैः । पुनरागत्य षष्ठेऽह्नि ध्वस्तं मधुवनं किल ॥
सप्तम्यां प्रत्यभिज्ञानदानं सर्वनिवेदनम् । अष्टम्युत्तरफल्गुन्यां मुहूर्ते विजयाभिधे ॥

मध्यं प्राप्ते सहस्रांशौ प्रस्थानं राघवस्य च ।
रामः कृत्वा प्रतिज्ञां तु प्रयातो दक्षिणां दिशम् ॥ ३५ ॥
तीर्त्वाऽहं सागरमपि हनिष्ये राक्षसेश्वरम् ।
दक्षिणाशां प्रयातस्य सुग्रीवोऽप्यभवत्सखा ॥ ३६ ॥
वासरैः सप्तभिः सिन्धोः स्कन्धावारनिवेशनम् ।
पौषशुक्लप्रतिपदस्तृतीया यावदम्बुधेः ॥ ३७ ॥

उपस्थानं ससैन्यस्य राघवस्य बभूव ह । विभीषणश्चतुर्थ्यां तु रामेण सह सङ्गतः ॥
समुद्रतरणार्थाय पञ्चम्यां मन्त्र उद्यतः । प्रायोपवेशनं चक्रे रामो दिनचतुष्टयम् ॥
समुद्रवरलाभश्च सहोपायप्रदर्शनम् । ततो दशम्यामारम्भस्त्रयोदश्यां समापनम् ॥

चतुर्दश्यां सुवेलाद्रौ रामः सैन्यं न्यवेशयत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पौर्णमास्याद्द्वितीयान्तं त्रिदिनैः सैन्यतारणम् ॥ ४१ ॥

तीर्त्वा तोयनिधिं रामो वानरैश्वरसैन्यवान् । रुरोध च पुरीं लङ्कां सीतार्थं सहलक्ष्मणः
तृतीयादि दशम्यन्तं निवेशश्च दिनाष्टकम् । शुकसारणयोस्तत्र प्राप्तिरेकादशे दिने ॥

पौषासिताख्यद्वादश्यां सैन्यसङ्ख्यानमेव च ।
शार्दूलेन कपीन्द्राणां सहसा सैन्यवर्णनम् ॥ ४४ ॥
त्रयोदश्या अमावास्यां लङ्कायां दिवसैस्त्रिभिः ।
रावणः सैन्यसङ्ख्यानं रणोत्साहं तदाकरोत् ॥ ४५ ॥

प्रययावङ्गदो दौत्यं माघशुक्लाद्यवासरे । सीतायाश्च ततोभर्तुर्मायामूर्द्धादिदर्शनम् ॥
माघद्वितीयादि दिनैः सप्तभिर्यावदष्टमी । रक्षसां वानराणां च युद्धमासीच्च सङ्कुलम्
माघशुक्लनवम्यां तु रात्रविन्द्रजिता रणे । रामलक्ष्मणयोर्नागपाशबन्धः कृतः किल ॥

आकुलेषु कपीशेषु निरुत्साहेषु सर्वशः ।
नागपाशविमोक्षार्थं दशम्यां पवनोऽजपत् ॥ ४६ ॥

कर्णेस्वरूपं रामस्य गरुडागमनं ततः । एकादश्यां च द्वादश्यां धूम्राक्षस्य वधः कृतः ॥
त्रयोदश्यां तु तेनैव निहतः कम्पनो रणे । माघशुक्लचतुर्दश्यां यावत्कृष्णादिवासरम्
त्रिदिनेन प्रहस्तस्य नीलेन विहितो वधः । माघकृष्णद्वितीयायाश्चतुर्थ्यन्तं त्रिभिर्दिनैः
रामेण तुमुले युद्धे रावणो द्रावितो रणात् । पञ्चम्या अष्टमीयावद्रावणेन प्रबोधितः ॥

कुम्भकर्णस्तदा चक्रेऽभ्यवहारं चतुर्दिनम् ।
कुम्भकर्णो दिनैः षड्भिर्नवम्यास्तु चतुर्दशीम् ॥ ५४ ॥

रामेण निहतो युद्धे बहुवानरभक्षकः । अमावास्यादिने शोकादवहारो बभूवह ॥ ५५ ॥
फाल्गुनादि प्रतिपदश्चतुर्थ्यन्तं चतुर्दिनैः । बिसतन्तुप्रभृतयो निहताः पञ्च राक्षसाः ॥
पञ्चम्याः सप्तमीयावदतिकायवधस्तथा । अष्टम्या द्वादशीयावन्निहतौ दिनपञ्चकात् ॥

निकुम्भकुम्भादूर्ध्वं तु मकराक्षस्त्रिभिर्दिनैः ।
फाल्गुनासितद्वितीयायां दिने शक्रजिताजितम् ॥ ५८ ॥

तृतीयादिसप्तम्यन्तं दिनपञ्चकमेव च । ओषध्यानयनव्यग्रादवहारो बभूवह ॥ ५९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततस्त्रयोदशीयावद्दिनैः पञ्चभिरिन्द्रजित् । लक्ष्मणेन हतो युद्धे विख्यातबलपौरुषः ॥
चतुर्दश्यां दशग्रीवो दीक्षां प्रापावहारतः । अमावास्यादिने प्रायाद्युद्धाय दशकन्धरः ॥
चैत्रशुक्लप्रतिपदः पञ्चमीदिनपञ्चकैः । रावणे युद्ध्यमाने तु प्रचुरोरक्षसां वधः ॥ ६२ ॥

चैत्रषष्ठ्याष्टमी यावन्महापार्श्वादिमारणम् ।
चैत्रशुक्लनवम्यां तु सौमित्रेः शक्तिभेदनम् ॥ ६३ ॥

कोपाविष्टेन रामेण द्रावितोदशकन्धरः । द्रोणाद्रिराञ्जनेयेन लक्ष्मणार्थमुपाहृतः ॥६४॥
दशम्यामवहारोऽभूद्रात्रौ युद्धे तु रक्षसाम् । एकादश्यां तु रामाय रथं मातलिसारथिः
प्रेरितो वासवेनाऽऽवर्पयामास भक्तितः । कोपवानथ द्वादश्या यावत्कृष्णचतुर्दशी ॥
अष्टादशदिने रामो रावणं द्वैरथेऽवधीत् । सङ्ग्रामेतुमुले जाते रामो जयमवाप्तवान् ॥

माघशुक्लद्वितीयायाश्चैत्रकृष्णचतुर्दशीम् ।
सप्ताशीतिदिनेष्वेव मध्यं पञ्चदशाहकम् ॥ ६८ ॥
युद्धावहारः सङ्ग्रामो द्वासप्ततिदिनान्यभूत् ।
संस्कारो रावणादीनाममावस्यादिनेऽभवत् ॥६९॥

वैशाखादितिथौ राम उवास रणभूमिषु । अभिषिक्तो द्वितीयायां लङ्काराज्ये विभिषणः

सीताशुद्धिस्तृतीयायां देवेभ्यो वरलम्भनम् ।
हत्वाऽचिरेण लङ्केशं लक्ष्मणाग्रज एव सः ॥ ७१ ॥
गृहीत्वा जानकीं पुण्यां दुःखितां राक्षसेन तु ।
आदाय परया प्रीत्या जानकीं सन्न्यवर्तत ॥ ७२ ॥
वैशाखस्य चतुर्थ्यां तु रामः पुष्पकमाश्रितः ।
विहायसा निवृत्तस्तु भूयोऽयोध्यां पुरीं प्रति ॥ ७३ ॥

पूर्णे चतुर्दशे वर्षे पञ्चम्यां माधवस्यतु । भरद्वाजाश्रमे रामः सगणाः समुपाविशत् ॥
नन्दिग्रामे तु षष्ठ्यां स भरतेन समागतः । सप्तम्यामभिषिक्तोऽसावयोध्यायां रघूद्वहः ॥
दशैकाधिकमासांस्तु चतुर्दशाहानिमैथिली । उवास रामरहिता रावणस्य निवेशने ॥

द्विचत्वारिंशके वर्षे रामो राज्यमकारयत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सीतायाश्च त्रयस्त्रिंशद्वत्सराश्च तदाऽभवन् ॥ ७७ ॥

स चतुर्दशवर्षान्ते प्रविश्य च पुरीं प्रभुः । अयोध्यां मुदितो रामो हत्वा रावणमाहवे
भ्रातृभिः सहितस्तत्र रामो राज्यमथाकरोत् । राज्यं प्रकुर्वतस्तस्य पुरोधा वदतांवरः

अगस्त्यः कुम्भसम्भूतिस्तमागन्ता रघोःपतिम् ।
तद्वाक्याद्रघुनाथोऽसौ करिष्यति हयक्रतुम् ॥ ८० ॥
तस्यागमिष्यति हयो ह्याश्रमे तव सुव्रत ! ।
तस्य योधाः प्रमुदिता आयास्यन्ति तवाश्रमम् ॥ ८१ ॥
तेषामग्रे रामकथाः करिष्यसि मनोहराः ।
तैः साकं त्वमयोध्यायां गन्तासि वै द्विजर्षभ ! ॥ ८२ ॥

दृष्ट्वा राममयोध्यायां पद्मपत्रनिभेक्षणम् । तत्क्षणादेव संसारवार्धिनिस्तारवान्भव ॥

इत्युक्त्वा मां मुनिवरो लोमशः सर्वबुद्धिमान् ।
उवाच ते किं प्रष्टव्यं तदाहमवदं हितम् ॥ ८४ ॥
ज्ञातं त्वत्कृपया सर्वं रामचारित्रमद्भुतम् ।
त्वत्प्रसादादवाप्स्येऽहं रामस्य चरणाम्बुजम् ॥ ८५ ॥

मया नमस्कृतः पश्चाज्जगाम स मुनीश्वरः। तत्प्रसादान्मयाऽवाप्तं रामस्य चरणार्चनम्
सोऽहं स्मरामि रामस्य चरणावन्वहं मुहुः । गायामि तस्य चरितं मुहुर्मुहुरतन्द्रितः ॥

पावयामि जनानन्यान्गानेन स्वान्तहारिणा ।
हृष्यामि तन्मुनेर्वाक्यं स्मारं स्मारं तदीक्षया ॥ ८८ ॥

धन्योऽहं कृतकृत्योऽहं सभाग्योऽहं महीतले । रामचन्द्रपदाम्भोजदिदृक्षा मे भविष्यति

तस्मात्सर्वात्मना रामो भजनीयो मनोहरः ।
वन्दनीयो हि सर्वेषां संसाराब्धितितीर्षया ॥ ९० ॥
तस्माद्यूयं किमर्थं वै प्राप्ताः को वा नराधिपः ।
यागं करोति धर्मात्मा हयमेधं महाक्रतुम् ॥ ९१ ॥
तत्सर्वं कथयन्त्वत्र यान्तु वाहस्य पालने ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्मरन्तु रघुनाथङ्घ्रिं स्मृत्वा स्मृत्वा पुनः पुनः ॥ ६२ ॥
इति वाक्यं समाकर्ण्य मुनेर्विस्मयमागताः । रघुनाथं स्मरन्तस्ते प्रोचुरारण्यकं मुनिम्
इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे लोमशारण्यकसंवादे रामचरित्रकथनं नाम षट्त्रिंशत्तमोऽध्यायः ॥ ३६ ॥

---

# सप्तत्रिंशत्तमोऽध्यायः

## आरण्यकस्यायोध्यामागमनम् ।

शेष उवाच ।

ते पृष्टा मुनिवर्येण रामचारित्रमद्भुतम् । धन्यं सभाग्यं मन्वानाः प्रोचुरात्मानमादरात्

जना ऊचुः ।

पवित्रिता वयं सर्वे दर्शनेन तवाधुना । यद्रामकथयास्मान्वै पावयस्यधुना जनान् ॥२॥
शृणुष्व वचनं तथ्यं भवान्ब्रह्मर्षिसत्तमः । त्वया पृष्टं यदस्मभ्यं सर्वं तत्कथयाम वै ॥
अगस्त्यवाक्याच्छ्रीरामो विप्रहत्यापनुत्तये । यागं करोति सुमहान्सर्वसम्भारसम्भृतम्
पालयमानास्तं सर्वे त्वदाश्रममुपागताः । अश्वेन सहिता विप्र ! तज्जानीहि महामते !

इति वाक्यं समाकर्ण्य मनोहारि रसायनम् ।
अत्यन्तहर्षमापेदे ब्राह्मणो रामभक्तिमान् ॥ ६ ॥
अद्य मे फलितो वृक्षो मनोरथश्रियान्वितः ।
अद्य मे जननी धन्या जाता मां सुषुवे तु या ॥ ७ ॥
अद्य राज्यं मया प्राप्तं कण्टकेन विवर्जितम् ।
अद्य कोशाः सुसम्पन्ना अद्य देवा सुतोषिताः ॥ ८ ॥

अग्निहोत्रफलं त्वद्य प्राप्तं मे हविषाहुतम् । यद्द्रक्ष्ये रामचन्द्रस्य चरणाम्भोरुहोर्युगम्
यो नित्यं ध्यायते स्वान्ते अयोध्यायाः पतिः प्रभुः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स मे दृग्गोचरो नूनं भविष्यति मनोहरः ॥ १० ॥
हनूमान्मां समालिङ्ग्य प्रक्ष्यते कुशलं मम ।
भक्तिं मे महतीं दृष्ट्वा तोषं प्राप्स्यति सत्तमः ॥ ११ ॥

इति वाक्यं समाकर्ण्य हनूमान्कपिसत्तमः । जग्राह पादयुगलं मुनेरारण्यकस्य हि ॥
स्वामिन्हनूमान्विप्रर्षे सेवकोऽहं पुरः स्थितः । जानीहि रामदासस्य रेणुकल्पं मुनीश्वर
इत्युक्तवति तस्मिन्वै मुनिः परमहर्षितः । आलिलिङ्ग हनूमन्तं रामभक्त्या सुशोभितम्
उभौ प्रेमविनिर्भिन्नावुभावपि सुधाप्लुतौ । स्थगितौ चित्रलिखिताविव तत्र बभूवतुः
उपविष्टौ कथास्तत्र चक्रतुः सुमनोहराः । रघुनाथपदाम्भोजप्रीतिनिर्भरमानसौ ॥१६॥
हनूमांस्तमुवाचेदं वचो विविधशोभनम् । आरण्यकं मुनिवरं रामाङ्घ्रिध्याननिर्भृतम्
स्वामिन्नयं दशरथकुलहीराङ्कुरो महान् । रामभ्राता महाशूरः शत्रुघ्नः प्रणमत्यसौ ॥
लवणो येन निहतः सर्वलोकभयङ्करः । कृताश्च सुखिनः सर्वे मुनयः सुतपोधनाः ॥१९॥
एष पुष्कलनामा त्वां नमत्युद्भटसेवितः । येनाधुना महावीरा जिताः समरमण्डले ॥
जानीह्येनं बहुगुणं रामामात्यं महाबलम् । प्राणप्रियं रघुपतेः सर्वज्ञं धर्मकोविदम् ॥
सुबाहुरयमत्युग्रो वैरिवंशदवानलः । रामपादाब्जरोलम्बो नमति त्वां महायशाः ॥

सुमदोऽप्येष पार्वत्या दत्तरामाङ्घ्रिसेवया ।
प्राप्तोऽधुनाऽसौ संसारवार्धिनिस्तरणं महत् ॥ २३ ॥
सत्यवानयमश्वं यः प्राप्तमाश्रुत्य सेवकात् ।
राज्यं निवेदयामास स त्वां प्रणमति क्षितौ ॥ २४ ॥
इति वाक्यं समाकर्ण्य समालिङ्ग्य समादरात् ।
चकारारण्यक ऋषिः स्वागतं फलकादिना ॥ २५ ॥

ते हृष्टास्तत्र वसतिं चक्रुर्मुनिवराश्रमे । प्रातर्नित्यक्रियां कृत्वा रेवायां ते महोद्यमाः ॥
नरयानमथारोप्य सेवकैः सहितं मुनिम् । शत्रुघ्नः प्रापयामासायोध्यां रामकृतालयाम्
स दूरान्नगरीं दृष्ट्वा सूर्यवंशनृपोषिताम् । पदातिरभवद्वेगाद्रघुनाथदिदृक्षया ॥ २८ ॥
सम्प्राप्य नगरीं रम्यामयोध्यां जनशोभिताम् । मनोरथसहस्रेण संरूढो रामदर्शने ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ददर्श तत्र सरयूतीरे मण्डपशोभिते। रामं दूर्वादलश्यामं कञ्जकान्तिविलोचनम् ॥३०॥
मृगशृङ्गं करौ रम्यं धारयन्तं श्रियान्वितम्। ऋषिवृन्दैर्व्यासमुख्यैर्वृतं शूरैःसुसेवितम्
भरतेन सुमित्रायास्तनूजेन परीवृतम्। ददतं दीनसङ्घेभ्यो दानानि प्रार्थितानि तम् ॥
विलोक्यारण्यकाख्योऽसौ कृतार्थ इत्यमन्यत।
मल्लोचने पद्मदलसमाने रामलोकके ॥ ३३ ॥
अद्य मे सर्वशास्त्रस्य ज्ञातृत्वं बहुसार्थकम्।
येन श्रीराममाज्ञाय प्राप्तोऽयोध्यापुरीमिमाम् ॥ ३४ ॥
इत्येवमादिवचनानि बहूनि हृष्टो रामाङ्घ्रिदर्शनसुहर्षितगात्रशोभी।
आयाद्रमेश्वरम...पमगम्यमन्यैर्योगेश्वरैरपि विचारपरैः सुदूरम् ॥ ३५ ॥
धन्योऽहमद्य रामस्य चरणावक्षिगोचरौ। करिष्यामि वचो रम्यं वदन्राममवेक्षयन् ॥
रामोऽपि वाडवश्रेष्ठं ज्वलन्तं स्वेन तेजसा। तपोमूर्तिधरं वीक्ष्य प्रत्युत्थानमथाकरोत्
रामचन्द्रस्तस्य पादौ सुचिरं नतवान्महान्। ब्रह्मण्यदेव ! पावित्र्यं कृतमद्यतनोर्मम ॥
इति वाक्यं वदंस्तस्य पादयोः पतितः प्रभुः।
सुरासुरनमन्मौलिमणिनीराजिताङ्घ्रिकः ॥ ३९ ॥
प्रणतं तं नृपश्रेष्ठं वाडवेन्द्रो महातपाः। गृहीत्वा भुजयोर्मध्यमालिलिङ्ग प्रियं प्रभुम् ॥
कौसल्यातनयस्तं वा उच्चैर्मणिमयासने। संस्थाप्य च पदोर्युग्मं जलेनाक्षालयत्प्रभुः
पादावनेजनोदं तु मस्तकेऽधाद्धरिः स्वयम्।
पवित्रितोऽद्य सगणः सकुटुम्ब इति ब्रुवन् ॥ ४२ ॥
चन्दनेन विलिप्याथ गां च प्रादात्पयस्विनीम्। उवाच च वचोरम्यं देवदेवेन्द्रसेवितः
स्वामिन्मखो मया वाजिमेधसंज्ञः क्रियेत ह।
सोऽयं त्वच्चरणापातादद्य पूर्णो भविष्यति ॥ ४४ ॥
अद्य मे ब्रह्महत्योत्थपापहानिं करिष्यति। अश्वमेधः क्रतुर्युष्मच्चरणेन पवित्रितः ॥४५
इति वाक्यं ब्रुवाणं तं राजराजेन्द्रसेवितम्। आरण्यक उवाचेदं हसन्माध्व्यागिरामुनिः
स्वामिंस्तव तु युक्तं हि वचो ब्रह्मण्य ! भूमिप !।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वन्मूर्तयो महाराज ब्राह्मणा वेदपारगाः ॥ ४७ ॥
त्वं यदा ब्रह्मपूजादि शुभं कर्म करिष्यसि । ततोऽखिला नृपा विप्रं पूजयिष्यन्तिभूमिप!
त्वयोक्तं यन्महाराज ! विप्रहत्यापनुत्तये । यागं करोमि विमलं तत्तु हास्यकरं वचः॥
त्वन्नामस्मरणान्मूढः सर्वशास्त्रविवर्जितः । सर्वपापाब्धिमुत्तीर्य स गच्छेत्परमं पदम्॥
सर्ववेदेतिहासानां सारार्थोऽयमितिस्फुटम् । यद्रामनामस्मरणं क्रियते पापतारकम्॥
तावद्गर्जन्ति पापानि ब्रह्महत्यासमानि च । न यावत्प्रोच्यते नाम रामचन्द्र तवस्फुटम्
त्वन्नामगर्जनं श्रुत्वा महापातककुञ्जराः । पलायन्ते महाराज कुत्रचित्स्थानलिप्सया
तस्मात्तव कथं हत्या महापुण्यददर्शन । राम त्वत्सुकथां श्रुत्वा पूतः सद्यो भविष्यति
मया पूर्वं कृतयुगे गङ्गायास्तीरवासिनाम् । ऋषीणां मुखतो वाक्यं श्रुतमेतत्पुराविदाम्

तावत्पापभियः पुंसां कातराणां सुपापिनाम् ।
यावन्न वदते वाचां रामनाम मनोहरम् ॥ ५६ ॥

तस्माद्धन्योऽहमधुना ममसंसृतिनाशनम् । साम्प्रतं सुलभं रामचन्द्रत्वद्दर्शनादभूत्॥
इत्युक्तवन्तं समुनिं पूजयामास तत्र वै । सर्वे मुनिजनाः साधुसाधुवाक्यमिति ब्रुवन्

शेष उवाच ।

अत्याश्चर्यमभूत्तत्र तन्मे निगदतः शृणु । वात्स्यायन मुनिश्रेष्ठ रामभक्तिपरायण !॥
रामं दृष्ट्वा महाराजं यादृशं ध्यानगोचरम् । अत्यन्तं हर्षमापन्नो जगाद स मुनीश्वरान्

मुनीश्वराः संश्रृणुत मद्वाक्यं सुमनोहरम् ।
मादृशः को न भूलोके भविष्यति सुभाग्यवान् ॥६१॥
नास्ति मत्सदृशः कोऽपि न जातो न भविष्यति ।
यद्रामभद्रो मां नत्वा स्वागतं परिपृष्टवान् ॥ ६२ ॥

यत्पादपङ्कजरजः श्रुतिमृग्यं सदैव हि । सोऽद्य मत्पादयोः पाथः पीत्वा पूतममन्यत॥
एवं प्रवदतस्तस्य ब्रह्मस्फोटोऽभवत्तदा । निर्गतं तद्भवं तेजो विवेश रघुनायके ॥ ६४॥
पश्यतां सर्वलोकानां सरयूतीरमण्डपे । सायुज्यमुक्तिं सम्प्राप दुर्लभां योगिभिर्जनैः॥
दिवि तूर्यनिनादोऽभूद्वीणानादोऽभवत्तदा । पुष्पवृष्टिः पपाताग्रे पश्यतां चित्रमद्भुतम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुनयोऽप्येतदीक्षित्वा प्रशंसन्तो मुनीश्वरम् । कृतार्थोऽयं मुनिश्रेष्ठो यद्रामवपुषीक्षितः
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
आरण्यकमुनेर्विष्णुलोकगमनं नाम सप्तत्रिंशत्तमोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशत्तमोऽध्यायः

### नर्मदाह्रदेऽश्वस्य निमज्जनम् ।

व्यास उवाच ।

एतदाख्यानकं श्रुत्वा वात्स्यायन उदारधीः । परमं हर्षमापेदे जगाद च फणीश्वरम् ॥

वात्स्यायन उवाच ।

कथां संश्रृण्वते मह्यं तृप्तिर्नास्ति फणीश्वर ! । रघुनाथस्य भक्तार्तिहारिकीर्तिकरस्य वै
धन्य आरण्यको नाम मुनिर्वेदधरः परः । रघुनाथं समालोक्य देहं तत्याज नश्वरम् ॥
ततो राज्ञो हयः कुत्रः गतः केन नियन्त्रितः । कथं तत्र रमानाथकीर्तिर्जाता फणीश्वर !
सर्वं कथय मे तथ्यं सर्वज्ञोऽस्ति यतो भवान् ।
धराधरवपुर्धारी साक्षात्तस्य स्वरूपधृत् ॥ ५ ॥

व्यास उवाच ।

इति वाक्यं समाकर्ण्य प्रहृष्टेनान्तरात्मना । उवाच रामचारित्रं तत्तद्गुणकथोदयम् ॥

शेष उवाच ।

साधु पृच्छसि विप्रर्षे रघुनाथगुणान्मुहुः । श्रुतानश्रुतवत्कृत्वा तेषु लोलुपतां दधन् ॥
ततो निरगमद्वाहः सैनिकैर्बहुभिर्वृतः । रेवातीरे मनोज्ञे तु मुनिवृन्दनिषेविते ॥ ८ ॥
सेनाचरास्ततः सर्वे यत्र वाहस्ततस्ततः । प्रसर्पन्ति निरीक्षन्तस्तन्मार्गं रणकोविदाः ॥
वाजी गतोऽथ रेवाया ह्रदेऽगाधजलान्विते । भाले स्वर्णभवं पत्रं धारयन्पूजिताङ्गकः ॥
ततो जले ममज्जासौ रामचन्द्रहयो वरः । तदा सर्वे महाशूरास्तत्र विस्मयमागताः ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेः परस्परमेवोचे कथं हयसमागमः । कोऽत्रगन्ता जले वाहमानेतुं तं महोद्यम् ॥
इति यावत्समुद्विग्ना मन्त्रयन्ते परस्परम् । तावद्वीरशतैः सार्धमाजगाम रघोः पतिः ॥
तान्सर्वान्विमनस्कान्स दृष्ट्वा शत्रुघ्नसंज्ञितः । पप्रच्छमेघगम्भीरवाचा वीरशिरोमणिः

किं स्थितं निखिलैरद्य युष्माभिः सङ्घशो जले ।
कुत्राश्वो रघुनाथस्य स्वर्णपत्रेण शोभितः ॥ १५ ॥
जले किं विनिमग्नोऽसौ हृतो वा केन मानिना ।
तन्मे कथयत क्षिप्रं कथं यूयं विमोहिताः ॥ १६ ॥
इति वाक्यं समाकर्ण्य राज्ञो रघुवरस्य हि ।
कथयामासुस्ते सर्वं वीराः शूरशिरोमणिम् ॥ १७ ॥

जना ऊचुः ।

स्वामिन्वयं न जानीमो मुहूर्तमभवज्जले । निममज्ज ततो नायाद्धयस्तव मनोहरः ॥
त्वमेव तत्र गत्वेमं वाहमानय वेगतः । अस्माभिस्तत्र गन्तव्यं त्वया सार्द्धं महामते!

शेष उवाच ।

इति श्रुत्वा वचस्तेषां सैनिकानां रघूद्वहः । खेदं प्राप जनान्पश्यञ्जलसन्तरणोद्यतान् ॥

उवाच मन्त्रिमुख्यं स किं कर्तव्यमतः परम् ।
कथं वाहस्य सम्प्राप्तिर्भविष्यति वदस्व तत् ॥२१॥

के तत्र शूराः संयोज्या जलेऽन्वेषयितुं हयम् । कोवाऽऽनयिष्यते वाहं केनोपायेन तद्वद ॥
इति राज्ञो वचः श्रुत्वा सुमतिर्मन्त्रिसत्तमः । उवाच समये योग्यं शत्रुघ्नं हर्षयन्निव ॥

सुमतिरुवाच ।

स्वामिन्नस्ति तव श्रीमञ्छक्तिरद्भुतकर्मणः । पातालगमने शक्तिर्जलमध्यादिहस्फुटम् ॥
अन्यच्च पुष्कलस्यापि शक्तिरस्ति महात्मनः । हनूमतोऽपिरामस्य पादसेवापरस्य च ॥
तस्माद्यूयं त्रयो गत्वा हयमानयत ध्रुवम् । यतो भवेद्वाहमेधो रघुनाथस्य धीमतः ॥

शेष उवाच ।

इति वाक्यं समाश्रुत्य शत्रुघ्नः परवीरहा । स्वयं विवेश तोयान्तर्हनुमत्पुष्कलान्वितः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यावज्जलं विवेशासौ तावत्पुरमदृश्यत । अनेकोद्यानशोभाढ्यममेयं पुटभेदनम् ॥ २८ ॥
तत्र माणिक्यरचिते स्तम्भे स्वर्णमये हयम् । बद्धं ददर्श रामस्य स्वर्णपत्रसुभोभितम्

स्त्रियस्तत्र मनोहारि रूपधारिण्य उत्तमाः ।
सेवन्ते सुन्दरीमेकां पर्यङ्के सुखमास्थिताम् ॥ ३० ॥
तान्दृष्ट्वा ताः स्त्रियः सर्वाः प्रावोचन्स्वामिनीं प्रति ।
एतेऽल्पवर्ष्मवयसो मांसपुष्टकलेवराः ॥ ३१ ॥

भविष्यन्ति तव श्रेष्ठमाहारस्य फलं महत् । एतेषां शोणितं स्वदु पुरुषाणां गतायुषाम्
एतद्वचः समाकर्ण्य सेविकानां वराङ्गना । जहास किञ्चिद्वदनं नर्तयन्ती भ्रुवाऽनघा ॥

तावत्त्रयस्ते सम्प्राप्ताः सन्नाहश्रीविशोभिताः ।
शिरस्त्राणानि दधतः शौर्यवीर्यसमन्विताः ॥ ३४ ॥
तान्दृष्ट्वा महिलास्तत्र सौन्दर्यश्रीसमन्विताः ।
प्रोचुस्ते विस्मयं विप्र! किमिदं दृश्यते महत् ॥ ३५ ॥

नमश्चक्रुर्महात्मानः सर्वे देववराङ्गनाः । किरीटमणिविद्योतद्योतिताङ्घ्रियुगास्ततः ॥
सा तान्पप्रच्छ पुरुषान्सर्वश्रेष्ठा तु भामिनी । के यूयमत्र सम्प्राप्ताः कथं चापधरा नराः
मत्स्थलं सर्वदेवानामगम्यं मोहनं महत् । अत्र प्राप्तस्य तु क्वापि निवृत्तिर्न भवत्युत ॥
अश्वोऽयं कस्य राज्ञो वै कथं चामरवीजितः । स्वर्णपत्रेण शोभाढ्यः कथयन्तु ममाग्रतः
इति तस्या वचः श्रुत्वा मोहनाचारसंयुतम् । हनूमांस्तां प्रत्युवाच गतभीः प्रहसन्निव
वयं वै किङ्करा राज्ञस्त्रैलोकस्य शिखामणेः । त्रिलोकीयं प्रणमते सर्वदेवशिरोमणिम्
रामभद्रस्य जानीहि हयमेधप्रवर्तितुः । प्रमुञ्च वाहमस्माकं कथं बद्धो वराङ्गने! ॥४२॥

वयं सर्वास्त्रकुशलाः सर्वशस्त्रास्त्रकोविदाः ।
नयिष्यामो बलाद्वाहं हत्वा तत्प्रतिरोधकान् ॥ ४३ ॥
इति वाक्यं समाकर्ण्य प्लवङ्गस्य वराङ्गना ।
विवरस्था प्रत्युवाच हसन्ती वाक्यकोविदा ॥ ४४ ॥

मयानीतमिमं वाहं न को मोचयितुं क्षमः । वर्षायुतेन निशितैर्बाणकोटिभिरुच्छ्रितैः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परं रामस्य पादाब्जसेवकी कर्मकारिणी । न ग्रहीष्यामि तद्वाहं राजराजस्य धीमतः
महानविनयो जातो मम नेऽयाः सुवाजिनः । क्षमताद्रामचन्द्रस्तच्छरण्यो भक्तवत्सलः
यूयं क्लिष्टास्तत्पुरुषा हयार्थं तस्य रक्षितुः । याचध्वं वरमप्राप्यं देवानामपि सत्तमाः॥

यथा मेऽमी वमत्युग्रं क्षमेत पुरुषोत्तमः ।

व्रीडां त्यक्त्वाऽखिलां यूयं वृणुध्वं वरमुत्तमम् ॥ ४६ ॥

तस्या वचः परं श्रुत्वा हनूमान्निजगाद ताम् । रघुनाथप्रसादेन सर्वमस्माकमूर्जितम्॥

तथापि याचे वरमेकमुत्तमं विधेहि तन्मे मनसः समीहितम् ॥

भवे भवे नो रघुनायकः पतिर्वयं च तत्कर्मकराश्च किङ्कराः ॥ ५१ ॥

एतद्वचनमाकर्ण्य प्लवगस्य तदाऽङ्गना । उवाच वाक्यं मधुरं प्रहस्य गुणपूजितम् ॥५२॥
भवद्भिः प्रार्थितं यद्वै दुर्ल्लभं सर्वदैवतैः । तद्भविष्यत्यसन्देहः सेवकास्तद्रघोः पतेः॥
तथापि वरमेकं वै दास्यामि कृतहेलना । रघुनाथस्य तुष्ट्यर्थं तद्रुतं मे भवेद्वचः ॥५४॥
अग्रे वीरमणिर्भूपो महावीरसमन्वितः । ग्रहीष्यति भवद्वाहं शिवेन परिरक्षितः ॥५५॥
तज्जयार्थे महास्त्रं मे गृह्णीत सुमहाबलाः । द्वैरथे स तु योद्धव्यः शत्रुघ्नेन त्वया महान्
इदमस्त्रं यदा त्वं तु क्षेपयिष्यसि सङ्गरे । अनेन पूतो रामस्य स्वरूपं ज्ञास्यते पुनः।
ज्ञात्वा तं वाजिनं दत्त्वा चरणे प्रपतिष्यति । तस्माद्गृह्णीध्वमस्त्रं तन्ममवैरि विदारणम्

तच्छ्रुत्वा रघुनाथस्य भ्राता जग्राह चास्त्रकम् ।

उदङ्मुखः पवित्राङ्गो योगिन्या दत्तमद्भुतम् ॥ ५६ ॥

तत्प्राप्याणं(स्त्रं)महातेजा बभूव रिपुकर्शनः । दुष्प्रधर्षोदुराराध्यो वैरिवारणसत्सृणि
तां नत्वा राघवश्रेष्ठः शत्रुघ्नो हयसत्तमम् । गृहीत्वाऽगाज्जलात्तस्माद्रेवातीरे सुखोचितेः

तं दृष्ट्वा सैनिकाः सर्वे प्रहृष्टाङ्गा मुदान्विताः ।

साधु साधु प्रशंसन्तः पप्रच्छुर्हयनिर्गमम् ॥ ६२ ॥

हनूमान्कथयामास हयस्यागमनं महत् । वरप्राप्तिं च तेभ्यो वै तेऽपि श्रुत्वा मुदं गताः

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे शत्रुघ्नस्य योगिनीदर्शनपूर्वकं जलमध्याद्वाहप्राप्तिर्नामाष्टत्रिंशत्तमोऽध्यायः ॥ ३८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# एकोनचत्वारिंशोऽध्यायः

## अश्वस्य देवपुरम्प्रति गमनम् ।

शेष उवाच ।

निनदत्सु मृदङ्गेषु वीणानादेषु सर्वतः । मुक्तो वाहस्ततो देवपुरं देवविनिर्मितम् ॥१॥
यत्र स्फाटिककुड्यानां रचनाभिर्गृहा नृणाम् ।
हसन्ति विन्ध्यं विमलं पर्वतं नागसेवितम् ॥ २ ॥
राजतानि गृहाण्यत्र दृश्यन्ते प्रकृतेरपि । विचित्रमणिसन्नद्धा नानामाणिक्यगोपुराः
पद्मिन्यो यत्र लोकानां गेहे गेहे मनोहराः । हरन्ति चित्तानि नृणां मुखपद्मकलेक्षिताः
पद्मरागमणिर्यत्र गेहे गेहे सुभूमिषु । बद्धः संलक्ष्यते विप्र ! तदोष्ठस्पर्धया नु किम् ॥
क्रीडाशैलाः प्रत्यगारं नीलरत्नविनिर्मिताः ।
कुर्वन्ति शङ्कां मेघस्य मयूराणां कलापिनाम् ॥ ६ ॥
हंसा यत्र नृणां गेहे स्फाटिके सुनियन्त्रिताः ।
कुर्वन्ति मेघान्नो भीतिं मानसं न स्मरन्ति च ॥ ७ ॥
निरन्तरं शिवस्थाने ध्वस्तं चन्द्रिकया तमः ।
शुक्लकृष्णविभेदो न पक्षयोस्तत्र वै नृणाम् ॥ ८ ॥
तत्र वीरमणी राजा धार्मिकेष्वग्रणीर्महान् । राज्यं करोति विपुलंसर्वभोगसमन्वितम्
तस्य पुत्रो महाशूरो नाम्ना रुक्माङ्गदो बली । वनिताभिर्गतो रम्यदेहाभिः क्रीडितुं वनम्
तासां मञ्जीरसंरावः कङ्कणानां रवस्तथा । मनोहरति कामस्य किमन्यस्य कथाऽत्र भोः
वनं जगाम सुमहत्सुपुष्पनगसंयुतम् । सदाशिवकृतस्थानमृतुषट्कैर्विराजितम् ॥१२॥
चम्पका यत्र बहुशः फुल्लकोरकशोभिताः । कुर्वन्तिकामिनांतत्रहृच्छ्यार्त्तिविलोकिताः
चूताःफलादिभिर्नम्रामञ्जरीकोटिसंयुताः । नागाःपुन्नागवृक्षाश्चशालास्तालास्तमालकाः
कोकिलानां समारावा यत्र च श्रुतिगोचराः । सदा मधुपझङ्कारगतनिद्राः सुमल्लिकाः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दाडिमानां समूहाश्च कर्णिकारैः समन्विताः । केतकी कानकी वन्यवृक्षराजिविराजिताः
तस्मिन्वने प्रमदसंयुतचित्तवृत्तिर्गायन्कलं मधुरवाग्विजिहीर्षयोच्चैः ।
उद्यत्कुचाभिरभितो वनिताभिरागाच्छोभानिधानवपुरुज्झितभीर्विवेश ॥
काश्चित्तं नृत्यविद्याभिस्तोषयन्ति स्म शोभनम् ।
काश्चिद् गानकलाभिश्च काश्चिद्वाक्चतुरोचितैः ॥ १८ ॥
भ्रूसंज्ञाभिः पराः काश्चित्तोषयामासुरुन्मदाः । परिरम्भणचातुर्यैस्तं हृष्टं विदधुः स्त्रियः
ताभिः पुष्पोच्चयं कृत्वा भूषयामास ताः स्त्रियः ।
वाण्या कोमलया शंसन्रेमे कामवपुर्धरः ॥ २० ॥
एवं प्रवृत्ते समये राजराजस्य धीमतः । प्रायात्तद्वनदेशं स हयः परशोभनः ॥ २१ ॥
तं स्वर्णपत्ररचितैकललाटदेशं गङ्गासमं घुसृणकुङ्कुमपिञ्जराङ्गम् ।
गत्याऽसमं पवनवेगतिरस्करिण्या दृष्ट्वा स्त्रियः परमकौतुकधामदेहम् ॥
ऊचुः पतिं कमलमध्यपिशङ्गवर्णास्ताम्राधरप्रतिभया हतविद्रुमाभाः ।
दन्तव्रजप्रमितहास्यसुशोभिवक्त्राः कामस्य बाणनयनादिविमोहनाभाः ॥

स्त्रिय ऊचुः ।

कान्त ! कोऽयं महानर्वा स्वर्णपत्रैकशोभितः ।
कस्य वा भाति शोभाढ्यो गृहाण स्वबलादिमम् ॥ २४ ॥

शेष उवाच ।

तदुक्तं वच आकर्ण्य लीलाललितलोचनः। जग्राह हयमेकेन करपद्मेन लीलया ॥ २५ ॥
वाचयित्वा स्वर्णपत्रं स्पष्टवर्णसमन्वितम् । जहास महिलामध्ये जगादवचनं पुनः ॥

रुक्माङ्गद उवाच ।

पृथिव्यां नास्ति मे पित्रा समः शौर्येण च श्रियः ।
तस्मिन्कथं विधत्ते स उत्सेकं रामभूमिपः ॥ २७ ॥
यस्य रक्षां प्रकुरुते सदा रुद्रः पिनाकधृत् । यं देवा दानवा यक्षा नमन्ति मणिमौलिभिः
कुरुताद्वाजिमेधं वै जनको मे महाबलः । यात्वेष वाजिशालायां बध्नन्तु मम वै भटाः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति वाक्यं समाकर्ण्य महिलास्ता मनोहराः । प्रहृष्टवदना जाताः कान्तं तु परिरेभिरे
गृहीत्वा च हयं पुत्रो राज्ञो वीरमणेर्महान् । पुरं पत्नीसमायुक्तो महोत्साहमवीविशत्
मृदङ्गध्वनिषु प्रोच्चैराहतेषु समन्ततः । वन्दिभिः संस्तुतः प्रागात्स्वपितुर्मन्दिरं महत्

तस्मै स कथयामास हयं नीतं रघोः पतेः ।
वाजिमेधाय निर्मुक्तं स्वच्छन्दगतिमद्भुतम् ॥ ३३ ॥

रक्षितं शत्रुसूदेन महाबलसमेतिना । तच्छ्रुत्वा वचनं तस्य नृपो वीरमणिर्महान् ॥३४॥
नातिप्रशंसयामास तत्कर्म सुमहामतिः । नीत्वा पुनः समायान्तं चौरस्येव विचेष्टितम्
कथयामास जामात्रे शिवायाद्भुतकर्मणे । अर्धाङ्गनाधरायाङ्गभूषाय चन्द्रधारिणे ॥३६

तेन संमन्त्रयामास नृपो वीरमणिर्महान् ।
पुत्र ! सृष्टं महत्कर्म विनिन्द्यं महतां मतः ॥३७॥

शिव उवाच ।

राजन्पुत्रेण भवतः कृतं कर्म महाद्भुतम् । यो जहार महावाहं रामचन्द्रस्य धीमतः ॥
अद्य युद्धं महद्भाति सुरासुरविमोहनम् । शत्रुघ्नेन महीभर्त्रा वीरकोट्येकरक्षिणा ॥

मया यो ध्रियते स्वान्ते जिह्वया प्रोच्यते हि यः ।
तस्य रामस्य यज्ञाङ्गं जहार तव पुत्रकः ॥ ४० ॥

परमत्र महाँल्लाभो भविष्यति रणाङ्गणे । यद्रामचरणाम्भोजं द्रक्ष्यामः स्वीयसेवितम्
अत्र यत्नो महान्कार्यो हयस्य परिरक्षणे । नयिष्यन्ति बलाद्वाहं मया रक्षितमप्यमुम्

तस्मादिमं महाराज ! राज्येन सह सन्नतः ।
वाजिने भोजनं दत्त्वा प्रेक्षस्वाङ्घ्रियुगं ततः ॥ ४३ ॥

इति वाक्यं समाकर्ण्य शिवस्य स नृपोत्तमः । उवाच तं सुरेन्द्रादिवन्द्यपादाम्बुजद्वयम्

वीरमणिरुवाच ।

क्षत्रियाणामयं धर्मो यत्प्रतापस्य रक्षणम् । तदसौ क्रान्तुमुद्युक्तः क्रतुना हयसंज्ञिना

तस्माद्रक्ष्यः स्वप्रतापो येन केनाऽपि मानिना ।
यावच्छक्यं कर्म कृत्वा शरीरव्ययकारिणा ॥ ४६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वं कृतं सुतेनेदं गृहीतोऽश्वः पुनर्यतः । कोपितं रामभूपालं समयाहं कुरु प्रभो ! ॥४७
क्षत्त्रियाणामिदं कर्म कर्तव्याहं भवेन्नहि । यदकस्माद्रिपोः पादौ प्रणमेद्भयविह्वलः ॥
रिपवो विहसन्त्येनं कातरोऽयं नृपाधमः । क्षुद्रः प्राकृतवन्नीचो नतवान्भयविह्वलः ॥

तस्मान्भवान्यथायोग्यं योद्धव्ये समुपस्थिते ।
यद्विधेयं विचार्यैव कर्तव्यं भक्तरक्षणम् ॥ ५० ॥

शेष उवाच ।

इति वाक्यं समाकर्ण्य चन्द्रचूडोऽवदद्वचः । प्रहसन्मेघगम्भीरवाण्या संमोहयन्मनः ॥
यदि देवास्त्रयस्त्रिंशत्कोटयः समुपस्थिताः । तथापि त्वत्तः केनाश्वो गृह्यते मम रक्षितुः
यदि रामः समागत्य स्वात्मानं दर्शयिष्यति । तदाऽहं चरणौ तस्य प्रणमामि सुकोमलौ

स्वामिना न हि योद्धव्यं महाननय उच्यते ।
अन्ये वीरास्तृणप्रायाः किञ्चित्कर्तुं न वै क्षमाः ॥ ५४ ॥
तस्माद्युद्धयस्व राजेन्द्र ! रक्षके मयि सुस्थिते ।
को गृह्णाति बलाद्वाहं त्रिलोकी यदि सङ्गता ॥ ५५ ॥

एतद्वचः परं श्रुत्वा चन्द्रचूडस्य भूमिपः । जहर्ष मानसेऽत्यन्तं युद्धकर्मणि कौतुकी ॥

इति श्रीपाद्मे महापुराणे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे वीरमणिपुत्रेण हयग्रहणं नामैकोनचत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशत्तमोऽध्यायः

### वीरमणिना सह युद्धाय शत्रुघ्नस्य निश्चयः

शेष उवाच ।

सेनाचरास्तु रामस्य महाबलसमन्विताः । समागतास्तं पश्यन्तो हयं रामस्य भूपतेः
कासावश्वः केन नीतः कथं वा दृश्यते न सः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

को गन्ता यमपुर्यां वै वाहं हृत्वा सुमन्दधीः ॥ २ ॥

विलोकयन्तस्तन्मार्गं यावत्सेनाचरा रघोः । तावत्प्राप्तो महाराजो महासैन्यपरीवृतः

पप्रच्छ सेवकान्सर्वान्कुत्राश्वो मम साम्प्रतम् । नदृश्यते कथं वाहः स्वर्णपत्रसुशोभितः

इति तद्वचनं श्रुत्वा सेवकास्ते हयानुगाः । प्रोचुर्नाथ मनोवेगोवाहः केनापि कानने ॥

हृतो न लक्ष्यते तस्मादस्माभिर्मार्गकोविदैः ।

तदत्र यत्नः कर्तव्यो हयप्राप्तिं प्रति प्रभो ! ॥ ६ ॥

तेषां वचनमाकर्ण्य पप्रच्छ सुमतिं नृप ! शत्रुघ्नः शत्रुसंहारकारी मोहनरूपधृत् ॥ ७ ॥

शत्रुघ्न उवाच ।

कोऽत्र राजा निवसति कथं वाहस्य सङ्गमः । कियद्बलं भूमिपतेर्येन मेऽद्य हृतो हयः

सुमतिरुवाच ।

राजन्देवपुरं ह्येतद्देवेनैव विनिर्मितम् । कैलासमिव दुर्गम्यं वैरिसङ्घैः सुसंहतैः ॥ ९ ॥

अस्मिन्वीरमणी राजा महाशूरः प्रतापवान् । राज्यं करोति धर्मेण शिवेन परिरक्षितः

योऽसौ प्रलयकारी स आस्ते भक्त्या वशीकृतः ।

चन्द्रचूडः स्वभक्तस्य पक्षपातं सृजन्सदा ॥ ११ ॥

तस्मादत्र महद्युद्धं गृहीतश्चेद्भविष्यति । यत्ताः सन्तः प्रकुर्वन्तु रक्षणं कटकस्य हि ॥

एवं श्रुत्वा सशत्रुघ्नः सर्वभूपशिरोमणिः । सैन्यव्यूहं रचित्वाऽसौ तिष्ठतिस्म महायशाः

अथ तं सुखमासीनं मन्त्रयन्तं सुमन्त्रिणा । आजगाम स देवर्षिर्युद्धकौतुकसंयुतः ॥

तमागतं मुनिं दृष्ट्वा शत्रुघ्नस्तपसां निधिम् ।

अभ्युत्थायासने स्थाप्य मधुपर्कमथार्पयत् ॥ १५ ॥

स्वागतेन च सन्तुष्टं नारदं मुनिसत्तमम् । उवाच प्रीणयन्वाचा वाक्यवादविशारदः

शत्रुघ्न उवाच ।

मदीयोऽश्वः कुत्र विप्र! कथयस्व महामते । न लक्ष्यते गतिस्तस्य सेवकैर्मम कोविदैः

शंस तं येन वा नीतं क्षत्त्रियेण च मानिना । कथमत्र हयप्राप्तिर्भविष्यति तपोधन! ॥

इति वाक्यं समाकर्ण्य शत्रुघ्नस्य स नारदः । उवाच वीणां रणयन्गायन्रामकथां मुहुः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नारद उवाच ।

एतद्दैवपुरं राजन्भूपो वीरमणिर्महान् । तत्पुत्रेण वनस्थेन गृहीतस्तव वाजिराट् ॥२०॥
तत्र युद्धं महत्तेऽद्य भविष्यति सुदारुणम् । अत्र वीराः पतिष्यन्ति वलशौर्यसमन्विताः
तस्मादत्र महायत्नात्स्थातव्यं ते महावल ! । रचय व्यूहरचनां दुर्गमां परसैनिकैः ॥२२

जयस्ते भविता राजन्कृच्छ्रेणास्मान्नृपोत्तमात् ।
रामं को नु पराजीयाद् भुवने सकले ह्यपि ॥ २३ ॥

इत्युक्त्वाऽन्तर्दधे विप्रो नभसि स्थितवांस्ततः । युद्धं सुदारुणं द्रक्ष्यन्देवदानवयोरिव

शेष उवाच ।

अथ राजा वीरमणिः सर्वशूरशिरोमणिः । पटहं घोषितुं स्वीये पुरमध्ये महारवम् ॥
आह्वयामास सेनान्यं रिपुवीरं महोन्नतम् । कथयामास च क्षिप्रं मेघगम्भीरया गिरा

वीरमणिरुवाच ।

सेनानीः पटहस्याज्ञां देहि मे शोभने पुरे ।
तच्छ्रुत्वा मे सुसन्नद्धाः शत्रुघ्नं प्रयियान्तु ते ॥ २७ ॥

इति वाक्यं समाकर्ण्य राज्ञो वीरमणेस्तदा । कारयामास पटहं महारवनिनादितम् ॥
गेहे गेहे च रथ्यायां श्रूयते पटहध्वनिः । शत्रुघ्नं यान्तु ये सर्वे वीरा राजपुरे स्थिताः

ये वै राज्ञः समुल्लङ्घ्य शासनं वीरमानिनः ।
पुत्रा वा भ्रातरो वापि ते वध्याः स्युर्नृपाज्ञया ॥ ३० ॥
शृण्वन्तु वीराः पुनरप्याहते पटहे रवम् ।
श्रुत्वा विधीयतामाशु कर्तव्यं मा विलम्बितम् ॥ ३१ ॥

शेष उवाच ।

इति पटहरवं स्वकर्णगोचरं नरवरवीरवराययुर्नृपोत्तमम् ।
कनककवचभूषितस्वदेहाः समरमहोत्सवहृष्टचित्तकोशाः ॥ ३२ ॥
केचिद्ययुः शिरस्त्राणं धृत्वा शिरसि शोभनम् ।
कवचेन सुशोभाढ्याः शतकोटिसुशोभिताः ॥ ३३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रथेन हययुग्मेन मणिश्चनशोभिना । ययुस्ते राजसन्देशान्नृवरा युद्धदुर्मदाः ॥ ३४ ॥
केचिन्मतङ्गजैर्मत्तैः केचिद्वाहैः सुशोभनैः । ययुर्नृपगृहं सर्वे राजसन्देशकारकाः ॥
विविक्तस्वर्णकवचशिरस्त्राणसुशोभितः । रुक्माङ्गदोऽपि च निजे रथे तिष्ठन्मनोजवे

शुभाङ्गदोऽनुजस्तस्य महारत्नमयं दधन् ।
कवचं वपुषि श्रेष्ठं निजं प्रायाद्रणोत्सवे ॥ ३७ ॥
राजभ्राता वीरसिंहः सर्वशस्त्रास्त्रकोविदः ।
ययौ नृपाज्ञया तत्र शासनं भूमिपस्य हि ॥३८॥
जामेयस्तस्य राज्ञोऽपि बलमित्र इति स्मृतः ।
सन्नद्धः कवची खड्गी जगाम नृपमन्दिरम् ॥ ३९ ॥
सेनानी रिपुवारोऽपि सेनां तां चतुरङ्गिणीम् ।
सज्जां विधाय भूपाय न्यवेदयदथो महान् ॥ ४० ॥
अथ राजा वीरमणिः सर्वशस्त्रास्त्रपूरितम् ।
मणि सृष्टोच्चचक्रोच्चमारोहत्स्यन्दनोत्तमम् ॥ ४१ ॥

ततो वीरार्णवे शङ्खनिनादश्च समन्ततः । श्रूयते कातरान्वीरान्प्रेरयन्निव सङ्गरे ॥
भेर्यः समन्ततो जघ्नुः शुभवादकवादिताः । अनीकान्यत्र तस्यासन्सङ्ग्रामायप्रतस्थुषः
सर्वे कृतस्वस्त्ययनाः सर्वाभरणभूषिताः । सर्वशस्त्रास्त्रसम्पूर्णा ययुः समरमण्डलम्
भेरीशङ्खनिनादेन पूरिताश्च नगागुहाः । आकारितुं गतःकिंनु तद्रवः स्वर्गसंस्थितान्
तस्मिन्कोलाहले वृत्ते राजावीरमणिर्महान् । रणोत्साहेनसंयुक्तो ययौ प्रधनमण्डलम्

आगत्य संस्थितस्तावद्रथपत्तिसमाकुलम् ।
समुद्र इव तत्स्थानात्प्लावितुं पुरुषानयात् ॥ ४७ ॥

तदागतं बलं दृष्ट्वा रथिभिः शस्त्रकोविदैः । कोलाहलीकृतं सर्वमुवाच सुमतिं नृपः ॥

शत्रुघ्न उवाच ।

समागतो वीरमणिर्मम वाजिधरो बली । योद्धुंमां महता भूयः सैन्येन चतुरङ्गिणा
कथं युद्धं प्रकर्तव्यं केयोत्स्यन्ति बलोत्कटाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तान्सर्वान्दिश मे वीरान्यथा स्याज्जय ईप्सितः ॥ ५० ॥

सुमतिरुवाच ।

स्वामिन्नसौ महाराजो महासैन्यपरीवृतः । समागतः सयुद्धार्थं शिवभक्तिसमन्वितः

साम्प्रतं युद्ध्यतां वीरः पुष्कलः परमास्त्रवित् ।

अन्येऽपि नीलरत्नाद्या योद्धारो युद्धकोविदाः ॥ ५२ ॥

शिवेन सह योद्धव्यं राज्ञा वा भवताऽनघ ! । द्वन्द्वयुद्धेन जेतव्यो महाबलपराक्रमः ॥

अनेन विधिना राजञ्जयस्तेऽत्र भविष्यति । पश्चाद्यद्रोचते स्वामिंस्तत्कुरुष्व महामते

शेष उवाच ।

इति वाक्यं समाकर्ण्य शत्रुघ्नः परवीरहा । सुभटानादिदेशाथ युद्धाय कृतनिश्चयः ॥

सर्वैः ससैन्यैर्युद्धार्थं राजभिः शस्त्रकोविदैः। यथास्यान्मे जयःक्षिप्रं यतितव्यं तथापुनः

जयार्थं राघवस्यैव श्रुत्वा ते रणकोविदाः। महोत्साहेन संयुक्ता ययुर्योद्धुं तु सैनिकैः

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे वीरमणिना सह युद्धनिश्चयो नाम चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥

---

## एकचत्वारिंशत्तमोऽध्यायः

### रुक्माङ्गदस्य पुष्कलेन सह युद्धम् ।

शेष उवाच ।

युद्धाय ते सुसन्नद्धाः शत्रुघ्नस्य महाबलाः । ययुर्वीरमणेः सैन्यमध्ये शौर्यसमन्विताः ॥

शरान्विमुञ्चमानास्ते भिन्दन्तः सैनिकान्बहून् ।

व्यदृश्यन्त रणान्तःस्थाः शरासनधरा नराः ॥ २ ॥

अनेके निहतास्तत्र गजा मणिमया रथाः । भग्ना वाहसमेताश्च दृश्यन्ते रणमण्डले ॥३॥

विहितं कदनं तेषां श्रुत्वा रुक्माङ्गदो बली ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रथे मणिमये तिष्ठन्ययौ योद्धुं स सैनिकान् ॥ ४ ॥
शरासने शरान्धास्यन्निषुधी अक्षयौ दधत् ।
शोणनेत्रान्तरो भीमो महाकोपसमन्वितः ॥ ५ ॥
अनेकबाणसंविग्नान्कुर्वञ्छूरान्सहस्रशः । हाहाकारं कारयंस्तद्ययौ रुक्माङ्गदो बली ॥
राजपुत्रः स्वसदृशं बलेन यशसा श्रिया । आह्वयामास शत्रुघ्नं भारतीपुष्कलं बली ॥

रुक्माङ्गद उवाच ।

आगच्छ वीरकर्मा त्वं महाबलपराक्रम । मया योद्धुं तु बलिना राजपुत्रेण भास्वता
किमन्यैस्त्रासितैर्वीरनिहतैः कोटिभिर्नरैः । मया समं महायुद्धं विधाय जयमाप्नुहि ॥
इत्युक्तवन्तं तरसा प्रहसन्पुष्कलो बली । जघान विपुले मध्ये वक्षसस्तीक्ष्णपर्वभिः ॥
तदमृष्यन्राजपुत्रो महाचापे दधच्छरान् । जघान दशभिर्वीरं पुष्कलं वक्षसोऽन्तरे ॥
उभौ समरसंरब्धावुभावपि जयैषिणौ । रेजाते समरे तौहि कुमारतारकौ यथा ॥
बाणान्धनुषि सन्धाय दशसङ्ख्यान्महाशितान् ।
अकरोत्पुष्कलो वीरो विरथं राजपुत्रकम् ॥ १३ ॥
चतुर्भिश्चतुरो वाहान्द्वाभ्यांसूतमपातयत् । एकेन ध्वजमेतस्य द्वाभ्यां स्यन्दनरक्षकौ ॥
न केन हृदि विव्याध राजपुत्रस्य वेगवान् । तदद्भुतं कर्म दृष्ट्वा सर्वे वीराःप्रतोषिताः
सच्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
अत्यन्तं कोपमापन्नः स्यन्दनं परमाविशत् ॥ १६ ॥
स स्थित्वा स्यन्दनवरे हयरत्नेनभूषिते । शरासनं महद्धृत्वा सुदृढं गुणपूरितम् ॥१७॥
उवाच पुष्कलं वीरं रुक्माङ्गद इदं वचः । महापराक्रमं कृत्वा क यास्यसि परन्तप ! ॥
पश्य मेऽद्य पराक्रान्तिं यद्बलेन बिनिर्मिताम् ।
यत्नात्तिष्ठस्व भो वीर ! नयामि त्वद्रथं नभः ॥ १९ ॥
इत्युक्त्वा शरमत्युग्रं दधार स्वशरासने । मन्त्रयित्वा ततश्चास्त्रं भ्रामकंपौष्कलेरथे ॥
मुमोच निशितं वाणं स्वर्णपुङ्खैकशोभितम् ।
तेन बाणेन नीतोऽस्य रथो योजनमात्रकम् ॥ २१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धृतः कृच्छ्रेण सूतेन रथो बभ्राम भूतले ।
कृच्छ्रेण प्राप्य स्वस्थानं पुष्कलः परमास्त्रवित् ॥ २२ ॥

जगाद वचनं तं वै बाणं बिभ्रच्छरासने । स्वर्गं प्राप्नुहि वीराग्र्य ! सर्वदेवैश्च सेवितम्

त्वादृशाः पृथिवीयोग्या न भवन्ति नृपोत्तम ! ।
शतक्रतुसभा योग्यास्तद्गच्छ त्वं सुरालयम् ॥ २४ ॥
इत्युक्त्वा स मुमोचास्त्रमाकाशप्रापकं महत् ।
तेन बाणेन स रथो ययौ खमनुलोमतः ॥ २५ ॥

सर्वांल्लोकानतिक्रामन्ययौ सूर्यस्य मण्डलम् । तज्ज्वालया रथो दग्धो हयसूतसमन्वितः
तत्करैर्दग्धभूयिष्ठकलेवरः सुदुःखितः । पपात चन्द्रचूडं स धृत्वा हृद्यसुखार्दनम् ॥
भूमौ निपतितस्तत्र करदग्धकलेवरः । अत्यन्तं दुःखमापन्नो मुमूर्च्छ रणमण्डले ॥
तस्मिन्निपतिते भूमौ मूर्च्छिते राजपुत्रके । हाहाकारो महानासीत्तत्र सङ्ग्राममूर्धनि

वैरिणो जयलक्ष्मीं ते प्रापुः पुष्कलमुख्यकाः
पलायनपरा जाता वैरिणो हयरक्षकाः ॥ ३० ॥
तदा पुत्रस्य वै मूर्च्छां दृष्ट्वा वीरमणिर्नृपः ।
प्रायात्समरमध्यस्थं पुष्कलं कोपपूरितः ॥ ३१ ॥

तदा भूमिश्चचालेयं सपर्वतवनोत्तमाः । शूरा वै हर्षमापन्नाः कातरा भयपीडिताः ॥
चापं महद्दधानः सद्इषुधी अक्षयावपि । रोषान्निःश्वासमामुञ्चन्नाह्वयामास वैरिणम् ॥

इति श्रीपाद्मे महापुराणेपञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
रुक्माङ्गदपराजयपुष्कलविजयो नामैकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## द्विचत्वारिंशोऽध्यायः

### पुष्कलेन वीरमणिना सह तुमुलयुद्धकरणम् ।

शेष उवाच ।

आह्वयन्तं महासैन्यवारिधौ पुष्कलं नृपम् । समालक्ष्य कपीन्द्रोऽपि हनूमांस्तमधावत

लाङ्गूलमुद्यम्य विशालदेहं सरावमातत्यपयोदघोषम् ।
रणस्थितान्वीरवरान्कपीन्द्रो जगाम तं वीरमणिं नृपेन्द्रम् ॥ २ ॥

आयान्तं तं हनूमन्तं वीक्ष्य पुष्कल उद्भटः ।
विलोकयामास दृशा वैरिक्रोधसुशोणया ॥ ३ ॥

जगाद तं हनूमन्तं पुष्कलः परमास्त्रवित् । मेघगम्भीरया वाचा नादयन्रणमण्डलम् ॥

पुष्कल उवाच ।

कथं त्वं समरे योद्धुमागतोऽसि महाकपे! । कियद्बलं स्वल्पमेतद्राज्ञो वीरमणेर्महत् ॥

यत्र त्रिजगती सर्वा संमुखे समुपागता ।
तत्र त्वं लीलया योद्धुं यातुमिच्छसि वा न वा ॥ ६ ॥

कोऽयं राजा वीरमणिः कियद्बलमथाल्पकम् । अत्रागमनमत्युग्रं तव वीर न भाव्यते

रघुनाथकृपापाङ्गादहं निस्तीर्य दुस्तरम् । क्षणान्निर्यामि कीशेन्द्र माचिन्तं कुरु सङ्गरे

त्वया राक्षसपाथोधिस्तीर्णो रामकृपावशात् ।
तथा रामं सुसंस्मृत्य निस्तरिष्यामि दुस्तरम् ॥ ६ ॥

ये केचिद्दुस्तरं प्राप्य रघुनाथं स्मरन्ति च ।
तेषां दुःखोदधिः शुष्को भविष्यति न संशयः ॥ १० ॥

तस्माद्व्रज महावीर शत्रुघ्नसविधेबलिन् । एष आयामि निर्जित्य भूपं वीरमणिं क्षणात्

शेष उवाच ।

इति धीरां समाकर्ण्य वाणीं पुष्कलभाषिताम् । जगाद वचनं भूयः पुष्कलं परवीरहा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हनुमानुवाच ।

पुत्र ! मा साहसं कार्षीर्भूपं वीरमणिं प्रति । एष दाता शरण्यश्च बलशौर्यसमन्वितः

त्वं बालः स्थविरो भूपोऽखिलशस्त्रास्त्रवित्तमः ।

अनेके विजिताः सङ्ख्ये वीराः शौर्यसुशोभिनः ॥ १४ ॥

जानीहि पार्श्वे तस्य त्वं रक्षितारं सदाशिवम् ।

भक्त्या वशीकृतं स्थाणुं सोमं चैतत्पुरि स्थितम् ॥ १५ ॥

तस्मादहमनेनैव योत्स्ये भूपेन पुष्कल ।

अन्यान्वीरान्विजित्य त्वं कीर्तिमाप्नुहि पुष्कलाम् ॥१६॥

पुष्कल उवाच ।

शिवो भक्त्या वशीकृत्य स्वपुरे स्थापितोऽमुना । परमस्याशु हृदये न तिष्ठति महेश्वरः

सदाशिवो यमाराध्य परमं स्थानमागतः ।

स रामो मन्मनस्त्यक्त्वा न क्वापि परिगच्छति ॥ १८ ॥

यत्र रामस्तत्र विश्वं सर्वं स्थास्नु चरिष्णु च ।

तस्मादहं जयिष्यामि रणे वीरमणिं नृपम् ॥ १९ ॥

व्रज त्वं समरे योद्धुमन्यान्मानिवरान्नृपान् ।

वीरसिंहमुखान्कीश ! मच्चिन्तां मा कुरु प्रभो ! ॥२०॥

वाचमित्थं समाकर्ण्य हनूमान्धीरसेविताम् । जगाम समरे योद्धुं वीरसिंहं नृपानुजम्

लक्ष्मीनिधिः सुतेनास्य शुभाङ्गदसुसंज्ञिना । द्वैरथेन प्रयुयुधे महाशस्त्रास्त्रवेदिना ॥

बलमित्रेण सुमदः स्वप्रतापबलोर्जितः । योद्धुं सशस्त्रः सङ्ग्रामं विचचार नृपात्मजः

आह्वयन्तं नृपं दृष्ट्वा द्वैरथे युद्धकोविदः । पुष्कलो रत्नखचिते रथे तिष्ठन्ययौ हितम्

राजा तमागतं दृष्ट्वा पुष्कलं युद्धकोविदम् ।

उवाच निर्भिया वाण्या रणमध्ये सुभाषितः ॥ २५ ॥

वीरमणिरुवाच ।

बालमायाहि मां क्रुद्धं सङ्ग्रामे चण्डकोपनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गच्छ प्राणपरीप्सायै मा युद्धयस्व मया सह ॥ २६ ॥

त्वादृशान्बालकान्भूपा मादृशाः कृपयन्ति हि । प्रहरन्ति न चैतान्वै तस्माद्गच्छ रणाद्बहिः
यावत्त्वं न मयादृष्टश्चक्षुर्भ्यां तावदुन्मनाः । साम्प्रतं त्वां प्रहर्तुं न मनःसमभिकाङ्क्षति

यत्त्वया मत्सुतो बाणैर्भिन्नो मूर्च्छीकृतः पुनः ।
सर्वं मया क्षान्तमद्य तव बालधियो महत् ॥
इति वाक्यं समाकर्ण्य पुष्कलो निजगाद तम् ॥ २६ ॥

पुष्कल उवाच ।

बालोऽहं त्वंमहावृद्धः सर्वशस्त्रास्त्रकोविदः । क्षत्रियाणां मतं चैव ये बलाधिक्यसंयुताः
त एव वृद्धा भूपाग्र्य ! न वयो वृद्धतां गताः । मया ते मूर्च्छितः पुत्रः सशौर्यबलदर्पितः
इदानीं त्वामहं शस्त्रैः पातयिष्यामि सङ्गरे । तस्मात्त्वं यत्नतस्तिष्ठ राजन्संग्राममूर्धनि
रामभक्तं न मां कश्चिज्जयतीन्द्रपदे स्थितः । इत्थं भाषितमाश्रुत्य पुष्कलस्य नृपाग्रणीः

जहास बालं संवीक्ष्य कोपं च व्यदधात्पुनः ।

तं वै कुपितमालक्ष्य भरतात्मज उन्मदः । जघान शरविंशत्या राजानं हृदि तीक्ष्णया

राज तानागतान्दृष्ट्वा बाणांस्तेन विमोचितान् ॥ ३५ ॥

चिच्छेद परमक्रुद्धः शरैस्तीक्ष्णैरनेकधा । तद्बाणच्छेदनं दृष्ट्वा भारतिः परवीरहा ॥
चुकोप हृदयेऽत्यन्तं राजानं च त्रिभिः शरैः । विव्याध भाले भूपालपुत्रः पुष्कलसंज्ञकः
तत्र लग्ना विरेजुस्ते त्रिकूटशिखराणिकिम् । तैर्बाणैर्व्यथितोराजा जघान नवभिः शरैः
हृदये पुष्कलं वीरं महाकोपसमन्वितः । तैर्वत्सदन्तैर्बह्वस्रं पीतरामानुजाङ्गजम् ॥३६॥

सर्पा आशीविषा यद्वत्क्रुद्धास्तद्वपुषि स्थिताः ।
परमं कोपमापन्नः पुष्कलो भूमिपं पुनः ॥ ४० ॥

बाणानां शतकेनाशु बिभेद शितपर्वणम् । तैर्बाणैः कवचं भिन्नं किरीटः सशिरस्त्रकः
रथो धनुर्महत्सज्यं छिन्नं कोपपरिप्लवात् । क्षतजेन परिप्लुष्टो बाणभिन्नकलेवरः ॥
अन्यस्यन्दनमारुह्य जगाम भरतात्मजम् । धन्योऽसि वीर रामस्य चरणाब्जमधुव्रत !
महत्कृतं कर्म तेऽद्य यदहं विरथीकृतः । प्राणान्रक्षस्व भो वीर ! साम्प्रतं मयियुद्ध्यति



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुलभा न तव प्राणाः कालरूपे मयि स्थिते ।
इत्युक्त्वा व्यहनद्बाणैरसङ्ख्यैः शस्त्रकोविदः ॥ ४५ ॥
भूमौ दिशि च तद्बाणान्नान्यद् दृश्येत तत्र ह ।
अनेके गजसाहस्रा भिन्ना अश्वाः समन्ततः ॥ ४६ ॥
रथा रथियुतास्तेन च्छिन्ना भिन्ना द्विधाकृताः ।
शोणितौघा सरित्तत्र प्रसुस्राव रणाङ्गणे ॥ ४७ ॥
यत्रोन्मदा हि मातङ्गा दृश्यन्ते शैलशृङ्गवत् ।
केशाः शैवाललक्ष्यास्ते मुहुः प्राणिशिरः स्थिताः ॥ ४८ ॥
अनेके पाणयश्छिन्ना वीराणां मुद्रिकाश्रियः ।
दृश्यन्ते अहिवत्तत्र चन्दनादिकरूषिताः ॥ ४९ ॥

शरांसि,च भटाग्र्याणां कच्छपाभांवहन्ति वै । मांसानिपङ्कायत्रासन्वीराणांमहतांततः
एवं व्यतिकरे वृत्ते योगिन्यः शतशो रणे । पपुः पात्रेण रुधिरं प्राणिनां रणपातिनाम्

मांसानि बुभुजुस्ता वै हर्षकौतुकसंयुताः ।
पीत्वा तु शोणितं तत्र भक्षित्वा मांसमुन्मदाः ॥ ५२ ॥

ननृतुर्जहसुः प्रोच्चैरुज्जगुः प्रधनाङ्गणे । पिशाचास्तत्र समरे प्राणिनां मस्तकानि वै ॥
धृत्वा कराभ्यां मत्ताङ्गास्तालवद्वादनोद्यताः । शिवास्तत्र महामांसं पतितानां रणाङ्गणे
भक्षित्वा व्यनदन्मत्ताः कातराणां भयप्रदाः । कातरास्तत्र सन्त्रस्ता गताः कुञ्जरकोटरे

भक्षिता योगिनीभिस्ते पापिनां क्वापि न स्थितिः ।
एतत्कदनमालक्ष्य स्वसैन्यस्य रथाग्रणीः ॥ ५६ ॥
पुष्कलोऽपि चकारात्र कदनं रणमण्डले ।
भिद्यन्ते गजशीर्षाणि पतन्ति मौक्तिकानि तु ॥ ५७ ॥

दृश्यते लौभभिः पूर्णा ताम्रपर्णीवतन्नदी । पुष्कलप्रहिता बाणा नृणामङ्गेषु सङ्गताः

कुर्वन्ति प्राणविच्छेदं वीराणामपि सर्वतः ।
सर्वे रुधिरसिक्ताङ्गाः सर्वे च्छिन्ननिजाङ्गकाः ॥ ५९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृश्यन्ते किंशुका यद्वत्सुभटाः प्रधनाङ्गणे । एतस्मिन्समये क्रुद्धःसमाभाष्य महीपतिम्
जघान बहुबाणैस्तं रोषपूरपरिप्लुतः । तद्बाणवेधभिन्नाङ्गो विशीर्णकवचो नृपः ॥
महाबलं तं मन्वानः प्राहरच्छरकोटिभिः । तैर्बाणैः कवचान्मुक्तं सुस्राव बहुशोणितम्
वपुर्बभूव रुचिरं शरपञ्जरगोचरम् । शरपञ्जरमध्यस्थो विह्वलीकृतमानसः ॥ ६३ ॥

शरान्नेतुं च सन्धातुं न क्षमः स च भारतिः ।
रामं स्मृत्वा धनुर्धृत्वा करे सज्जं महद्दृढम् ॥ ६४ ॥

मुमोच बाणान्निशितान्वैरिवृन्दनिवारणान् । तैर्बाणैः शरजालं तद्विधूय मुनिपुङ्गव !

शङ्खं प्रध्माय समरे जगाद गतभीर्नृपम् ॥६६॥

पुष्कल उवाच ।

त्वया कृतं महत्कर्म यन्मां बाणस्य पञ्जरे । गोचरं कृतवान्वीरं वीरतापनमुद्भटम् ॥

वृद्धत्वान्मम मान्योऽसि साम्प्रतं रणमण्डले ।
पश्य मेऽद्य पराक्रान्ति राजन्वीरमणे महत् ॥ ६८ ॥

बाणत्रयेण भोवीर मूर्च्छितं करवै नहि । तर्हि प्रतिज्ञां शृणु वै सर्ववीरविमोहिनीम्

गङ्गां प्राप्यापि यो वै तां निन्दित्वा पापहारिणीम् ।
न मज्जति महापापो महामूढविचेष्टितः ॥ ७० ॥

तस्य पापं ममैवास्तु चेन्नत्वां रणमण्डले । पातये मूर्च्छितं वीर सन्नद्धो भव भूपते

इति वाक्यं समाकर्ण्य पुष्कलस्य नृपोत्तमः ।
चुकोप भृशमुद्विग्नः सन्दधे निशिताञ्छरान् ॥ ७२ ॥

ते शराहृदयं भित्त्वा गतास्ते भारतेर्महत् । पेतुः क्षितावधो यद्वद्रामभक्तिपराङ्मुखाः ॥
ततः शरं मुमोचास्मै निशितं वह्निसप्रभम् । लक्षीकृत्य महद्वक्षः कपाटतटविस्तृतम् ॥

स बाणो भूमिपतिना द्विधा च्छिन्नः शरेण हि ।
प्रपात रथमध्ये स रविमण्डवज्ज्वलन् ॥ ७५ ॥

अपरं बाणमाधत्त मातृभक्तिभवं ततः । निधाय पुण्यं सोऽप्येषचिच्छेद महता पुनः

तदा खिन्नः स हृदये किंकर्तव्यमिति स्मरन् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रामं हृदि निजार्तिघ्नं मुमोच परमास्त्रवित् ॥ ७७ ॥
स बाणस्तस्य हृदये लग्न आशीविषोपमः । मूर्च्छामगमयत्तं वै ज्वलन्सूर्यसमप्रभः ॥
ततो हाहाकृतं सर्वं पलायनपरायणम् । राज्ञि संमूर्च्छिते जाते पुष्कलो जयमाप्तवान् ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे वीरमणेः पराभवो नाम द्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥

---

## त्रिचत्वारिंशोऽध्यायः

### वीरभद्रेण युद्धे पुष्कलस्य वधकरणम् ।

शेष उवाच ।

हनूमान्वीरसिंहं तु समागत्याब्रवीद्वचः ।
तिष्ठ यासि कुतो वीर! जेष्यामि त्वां क्षणादिह ॥ १ ॥
एवमुक्तं समाकर्ण्य प्लवगस्य वचो महत् । कोपपूरपरिप्लुष्टः कार्मुकं जलदस्वनम् ॥
विनद्य घोरान्निशितान्बाणान्मुञ्चन्बभौ रणे । आषाढे जलदस्येव धारासारै मनोहरः
तान्दृष्ट्वा निशितान्बाणान्स्वदेहे सुविलग्नकान् ।
चुकोप हृदयेऽत्यन्तं हनूमानञ्जनासुतः ॥ ४ ॥
मुष्टिना ताडयामास हृदये वज्रसारिणा । स मुष्टिना हतोः वीरः पपात धरणीतले ॥
मूर्च्छितं तं समालोक्य पितृव्यं सशुभाङ्गदः ।
रुक्माङ्गदोऽपि संमूर्च्छां त्यक्त्वाऽगाद्रणमण्डलम् ॥ ६ ॥
बाणान्समभिवर्षन्तौ मेघाविव महास्वनौ । कुर्वन्तौ कदनं घोरं प्लवगं प्रतिजग्मतुः ॥
तौ दृष्ट्वा समरे वीरौ समायातौ कपीश्वरः ।
लाङ्गूलेन च संवेष्ट्य सरथौ चापधारकौ ॥ ८ ॥
स्फोटयामास भूदेशे तत्क्षणान्मूर्च्छितावुभौ । निश्चेष्टौ समभूतान्तैरुधिरारक्तदेहकौ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बलमित्रश्चिरं युद्धं विधाय सुमदेन हि । मूर्च्छामगमयत्तं वै बाणैः सुशितपर्वभिः ॥
पुष्कलेन क्षणान्नीतो मूर्च्छां चैतन्यवर्जिताम् ।
जयमाप्तं तु कटकं शत्रुघ्नस्य भटार्दनम् ॥ ११ ॥
एतस्मिन्समये साम्बः स्यन्दनं वरमास्थितः ।
विस्फारयन्धनुर्दिव्यमुपाधावद्भटानिमान् ॥ १२ ॥
जटाजूटान्तरगतां चन्द्ररेखां वहन्महान् । सर्पाभूषां मनः स्पर्शां दधदाजगवं धनुः ॥
मूर्च्छितान्स्वजनान्दृष्ट्वा भक्तार्तिघ्नो महेश्वरः ।
योद्धुं प्रायान्महासैन्यैः शत्रुघ्नस्य भटानिमान् ॥ १४ ॥
सगणः सपरीवारः कम्पयन्पृथिवीतलम् ।
भक्तरक्षार्थमागच्छंस्त्रिपुरं तु पुरा यथा ॥ १५ ॥
कोपाच्छोणतरे नेत्रे वहन्प्रलयकारकः । पश्यन्वीरान्बहुमतीन्पिनाकी देववन्दितः ॥
तमागतं महेशानं वीक्ष्य रामानुजो बली । जगाम समरे योद्धुं सर्वदेवशिरोमणिम् ॥
अथागतं तु शत्रुघ्नं रुद्रो वीक्ष्य पिनाकधृत् । उवाच परमापन्नः कोपं सगुणचापधृत्
पुष्कलेन महत्कर्म कृतं रामाङ्घ्रिसेविना । मद्भक्तं यो रणे हत्वा गतः समरमण्डलम् ॥
अद्य क्वास्ति परो वीरः पुष्कलः परमास्त्रवित् ।
तं हत्वा सुखमाप्स्यामि समरे भक्तपीडनम् ॥ २० ॥

शेष उवाच ।

इत्युक्त्वा वीरभद्रं स प्रेषयामास पुष्कलम् ।
याहि त्वं समरे योद्धुं पुष्कलं सेवकार्दनम् ॥ २१ ॥
नन्दिनं प्रेषयामास हनूमन्तं महाबलम् । कुशध्वजं प्रचण्डं तु भृङ्गिणं च सुबाहुकम् ॥
सुमदं चण्डनामानं गणं स्वीयं समादिशत् ।
पुष्कलस्तु समायान्तं वीरभद्रं महागणम् ॥ २३ ॥
महारुद्रस्य संवीक्ष्य योद्धुंप्रायान्महामनाः । पुष्कलः पञ्चभिर्बाणैस्ताडयामास संयुगे
तैर्बाणैः क्षतगात्रस्तु त्रिशूलं स समादिशत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स त्रिशूलं क्षणाच्छित्त्वा व्यगर्जत महाबलः ॥ २५ ॥
छिन्नं स्वीयं त्रिशूलं वै वीक्ष्य रुद्रानुगो बली ।
खट्वाङ्गेन जघानाशु मस्तके भारति द्विज ! ॥ २६ ॥
खट्वाङ्गाभिहतः सोऽथ मुमूर्च्छ क्षणमुद्भटः ।
विहाय मूर्च्छां सद्वीरः पुष्कलः परमास्त्रवित् ॥ २७ ॥
शरैश्चिच्छेद खट्वाङ्गं करस्थं तस्य तत्क्षणात् ।
वीरभद्रः स्वके च्छिन्ने खट्वाङ्गे कर संस्थिते ॥ २८ ॥
परमक्रोधमापन्नो बभञ्ज रथिनो रथम् ।
भङ्क्त्वा रथं तु वीरस्य पदातिं च विधाय सः ॥ २९ ॥
बाहुयुद्धेन युयुधे पुष्कलेन महात्मना । स पुष्कलो रथं त्यक्त्वा चूर्णितं तेन वेगतः
मुष्टिना ताडयामास वीरभद्रं महाबलः । अन्योन्यं मुष्टिभिर्घ्नन्तावूरुभिर्जानुभिस्तथा
परस्परवधोद्युक्तौ परस्परजयैषिणौ । एवं चतुर्दिनमभूद्रात्रिंदिवमपीशयोः ॥ ३२ ॥
न कोऽपि तत्र हीयेत न जीयेत महाबलः । पञ्चमे तु दिने वृत्ते वीरभद्रो महाबलः ॥
गृहीत्वा नभ उड्डीनो महावीरं तु पुष्कलम् । तत्र युद्धं तयोरासीद्देवासुरविमोहनम् ॥
मुष्टिना चरणाघातैर्बाहुभिः सुखुरैर्महत् । तदात्यन्तं प्रकुपितः पुष्कलो वीरभद्रकम्
गृहीत्वा कण्ठदेशे तु ताडयामास भूतले ! तत्प्रहारेण व्यथितो वीरभद्रो महाबलः ॥
गृहीत्वा पुष्कलं पादे जघानास्फालयन्मुहुः ।
ताडयित्वा महीदेशे पुष्कलं सुमहाबलः ॥ ३७ ॥
त्रिशूलेन चकर्ताशु शिरोज्वलितकुण्डलम् । जगर्ज पुष्कलं हत्वा वीरभद्रो महाबलः ॥
गर्जते नशार्वेण प्रापितास्त्राः समुद्भटाः । हाहाकारो महानासीत्पुष्कले पतिते रणे ॥
त्रासं प्रापुर्जनाः सर्वेरणमध्ये सुकोविदाः । ते शशंसुश्च शत्रुघ्नं पुष्कलं पतितं रणे ॥
निहतं वीरभद्रेण महेश्वरगणेन वै । इत्याश्रुत्य महावीरः पुष्कलस्य वधं तदा ॥ ४१ ॥
दुःखं प्राप्तो रणेऽत्यन्तं कम्पमानः शुचा महान् ।
तं दुःखितं च शत्रुघ्नं ज्ञात्वा रुद्रोऽब्रवीद्वचः ॥ ४२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शत्रुघ्नं समरे वीरं शोचन्तं पुष्कले हते। रे शत्रुघ्न रणे शोकं मा कृथाः सुमहाबल! ॥

वीराणां रणमध्ये तु पतनं कीर्तये स्मृतम्।

धन्यो वीरः पुष्कलाख्यो यश्च वै दिनपञ्चकम् ॥ ४४ ॥

युयुधे वीरभद्रेण महाप्रलयकारिणा । येन क्षणाद्विनिहतो दक्षो मदपमानकृत् ॥

क्षणाद्विनिहता येन दैत्यास्त्रिपुरसैनिकाः।

तस्माद्युद्धयस्व राजेन्द्र! शोकं त्यक्त्वा महाबल! ॥ ४६ ॥

यत्नात्तिष्ठाद्य वीराग्र्य मयी योद्धरि संस्थिते।

शोकं सन्त्यज्य शत्रुघ्नो वीरश्चुक्रोध शङ्करम् ॥ ४७ ॥

आत्तसज्जधनुर्बाणैः प्रचच्छाद महेश्वरम्। ते बाणाः सुरशीर्षण्यवपुषं क्षतविक्षतम् ॥

अकुर्वत महच्चित्रं भक्तरक्षार्थमागतम्।

ते बाणा शङ्करस्यापि बाणा नभसि संस्थिताः ॥ ४६ ॥

व्याप्यैतत्सकलं विश्वं चित्रकारिमुनेरपि। तद्बाणयोर्युद्धबलं वीक्ष्य सर्वत्र मेनिरे ॥

प्रलयं लोकसंहारकारकं सर्वमोहकम्। आकाशे तु विमानानि संश्रित्य स्वपुरस्थिताः

विलोकयितुमागत्य प्रशंसन्ति तयोर्भृशम्। अयं लोकत्रयस्यास्य प्रलयोत्पत्तिकारकः

असावपि महाराज! रामचन्द्रस्य चानुजः।

किमिदं भविता को वा जेष्यति क्षितिमण्डले ॥ ५३ ॥

पराजयं वा को वीरः प्राप्स्यते रणमूर्धनि। एवमेकादशाहानि वृत्तं युद्धं परस्परम् ॥

द्वादशे दिवसे प्राप्ते मुमोचास्त्रं नराधिपः। ब्रह्मसंज्ञं महादेवं हन्तुं क्रोधसमन्वितः ॥

स विज्ञाय महास्त्रं तन्मुक्तं शत्रुघ्नवैरिणा। हसन्नप्यपिबत्तेन मुक्तं ब्रह्मशिरो महत् ॥

अत्यन्तं विस्मयं प्राप्य किंकर्तव्यमतः परम्।

एवं विचारयुक्तस्य हृदये ज्वलनोपमम् ॥ ५७ ॥

शरं वै निचखानाशु देव देव शिरोमणिः। तेन बाणेन शत्रुघ्नो मूर्च्छितो रणमण्डले

हाहाभूतमभूत्सर्वं कटकं भटसेवितम्। वीराःसर्वे रुद्रगणैः पातिताः पृथिवीतले ॥

सुबाहुदमनप्रेष्ठाः स्वबाहुबलदर्पिताः। पतितं मूर्च्छया वीक्ष्य शत्रुघ्नशरपीडितम् ॥६०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुष्कलं तु रथे स्थाप्य सेवकैः परिरक्षितुम् । हनूमानागतो योद्धुं शिवं संहारकारम्
श्रीरामस्मरणाद्योधान्स्वीयान्विप्र प्रहर्षितान् ।
प्रकुर्वन्नोषितस्तीव्रं लाङ्गूलं च प्रकम्पयन् ॥ ६२ ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे
रामाश्वमेधे पुष्कलशत्रुघ्नपराजयो नाम त्रिचत्वारिंशत्तमोऽध्यायः ॥ ४३ ॥

————

## चतुश्चत्वारिंशोऽध्यायः

### शिवेन सह हनुमतो युद्धम् ।

शेष उवाच ।

आगत्य सविधे रुद्रं समराङ्गणमूर्धनि । जगाद हनुमान्वीरः सञ्जिहीर्षुः सुराधिपम् ॥

हनूमानुवाच ।

त्वं यदाचरसे रुद्र ! धर्मस्य प्रतिकूलनम् ।
तस्मात्त्वां शास्तुमिच्छामि रामभक्तवधोद्यतम् ॥ २ ॥
मया पुरा श्रुतं देव ! ऋषिभिर्बहुधोदितम् । रघुनाथपदस्मारी नित्यं रुद्रः पिनाकभृत् ॥
तत्सर्वं तु मृषा जातं शत्रुघ्नं प्रतियुध्यतः ।
पुष्कलो मे हतः शूरः शत्रुघ्नोऽपि विमूर्च्छितः ॥ ४ ॥
तस्मात्त्वां पातयाम्यद्य त्रैलोक्यप्रलयोद्यतम् ।
यत्नात्तिष्ठस्व भोःशर्व ! रामभक्तिपराङ्मुख ! ॥ ५ ॥

शेष उवाच ।

इत्युक्तवंतं प्लवगं प्रोवाच स महेश्वरः । धन्योऽसि वीरवर्यस्त्वं भवान्वदति नो मृषा
मत्स्वामी रामचन्द्रोऽयं सुरासुरनमस्कृतः । तदश्वमानयामास शत्रुघ्नः परवीरहा ॥
तद्रक्षार्थं समायातस्तद्भक्त्या तु वशीकृतः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथा कथञ्चिद्भक्तोऽसौ रक्ष्यः स्वात्मा इति स्थितिः ॥ ८ ॥
रघुनाथः कृपां कृत्वा विलोकयतु निस्त्रपम् ।
मां स्वभक्तं सुदुःखेन किञ्चित्कोपं दधन्महान् ॥ ९ ॥
एवं वदति चण्डीशे हनूमान्कुपितो भृशम् । शिलामादाय महतीं ताडयामास तद्रथम्
शिलया ताडितस्तस्य रथः शकलतां गतः । ससूतः सहयः केतुपताकाभिः समन्वितः
नभःस्था देवताः सर्वाः प्रशशंसुः कपीश्वरम् ।
धन्योऽसि प्लवगाधीश ! महात्कर्म त्वया कृतम् ॥ १२ ॥
श्रीशिवं विरथं दृष्ट्वा नन्दी तं समुपाद्रवत् । उवाच श्रीमहादेवं मत्पृष्ठं गम्यतामिति
वृषस्थितं तु भूतेशं हनूमान्कुपितो भृशम् । शिलामुत्पाटयतरसा जघान हृदये तदा ॥
तदाऽऽहतो भूतपतिः शूलं तीक्ष्णं समाददे ।
जाज्वल्यमानं त्रिशिखं वह्निज्वालासमप्रभम् ॥ १५ ॥
आयातं तन्महद्दृष्ट्वा शूलं प्रज्वलनप्रभम् । हस्ते गृहीत्वा तरसा बभञ्ज तिलशः क्षणात्
भग्ने त्रिशूले तरसा कपीन्द्रेण क्षणाच्छिवः ।
शक्तिं करे समाधत्त सर्वलोहविनिर्मिताम् ॥ १७ ॥
सा शक्तिः शिवनिर्मुक्ताहृदये तस्य धीमतः । लग्ना क्षणादभूत्तत्र विक्लवः प्लवगाधिपः
क्षणाच्च तद्व्यथां तीर्त्वा गृहीत्वा वृक्षमुल्बणम् ।
ताडयामास हृदये महाव्यालविभूषिते ॥ १९ ॥
ताडितास्तेन वीरेण फणीन्द्रास्त्रासमागताः ।
इतस्ततस्ते तं मुक्त्वा गताः पातालमुज्जवाः ॥ २० ॥
शिवस्तस्मिन्नगे मुक्ते वक्षसि स्वे निरीक्ष्य च ।
कुपितो व्यदधाद्घोरं मुसलं करयुग्मके ॥ २१ ॥
हतोऽसि गच्छ संग्रामात्पलाय्य प्लवगाधम ! । एष ते प्राणहन्ताहं मुसलेन क्षणादिह
मुसलं वीक्ष्य निर्मुक्तं शिवेन कुपितेन वै । कीशस्तद्वञ्चयामास महावेगाद्धरिं स्मरन् ॥
मुसलं तत्पपाताधः शिवमुक्तं महायसम् । विदार्य पृथिवीं सर्वां जगाम च रसातलम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदा प्रकुपितोऽत्यन्तं हनूमान्नामसेवकः । गृहीत्वा पर्वतंहस्ते ताडयामास वक्षसि ॥
स यावत्पर्वतं छेत्तुं मतिं चक्रे सतीपतिः । तावद्धतः कपीन्द्रेण शालेन बहुशाखिना ॥
तमपि च्छेत्तुमुद्युक्तो यावत्तावच्छिलाहतः । शिलास्ता भेदितुं स्वान्तं चकार मृड उद्यतः
तावद्वृष्टिं चकारायं शिलाभिर्नगपर्वतैः । लाङ्गूलेन च संवेष्ट्य ताडयत्येष भूतपम् ॥

शिलाभिः पर्वतैर्वृक्षैः पुच्छास्फोटेन भूरिशः ।
नन्दी प्राप्तो महात्रासं चन्द्रोऽपि शकलीकृतः ॥ २६ ॥

अत्यन्तं विह्वलो जातो महेशानः प्रकोपनः । क्षणे क्षणे प्रहारेण विह्वलं कुर्वतं भृशम् ॥
जगाद प्लवगाधीशं धन्योऽसि रघुपानुग ! । महत्कर्म कृतं तेऽद्य यस्तेऽहं सुप्रतोषितः
न दानेन यज्ञेन नाल्पेन तपसा ह्यहम् । सुलभोऽस्मि महावेग ! तस्मात्प्रार्थय मे वरम् ॥

शेष उवाच ।

एवं ब्रुवन्तं तं दृष्ट्वा हनूमान्निजगाद तम् । प्रहसन्निर्भिया वाण्या महेशानं सुतोषितम्

हनूमानुवाच ।

रघुनाथ प्रसादेन सर्वं मेऽस्ति महेश्वर । तथापि याचे हि वरं त्वत्तः समरतोषितात् ॥
एष पुष्कलसंज्ञो नः समरे पतितो हतः । तथैव रामावरजः शत्रुघ्नो मूर्च्छितो रणे ॥

अन्ये च वीरा बहवः पतिताः शरविक्षताः ।
मूर्च्छिताः पतिताः केचित्तान्रक्ष स्वगणैः सह ॥ ३६ ॥

यथा चैतान्महाभूता वेतालाश्चपिशाचकाः । न हरन्ति न खादन्ति श्वशृगालादयस्तथा
एतेषां वपुषो भेदो न भवेत्त्वं तथाऽऽचर । यावदिन्द्रगणं जित्वाऽऽनयामि द्रोणपर्वतम्

तत्रस्था ओषधीर्वापि नीत्वा संस्थापितान्भटान् ।
जीवयामि बलात्सर्वांस्तावत्त्वं रक्ष सर्वशः ॥ ३९ ॥

एष गच्छामि तं नेतुं द्रोणं पर्वतसत्तमम् । यस्मिन्वसन्त्योषधयः प्राणिसञ्जीवनक्षमाः
एतद्वचः समाकर्ण्य तथेति निजगाद तम् । याहि शीघ्रंनगं तं तु रक्षामि त्वद्भटान्मृतान्

तच्छ्रुत्वा वाक्यमीशस्य जगाम द्रोणपर्वतम् ।
द्वीपान्सर्वानतिक्रम्य जगाम क्षीरसागरम् ॥ ४२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्र तु स्वगणैश्चायं रक्षतिस्म शिवो महान् । श्मशानं तद्गणैः स्वीयैर्महाबलपराक्रमैः

हनूमान्द्रोणमासाद्य द्रोणं नाम महागिरिम् ।
लाङ्गूले तं निधायाशु प्रतस्थे रणमण्डलम् ॥ ४४ ॥

तं नेतुमुद्यते विप्र चकम्पे स च पर्वतः । कम्पमानं तु तं दृष्ट्वा तत्पाला देवता गणाः ॥
हाहेति कृत्वा प्रोचुस्ते किमिदं भविता गिरौ । को ह्येनं नयते वीरो महाबलपराक्रमः

एवं कृत्वा सुराः सर्वे संहता ददृशुः कपिम् ।
मुञ्चैनमिति तं प्रोच्य जघ्नुः शस्त्रास्त्रकोटिभिः ॥ ४७ ॥
तान्सर्वान्निघ्नतो दृष्ट्वा हनूमान्कुपितो भृशम् ।
जघान तान्क्षणाद्वीरः शक्रः सर्वासुरान्यथा ॥ ४८ ॥
केचित्पदा हतास्तत्र केचित्करविमर्दिताः ।
लाङ्गूलेन हताः केचित्केचिच्छृङ्गेण चाहताः ॥ ४६ ॥
सर्वे ते नाशमापन्नाः क्षणात्कीशेन ताडिताः ।
केचन्निपतिता भूमौ रुधिरेण परिप्लुताः ॥ ५० ॥

केचित्कीशभयात्त्रस्ता जग्मुः शक्रं सुराधिपम् । क्षतेन च परिप्लुष्टा रुधिरक्षतदेहिनः
तान्दृष्ट्वा भयसंविग्नान्रुधिरेण परिप्लुतान् । सुराञ्जगाद विमनाः शक्रः सर्वसुरोत्तमः
कथं यूयं भयत्रस्ताः कथं रुधिरविप्लुताः । केन दैत्येन निहता राक्षसेनाधमेन वा ॥

सर्वं शंसत मे तथ्यं यथा ज्ञात्वा व्रजामि तम् ।
निहत्य बद्ध्वा चायामि युष्मद्घातकमुन्मदम् ॥ ५४ ॥

इति वाक्यं समाकर्ण्य तुरासाहं सुरोत्तमाः । जगदुर्दीनया वाचा सुरासुरनमस्कृतम् ॥

देवा ऊचुः ।

इहागत्य न जानीमः कश्चिद्वानररूपधृत् ।
नेतुं द्रोणं समुद्युक्तो लाङ्गूले वेष्ट्य तं गिरिम् ॥ ५६ ॥

गन्तुं कृतमतिस्तावद्वयं सर्वे सुसंहताः । युद्धं चक्रमसन्नद्धाः सर्वशस्त्रास्त्रवर्षिणः ॥
तेन सर्वे वयं युद्धे निर्जिता बलशालिना । अनेके निहतास्तत्र भूमौ पेतुः सुरोत्तमाः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वयं तु बहुभिः पुण्यैर्जीविता इह चागताः । शोणितेन सुसिक्ताङ्गा क्षतपीडासमन्विताः

एतद्वाक्यं समाकर्ण्य सुराणां स पुरन्दरः ।
आदिदेश सुरान्सर्वान्बलावलसमन्वितान् ॥ ६० ॥
यात महाद्रोणगिरिं कपिं बद्धुं महाबलम् ।
बद्ध्वाऽऽनयत यूयं त्वै सुराणां रणपातकम् ॥ ६१ ॥

इत्याज्ञप्ता ययुस्ते वै द्रोणं पर्वतसत्तमम् । यत्रास्ते बलवान्वीरो हनूमान्कपिसत्तमः ॥
गत्वा ते प्राहरन्सर्वे हनूमन्तं महाबलम् । हनूमता ते निहता मुष्टिभिः करताडनैः ॥
पतितास्ते क्षणात्तत्र रुधिरक्षतविग्रहाः । अन्ये पलायनपरा जग्मुस्ते त्रिदिवेश्वरम् ॥
तच्छ्रुत्वा कुपितः शक्रः सर्वानमरसत्तमान् । आदिदेश महावीरं वानरेन्द्रं सुरोत्तमः ॥
तदाज्ञप्ता ययुस्ते वै यत्र कीशेश्वरो बली । तान्सर्वानागतान्दृष्ट्वा जगाद कपिसत्तमः

मा यान्तु वीराः समरे संहर्तारं हि मां बलात् ।
नेष्यामि युष्मानधुना संयमिन्याः पुरोऽन्तिके ॥ ६७ ॥

इत्युक्ता अपि ते सर्वे सन्नद्धाः प्राहरन्कपिम् । शस्त्रास्त्रैर्बहुधामुक्तैर्महाबलसमन्विताः

केचिच्छूलैः परशुभिः केचित्खड्गैश्च पट्टिशैः ।
मुसलैः शक्तिभिः केचित्क्रोधेन कलुषीकृताः ॥ ६९ ॥

स आहतोऽमरवरैर्विविधैरायुधैर्बली । शिलाभिस्ताञ्जघानाशु सर्वामरसत्तमान् ॥७०॥
केचित्पलाय्य आहुस्ते गताः शक्रसमीपकम् । तदुक्तं वाक्यमाकर्ण्य भयं प्रापसुराधिप

बृहस्पतिं सुराध्यक्षं मन्त्रिणं स्वर्गवासिनाम् ।
पप्रच्छ सविधे गत्वा नत्वा सुरगुरुं वरम् ॥ ७२ ॥

इन्द्र उवाच ।

कोऽसौ यो वानरो द्रोणं नेतुं स्वामिन्समागताः ।
येन मे निहता वीरा अमराः शस्त्रधारिणः ॥ ७३ ॥

शेष उवाच ।

एतच्छ्रुत्वा तु तद्वाक्यमुक्तमाङ्गिरसो महान् । जगाद भयसंविग्नं तुरासाहं सुराधिपम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बृहस्पतिरुवाच ।

यो रावणमहन्सङ्ख्ये कुम्भकर्णमदीदहत् । येन ते वैरिणः सर्वे हतास्तस्यैव सेवकः ॥
येन लङ्का सत्रिकूटा निर्दग्धा पुच्छवह्निना । अक्षश्च निहतो येन हनूमन्तमवेहि तम् ॥
तेन सर्वे विनिहता द्रोणार्थमयमुद्यतः । हयमेधं महाराजः करोति बलिसत्तमः ॥ ७७ ॥
तस्याश्वं शिवभक्तस्तु नृपो वीरमणिर्महान् । जहार तत्र समभूद्रणं सुरविमोहनम् ॥

शिवेन निहताः सङ्ख्ये वीरा रामस्य भूरिशः ।
तान्वै जीवयितुं द्रोणं नेष्यत्येव महाबलः ॥ ७९ ॥

नायं वर्षशतैर्जेयो भवता बलसंयुतः । तस्मात्प्रसादय कपिं देहि तत्रत्यमौषधम् ॥८०॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे द्रोणगिरौ देवानां पराजयो नाम चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥

---

## पञ्चचत्वारिंशत्तमोऽध्यायः

### द्रोणाचलान्मृतसञ्जीवनीमानीय पुष्कलादीनां सञ्जीवनम् ।

शेष उवाच ।

गुरुभाषितमाकर्ण्य वृषपर्वरिपुः स्वराट् । ज्ञात्वा रामस्य कार्यार्थमागतं पवनात्मजम्
भयं तत्याज मनसि वानरात्समुपस्थितम् । जहर्ष चित्ते च भृशं वाचस्पतिमुवाचह ॥

इन्द्र उवाच ।

कथं कार्यं सुराधीश द्रोणोऽयं नीयते यदि । देवानां जीवनं भूयः कथं स्यादिति मे वद
इदानीं पवनोद्भूतं प्रसादय यथातथम् । रामः प्रीतिं परां याति देवानां च सुखं भवेत्
देवाधिपस्य वचनं श्रुत्वा वाचस्पतिस्तदा । शक्रं तु पुरतः कृत्वा सर्वदेवैः परीवृतम् ॥

जगाम तत्र यत्रास्ते हनूमान्निर्भयः कपिः ।
गर्जति प्रसवं जित्वा सुरान्सर्वान्सुखासिनः ॥ ६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ते गत्वा सन्निधौ तस्य बृहस्पतिपुरोगमाः । पेतुस्ते चरणौ नत्वा समीरतनुजस्य हि
बृहस्पतिश्च तं वीरं जगाद प्रेरितोऽमुना । सुराधीशेन लोकस्य गुरुणा वदतां वरः ॥

बृहस्पतिरुवाच ।

अज्ञानद्भिः कृतं कर्म देवैस्तव पराक्रमम् । श्रीरामचरणस्य त्वं सेवकोऽसि महामते ॥
किमर्थमयमारम्भः कथमत्र समागमः । तत्करिष्यामहे सर्वे सन्नतास्तव भाषितम् ॥

रोषं त्यक्त्वा कृपां कृत्वा देवाधीशं विलोकय ।
पवनात्मज ! दैत्यानां भयङ्करवपुर्दधन् ॥ ११ ॥

शेष उवाच ।

इत्थं भाषितमाकर्ण्य देवानां स गुरोर्वचः । उवाच देवान्सकलान्गुरुं चैव महायशाः ॥

राज्ञो वीरमणेः सङ्ख्ये हताः शर्वेण भूरिशः ।
भटास्तान्वै जीवयितुं द्रोणं नेष्यामि पर्वतम् ॥ १३ ॥

तं ये निवारयिष्यन्ति स्ववीर्यबलदर्पिताः । तान्नेष्यामि क्षणादेव यमस्य सदनं प्रति
तस्माद्वदत मे यूयं द्रोणं वाथ तदौषधम् । येन सञ्जीवयिष्यामि मृतान्वीरान्रणाङ्गणे

शेष उवाच ।

इति वाक्यं समाकर्ण्य वायुसूनोर्महात्मनः । ते सर्वे प्रणतिंगत्वा ददुः सञ्जीवनौषधम्

ते प्रहृष्टा भयं त्यक्त्वा सुराः स्वर्गौकसः स्वयम् ।
ययुः सुरपतिं कृत्वा पुरः सौख्यसमन्विताः ॥ १७ ॥

हनुमान्भेषजं तत्तु समादायागतो रणम् । स्तुतः सर्वैः सुरगणैर्महाकर्मसमुत्सुकैः ॥१८॥
तमागतं हनूमन्तं वीक्ष्य सर्वेऽपि वैरिणः । साधु साधु प्रशसन्तश्चाद्भुतं मेनिरे कपिम्

कपिः समागत्य महामुदायुतः पुरोभटं पुष्कलमागतं मृतम् ।
शिवेन संरक्षितमुग्रमण्डले श्रीरामचित्तं सविधे जगाम ह ॥ २० ॥

सुमतिं च समाहूय मन्त्रिणं महतां मतम् । उवाच जीवयाम्यद्य सर्वान्वीरान्रणे मृतान्
एवमुक्त्वा भेषजं तत्पुष्कलस्य महोरसि । शिरः कायेन सन्धाय जगाद वचनं शुभम्
यद्यहं मनसा वाचा कर्मणा राघवं पतिम् । जानामि तर्हि एतेन भेषजेनाशु जीवतु ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति वाक्यं यदा वक्ति तावत्पुष्कल उत्थितः ।
रणाङ्गणेऽदशद्रोषाद्दन्तान्वीरशिरोमणिः ॥ २४ ॥
क्व गतो वीरभद्रोऽसौ मां संमूर्च्छ्य रणाङ्गणे ।
सद्योऽहं पातयाम्येनं क्वास्ति मे धनुरुत्तमम् ॥ २५ ॥

इतितं भाषमाणं वै प्राह वीरं कपीन्द्रकः । धन्योऽसि वीर यद्भूयो वदस्येनं रणाङ्गणे त्वं हतो वीरभद्रेणरघुनाथप्रसादतः । पुनः सञ्जीवितोऽस्येहि शत्रुघ्नं याममूर्च्छितम् इत्युक्त्वा प्रययौ तत्र सङ्ग्रामवरमूर्धनि । श्वसन्नास्ते सशत्रुघ्नः शिववाणप्रपीडितः तत्र गत्वा समीपं तच्छत्रुघ्नस्य महात्मनः । निधाय भेषजं तस्य वचसि श्वासमागते उवाच हनुमांस्तं वै जीव शत्रुघ्नसत्तम ! । मूर्च्छितोऽसि रणे कस्मान्महावलपराक्रम! यद्यहं ब्रह्मचर्यं च जन्मपर्यन्तमुद्यतः । पालयामि तदा वीरः शत्रुघ्नो जीवतु क्षणात् ॥

उक्तमात्रेण तेनेदं जीवितः क्षणमात्रतः ।
क्व शिवः क्व शिवो यातो विहाय रणमण्डलम् ॥ ३२ ॥
अनेके निहताः सङ्ख्ये श्रीरुद्रेण पिनाकिना ।
ते सर्वे जीविता वीराः कपीन्द्रेण महात्मना ॥ ३३ ॥

तदा सर्वे सुसन्नद्धा रोषपूरितमानसाः । स्वे स्वे रथे स्थिताःशत्रून्प्रययुः क्षतविग्रहाः पुष्कलो वीरभद्रं तु चण्डं चैव कुशध्वजः । नन्दिनं हनुमान्वीरः शत्रुघ्नः सङ्गरे शिवम् धनुर्विस्फारयन्तं तं शत्रुघ्नं बलिनां वरम् । सङ्ग्रामे शिवमाहूय तिष्ठन्तं प्रययौ नृपः राजा वीरमणिर्वीरः शत्रुघ्नः समरे बली । अन्योन्यं चक्रतुर्युद्धं मुनिविस्मयकारकम्

राज्ञा च वीरमणिना रथा भग्नाः शताधिकाः ।
शत्रुघ्नस्य नरेन्द्रस्य तिलशः क्षणतो द्विज !॥ ३८ ॥
तदा प्रकुपितोऽत्यन्तं शत्रुघ्नो रणमण्डले ।
आग्नेयास्त्रं मुमोचामुं दग्धुं सैन्यसमन्वितम् ॥ ३९ ॥

दाहकं तन्महद्दृष्ट्वा महास्त्रं शत्रुमोचितम्। अत्यन्तं कुपितो राजा वारुणास्त्रं समाददे

वारुणास्त्रेण शीतार्ति वीक्ष्य रामानुजो बली ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वायव्यास्त्रं मुमोचास्मै तेन वायुर्महानभूत् ॥ ४१ ॥
वायुना संहता मेघा ययुस्ते सर्वतो दिशम् । इतस्ततो गताः सर्वे सैन्यं तत्सुखितं बभौ
सैन्ये पवनपीडार्ते नृपो वीरमणिर्महान् । पर्वतास्त्रं रिपूद्धारि जग्राह च शरासने ॥
पर्वतैः स्तम्भितो वायुर्नचासर्पत सङ्गरे । तद्वीक्ष्य रामावरजो वज्रास्त्रं तु समाददे ॥
वज्रास्त्रेण हताः सर्वे नगास्तु तिलशः कृताः । चूर्णतां प्रापुरेतस्मिन्रणे वीरवरार्चिते
वज्रास्त्रेण विदीर्णाङ्गा वीराः शोणितशोभिताः ।
बभूवुः समरप्रान्ते चित्रं समभवद्रणम् ॥ ४६ ॥
तदा प्रकुपितोऽत्यन्तं राजा वीरमणिर्महान् । ब्रह्मास्त्रं चापआधत्त वैरिदाहकमद्भुतम्
ब्रह्मास्त्रे संहिते सोऽपि सस्मार सुमनोहरम् । अस्त्रं तद्योगिनीदत्तं सर्ववैरिविमोहनम्
ब्रह्मास्त्रं तत्करभ्रष्टमागतं वैरिणं प्रति । तावच्छत्रुघ्ननाम्ना तु तन्मुक्तं मोहनास्त्रकम्
मोहनास्त्रेण तद् ब्राह्मं द्विधा च्छिन्नं क्षणादिह ।
लग्नं राज्ञो हृदि क्षिप्रं मूर्च्छां सम्प्रापयन्नृपम् ॥ ५० ॥
ते बाणाः शतशो मुक्ताः शत्रुघ्नेन महीभृता ।
सर्वेऽपि मूर्च्छिता वीरा गणा रुद्रस्य ये पुनः ॥ ५१ ॥
शिवस्य चरणोपस्थे मूढाः पेतुर्महीतले । तदा शिवः प्रकुपितो रथे तिष्ठन्ययौ नृपम् ॥
शिवेन सहसा योद्धुं समायातो रणाङ्गणे ।
शत्रुघ्नः सज्जमात्तज्यं धनुः कृत्वा व्ययुद्धयत ॥ ५३ ॥
तयोः समभवद्युद्धं घोरं वैरिविदारणम् । शस्त्रास्त्रैर्बहुधामुक्तैरादीपितदिगन्तरम् ॥५४
अस्त्रप्रत्यस्त्रसङ्घातैस्ताडनप्रतिताडनैः । देवानामपि दैत्यानां नैतादृग्रणमण्डलम् ॥
तदा व्याकुलितोऽत्यन्तं शत्रुघ्नः शिवसङ्गरे । सस्मार स्वामिनं तत्र पावनेरुपदेशतः ॥
हा नाथ भ्रातरत्युग्रः शिवः प्राणापहारणम् । करोति धनुरुद्यम्य त्रायस्व रणमण्डले
अनेके दुःखपाथोधिं तीर्णा राम ! तवाख्यया ।
मामप्युद्धर दुःखस्थं राम ! राम ! कृपानिधे ! ॥ ५८ ॥
इत्थं वक्ति यदातावद्वीक्षितो रणमण्डले । नीलोत्पलदलश्यामो रामो राजीवलोचनः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मृगशृङ्गं कटौ धृत्वा दीक्षितं वपुरुद्वहन्। तं दृष्ट्वा विस्मयं प्राप शत्रुघ्नः समराङ्गणे

इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे श्रीरामसमागमो नाम पञ्चचत्वारिंशत्तमोऽध्यायः ॥ ४५ ॥

---

## षट्चत्वारिंशत्तमोऽध्यायः

### शङ्करेण सह श्रीरामस्य समागमः ।

शेष उवाच

आगतं वीक्ष्य श्रीरामंशत्रुघ्नः प्रणतार्तिहम्। भ्रातरं सकलाद्दुःखान्मुक्तोऽभूद्द्विजसत्तम!

हनूमान्वीक्ष्य विभ्रान्तो रामस्य चरणौ मुदा ।
ववन्दे भक्तरक्षार्थमागतं निजगाद च ॥ २ ॥

स्वामिस्तवैतद्युक्तं तु स्वभक्तपरिपालनम्। यत्सङ्ग्रामे जितं सर्वं पाशबद्धममोचयः ॥

वयं त्विदानीं धन्या वै यद् द्रक्ष्यामो भवत्पदे ।
जेष्यामोऽरीन्क्षणादेव त्वत्कृपातो रघूद्वह ! ॥ ४ ॥

शेष उवाच ।

स्थाणुस्तदागतं रामं योगिनां ध्यानगोचरम्।
पतित्वा पादयोर्विप्र जगाद प्रणताभयम् ॥ ५ ॥

एकस्त्वं पुरुषः साक्षात्प्रकृतेः परईर्यसे । यः स्वांशकलया विश्वं सृजस्यवसि हंसि च

अरूपस्त्वमशेषस्य जगतः कारणं परम्। एक एव त्रिधा रूपं गृह्णासि कुहकान्वितः ॥

सृष्टौ विधातृरूपेण पालने स्वयमास च। प्रलये जगतः साक्षादहं शर्वाख्यतां गतः ॥

तव यत्परमेशस्य हयमेधक्रतुक्रिया। ब्रह्महत्यापनोदाय तद्विडम्बनमद्भुतम् ॥ ६ ॥

यत्पादशौचममलं गङ्गाख्यं शिरसोऽन्तरा । वहामि पापशान्त्यर्थं तस्य ते पातकं कुतः

मया बह्वपकाराय कृतं कर्म तव स्फुटम्। क्षम्यतां तत्कृपालो हि भवतो व्यवधायकम्



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं करोमि मया सत्यपालनार्थमिदं कृतम्।
जानन्प्रभावं भवतो भक्तरक्षार्थमागतः ॥ १२ ॥
असौ पुरा उज्जयिन्यां महाकालनिकेतने। स्नात्वाशिप्राख्यसरिति तपस्तेपे महाद्भुतम्
ततः प्रसन्नो जातोऽहं जगाद भूमिपं प्रति। याचस्वेति महाराज स वव्रे राज्यमद्भुतम्
मया प्रोक्तं देवपुरे तव राज्यं भविष्यति। यावद्रामहयः पुर्यामागमिष्यति याज्ञिकः॥
तावत्प्रभृत्यहं स्थास्ये तव रक्षार्थमुद्यतः। एष दत्तवरो राम किंकरोमि स्वसत्यतः॥
घृणितोऽस्म्यधुना राज्ञा सपुत्रपशुबान्धवः। हयं समर्प्यते पादसेवां राजा विधास्यति

शेष उवाच।

इति वाक्यं समाकर्ण्य महेशस्य रघूत्तमः। उवाच धीरया वाचा कृपया पूर्णलोचनः

राम उवाच।

देवानामयमेवास्ति धर्मो भक्तस्य पालनम्। त्वया साधु कृतं कर्म यद्भक्तो रक्षितोऽधुना
ममासि हृदये शर्व भवतो हृदये त्वहम्। आवयोरन्तरं नास्ति मूढाः पश्यन्ति दुर्धियः
ये भेदं विदधत्यद्धा आवयोरेकरूपयोः। कुम्भीपाकेषु पच्यन्ते नराः कल्पसहस्रकम्॥
ये त्वद्भक्तास्त एवासन्मद्भक्ता धर्मसंयुताः। मद्भक्ता अपि भूयस्याभक्त्या तव नतिङ्कराः

शेष उवाच।

इत्थं भाषितमाकर्ण्य शर्वो वीरमणिं नृपम्। मूर्च्छितं जीवयामास करस्पर्शादिनाप्रभुः
अन्यानपि सुतानस्य मूर्च्छिताञ्छरपीडितान्।
जीवयामास स मृडः समर्थः प्रभुरीश्वरः ॥ २४ ॥
सज्जं विधाय तं भूप श्रीरामपदयोर्नतिम्। कारयामास भूतेशः पुत्रपौत्रैः परीवृतम्॥
धन्यो राजा वीरमणिर्यो ददर्श रघूत्तमम्। योगिभिर्योगनिष्ठाभिर्दुष्प्रापमयुतायुतैः॥
ते नत्वा रघुनाथं तं कृतार्थीकृतविग्रहाः। ब्रह्मादिभिः पूज्यतमा अभूवन्द्विजसत्तम!॥
शत्रुघ्नहनुमद्भ्यां च पुष्कलादिभिरुद्भटैः। परिष्टुताय रामाय ददौ राजा हयोत्तमम्॥
राज्येन सहितं सर्वं सपुत्रपशुबान्धवम्। शर्वेण प्रेरितः प्रादाद्भूपो वीरमणिस्तदा॥
ततो रामो नुतः सर्वैर्वैरिभिर्निजसेवकैः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शत्रुघ्नादिभिरत्यन्तमुत्सुकैश्च विशेषतः ॥ ३० ॥

रथे मणिमये तिष्ठन्बभूव स तिरोहितः । अन्तर्हिते रामभद्रे सर्वे प्रापुः सुविस्मयम् ॥
मा जानीहि मनुष्यं तं रामं लोकैकवन्दितम् । जले स्थले च सर्वत्र वर्तते संस्थितःसदा
ततो वीरा अलं दृष्ट्वा अन्योन्यं परिरेभिरे । तूर्यमङ्गलवादित्रैः सुमहानुत्सवोऽभवत् ॥

ततो मुक्तो हयः सर्वैर्वीरैः शस्त्रास्त्रकोविदैः ।
सर्वैरनुगतः प्रीतैर्विस्मयेन समन्वितैः ॥ ३४ ॥

शर्वः सत्यप्रतिज्ञश्च तमनुज्ञाप्य सेवकम् । श्रीरामं शरणं प्रोच्य याहि लोकैकदुर्लभम्
स्वयमन्तर्हितस्तत्र प्रलयोत्पत्तिकारकः । कैलासमगमच्छर्वः सेवकैः परिशोभितः ॥

भूपो वीरमणिर्ध्यायञ्छ्रीरामचरणोदजम् ।
शत्रुघ्नेन ययौ साकं बलिना बलसंयुतः ॥ ३७ ॥
एतद्रामस्य चरितं ये शृण्वन्ति नरोत्तमाः ।
तेषां संसारजं दुःखं न भविष्यति कर्हिचित् ॥ ३८ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
हयप्रस्थानं नाम षट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥

---

## सप्तचत्वारिंशत्तमोऽध्यायः

### हेमकूटपर्वतेऽश्वगमनम् ।

शेष उवाच ।

हयोगतो हेमकूटं भारतान्ते ततो द्विज ! । अनेकभटसाहस्रै रक्षितो बद्धचामरः ॥ १ ॥
यो वै विस्तरतो दैर्घ्याद्योजनानां समन्ततः । अयुतेन सुशृङ्गैश्च राजतैः काञ्चनादिभिः
तत्रोद्यानं महच्छ्रेष्ठं पादपैः परिशोभितम् । शालैस्तालैस्तमालैश्च कर्णिकारैः समन्ततः
हिन्तालैर्नागपुन्नागैः कोविदारैः सबिल्वकैः । चम्पकैर्बकुलैर्मेघैर्मदनैः कुटजादिभिः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जातिकाभिर्यूथिकाभिर्नवमालिकया तथा ।
आम्रैर्माधवद्राक्षाभिर्दाडिमैः शोभितं वनम् ॥ ५ ॥
अनेकपक्षिसङ्घुष्टं भ्रमरैस्सुनिनादितम् । मयूरकेकारवितं सर्वर्तुसुखदं हयः ॥ ६ ॥
प्रविवेश स शत्रुघ्नो मनोवेगसमन्वितः । स्वर्णपत्रं विशाले स्वे भाले बिभ्रन्मनोहरम्
गच्छतस्तस्य वाहस्य हयमेधक्रतोस्तदा । अकस्मादभवच्चित्रं तच्छृणुष्व द्विजोत्तमः ॥
गात्रस्तम्भोऽभवत्तस्य न चचाल पथि स्थितः ।
हेमकूट इवाचाल्यो बभूव हयसत्तमः ॥ ९ ॥
तदा तद्रक्षकाः सर्वे कशाघातान्वितेनिरे । तदा हतोऽपि न ययौ स्तब्धगात्रोहयोत्तमः
शत्रुघ्नसविधे गत्वा चक्रुशुर्वाहरक्षकाः । स्वामिन्वयं न जानीमः किमभूद्धयसत्तमे ॥
गच्छतो वाहवर्यस्य मनोवेगस्य भूपते ! । आकस्मिकोऽभवत्तस्य गात्रस्तम्भो महामते
कशाभिस्ताडितोऽस्माभिः परं तत्र चचाल न ।
एवं विचार्य यत्कार्यं तत्कुरुष्व नृपोत्तम ! ॥ १३ ॥
तदाविस्मयमापन्नो भूपतिः सह सैनिकैः । जगाम सहितः सर्वैर्हयस्य महतोऽन्तिके ॥
पुष्कलो बाहुना धृत्वा चरणौ तस्य भूतलात् ।
उत्पाटयामास तदा परन्नो चेलतुस्ततः ॥ १५ ॥
बलेन बलिनाऽऽक्रान्तो नाकम्पत हयस्तदा । हनूमांस्तं समुद्धर्तुं मतिंचक्रे महामनाः॥
लाङ्गूलेन समावेष्ट्य बलेन बलिनांवरः । आचकर्ष बलाद्वाहं न चचाल तथापि सः
तदोवाच कपिश्रेष्ठो हनूमान्विस्मयान्वितः ।
शत्रुघ्नं बलिनां श्रेष्ठं वीराणांपरिश्रृण्वताम् ॥ १८ ॥
मयाद्रोणो लाङ्गुलेन लीलयोत्पाटितोऽधुना । परमत्र महाश्चर्यं कम्पते न हयोऽल्पकः ॥
दृष्टमत्र निदानं हि वीरैर्बलिभिरुद्धतैः । आकृष्टोऽपि न च स्थानाच्चचाल तिलमात्रतः
कपिभाषितमाकर्ण्य शत्रुघ्नो विस्मयान्वितः । सुमतिं मन्त्रिणां श्रेष्ठमुवाच वदतांवर

शत्रुघ्न उवाच ।

मन्त्रिन्किमभवद्वाहेस्तम्भनं वपुषोऽनघ । कोऽत्रोपायो विधेयःस्याद्येन वाहगतिर्भवेत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुमतिरुवाच ।

स्वामिन्कश्चिन्मुनिर्मृग्योऽखिलज्ञानविचक्षणः ।
देशोद्भवमहं जाने प्रत्यक्षं न परोक्षजम् ॥ २३ ॥

शेष उवाच ।

इतिवाक्यं समाकर्ण्य सुमतेर्धर्मकोविदः । अन्वेषयामास मुनिं सेवकैः सहशोभनम् ॥
ते सर्वे सर्वतो गत्वा मुनिं धर्मविदंभटाः । व्यालोकयन्तःसर्वत्र न चापश्यन्मुनीश्वरम्
एकस्त्वनुचरो विप्र ! गतो योजनमात्रतः। पूर्वस्यांदिशि चोद्युक्तः पश्यतिस्ममहाश्रमम्
यत्र निर्वैरिणःसर्वे पशवो जनतास्तथा । गङ्गास्नानहताशेषकिल्बिषाःसुमनोहराः ॥
यत्र केचित्तपःश्रेष्ठं कुर्वतिस्म हुतासनैः । धूमैरधोमुखाःपत्रैर्वायुभिःस्वोदम्भराः ॥
यत्राग्निहोत्रजोधूमः पवित्रयति सर्वदा । अनेकमुनिसंहृष्टो मुक्तपत्रलतोत्तमः ॥ २९ ॥
तमाश्रमं मुनेर्ज्ञात्वा शौनकस्य मनोहरम् । न्यवेदयन्नृपायासौ विस्मयाविष्टचेतसे ॥
तच्छ्रुत्वा हर्षितोऽत्यन्तं शत्रुघ्नः सहसेवकैः । हनूमत्पुष्कलाद्यैश्च संयुतोऽगात्तदाश्रमम्
तत्र वीक्ष्य मुनिश्रेष्ठं सम्यग्घुतहुताशनम् । प्रणमद्दण्डवत्तस्य चरणौ पापहारिणौ ॥

तमागतं नृपं ज्ञात्वा शत्रुघ्नं बलिनांवरम् ।
अर्घ्यपाद्यादिकं चक्रे प्रीतस्तद्दर्शनादभूत् ॥ ३३ ॥

सुखोपविष्टं विश्रान्तं नृपं प्राह मुनीश्वरः । किमर्थमटनं देव ! महत्पर्यटनं तव ॥३४॥

त्वादृशाः पृथिवीं सर्वां नृपा वै न भ्रमन्ति चेत् ।
तदा दुष्टजनाः साधून्बाधन्ते विगतज्वरान् ॥ ३५ ॥

कथयस्व महीपाल शत्रुघ्न बलिनांवर । सर्वं शुभाय नो भूयात्तवपर्यटनादिकम् ॥३६॥

शेष उवाच ।

इत्युक्तवन्तं भूदेवं प्रत्युवाच महीश्वरः । गद्गदस्वरयावाण्या हर्षितस्वीयविग्रहः ॥

शत्रुघ्न उवाच ।

अकस्मादभवच्चित्रं रामाश्वस्य मनोहृतः । नातिदूरे त्वदावासात्तच्छृणुष्व विदांवर ॥
उद्याने तव शोभाढ्ये यदृच्छातो हयोगतः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्प्रान्ते तस्य वाहस्य गात्रस्तम्भो भवत्क्षणात् ॥ ३९ ॥
तदा मे बलिनो वीराः पुष्कलाद्या मदोत्कटाः ।
बलादाचकृषुर्वाहं न चचाल तथाप्यसौ ॥ ४० ॥
अस्मानपारदुःखाब्धौ मग्नान्प्रतितरिः स्मृतः ।
दैवाद्दृष्टः सुभाग्यैस्त्वं कथयस्व निदानकम् ॥ ४१ ॥

शेष उवाच ।

एवं पृष्टो मुनिवरः क्षणंदध्यौ महामतिः । हयस्य चरणस्तम्भकारणं तु विचारयन् ॥
क्षणात्तत्तु सविज्ञाय विस्मयोत्फुल्ललोचनः । जगाद स महीपालं दुःखितंसंशयान्वितम्

शौनक उवाच ।

शृणु राजन्प्रवक्ष्यामि हयस्तम्भस्य कारणम् ।
यच्छ्रुत्वा मुच्यते दुःखादतिचित्रकथानकम् ॥ ४४ ॥
गौडदेशे महारण्ये कावेरीतीरभूषिते । वाडवः सात्त्विको नाम्ना चचार परमं तपः ॥
एकाहं पयसः प्राशी दिनैकं वायुभक्षकः । दिनैकं तु निराहार एवं त्रिदिनमुन्नयेत् ॥
एवं व्रते प्रवृत्तस्य कालः सर्वक्षयङ्करः । जग्राह स्वस्य दंष्ट्रायां मृतिं प्राप महाव्रती ॥
विमाने सर्वशोभाढ्ये सर्वरत्नविभूषिते ।
अप्सरोभिः सह क्रीडन्ययौ मेरोः शिखास्थितौ ॥ ४८ ॥
जम्बूनाम महावृक्षस्तत्र सेव्यरसोभवत् । नदीजाम्बवती संज्ञा स्वर्णद्रवसमन्विता ॥
तस्यां तु मुनयस्सर्वे तपोध्यानसमन्विताः। अनेक तपसा पुण्याःसर्वसौख्यसमन्विताः
तत्रासौ स्वेच्छया क्रीडन्नप्सरोभिर्मुदान्वितः ।
प्रतीपमाचरत्तेषां स्वाभिमानमदोद्धतः ॥ ५१ ॥
ततः शप्तः स मुनिभी राक्षसो भवदुर्मुखः । ततोऽतिदुःखितः प्राह मुनीन्विद्यातपोधनान्
अनुगृह्णन्तु मां सर्वे विप्रायूयं कृपालवः । तदातैरनुगृहीतो यदा राम हयं भवान् ॥५३॥
स्तम्भयिष्यति वेगेन ततो रामकथाश्रुतिः ।
पश्चान्मुक्तिर्भवित्री ते शापादस्मात्सुदारुणात् ॥ ५४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स प्रोक्तो मुनिभिर्देवो राक्षसत्वमितः प्रभो ! ।
स्तम्भयामास रामाश्वं मोचयानघकीर्तनैः ॥ ५५ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे शापकीर्तनं नाम सप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥

---

## अष्टचत्वारिंशत्तमोऽध्यायः

### शत्रुघ्नाय शौनकेन नानाकर्मविपाककथनम् ।

शेष उवाच ।

इति प्रोक्तं तु मुनिना संश्रुत्य परवीरहा । विस्मयं मानयामास हृदि शौनकमब्रवीत् ॥

शत्रुघ्न उवाच ।

कर्मणो गहना वार्ता यया सात्त्विकनामधृत् ।
दिवं प्राप्तोऽपि महता कर्मणा राक्षसी कृतः ॥ २ ॥

स्वामिन्वद महर्षे त्वं कर्मणां स्वगतिर्यथा । येन कर्मविपाकेन यादृशं नरकं भवेत् ॥

शौनक उवाच ।

धन्योऽसि राघवश्रेष्ठ ! यत्ते मतिरियं शुभा ।
जानन्नपि हितार्थाय लोकानां त्वं ब्रवीषि भोः ! ॥ ४ ॥
कथयामि विचित्राणां कर्मणां विविधा गतीः ।
ताः शृणुष्व महाराज यच्छ्रुत्वा मोक्षमाप्नुयात् ॥ ५ ॥

परवित्तं परापत्यं कलत्रं पारकं च यः । बलात्कारेण गृह्णाति भोगबुद्ध्या च दुर्मतिः
कालपाशेन सम्बधो यमदूतैर्महाबलैः । तामिस्रे पात्यते तावद्यावद्वर्षसहस्रकम् ॥
तत्र ताडनमूद्धूताः कुर्वन्ति यमकिङ्कराः । पापभोगेनसन्तप्तस्ततो योनिं तु सौकरीम्
तत्र भुक्त्वा महादुःखं मानुषत्वं गमिष्यति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रोगादिचिह्नितं तत्र दुर्यशो ज्ञापकं स्वकम् ॥ ९ ॥
भूतद्रोहं विधायैव केवलं स्वकुटुम्बकम् ।
पुष्णाति पापनिरतः सोऽन्धतामिस्रके पतेत् ॥ १० ॥
ये नरा इह जन्तूनां वधं कुर्वन्ति वै मृषा । ते रौरवे निपात्यन्ते भिद्यन्ते रुरुभीरुषा ॥
यः स्वोदरार्थे भूतानां वधमाचरति स्फुटम् । महारौरवसंज्ञे तु पात्यते स यमाज्ञया ॥
यो वै निजं तु जनकं ब्राह्मणं द्वेष्टि पापकृत् । कालसूत्रे महादुष्टे योजनायुतविस्तृते ॥
यावन्ति पशुरोमाणि गवां द्वेषं करोति यः । तावद्वर्षसहस्राणि पच्यते यमकिङ्करैः ॥
यो भूमौ भूपतिर्भूत्वा दण्डायोग्यं तु दण्डयेत् ।
करोति ब्राह्मणस्यापि देहदण्डं च लोलुपः ॥ १५ ॥
स सूकरमुखैर्दुष्टैः पीड्यते यमकिङ्करैः । पश्चाद्दुष्टासु योनीषु जायते पापमुक्तये ॥१६
ब्राह्मणानां गवां ये तु द्रव्यं वृत्तं तथाल्पकम् ।
वृत्तिं वा गृह्णते मोहाल्लुम्पन्ति स्वबलान्नराः ॥ १७ ॥
ते परत्रान्धकूपे च पात्यन्ते च महार्दिताः । योऽन्नं स्वयमुपाहृत्य मधुरं चात्ति लोलुपः
न देवाय न सुहृदे ददाति रसनापरः । स पतत्येव नरके कृमिभोजनसंज्ञिते ॥ १९ ॥
अनापदि नरो यस्तु हिरण्यादीन्यपाहरेत् । ब्रह्मस्वं वा महादुष्टे सन्दंसे नरके पतेत् ॥
यः स्वदेहं प्रपुष्णाति नान्यं जानाति मूढधीः ।
स पात्यते तैलतप्ते कुम्भीपाकेऽतिदारुणे ॥ २१ ॥
यो नाऽगम्यां स्त्रियं मोहाद्योषिद्वावाच्च कामयेत् ।
तं तया किङ्कराः सूर्म्या परिरम्भं च कुर्वते ॥ २२ ॥
ये बलाद्वेदमर्यादां लुम्पन्ति स्वबलोद्धताः । ते वैतरण्यां पतिता मांसशोणितभक्षकाः
वृषलीं यः स्त्रियं कृत्वा तया गार्हस्थ्यमाचरेत् । पूयोदे निपतत्येव महादुःखसमन्वितः
ये दम्भमाश्रयन्ते वै धूर्ता लोकस्य वञ्चने । वैशसे नरके मूढाः पतन्ति यमताडिताः ॥
ये सवर्णासु तु स्त्रीषु स्वं रेतः पातयन्ति च ।
रेतःकुल्यासु ते पापा रेतः पानेषु तत्पराः ॥ २६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ये चौरा वह्निदा दुष्टा गरदा ग्रामलुण्ठकाः। सारमेयादने ते वै पात्यन्ते पातकान्विताः
कूटसाक्ष्यं वदत्यद्धा पुरुषः पापसम्भृतः। परकीयं तु द्रव्यं यो हरति प्रसभं बली॥
सोऽवीचिनरके पापी अर्वाग्वक्त्रः पतत्यधः। तत्रदुःखंमहद्भुक्त्वा पापिष्ठां योनिमाव्रजेत्

यो नरो रसनास्वादात्सुरां पिबति मूढधीः।
तं पाययन्ति लोहस्य रसं धर्मस्य किङ्कराः॥ ३०॥

यो गुरूनवमन्येत स्वविद्याचारदर्पितः। स मृतः पात्यते क्षारनरकेऽधोमुखः पुमान्॥
विश्वासघातं कुर्वन्ति ये नरा धर्मनिष्कृताः। शूलप्रोते च नरके पात्यन्ते बहुयातने॥
पिशुनो यो नरान्सर्वानुद्वेजयति वाक्यतः। दन्दशूके च पतितो दन्दशूकैः स दश्यते॥

एवं राजन्ननेके वै नरकाः पापकारिणाम्।
पापं कृत्वा प्रयान्त्येते पीडां यान्ति सुदारुणाम्॥ ३४॥

यैर्न श्रुता रामकथा न परोपकृतिः कृता। तेषां सर्वाणि दुःखानि भवन्ति नरकान्तरे॥
अत्र यस्य सुखं स्वर्गे भूयात्तस्य इतीर्यते। ये दुःखिनो रोगयुता नरकादागताश्च ते॥

शेष उवाच।

एतच्छ्रुत्वा महीपालः कम्पमानः क्षणे क्षणे। पप्रच्छ भूयस्तं विप्रं सर्वसंशयनुत्तये॥

शत्रुघ्न उवाच।

तत्तत्पापस्य चिह्नानि कथयस्व महामुने!। केन पापेन किं चिह्नं भूलोक उपजायते॥

शेष उवाच।

इति श्रुत्वा तु तद्वाक्यं मुनिः प्रोवाच भूपतिम्॥३६॥

शौनक उवाच।

शृणु राजन्प्रवक्ष्यामि चिह्नानि पापकारिणाम्।
सुरापः श्यावदन्तश्च नरकान्ते प्रजायते॥ ४०॥

अभक्ष्यभक्षकारी च जायते गुल्मकोदरः। उदक्या वीक्षितं भुक्त्वा जायते कृमिलोदरः
श्वमार्जारादिसंस्पृष्टं भुक्त्वा दुर्गन्धवान्भवेत्। अनिवेद्य सुरादिभ्यो भुञ्जानो जायते नरः
उदरे रोगवान्दुःखी महारोगप्रपीडितः। परान्नविघ्नकरणादजीर्णमभिजायते॥ ४३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मन्दोदराग्निर्भवति सति द्रव्ये कदन्नदः । विषदश्छार्दिरोगी स्यान्मार्गहा पादरोगवान् ॥
पिशुनो नरकस्यान्ते जायते श्वासकासवान् ।
धूर्तोऽपस्माररोगी स्याच्छूली च परतापनः ॥ ४५ ॥
दावाग्निदायकश्चैव रक्तातीसारान्भवेत् । सुरालये जले वापि शकृत्क्षेपं करोति यः ॥
गुदरोगो भवेत्तस्य पापरूपः सुदारुणः । गर्भपातनजारोगा यकृत्प्लीहजलोदराः ॥४७॥
प्रतिमाभङ्गकारी च अप्रतिष्ठश्च जायते ।
दुष्टवादी खण्डितः स्यात्खल्वाटः परनिन्दकः ॥ ४८ ॥
सभायां पक्षपाती च जायते पक्षघातवान् ।
परोक्तहास्यकृत्काणः कुनखी विप्रहेमहृत् ॥ ४९ ॥
तुन्दीवरी ताम्रचौरः कांस्यहृत्पुण्डरीकिकः । त्रपुहारी च पुरुषो जायते पिङ्गमूर्धजः ॥
शीसहारी च पुरुषो जायते शीर्षरोगवान् । घृतचौरस्तु पुरुषो जायते नेत्ररोगवान् ॥
लोहहारी च पुरुषो बर्बराङ्गः प्रजायते । चर्महारी च पुरुषो जायते मेदसावृतः ॥५२॥
मधुचौरस्तु पुरुषो जायते वस्तिगन्धवान् । तैलचौर्येण भवति नरः कण्ड्वातिपीडितः
आमान्नहरणाच्चैव दन्तहीनः प्रजायते । पक्वान्नहरणाच्चैव जिह्वारोगयुतो भवेत् ॥
मातृगामी च पुरुषो जायते लिङ्गवर्जितः । गुरुजायाभिगमनान्मूत्रकृच्छ्रः प्रजायते ॥
भगिनीं चैव गमने पीतकुष्ठः प्रजायते । स्वसुतागमने चैव रक्तकुष्ठः प्रजायते ॥ ५६ ॥
भ्रातृभार्याभिगमने गुल्मकुष्ठः प्रजायते । स्वामिपत्न्यादिगमने जायते दद्रुमण्डलम् ॥
विश्वस्तभार्यागमने गजचर्मा प्रजायते । पितृष्वस्रभिगमने दक्षिणाङ्गे व्रणी भवेत् ॥
मातुलान्यास्तु गमने वामाङ्गे व्रणवान्भवेत् । पितृव्यपत्नीगमने कटौ कुष्ठः प्रजायते ॥
मित्रभार्याभिगमने मृतभार्यः प्रजायते । स्वगोत्रस्त्रीप्रसङ्गेन जायते च भगन्दरः ॥
तपस्विनीप्रसङ्गेन प्रमेहो जायते नरे । श्रोत्रियस्त्रीप्रसङ्गेन जायते नासिकाव्रणी ॥६१॥
दीक्षितस्त्रीप्रसङ्गेन जायते दुष्टरक्तसृक् । स्वजातिजायागमने जायते हृदयव्रणी ॥६२॥
जात्युन्नतस्त्रीगमने जायते मस्तकव्रणी । पशुयोनौ च गमनान्मूत्रघातः प्रजायते ॥
एते दोषा नराणां स्युर्नरकान्ते न संशयः । स्त्रीणामपि भवन्त्येते तत्तत्पुरुषसङ्गमात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं राजन्हि चिह्नानि कीर्तितानि सुपापिनाम् । दानपुण्यप्रसङ्गेन तीर्थादिक्रियया तथा

रामस्य चरितं श्रुत्वा तपसा वाऽक्षयं व्रजेत् ।

सर्वेषामेव पापानां हरीकीर्तिधुनी नृणाम् ॥ ६६ ॥

क्षालयेत्पापिनां पङ्कं नात्र कार्या विचारणा । यश्चावमन्येत हरिं तं गङ्गा न पुनातिहि

तीर्थान्यपि सुपुण्यानि पावितुं न क्षमाणितम् । हसते कीर्त्यमानं यश्चरित्रं ज्ञानदुर्बलः

न तस्य नरकान्मुक्तिः कल्पान्तेऽपि भविष्यति ।

याहि राजन्विमोक्षार्थं हयस्यानुचरैः सह ॥

श्रावय श्रीशचरितं यतो वाहगतिर्भवेत् ॥ ६९ ॥

शेष उवाच ।

इति श्रुत्वा प्रहृष्टोऽभूच्छत्रुघ्नः परवीरहा । प्रणम्य तं परिक्रम्य ययौ सेवकसंयुतः ॥

तत्र गत्वा सहनुमान्हयवर्यस्य पार्श्वतः । उवाच रामचरितं महादुर्गतिनाशकम् ॥

याहि देव विमानस्त्वं रामकोर्तनपुण्यतः । स्वैरं चरस्वलोके त्वं मुक्तो भव कुयोनितः

इति वाक्यं समाकर्ण्य शत्रुघ्नो यावदास्थितः ।

तावद्ददर्श विमलं देवं वैमानिकं वरम् ॥७३॥

स उवाच विमुक्तोऽहंरामकीर्तनसंश्रुतेः । यामि स्वं भवनं राजन्नाज्ञापय महामते ॥

इत्युक्त्वा प्रययौ देवो विमाने स्वेपरिस्थितः । तदा विस्मयमापुस्ते शत्रुघ्नेन सहानुगाः

ततो वाहो विनिर्मुक्तो गात्रस्तम्भाच्च भूतलात् ।

ययौ तद्विपिनं सर्वं भ्रमन्पक्षिसमाकुलम् ॥ ७६ ॥

इति श्री पाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायन सम्वादे रामाश्वमेधे हयनिर्मुक्तिर्नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## एकोनपञ्चाशत्तमोऽध्यायः

### सुरथराजपालितकुण्डलपुरेऽश्वस्य गमनम् ।

शेष उवाच ।

मासाः सप्ताभवंस्तस्य हयवर्यस्य हेलया । चरतो भारतं वर्षमनेकनृपपूरितम् ॥ १ ॥
स पूजितो भूपवरैः परीत्य वरभारतम् । परीवृतो वीरवीरैः शत्रुघ्नादिभिरुद्भटैः ॥२॥
स बभ्राम बहून्देशान्हिमालयसमीपतः । न कोऽपि तं निजग्राह हयं रामबलं स्मरन् ॥
अङ्गवङ्गकलिङ्गानां राजभिः संस्तुतो हयः । जगाम राज्ञो नगरे सुरथस्य मनोहरे ॥
कुण्डलं नाम नगरमदितेर्यत्र कुण्डलम् । कर्णयोः पतितं भूमौ हर्षभयसुकम्पयोः ॥५॥
यत्र धर्मव्यतिक्रान्तिं न करोति कदापि ना । श्रीरामस्मरणं प्रेम्णा करोति जनतान्वहम्

अश्वत्थानां तु यत्रार्चा तुलस्याः प्रत्यहं नृभिः ।
क्रियते रघुनाथस्य सेवकैः पापवर्जितैः ॥ ७ ॥

यत्र देवालया रम्या राघवप्रतिमायुताः । पूज्यन्ते प्रत्यहं शुद्धचित्तैः कपटवर्जितैः ॥
वाचि नामहरेर्यत्र न वै कलहसङ्कथा । हृदि ध्यानं तु तस्यैव न च कामफलस्मृतिः ॥
देवनं यत्र रामस्य वार्त्ताभिःपूतदेहिनाम् । न जातुचिन्नृणामस्ति सत्यव्यसनमानिनाम्
तस्मिन्वसति धर्मात्मा सुरथः सत्यवान्बली । रघुनाथपदस्मारहृष्टचित्तः परोन्मदः ॥

किं वर्णयामि रामस्य सेवकं सुरथं वरम् ।
यस्याशेषगुणा भूमौ विस्तृताः पावयन्त्यघम् ॥ १२ ॥

सेवकास्तस्य भूपस्य पर्यटन्तः कदाचन । अपश्यन्हमेधस्य हयं चन्दनचर्चितम् ॥ १३॥
ते दृष्ट्वाविस्मयं प्राप्ता हयपत्रमलोकयन् । स्पष्टाक्षरसमायुक्तं चन्दनादिकचर्चितम् ॥
ज्ञात्वा रामेण संमुक्तं हयं नेत्रमनोहरम् । दृष्ट्वा राज्ञे सभास्थाय कथयामासुरुत्सुकाः ॥

स्वामिन्नयोध्यानगरी पतिस्तस्यास्तु राघवः ।
हममेधक्रतोर्योग्यो हयो मुक्तः परिभ्रमन् ॥ १६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स ते पुरस्य निकटे प्राप्तः सेवकसंयुतः। गृहाण त्वं महाराज! हयं तं सुमनोहरम्

शेष उवाच।

इति श्रुत्वा निजप्रोक्तं वाक्यं हर्षपरिप्लुतः। उवाच वीरान्बलिनो मेघगम्भीरयागिरा

सुरथ उवाच।

धन्या वयं राममुखं पश्यामः सह सेवकाः। ग्रहिष्यामि हयं तस्य भटकोटिपरीवृतम्

तदा मोक्ष्यामि वाहं तं यदा रामः समाव्रजेत्। कृतार्थं मम भक्तस्य चिरं ध्यानरतस्य वै

शेष उवाच।

इत्थमुक्त्वा महीपालः सेवकान्स्वयमादिशत्।
गृह्णन्तु वाहं प्रसभं मोच्यो नाश्वोऽक्षिगोचरः॥ २१॥

अनेन सुमहाँल्लाभो भविष्यति तु मे मतम्। यद्रामचरणौ प्रेक्षे ब्रह्मशक्रादिदुर्लभौ॥

स एव धन्यः स्वजनः पुत्रो वा बान्धवोऽथवा।
पशुर्वा वाहनं वापि रामास्तिर्यैन सम्भवेत्॥ २३॥
तस्माद्द गृहीत्वा क्त्वश्वं स्वर्णपत्रेण शोभितम्।
बध्नन्तु वाजिशालायां कामवेगं मनोरमम्॥ २४॥
इत्युक्तास्ते ततो गत्वा वाहं रामस्य शोभितम्।
गृहीत्वा तरसा राज्ञे ददुः सर्वं शुभाङ्गिनम्॥ २५॥

राजा प्राप्य मुदा चाश्वं रामस्य दनुजार्दनः। सेवकान्प्राहबलिनो धर्मकृत्यविचक्षणः

वात्स्यायन! महाबुद्धे! शृणुष्वैकाग्रमानसः। न तस्य विषये कश्चित्परदाररतोनरः॥

न परद्रव्यनिरतो न च कामेषु लम्पटः। न जिह्वाभिरतो मार्गे कीर्त्तयेद्रामकीर्तनात्॥

यः सेवकान्नृपो वक्ति यूयं सेवार्थमागताः। कथयन्तु भवच्चेष्टां धर्मकर्मविशारदाः॥

एकपत्नीव्रतधरा न परद्रव्यलोलुपाः। परापवादनिरता न च वेदोत्पथं गताः॥ ३०॥

श्रीरामस्मरणादीनि कुर्वन्ति प्रत्यहं भटाः। तानहं रामसेवार्थं रक्षाम्यन्तककोपवान्॥

एतद्विरुद्धधर्माणो ये नराःपापसंयुताः। तानहं विषये मे तु वासयामि न दुर्मतीन्॥

तस्य देशे न पापिष्ठाः पापं कुर्वन्ति मानसे। हरिध्यानहताशेषपातका मोदसंयुताः॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदैवमभवद्देशो राजा धर्मेण संयुतः ।
तदा तत्स्था नराः सर्वे मृता गच्छन्ति निर्वृतिम् ॥ ३४ ॥
यमानुचरनिर्वेशो नाभवत्सौरथे पुरे । तदा यमो मुने रूपं धृत्वा प्रागान्महीश्वरम् ॥
वल्कलाम्बरधरी च जटाशोभितशीर्षकः ।
सुरथं तु सभामध्ये ददर्श हरिसेवकम् ॥ ३६ ॥
तुलसी मस्तके यस्य वाचिनाम हरेःपरम् । धर्मकर्मरतांवार्ता श्रावयन्तं निजाञ्जनान्
तदा मुनिं नृपो दृष्ट्वा तपोमूर्तिमिवस्थितम् ।
ववन्दे चरणौ तस्य पाद्यादिकमथाकरोत् ॥ ३८ ॥
सुखोपविष्टं विश्रान्तं मुनिं प्राह नृपाग्रणीः । धन्यमद्य जनुर्मह्यं धन्यमद्य गृहं मम ॥
कथाःकथयतान्मह्यं रामस्य विविधा वराः । याःशृण्वतां पापहानिर्भविष्यति पदेपदे ॥
इत्थमुक्तं समाकर्ण्य जहास स मुनिर्भृशम् ।
दन्तान्प्रदर्शयन्सर्वांस्तालास्फालितपाणिकः ॥ ४१ ॥
हसन्तं तं मुनिं प्राह हसने कारणं किमु । कथयस्व प्रसादेन यथास्यान्मनसःसुखम् ॥
ततो मुनिर्नृपं प्राह शृणु राजन्धियायुतः । यदहंतेऽभिधास्यामि स्मिते कारणमुत्तमम्
त्वया प्रोक्तं हरेःकीर्तिं कथयस्व ममाग्रतः । को हरिःकस्य वा कीर्तिःसर्वे कर्मवशानराः
कर्मणा प्राप्यते स्वर्गःकर्मणा नरकं व्रजेत् । कर्मणैव भवेत्सर्वं पुत्रपौत्रादिकं बहु ॥
शक्रःशतं क्रतूनां तु कृत्वाऽगात्परमंपदम् । ब्रह्माऽपि कर्मणालोकं प्राप्य सत्याख्यमद्भुतम्
अनेके कर्मणा सिद्धा मरुदादय ईशिनः । कुर्वन्ति भोगसौख्यं च अप्सरोगणसेविताः
तस्मात्कुरुष्व यज्ञादीन्यजस्व किल देवताः । यथा ते विमलाकीर्तिर्भविष्यति महीतले
इति श्रुत्वा तु तद्वाक्यं कोपक्षुभितमानसः । उवाच रामैकमना विप्रं कर्मविशारदम् ॥
मा ब्रूहि कर्मणो वार्तां क्षयिष्णु फलदायिनीम् ।
गच्छ मन्नगरोपान्ताद् बहिर्लोकविगर्हितः ॥ ५० ॥
इन्द्रःपतिष्यति क्षिप्रं पतिष्यत्यपि पद्मजः । न पतिष्यन्ति मनुजा रामस्य भजनोत्सुकाः
पश्य ध्रुवं च प्रह्लादं विभीषणमथाद्भुतम् । ये चान्ये रामभक्ता वै कदापि न पतन्तिते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ये रामनिन्दका दुष्टास्तानिमे यमकिङ्कराः। ताडयिष्यन्ति लोहस्य मुद्गरैःपाशबन्धनैः
ब्राह्मणत्वाद्देहदण्डं न कुर्यां ते द्विजाधम!।
गच्छ गच्छ मदालोकात्ताडयिष्यामि चान्यथा ॥ ५४ ॥
इत्थमुक्तनृति श्रेष्ठे भूपे सुरथसंज्ञिते। सेवका बाहुना धृत्वा निष्कासयितुमुद्यताः ॥५५
तदा यमो निजंरूपं धृत्वा लोकैकवन्दितम्। प्राह भूपं प्रतुष्टोऽस्मि याचस्व हरिसेवक!
मयाप्रलोभितो वाग्भिर्बह्वीभिरपि सुव्रत। चलितोऽसि न रामस्य सेवायाःसाधुसेवितः
तदा प्रोवाच भूमीशो यमं दृष्ट्वा सुतोषितम्।
उवाच यदि तुष्टोऽसि देहि मे वरमुत्तमम् ॥ ५८ ॥
तावन्मम न वै मृत्युर्यावद्रामसमागमः। न भयं मे भवत्तोहि कदा च न हि धर्मराट्
तदोवाच यमो भूपमिदं तव भविष्यति। सर्वं त्वदीप्सितं तथ्यं करिष्यति रघोःपतिः
इत्युक्त्वान्तर्हितो धर्मो जगाम स्वपुरं प्रति। प्रशस्य तस्य चरितं हरिभक्ति परात्मनः
स राजा धार्मिको रामसेवकः परया मुदा।
गृहीत्वाऽश्वं प्रत्युवाच सेवकान्हरिसेवकान् ॥६२॥
मयागृहीतो वाहोऽसौ राघवस्य महीपतेः। सज्जीभवन्तु सर्वत्र यूयं रणविशारदाः
इति प्रोक्तास्तु ते सर्वे भटा राज्ञो महाबलाः।
सज्जीभूताःक्षणादेव सभायां जग्मुरुत्सुकाः ॥ ६४ ॥
राज्ञो वीरा दशसुताश्चम्पको मोहकस्तथा। रिपुञ्जयोऽतिदुर्वारःप्रतापी बलमोदकः ॥
हर्यक्षःसहदेवश्च भूरिदेवःसुतापनः। इति राज्ञो दशसुताःसज्जीभूता रणाङ्गणे ॥ ६६ ॥
यातुमिच्छामकुर्वंस्ते महोत्साहसमन्विताः।
राजाऽपि स्वरथं चित्रं हेमशोभाविनिर्मितम् ॥ ६७ ॥
आह्वयामास सुजवैर्वाजिभिःसमलङ्कृतम्। रणोत्साहेनसंयुक्तःसर्वसैन्यपरीवृतः ॥
सभायां सेवकान्सर्वान्दिशन्नास्ते महीपतिः ॥ ६९ ॥
इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
सुरथेन राज्ञा हयग्रहणं नामैकोनपञ्चाशत्तमोऽध्यायः ॥४९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# पञ्चाशत्तमोऽध्यायः

## शत्रुघ्नेन सुरथं प्रति दौत्येनाङ्गदप्रेषणम् ।

शेष उवाच ।

अथ रामानुजो वेगात्समागत्य स्वसेवकान् ।
पप्रच्छ कुत्रवाहोऽसौ याज्ञिकः सुमनोहरः ॥ १ ॥

तदा ते वचनं प्रोचुः शत्रुघ्नं सुमहाबलाः । न जानीमो भटाः केचिद्धयं नीत्वा गताः पुरे
वयं च धिक्कृताः सर्वे बलिभी राजसेवकैः । अत्र प्रमाणं भगवानिति कर्तव्यतां प्रति
तच्छ्रुत्वा वचनं तेषां शत्रुघ्नःकुपितोभृशम् । दशन्रोषात्स्वदशनाञ्जिह्वया लेलिहन्मुहुः
उवाच वीरो मद्वाहं हृत्वा कुत्र गमिष्यति । इदानीं पातये बाणै पुरंजनसमन्वितम् ॥
इत्युक्त्वा सुमतिं प्राह कस्येदं पुटभेदनम् । को वर्ततेऽस्याधिपतिर्योमे वाहमजीहरत्

शेष उवाच ।

इति वाक्यं समाकर्ण्य भूपतेः कोपसंयुतम् । जगाद मन्त्री सुगिरास्फुटाक्षरसमन्वितम्
विद्धीदं कुण्डलं नाम नगरं सुमनोहरम् ।
अस्मिन्वसति धर्मात्मा सुरथः क्षत्त्रियो बली ॥ ८ ॥
नित्यं धर्मपरो रामचरणद्वन्द्वसेवकः । मनसा कर्मणा वाचा हनुमानिव सेवकः ॥९॥
चरितान्यस्य शतशो वर्तन्ते धर्मकारिणः । महाबलपरीवारः सुरथः सर्वशोभनः ॥१०
महद्युद्धं भवेदत्र हृतश्चेद्वाहसत्तमः । अनेके प्रपतिष्यन्ति वीरा रणविशारदाः ॥ ११ ॥
एवमुक्तं समाश्रुत्य शत्रुघ्नः सचिवं प्रति । उवाच पुनरप्येवं वचनं वदतां वरः ॥ १२॥

शत्रुघ्न उवाच ।

कथमत्र प्रकर्तव्यं रामाश्वोऽनेन चेद्धृतः । नायाति योद्धुं प्रबलं कटकं वीरसेवितम्

सुमतिरुवाच ।

दूत प्रेष्यो महाराज राजानां प्रतिवाग्मिकः । यद्वाक्येन समायाति बलेन बलिनां वरः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नोचेदज्ञानतो वाहो धृतः केनापि मानिना। अर्पयिष्यति नः साधुमश्वं क्रतुवरं शुभम्

इति श्रुत्वा तु तद्वाक्यं शत्रुघ्नो बुद्धिमान्बली।
अङ्गदं प्रत्युवाचेदं वचनं विनयान्वितम् ॥ १६ ॥

शत्रुघ्न उवाच।

याहि त्वं निकटस्थे वै सुरथस्य महापुरे। दूतत्वेन ततो गत्वा प्रब्रूहि नृपतिं प्रति ॥
त्वया धृतो रामवाहो ज्ञानतोऽज्ञानतोऽपि वा।अर्पयतु न वा यातु प्रधनं वीरसंयुतम्
रामस्य दौत्यं लङ्कायां रावणं प्रति यत्कृतम्। तथैव कुरु भूयिष्ठवलसंयुतवुद्धिमन् ! ॥

शेष उवाच।

एतच्छ्रुत्वाऽङ्गदो वीर ओमिति प्रोच्य भूमिपम्।
जगाम संसदो मध्ये वीरश्रेणिसमन्विते ॥ २० ॥

ददर्श सुरथं भूपं तुलसीमञ्जरीधरम्। रामभद्रं रसनया ब्रुवन्तं सेवकान्निजान् ॥२१॥
राजाऽपि दृष्ट्वा प्लवगं मनोहरवपुर्धरम्। शत्रुघ्नदूतं मत्वाऽपि बालिजं प्रत्यभाषत ॥

सुरथ उवाच

प्लवगाधिप ! कस्मात्त्वमागतोऽत्र कथं भवान्।
ब्रूहि मे कारणं सर्वं यथा ज्ञात्वा करोमि तत् ॥ २३ ॥

शेष उवाच।

इति सम्भाषमाणं तं प्रत्युवाच कपीश्वरः। विस्मयंश्चेतसि भृशं रामसेवाकरंनृणाम्
जानीहि मां नृपश्रेष्ठ ! बालिपुत्रं हरीश्वरम्। शत्रुघ्नेन च दूतत्वे प्रेषितोभवतोऽन्तिकम्

सेवकैः कैश्चिदागत्य धृतोऽश्वो मम साम्प्रतम्।
अज्ञानतो महान्याय्यं कुर्वद्भिः सहसा नृप ॥ २६ ॥

तमश्वं सह राज्येन सहपुत्रैर्मुदान्वितः। शत्रुघ्नं याहि चरणे पतित्वाऽऽशु प्रदेहि च ॥
नोचेच्छत्रुघ्ननिर्मुक्तनाराचैः क्षतविग्रहः । पृथ्वीतलमलङ्कुर्वंश्छयिष्यसि विशीर्षकः ॥

येन लङ्कापतिर्नाशं प्रापितो लीलया क्षणात्।
तस्याश्वं यागयोग्यं तु हृत्वा कुत्र गमिष्यसि ॥ २९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शेष उवाच ।

इत्यादि भाषमाणं तं प्रत्युवाच महीश्वरः । सर्वं तथ्यं ब्रवीषित्वं नानृतं तवभाषितम्
परं श‍ृणुष्व मद्वाक्यं शत्रुघ्नपदसेवक ! । मया धृतो महानश्वो रामचन्द्रस्य धीमतः ॥
न मोक्ष्ये सर्वथा वाहं शत्रुघ्नादि भयादहम् । चेद्रामः स्वयमागत्य दर्शनं दास्यते मम
तदाहं चरणौ नत्वा दास्यामि सुतसंयुतः । सर्वं राज्यं कुटुम्बं च धनंधान्यं बलं बहु

क्षत्त्रियाणामयं धर्मः स्वामिनाऽपि विरुद्ध्यते ।
धर्मेण युद्धं तत्रापि रामदर्शनमिच्छता ॥ ३४ ॥

शत्रुघ्नादीन्प्रवीरांस्तानधुनाहं क्षणादपि । जित्वा बध्नामि मद्गेहे नोचेद्रामः समाव्रजेत्

शेष उवाच ।

इति श्रुत्वाङ्गदो धीमाञ्जहास नृपतिं तदा । उवाच च महद्वाक्यं महाधैर्यसमन्वितम् ॥

अङ्गद उवाच ।

बुद्धिहीनः प्रवदसि वृद्धत्वात्सा गता तव । यत्त्वं शत्रुघ्ननृपतिं धिक्करोषि धिया बली

यो मान्धातृरिपुं दैत्यं लवणं लीलयाऽवधीत् ।
येनानेके जिताः सङ्ख्ये वैरिणः प्रबलोद्धताः ॥३८ ॥
विद्युन्माली हतो येन राक्षसः कामगे स्थितः ।
त्वं तं बध्नासि वीरेन्द्रं मतिहीनः प्रभासि मे ॥ ३९ ॥
भ्रातृजो यस्य सुबली पुष्कलः परमास्त्रवित् ।
येन रुद्रगणः सङ्ख्ये वीरभद्रः सुतोषितः ॥ ४० ॥
वर्णयामि किमेतस्य पराक्रान्तिं बलोर्जिताम् ।
येन नास्ति समः पृथ्व्यां बलेन यशसा श्रिया ॥ ४१ ॥

हनूमान्यस्य निकटे रघुनाथपदाब्जधीः । यस्यानेकानि कर्माणि भविष्यन्ति श्रुतानि ते
सत्रिकूटा राक्षसपूर्दग्धा येन क्षणाद्बलात् । अक्षो येन हतः पुत्रो राक्षसेन्द्रस्य दुर्मतेः
द्रोणो नाम गिरिर्येन पुच्छाग्रेण सदैवतः । आनीतो जीवनार्थं तु सैनिकानां मुहुर्मुहुः

जानाति रामश्चारित्रं नान्यो जानाति मूढधीः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यं कपीन्द्रं मनाक्स्वान्तान्न विस्मरति सेवकम् ॥ ४५ ॥
सुग्रीवाद्याः कपीन्द्रा ये पृथ्वीं सर्वां ग्रसन्ति ये ।
ते शत्रुघ्नं नृपं सर्वे सेवन्ते प्रेक्षणोत्सुकाः ॥ ४६ ॥

कुशध्वजो नीलरत्नो रिपुतापो महास्त्रवित् । प्रतापाग्र्यः सुबाहुश्च विमलः सुमदस्तथा
राजा वीरमणीः सत्ययुतो रामस्य सेवकः । एतेऽन्येपि नृपा भूमेःपतयः पर्युपासते ॥
तत्र त्वं क्षीरजलधौ मशकः कोभवानिनि । तज्ज्ञात्वा गच्छ शत्रुघ्नं कृपालुं पुत्रकैर्युतः
वाहं समर्प्य गन्तासि रामं राजीवलोचनम् । दृष्ट्वा कृतार्थी कुरुषे स्वाङ्गानि जनुषा सह

शेष उवाच ।

राजा प्रोवाच तं दूतं प्रब्रुवन्तमनेकधा । एतान्दर्शयसि क्षिप्रं सर्वेन मम गोचराः ॥
यादृशं मद्बलं दूत ! तादृशं न हनूमतः । यो रामं पृष्ठतः कृत्वा प्रागाद्यागस्य पालने ॥

यद्यहं मनसा वाचा कर्मणा कुतुकान्वितः ।
भजामि रामं तर्ह्याशु दर्शयिष्यति स्वां तनुम् ॥ ५३ ॥
अन्यथा हनुमन्मुख्या वीरा बध्नन्तु मां बलात् ।
गृह्णन्तु वाहं तरसा रामभक्तिसमन्विताः ॥ ५४ ॥

गच्छत्वं नृप शत्रुघ्नं कथयस्व ममोदितम् । सज्जीभवन्तु सुभटा एष यामि रणे बली
स विचार्य यथा युक्तं करिष्यति रणाङ्गणे । मोचयन्तु महावाहं न वा मामाददन्तु ते

शेष उवाच ।

इति श्रुत्वा स्मितं कृत्वा ययौ वीरो यतो नृपः ।
गत्वा निवेदयामास यथोक्तं सुरथेन वै ॥ ५७ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे
अङ्गदस्य दूतत्ववाक्यं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# एकपञ्चाशत्तमोऽध्यायः

## चम्पकाख्येन राजपुत्रेण सह पुष्कलस्य युद्धम् ।

शेष उवाच ।

तच्छ्रुत्वा भाषितं तस्य सुरथस्याङ्गदाननात् । सज्जीभूता रणे सर्वे रथस्था रणकोविदाः
पटहानां निनादोऽभूद्भेरीनादस्तथैवच । वीराणां गर्जनानादाः प्रादुर्भूता रणाङ्गणे ॥
रथचीत्कारशब्देन गजानां बृंहितेन च । व्याप्तं तत्सकलं विश्वं दिवं यातो महारवः

रणोत्साहेन संयुक्ता वीरा रणविशारदाः ।
कुर्वन्ति विविधान्नादान्कातरस्य भयङ्करान् ॥ ४ ॥

एवं कोलाहले वृत्ते सुरथो नाम भूमिपः । स्वसुतैः सैनिकैश्चाथ वृतः प्रायाद्रणाङ्गणे
गजैरथैर्हयैः पत्तिव्रजैः पूर्णां तु मेदिनीम् । कुर्वन्समुद्र इव तां प्लावयन्ददृशे भटैः ॥ ६ ॥
शङ्खनादेन सङ्घुष्टं जयनादैस्तथैव च । वीक्ष्य तं प्रधनोद्युक्तं सुमतिं प्राह भूमिपः ॥

शत्रुघ्न उवाच ।

एष राजा समायातो महासैन्यपरीवृतः । अत्र यत्कृत्यमस्माकं तद्वदस्व महामते ! ॥

सुमतिरुवाच ।

योद्धव्यमत्र बहुभिर्वीरै रणविशारदैः । पुष्कलादिभिरत्युग्रैः सर्वशस्त्रास्त्रकोविदैः ॥
राज्ञा सह समीरस्य पुत्रः परमशौर्यवान् । युद्धं करोतु सुबलः परयुद्धविशारदः ॥

शेष उवाच ।

इति ब्रूते महामात्यो यावत्तावन्नृपात्मजाः । रणाङ्गणे धनूंष्यद्धा स्फारयामासुरुद्धताः

तान्वीक्ष्य योधाः सुबलाः पुष्कलाद्या रणोत्कटाः ।
अभिजग्मुः स्यन्दनैः स्वैर्धनुर्बाणकरा मताः ॥ १२ ॥
चम्पकेन महावीरः पुष्कलः परमास्त्रवित् ।
द्वैरथेनैव युयुधे महावीरेण शालिना ॥ १३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मोहकं योधयामास जानकिः सकुशध्वजः। रिपुञ्जयेनविमलो दुर्वारेण सुबाहुकः॥
प्रतापिना प्रतापाग्र्यो बलमोदेन चाङ्गदः। हर्यक्षेण नीलरत्नः सहदेवेन सत्यवान्॥१५॥
राजा वीरमणिर्भूरिदेवेन युयुधे बली। असुतापेन चोग्राश्वो युयुधे बलसंयुतः॥
द्वैरथं तु महद्युद्धमकुर्वन्युद्धकोविदाः। सर्वे शस्त्रास्त्रकुशलाः सर्वे युद्धविशारदाः॥
एवं प्रवृत्ते सङ्ग्रामे सुरथस्य सुतैस्तदा। अत्यन्तं कदनं तत्र बभूव मुनिसत्तम!॥

पुष्कलश्चम्पकं प्राह किन्नामासि नृपात्मज!।
धन्योऽसि यो मया सार्धं रणमध्यमुपेयिवान्॥ १९॥
इदानीं तिष्ठ किं यासि कथन्ते जीवितं भवेत्।
एहि युद्धं मया सार्धं सर्वशस्त्रास्त्रकोविद!॥ २०॥

इत्यभिव्याहृतं तस्य श्रुत्वा राजात्मजोबली। जगाद पुष्कलं वीरो मेघगम्भीरयागिरा

चम्पक उवाच।

न नाम्ना न कुलेनेदं युद्धमत्र भविष्यति। तथापि तव वक्ष्येऽहं स्वनाम बलपूर्वकम्॥
ममाता राघवेशो मत्पिताराघवःस्मृतः। ममबन्धू रामचन्द्रःस्वजनो ममराघवः॥
मन्नाम रामदासश्च सदा रामस्य सेवकः। तारयिष्यति मांयुद्धे रामो भक्तकृपाकरः॥
लोकानां मतमास्थाय प्रब्रवीमि तवाधुना। सुरथस्य सुतश्चाहं माता वीरवती मम॥

मन्नाम यो मधौ सर्वाञ्छोभनान्विदधाति वै।
मधुपायं रसावासं त्यजन्ति मधुमोहिताः॥ २६॥

वर्णेन स्वर्णसदृशो मध्ये लिङ्गवपुर्धरः। तदाख्ययाभिधां वीर जानीहि मम मोहिनीम्

युध्यस्व बाणैः प्रधने न को जेतुं हि मां क्षमः।
इदानीं दर्शयिष्यामि स्वपराक्रममद्भुतम्॥ २८॥

शेष उवाच।

इतिश्रुत्वा महद्वाक्यं पुष्कलो हृदितोषितः। तं दुर्जयं मन्यमानः शरान्मुञ्चन्रणेऽभवत्
शरसङ्घं प्रमुञ्चन्तंकोटिधा पुष्कलं ययौ। चम्पकःकोपसंयुक्तो धनुःसज्यमथाकरोत्॥

मुमोच निशितान्बाणान्वैरिवृन्दविदारणान्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वनामचिह्नितान्स्वर्णपुङ्खभागसमन्वितान् ॥ ३१ ॥
तांश्चिच्छेद महावीरः पुष्कलः प्रधनाङ्गणे ।
शरान्धकारं सर्वत्र मुञ्चन्बाणाञ्छिलाशितान् ॥ ३२ ॥

स्वबाणच्छेदनं दृष्ट्वा कृतं वीरेण चम्पकः । आह्वयामास बलिनं पुष्कलं कोपपूरितः
मा प्रयाहि रणंत्यक्त्वेति ब्रुवन्समरे पुनः ॥ पुष्कलं हृदये बाणैर्विव्याध दशभिस्त्वरन्
ते बाणाः पुष्कलस्याहो हृदये तीव्रवेगिनः । आगत्य सुभृशं लग्नाःशोणितं पपुरूर्जितम्
तैर्बाणैर्व्यथितोवीरःशरान्पञ्च समाददे । सुतीक्ष्णाग्रान्महाकोपाद्दारयन्पर्वतानिव ॥

ते बाणास्तस्य बाणाश्च परस्परमथोर्जिताः ।
आकाशे रचिताश्छिन्नाः शतधा राजसूनुना ॥ ३७ ॥
छित्त्वा बाणान्सुतीक्ष्णाग्रान्सुरथाङ्गोद्भवो बली ।
बाणाञ्छतं समाधत्त पुष्कलं ताडितुं हृदि ॥ ३८ ॥

तेबाणाःशतधाच्छिन्नाःपुष्कलेन महात्मना । अपतन्समरोपान्ते शरवेगप्रपीडिताः ॥
तदा तत्सुमहत्कर्म दृष्ट्वा राज्ञःसुतोबली । सहस्रेण शराणां च ताडयन्वक्षसिस्फुटम्
तानप्याशु प्रचिच्छेद पुष्कलःपरमास्त्रवित् । पुनरप्याशु स्वेचापे समाधत्तायुतं शरान्

तानप्याशु प्रचिच्छेद पुष्कलः परमास्त्रवित् ।
ततोऽत्यन्तं प्रकुपितः शरवृष्टिमथाकरोत् ॥ ४२ ॥

शरवृष्टिं समायान्तीं मत्वा चम्पकवीरहा । साधुसाधु प्रशंसन्तं पुष्कलं समताडयत् ॥

पुष्कलश्चम्पकं दृष्ट्वा महावीर्यसमन्वितम् ।
ब्रह्मणोऽस्त्रं समाधत्त स्वे चापे सर्वशस्त्रवित् ॥ ४४ ॥

तेन मुक्तं महाशस्त्रं प्रजज्वाल दिशोदश । खं रोदसी व्याप्यविश्वं प्रलयं कर्तुमुद्यतम्

चम्पको मुक्तमस्त्रं तद् दृष्ट्वा सर्वास्त्रकोविदः ।
तत्संहर्तुं तदेवास्त्रं मुमोच रिपुमुद्यतम् ॥ ४६ ॥

द्वयोरेकतमं तेजः प्रलयं मेनिरे जनाः । सञ्जहार तदास्त्रास्त्रमेकीभूतं परास्त्रकम् ॥४७

तत्कर्म चाद्भुतं दृष्ट्वा पुष्कलस्तिष्ठ तिष्ठ च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रुवञ्छरानमोघांस्तु चम्पकं स क्रुधाऽहनत् ! ॥ ४८ ॥
चम्पकस्ताञ्छरान्मुक्तानगणय्य महामनाः । रामास्त्रं प्रमुमोचाथ पुष्कलंप्रति दारुणम्
तन्मुक्तमस्त्रमालोक्य चम्पकेन महात्मना । छेत्तुं यावन्मनश्चक्रे तावद्ग्रस्तः शरैण सः
बद्धश्चम्पकवीरेण रथे स्वे स्थापितःपुनः । पुरं प्रेषयितुं तावन्मनश्चक्रे महामनाः ॥५१॥
हाहाकारो महानासीद्बद्धे पुष्कलसंज्ञके । शत्रुघ्नं प्रययुर्योधाः पलायनपरायणाः ॥
भग्नांस्तान्वीक्ष्य शत्रुघ्नो हनूमन्तमुवाच ह ।
केन वीरैण मे भग्नं बलं वीरैरलङ्कृतम् ॥ ५३ ॥
तदोवाच महीनाथ ! पुष्कलं परवीरहा । बद्ध्वानयति वीरोऽसौ चम्पकःस्वपदोद्धुरः
तस्येद्दग्वाक्यमाकर्ण्य शत्रुघ्नःकोपसंयुतः । उवाच पवनोद्भूतं मोचयाशु नृपात्मजात्
महाबलः सुतश्चास्य बद्ध्वा यः पुष्कलं भटम् ।
तस्मान्मोचय वीराग्र्य ! कथं तिष्ठसि चाहवे ॥ ५६ ॥
एतद्वाक्यं समाकर्ण्य हनूमानोमिति ब्रुवन् । जगाम तं मोचयितुं पुष्कलं चम्पकाद्भटात्
हनूमन्तमथालोक्य तं मोचयितुमागतम् । बाणैःशतैश्च साहस्रैर्जघान परकोपनः ॥५८॥
बाणांस्तान्स बभञ्जाशु मुक्तांस्तेन महात्मना । पुनरप्येनमेवाशु बाणान्मुञ्चन्महानभूत्
तान्सर्वांश्चूर्णयामास नाराचान्वैरिमोचितान् ।
शालं करे समाधृत्य जघान नृपनन्दनम् ॥ ६० ॥
शालं तेन विनिर्मुक्तं तिलशःकृत्तवान्बली । गजो हनूमता मुक्तो नृपनन्दनमस्तके ॥
सोऽप्याहतश्चम्पकेन मृतो भूमौ पपात सः । शिलाःसंमोचयामास हनूमान्परमास्त्रवित्
चम्पकस्ताःशिलाः सर्वाः क्षणाच्चूर्णितवान्भृशम् ।
बाणयन्त्रिकया ब्रह्मन्महच्चित्रमभूदिदम् ॥ ६३ ॥
स्वमुक्तास्ताः शिलाः सर्वाश्चूर्णिता वीक्ष्य मारुतिः ।
चुकोप हृदयेऽत्यन्तं बहुवीर्यमिति स्मरन् ॥ ६४ ॥
आगत्य च करैर्धृत्वा नभस्युत्पतितःकपिः । तावद्ययौ नेत्रपथादुपरि क्षिप्रवेगवान् ॥
चम्पकस्तं हनूमन्तं युयुधे नभसिस्थितः । बाहुयुद्धेन महता ताडितः कपिपुङ्गवः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चुकोप मानसे वीरो गर्वपर्वतदारुणः । पदा धृत्वा चम्पकं तं ताडयामास भूतले ॥

ताडितोऽसौ कपीन्द्रेण क्षणादुत्थाय वेगवान् ।

हनूमन्तं तु लाङ्गूले धृत्वा बभ्राम सर्वतः ॥ ६८ ॥

कपीन्द्रस्तद्बलं वीक्ष्य हसन्पादेऽग्रहीत्पुनः । भ्रामयित्वा शतगुणं गजोपस्थे ह्यपातयत्

पपात भूमौ सुबलो राजसूनुःस चम्पकः । मूर्छितो वीरभूषाढ्यमलङ्कुर्वन्रणाङ्गणम् ॥

तदा हाहेति वै लोकाश्चुक्रुशुश्चम्पकानुगाः । पुष्कलं मोचयामास बद्धं चम्पकपाशतः

इति श्रीपाद्मे महापुराणे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे

पुष्कलमोचनं नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

## द्विपञ्चाशत्तमोऽध्यायः

### सुरथहनूमतोः संवादपूर्वकं भयङ्करं युद्धम् ।

शेष उवाच ।

चम्पकं पतितं दृष्ट्वा सुरथःक्षत्त्रियोबली । पुत्रदुःखपरीताङ्गो जगाम स्यन्दनेस्थितः

कपीन्द्रमाजुहावाथ सुरथःकोपसंयुतः । निःश्वासांश्चबहून्मुञ्चन्महाबलसमन्वितः ॥२॥

आह्वयन्तं नृपं दृष्ट्वा निजं वीरःकपीश्वरः । जगाम तं महावीरो महावेगसमन्वितः ॥

तमागतं हनूमन्तं तृणीकुर्वन्तमुद्भटान् । उवाच सुरथो राजा मेघगम्भीसुस्वरः ॥ ४ ॥

सुरथ उवाच ।

धन्योऽसि कपिवर्य ! त्वं महाबलपराक्रमः । येन राममहत्कृत्यं कृतं राक्षसके पुरे ॥

त्वं रामचरणस्यासि सेवको भक्तिसंयुतः । त्वया वीरेणमत्पुत्रःपातितश्चम्पकोबली

इदानीं त्वां तु सम्बध्य गन्तास्मि नगरे मम ।

यत्नात्तिष्ठ कपीशेश ! सत्यमुक्तं मया स्मृतम् ॥ ७ ॥

इति भाषितमाकर्ण्य सुरथस्य कपीश्वरः । उवाच धीरया वाण्या रणे वीरैकभूषिते ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हनूमानुवाच ।

त्वं रामचरणस्मारी वयं रामस्य सेवकाः ।
बध्नासि चेन्मां प्रसभं मोचयिष्यति मत्प्रभुः ॥ ९ ॥
कुरु वीर ! भवत्स्वान्तस्थितं सत्यं प्रतिश्रुतम् ।
रामं स्मरन्वै दुःखान्तं याति वेदा वदन्त्यदः ॥ १० ॥

शेष उवाच ।

इति ब्रुवन्तं सुरथःप्रशस्य पवनात्मजम् । विव्याध बाणैर्बहुभिःशितैःशाणेन दारुणैः ॥
तान्मुक्तानगणय्याथ बाणाञ्छोणितपातिनः ।
करे जग्राह कोदण्डं सज्यं शरसमन्वितम् ॥ १२ ॥
गृहीत्वा करयोश्चापं बभञ्ज कुपितःकपिः । चीत्कुर्वंस्त्रासयन्वीरान्नखैर्दीर्णान्सृजन्भटान्
तेन भग्नं धनुर्दृष्ट्वा स्वकीयं गुणसंयुतम् । अपरं धनुरादत्त महद्गुणविशोभितम् ॥
तच्चापि जगृहे रोषात्कपिश्चापं बभञ्ज तत् ।
अन्यच्चापं समादत्त तद्बभञ्ज महाबलः ॥ १५ ॥
तस्मिंश्चापे प्रभग्नेऽपि सोऽन्यद्धनुरुपाददे । सोऽपि चापं बभञ्जाशु महावेगसमन्वितः
एवं राज्ञस्तु चापानामशीतिर्विदलीकृता । क्षणेक्षणे महारोषात्कुर्वन्नादाननेकधा ॥
तदाऽत्यन्तं प्रकुपितःशक्तिमुग्रामथाददे । शक्त्या स ताडितो वीरःपपात क्षणमुत्सुकः
उत्थाय स्यन्दनं राज्ञो जग्राह कुपितोभृशम् । उड्डीनस्तं गृहीत्वा तु समुद्रमतिवेगतः ॥
तमुड्डीनं समालक्ष्य सुरथःपरवीरहा । ताडयामास परिघैर्हृदि मारुतिमुद्यतम् ॥ २० ॥
मुक्तस्तेन रथो दूराच्चूर्णीभूतोऽभवत्क्षणात् ।
सोऽन्यं रथं समारुह्य ययौ वेगात्समीरजम् ॥ २१ ॥
हनूमांस्तद्रथं पुच्छे संवेष्ट्य प्रधनाङ्गणे । हयसारथिसंयुक्तं बभञ्ज सपताकिनम् ॥
अन्यंरथं समास्थाय ययौ राजा महाबलः । बभञ्ज तं रथं वेगान्मारुतिःकुपिताङ्गकः ॥
भग्नं तं स्यन्दनं वीक्ष्य सुरथोऽन्यं समाश्रितः ।
भग्नःस तेन सहसा हयसारथिसंयुतः ॥ २४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवमेकोनपञ्चाशद्रथा भग्ना हनूमता । तत्कर्मवीक्ष्य राजाऽपि समयं प्राप ससैनिकः ॥
कुपितःप्राहकीशेंद्रं धन्योऽसि पवनात्मज ! । पराक्रममिन्निदंकर्म न कर्ता न करिष्यति
क्षणमेकं प्रतीक्षस्व यावत्सज्यं धनुस्त्वहम् ।
करोमि पवनोद्भूत ! रामपादाब्जषट्पद ! ॥ २७ ॥
इत्युक्त्वा चापमात्तज्यं कृत्वा रोषपरिप्लुतः । अस्त्रं पाशुपतं नाम संदधे शरउल्वणे
ततो भूताश्च वेतालाः पिशाचा योगिनीमुखाः ।
प्रादुर्बभूवुः सहसा भीषयन्तः समीरजम् ॥ २९ ॥
कपिःपाशुपतैरस्त्रैर्बद्धोलोकैरभीक्षितः । हाहेति च वदन्त्येते यावत्तावत्समीरजः ॥३०॥
स्मृत्वा रामं स्वमनसा त्रोटयामास तत्क्षणात् ।
स मुक्तगात्रः सहसा युयुधे सुरथं नृपम् ॥ ३१ ॥
तं मुक्तगात्रं संवीक्ष्य सुरथःपरमास्त्रवित् । महाबलं मन्यमानो ब्राह्ममस्त्रं समाददे ॥
मारुतिर्ब्राह्ममस्त्रं तुनिजगाल हसन्बली । तन्निगीर्णं नृपो दृष्ट्वा रामं सस्माररभूमिपः
स्मृत्वा दाशरथिं रामं रामास्त्रं स्वशरासने । सन्धाय तं जगादेदं बद्धोऽसि कपिपुङ्गव
श्रुत्वा तत्प्रक्रमेद्यावत्तावद्बद्धो रणाङ्गणे ॥ राज्ञा रामास्त्रतो वीरो हनूमान्रामसेवकः
उवाच भूपं हनुमान्किं करोमि महीपते ! । मत्स्वाम्यस्त्रेण सम्बद्धो नान्येन प्राकृतेन वै
तन्मानयामि भूपाल ! नयस्व स्वपुरं प्रति ।
मोचयिष्यति मत्स्वामी आगत्य स दयानिधिः ॥ ३७ ॥
बद्धे समीरजे क्रुद्धःपुष्कलो भूमिपं ययौ । तं पुष्कलं समायातं विव्याध बहुभिःशरैः
अनेकबाणसाहस्रैर्निजघान नृपंबली । राज्ञानेके शरास्तस्या च्छिन्नाःप्रधनमण्डले ॥
एवं समरसङ्क्रुद्धे सुरथे पुष्कले तथा । बाणैर्व्याप्तं जगत्सर्वं स्थास्नुभूयश्चरिष्णु च
तेषां रणोद्यमं वीक्ष्य मुमुहुः सुरसैनिकाः ।
मानवानां तु का वार्ता क्षणात्त्रासं समीयुषाम् ॥ ४१ ॥
अस्त्रप्रत्यस्त्रविगमैर्महामन्त्रपरिष्टुतैः । बभूव तुमुलं युद्धं वीराणां रोमहर्षणम् ॥४२॥
तदा प्रकुपितो राजा नाराचं तु समाददे । छिन्नः स तु क्रुधामुक्तैर्वत्सदन्तैः स भारतैः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

छिन्ने तस्मिञ्छरे राजा कोपादन्यं समाददे ।
छिनत्ति यावत्स शरं तावल्लग्नो हृदि क्षतः ॥४४॥
मूर्च्छां प्राप महातेजाः पुष्कलो महदद्भुतम् ।
युद्धं विधाय सुमहद्राज्ञा सह महामतिः ॥ ४५ ॥

पुष्कले पतिते राजा शत्रुघ्नः शत्रुतापनः । सुरथं प्रति सङ्क्रुद्धो जगाम स्यन्दनस्थितः
उवाच सुरथं भूपं रामभ्राता महाबलः । त्वया महत्कृतं कर्म यद्बद्धः पवनात्मजः ॥
पुष्कलोऽपि महावीरस्तथान्ये मम सैनिकाः । पातिताः प्रधने घोरे महाबलपराक्रमाः

इदानीं तिष्ठ मद्वीरान्पातयित्वा रणाङ्गणे ।
कुत्र यास्यसि भूमीश ! सहस्व मम सायकान् ॥ ४६ ॥

इत्थामाश्रुत्य वीरस्य भाषितं सुरथो बली । जगाद रामपादाब्जं दधच्चेतसि शोभनम्

मया ते पातिताः सङ्ख्ये वीरा मारुतजोन्मुखाः ।
इदानीं पातयिष्यामि त्वामपि प्रधनाङ्गणे ॥ ५१ ॥
स्मरस्व रामं यो वीरस्त्वामागत्य प्ररक्षति ।
अन्यथा जीवितं नास्ति मत्पुरः शत्रुतापन ! ॥ ५२ ॥

इत्युक्त्वा बाणसाहस्रैस्तं जघान महीपतिः । शत्रुघ्नं शरसङ्घातपञ्जरे न्यदधात्परम्
शत्रुघ्नः शरसङ्घातं मुञ्चन्तं वह्निदैवतम् । अस्त्रं मुमोच दाहार्थं शराणां नतपर्वणाम्

तदस्त्रं मुक्तमालोक्य राजा वै सुरथो महान् ।
वारुणास्त्रेण शमयन्विव्याध शरकोटिभिः ॥ ५५ ॥

तदा तद्योगिनीदत्तमस्त्रं धनुषि सन्दधे । मोहनं सर्ववीराणां निद्राप्रापकमद्भुतम् ॥

तन्मोहनमहास्त्रं स वीक्ष्य राजा हरिं स्मरन् ।
जगाद शत्रुघ्नमयं सर्वशस्त्रास्त्रकोविदः ॥ ५७ ॥

मोहितस्य मम श्रीमद्रामस्य स्मरणेन ह । नान्यन्मोहनमाभाति ममापि भयतापदम् ॥
इत्युक्तवति वीरे तु मुमोच स महास्त्रकम् । तेन बाणेन संछिन्नं पपात रणमण्डले

तन्मोहनं महास्त्रं तु निष्फलं वीक्ष्य भूमिपे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्यन्तं विस्मयं प्राप्य बाणं धनुषि सन्दधे ॥ ६० ॥
लवणो येन निहतो महासुरविमर्दनः । तं बाणं चाप आधत्त घोरं कान्त्यानलप्रभम् ॥
तं वीक्ष्य राजा प्रोवाच बाणोऽयमसतांहृदि । लगते रामभक्तस्य संमुखेऽपि नभात्यसौ
इत्येवं भाषमाणं तु बाणेनानेन शत्रुहा । विव्याध हृदये क्षिप्रं वह्निज्वालासमप्रभम् ॥
तेन बाणेन दुःखार्तो महापीडासमन्वितः । रथोपस्थे क्षणं मूर्च्छामवाप परतापनः ॥
स क्षणात्तां व्यथां तीर्त्वा जगाद रिपुमग्रतः । सहस्वैकं प्रहारं मे कुत्र यासि ममाग्रतः

एवमुक्त्वा महासङ्ख्ये बाणमाधत्त सायके ।
ज्वालामालापरीताङ्गं स्वर्णपुङ्खसमन्वितम् ॥ ६६ ॥

स बाणो धनुषो मुक्तः शत्रुघ्नेन पथि स्थितः । छिन्नोऽप्यग्रफलेनाशु हृदये समपद्यत
तेन बाणेन संमूर्छ्य पपात स्यन्दनोपरि । ततो हाहाकृतं सैन्यं भग्नं सर्वं पराद्रवत् ॥
सुरथो जयमापेदे सङ्ग्रामे रामसेवकः । दशवीरा दशसुतैर्मूर्च्छिताः पतिताः क्वचित्

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे सुरथविजयो नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

## त्रिपञ्चाशत्तमोऽध्यायः

### सुरथकृत सर्वरामयोधबन्धनम् ।

शेष उवाच ।

सुग्रीवस्तच्च कटकं भग्नं वीक्ष्य रणाङ्गणे ।
स्वामिनं मूर्च्छितं वाऽपि ययौ योद्धुं नृपं प्रति ॥ १ ॥
आगच्छ भूप ! सर्वान्नो मूर्च्छयित्वा कुतो भवान् ।
गच्छति क्षिप्रं मे देहि युद्धं रणविशारद ! ॥ २ ॥

एवमुक्त्वा नगं कञ्चिद्विशालं शाखया युतम् । उत्पाट्य प्राहरत्तस्य मस्तके बलसंयुतः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन प्रहारेण महाबलो नृपः संवीक्ष्य सुग्रीवमथो स्वचापे ।
बाणान्समाधाय शितान्सरोषाञ्जघान वक्षस्यतिपौरुषो बली ॥ ४ ॥
तान्बाणान्व्यधमत्सर्वान्सुग्रीवः सहसा हसन् । ताडयामास हृदये सुरथं सुमहाबलः
पर्वतैः शिखरैश्चैव नगैर्द्विरदवर्ष्मभिः । वेगात्सन्ताडयामास दारयन्सुरथं नखैः ॥
तमप्याशु बबन्धास्त्राद्रामसंज्ञात्सुदारुणात् । बद्धः कपिवरो मेने सुरथं रामसेवकम् ॥
गजो यथाऽऽयसमयीं शृङ्खलां पादलम्बिताम् ।
प्राप्य किञ्चिन्न वै कर्तुं शक्नोति स तथा ह्यभूत् ॥ ८ ॥
जितं तेन महाराज ! सुरथेन सुपत्रिणा । सर्वान्वीरान्रथे स्थाप्य ययौ स्वनगरं प्रति
गत्वा सभायां सुमहान्बद्धं मारुतिमब्रवीत् । स्मर श्रीरघुनाथं त्वं दयालुं भक्तपालकम्
यथा त्वां बन्धनात्सद्यो मोचयिष्यति तुष्टधीः ।
नान्यथाऽयुतवर्षेण मोचयिष्यामि बन्धनात् ॥ ११ ॥
इत्युक्तमाकर्ण्य समीरजस्तदा सुबद्धमात्मानमवेक्ष्य वीरान् ।
संमूर्च्छिताञ्छत्रुशराभिघातपीडायुतान्बन्धनमुक्तयेऽस्मरत् ॥ १२ ॥
श्रीरामचन्द्रं रघुवंशजातं सीतापतिं पङ्कजपत्रनेत्रम् ।
स्वमुक्तये बन्धनतः कृपालुं सस्मार सर्वैः करणैर्विशोकैः ॥ १३ ॥

हनूमानुवाच ।

हानाथ ! हानरवरोत्तम ! हादयालो ! सीतापते ! रुचिरकुन्तलशोभिवक्त्र ! ।
भक्तार्तिदाहक ! मनोहररूपधारिन्मां बन्धनात्सपदि मोचय मा विलम्बम् ॥
संमोचितास्तु भवता गजपुङ्गवाद्या देवाश्च दानवकुलाग्निसु दह्यमानाः ।
तत्सुन्दरीशिरसि संस्थितकेशबन्धः संमोचितस्तु करुणालय ! मां स्मरस्व ॥ १५ ॥
त्वं यागकर्मनिरतोऽसि मुनीश्वरेन्द्रैर्धर्मं विचारयसि भूमिपतीड्यपाद ! ।
अत्राहमद्य सुरथेन विगाढपाशबद्धोऽस्मि मोचय महापुरुषाशु देव ! ॥१६॥
नो मोचयस्यथ यदि स्मरणातिरेकात्त्वं सर्वदेववरपूजितपादपद्म ! ।
लोको भवन्तमिदमुल्लसितोऽहसिष्यत्तस्माद्विलम्बमिह माऽऽचर मोचयाशु ॥ १७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति श्रुत्वा जगन्नाथो रघुवीरः कृपानिधिः। भक्तं मोचयितुं प्रागात्पुष्पकेणाशु वेगिना
लक्ष्मणेनानुगेनाथ भरतेन सुशोभितम्। मुनिवृन्दैर्व्याससमुख्यैः समेतं ददृशे कपिः॥
तमागतं निजं नाथं वीक्ष्य भूपं समब्रवीत्। पश्य राजन्निजं मोक्तुमायातं कृपया हरिम्

अनेके मोचिताः पूर्वं स्मरणात्सेवका निजाः।
तथा मां पाशतो बद्धं संमोचयितुमागतः॥ २१॥

श्रीरामभद्रमायान्तं वीक्ष्यासौ सुरथः क्षणात्। नतीश्च शतशश्चक्रे भक्तिपूरपरिप्लुतः
श्रीरामस्तं निजैर्दोर्भिः परिरेभे चतुर्भुजः। मूर्ध्नि सिञ्चन्नश्रुजलैर्हर्षाङ्कितं स्वकं मुहुः॥
उवाच धन्यदेहोऽसि महत्कर्म कृतं त्वया। कपीश्वरस्त्वया बद्धो हनूमान्सर्वतो बलः

श्रीरामः कपिवर्यं तं मोचयामास बन्धनात्।
मूर्छितांस्तान्भटान्सर्वान्वीक्ष्य दृष्ट्या स्वजीवयत्॥ २५॥

ते मूर्च्छां तत्यजुर्दृष्ट्वा रामेणासुरघातिना। उत्थिता ददृशुः श्रीमद्रामचन्द्रं मनोरमम्
प्रणतास्ते रघुपतिं तेन पृष्टा अनामयम्। सुखीभूता नृपं प्रोचुः सर्वं स्वकुशलं नृपाः॥
सुरथो वीक्ष्य रामं च कृपार्थं सेवकात्मनः। आगतं सकलं राज्यं सहयं सुमुदाऽर्पयत्
अनेकवरिवस्याभिः श्रीरामं समतोषयत्। कथयामास मेऽन्याय्यं कृतं ते क्षम राघव!

श्रीरामस्तमुवाचाथ कृतं ते वाहरक्षणम्॥ २९॥

श्रीराम उवाच।

क्षत्त्रियाणामयं धर्मः स्वामिना सह युद्ध्यते।
त्वया साधु कृतं कर्म रणे वीराः प्रतोषिताः॥ ३०॥

इत्युक्तवन्तं नृहरिं पूजयन्ससुतोऽभवत्। श्रीरामस्त्रिदिनं स्थित्वाययौ तमनुमन्त्र्य च

कामगेन विमानेन मुनिभिः सहितो महान्।
तं दृष्ट्वा विस्मितास्तस्य कथाश्चक्रुर्मनोहराः॥ ३२॥

चम्पकं स्वपुरे स्थाप्य सुरथः क्षत्रियो बली। शत्रुघ्नेन समं यातुं मनश्चक्रे महाबलः॥
शत्रुघ्नः स्वहयं प्राप्य भेरीनादानकारयत्। शङ्खनादान्बहुविधान्सर्वत्र समवादयत्॥
सुरथेन समं वीरो यज्ञवाहममूमुचत्। स बभ्रामापरान्देशान्न कोऽपि जगृहे बली॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्र यत्र गतो वाहस्तत्र तत्र परिभ्रमन् । सैन्येन महता यातः शत्रुघ्नः सुरथेन च ॥
कदाचिज्जाह्नवीतीरे वाल्मीकेराश्रमं वरम् । गतो मुनिवरैर्जुष्टं प्रातर्धूमेन चिह्नितम् ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे रघुनाथसमागमो नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

# चतुःपञ्चाशत्तमोऽध्यायः

## वाल्मीक्याश्रमे लवेनाश्वबन्धनम् ।

शेष उवाच ।

गतः प्रातः क्रियां कर्तुं समिधस्तत्क्रियार्हकाः । आनेतुं जानकीसूनुर्वृतो मुनिसुतैर्लवः
ददर्श तत्र यज्ञाश्वं स्वर्णपत्रेण चिह्नितम् । कुङ्कुमागरुकस्तूरीदिव्यगन्धेन वासितम् ॥

विलोक्य जातकुतुको मुनिपुत्रानुवाच सः ।
अर्वा कस्य मनोवेगः प्राप्तो दैवान्मदाश्रमम् ॥ ३ ॥
आगच्छन्तु मया सार्धं प्रेक्षन्तां मा भयं कृथाः ।
इत्युक्त्वा स लवस्तूर्णं वाहस्य निकटे गतः ॥ ४ ॥

स रराज समीपस्थो वाहस्य रघुवंशजः । धनुर्बाणधरः स्कन्धे जयन्त इव दुर्जयः ॥
गत्वा मुनिसुतैः सार्धं वाचयामास पत्रकम् । भालस्थितं स्पष्टवर्णराजिराजितमुत्तमम्
विवस्वतो महान्वंशः सर्वलोकेषु विश्रुतः । यत्र कोऽपि पराबाधी न परद्रव्यलम्पटः ॥
सूर्यवंशध्वजो धन्वी धनुर्दीक्षागुरुर्गुरुः । यं देवा सानुगाः सर्वे नमन्ति मणिमौलिभिः
तस्यात्मजो वीरबलदर्पहारी रघूद्वहः । रामचन्द्रो महाभागः सर्वशूरशिरोमणिः ॥ ९ ॥
तन्माता कोशलनृपपुत्री रत्नसमुद्भवा । तस्याः कुक्षिभवं रत्नं रामशत्रुक्षयङ्करः ॥१०॥
करोति हयमेधं स ब्राह्मणेन सुशिक्षितः । रावणाभिधविप्रेन्द्रवधपापापनुत्तये ॥ ११ ॥
मोचितस्तेन वाहानां मुख्योऽसौ याज्ञिको हयः । महाबलपरीवारपरिखाभिः सुरक्षितः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्रक्षकोऽस्ति मद्भ्राता शत्रुघ्नो लवणान्तकः ।
हस्त्यश्वरथपादातसङ्घसेनासमन्वितः ॥ १३ ॥

यस्य राज्ञ इतिश्रेष्ठो मानोजायेत्स्वकान्मदात् । शूरावयं धनुर्धारिश्रेष्ठा वयमहोत्कटाः
ते गृह्णन्तु बलाद्वाहं रत्नमालाविभूषितम् । मनोवेगं कामजवं सर्वगत्याधिभास्वरम् ॥

ततो मोचयिता भ्राता शत्रुघ्नो लीलया हठात् ।
शरासनविनिर्मुक्तवत्सदन्तकृतव्यथात् ॥ १६ ॥
ये क्षत्रियाः क्षत्रियकन्यकायां जाताश्च सत्क्षेत्रकुलेषु सत्सु ।
गृह्णन्तु ते तद्विपरीतदेहा नमन्तु राज्यं रघवे निवेद्य ॥ १७ ॥

इति संवाच्य कुपितो लवः शस्त्रधनुर्धरः । उवाच मुनिपुत्रांस्तान्रोषगद्गदभाषितः ॥
पश्यत क्षिप्रमेतस्य धृष्टत्वं क्षत्रियस्य वै । लिलेख यो भालपत्रे स्वप्रतापबलं नृपः ॥

कोऽसौ रामः क शत्रुघ्नः कीटाः स्वल्पबलाश्रिताः ।
क्षत्रियाणां कुले जाता एते न वयमुत्तमाः ॥ २० ॥

एतस्य वीरसूर्माता जानकी न कुशप्रसूः । या रत्नं कुशसंज्ञं तु दधाराग्निमिवारणिः ॥
इदानीं क्षत्रियत्वादि दर्शयिष्यामि सर्वतः । यदि क्षत्रियभूरेष भविष्यति च शत्रुहा ॥
गृहीष्यति मया बद्धं वाहंयज्ञक्रियोचितम् । नोचेत्क्षत्रत्वमुन्मुच्य कुशस्य चरणार्चकः
अधुना मद्धनुर्मुक्तैः शरैः सुप्तो भविष्यति । अन्ये ये च महावीरा रणमण्डलभूषणाः ॥
इत्यादिवाक्यमुच्चार्य लवो जग्राहतं हयम् । तृणीकृत्य नृपान्सर्वांश्चापबाणधरोवरः ॥
तदा मुनिसुताः प्रोचुर्लवं हयजिहीर्षकम् । अयोध्यानृपती रामो महाबलपराक्रमः ॥
तस्य वाहं न गृह्णाति शक्रोऽपि स्वबलोद्धतः। मा गृहाण श्रृणुष्वेदं मद्वाक्यं हितसंयुतम्

इत्युक्तं स श्रुतौ धृत्वा जगाद स द्विजात्मजान् ।
यूयं बलं न जानीथ क्षत्रियाणां द्विजोत्तमाः ॥ २८ ॥
क्षत्रिया वीर्यशौण्डीर्या द्विजा भोजनशालिनः ।
तस्माद्यूयं गृहे गत्वा भुञ्जन्तु जननीहृतम् ॥ २९ ॥

इत्युक्तास्तेऽभवंस्तूष्णीं प्रेक्षन्तस्तत्पराक्रमम् । लवस्य मुनिपुत्रास्तेसन्तस्थुर्दूरतोबहिः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं व्यतिकरे वृत्ते सेवकास्तस्य भूपतेः। आयातास्तं हयं बद्धं दृष्ट्वा प्रोचुस्तदा लवम्

बबन्ध को हयमहो रुष्टः कस्य च धर्मराट्।
को बाण व्रजमध्यस्थः प्राप्स्यते परमां व्यथाम् ॥ ३२ ॥
तदा लवो जगादाशु मया बद्धोऽश्व उत्तमः।
यो मोचयति तस्याशु रुष्टोभ्राता कुशो महान् ॥ ३३ ॥
यस्तः करिष्यति किमु ह्यागतोऽपि स्वयं प्रभुः।
नत्वा गमिष्यति क्षिप्रं शरवृष्ट्या सुतोषितः ॥ ३४ ॥

शेष उवाच।

इति वाक्यं समाकर्ण्य बालोऽयमिति तेऽब्रवन्।
समागता मोचयितुं हयं बद्धं तु ये हरेः ॥ ३५ ॥
तान्वै मोचयितुं प्राप्ताञ्छत्रुघ्नस्य च सेवकान्।
कोदण्डं करयोर्धृत्वा क्षुरप्रान्सममूमुचत् ॥ ३६ ॥
ते च्छिन्नबाहवः शोकाच्छत्रुघ्नं प्रतिसङ्गताः।
पृष्टास्ते जगदुः सर्वे लवात्स्वभुजकृन्तनम् ॥ ३७ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामश्वमेधे लवेन हयबन्धनं नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

## पञ्चपञ्चाशत्तमोऽध्यायः

### वात्स्यायनस्य सीतात्यागविषय प्रश्ने शेषेण तद् वृत्तवर्णनम्।

व्यास उवाच।

एतां श्रुत्वा कथां रम्यां लवस्य बलिनो मुनिः। संशयानः पर्यपृच्छन्नागं दशशताननम्

श्रीवात्स्यायन उवाच।

त्वयोक्तं तु पुरा रामः सीतामेकाकिनीं वने। रजकस्य दुरुक्त्याऽसौ तत्याज महिलोलुपः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जानक्यां कसुतौ जातौ कधनुर्धरतां गतौ । कथं च शिक्षिता विद्या यो रामहयमाहरत्

व्यास उवाच ।

इति श्रुत्वा मुनेर्वाक्यं शेषो नागो महामतिः । प्रशस्य विप्रं जगदे रामचारित्रमद्भुतम् ॥

शेष उवाच ।

रामो राज्यमयोध्यायां भ्रातृभिः सहितोऽकरोत् ।
धर्मेण पालयन्सर्वं क्षितिखण्डं स्वया स्त्रिया ॥ ५ ॥

सीता दधार तद्वीर्यं मासाः पञ्चाभवंस्तदा । अत्यन्तं शुशुभे देवी त्रयीव पुरुषन्धरा ॥

कदाचित्समये रामः पप्रच्छ च विदेहजाम् ।
कीदृशो दोहदः साध्वि ! मया ते साध्यते हि सः ॥७॥

रहस्येव तु सा पृष्टा त्रपमाणा पतिं सती । लज्जागद्गदवाग्रामं निजगाद वचोऽमृतम्

सीतोवाच ।

त्वत्कृपातो मया सर्वं भुक्तं भोक्ष्यामि शोभनम् ।
न कश्चिन्मानसे कान्त ! विषयो ह्यतिरिच्यते ॥ ६ ॥

यस्या भवादृशः स्वामी देवसंस्तुतसत्पदः । तस्याः सर्वं वरीवर्ति न किञ्चिदवशिष्यते

वमाग्रहात्पृच्छसि मां दोहदं मनसि स्थितम् । ब्रवीमिपुरतः सत्यं तव स्वामिन्मनोहर!

चिरं जातं मया सत्यो लोपामुद्रादिकाः स्त्रियः ।
दृष्टाः स्वामिन्मनो द्रष्टुं ता उत्सुकति सुन्दरीः ॥ १२ ॥

राज्यं प्राप्ता त्वया सार्द्धमनेकसुखमास्थिता । कृतघ्नाहं कदापीह ता नमस्कर्तुमानसा

तत्र गत्वा तपः कोशान्वस्त्राद्यैः परिपूजये । रत्नानि चैव भास्वन्ति भूषा अपिसमर्पये

यथा मे तोषिताः सत्यो ददत्याशीर्मनोहराः । एष मे दोहदः कान्त परिपूरय मानसम्

इत्थमाकर्ण्य वचनं सीतायाः सुमनोहरम् । जगाद परमप्रीतो रामचन्द्रः प्रियां प्रति

धन्याऽसि जानकि ! प्रातर्गमिष्यसि तपोधनाः ।
प्रेक्ष्य तास्तु कृतार्था त्वमागमिष्यसि मेऽन्तिकम् ॥ १७ ॥

इति रामवचः श्रुत्वा परमां प्रीतिमाप सा । प्रातर्मम भवत्यद्धा तापसीनां समीक्षणम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ तन्निशि रामेण चाराः कीर्तिं निजां श्रुताम् ।
प्रेक्षितुं प्रेषितास्ते तु निशीथे ह्यगमञ्छनैः ॥ १९ ॥

ते प्रत्यहं रामकथाः शृण्वन्तः सुमनोहराः । तद्दिने गतवन्तस्तु धनाढ्यस्य गृहं महत् ॥

दीपं वीक्ष्य प्रज्वलन्तं वचनं वीक्ष्य मानुषम् ।
स्थितास्तत्र क्षणं चाराः समशृण्वन्यशो भृशम् ॥ २१ ॥

तत्र काचन वामाक्षी बालकं प्रतिहर्षिता ।
स्तनन्धयन्तं निजगौ वाक्यं तु सुमनोहरम् ॥ २२ ॥

पिब पुत्र! यथेष्टं त्वं स्तन्यं मम मनोहरम् । पश्चात्तव सुदुष्प्रापं भविष्यति ममात्मज! ॥

एतत्पुर्याः पती रामो नीलोत्पलदलप्रभः । तत्पुरीस्थजनानां तु न भविष्यति वै जनुः ॥

जन्माभावात्कथं पानं स्तन्यस्य भुवि जायते ।
तस्मात्पिब मुहुः स्तन्यं दुर्ल्लभं हृदि मन्य च ॥ २५ ॥

ये श्रीरामं स्मरिष्यन्ति ध्यायन्ति च वदन्ति ये ।
तेषामपि पयः पानं न भविष्यति जातुचित् ॥ २६ ॥

इत्यादि वाक्यं संश्रुत्य श्रीरामयशसोऽमृतम् ।
हर्षिताः प्रययुर्गेहमन्यद्भाग्यवतो महत् ॥ २७ ॥

तावदन्यश्चरस्तत्र मनोरममिदं गृहम् । मत्वा तिष्ठन्हि रामस्य शुश्रूषुर्यशसः क्षणम् ॥

तत्र काचिन्निजं कान्तं पर्यङ्कोपरि सुस्थितम् ।
ताम्बूलं चर्वती दत्तं भर्त्रा स्नेहेन सुन्दरी ॥ २९ ॥

कङ्कणस्वरशोभाढ्या कर्पूरागरुधूपिता । कान्तं वीक्ष्य चलन्नेत्रा कामरूपमवोचत ॥

नाथ त्वं तादृशो मह्यं भासि यादृग्रघोः पतिः । अत्यन्तं सुन्दरतरं वपुर्बिभ्रत्सुकोमलम् ॥

पद्मप्रान्तं नेत्रयुग्मं वक्षो मोहनविस्तृतम् ।
भुजौ च साङ्गदौ बिभ्रत्साक्षाद्राम इवासि मे ॥ ३२ ॥

इति वाक्यं समाकर्ण्य कान्तायाः सुमनोहरम् ।
उवाच नेत्रयोः प्रान्तं नर्तयन्कामसुन्दरः ॥ ३३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शृणु कान्त त्वया प्रोक्तं साध्व्या तु सुमनोहरम् ।
पतिव्रतानां तद्योग्यं स्वकान्तो राम एव हि ॥ ३४ ॥
परं क्वाहं मन्दभाग्य क्वरामो भाग्यवान्महान् । क्व चाहं कीटवत्तुच्छः क्व ब्रह्मादिसुरार्चितः
खद्योतः क्व नभो रत्नं शलभः क्व नु पामरः ।
गजारिः क्व मृगेन्द्रोऽसौ शशकः क्व नु मन्दधीः ॥ ३६ ॥
क्व च सा जाह्नवी देवी क्व रथ्याजलमुत्पथम् । क्व मेरुः सुरसंवासः क्व गुञ्जापुञ्जकोऽल्पकः
तथाऽहं क्व क्व रामोऽसौ यत्पादरजसाऽङ्गना ।
शिलीभूता क्षणाज्जाता ब्रह्ममोहनरूपधृत् ॥ ३८ ॥
इति वाक्यं प्रब्रुवाणं परिरेभे निजं पतिम् । जातकामा हृतप्रेम्णा नर्तितभ्रूधनुर्धरा ॥
इत्यादि वाक्यं संश्रुत्य गतश्चान्यनिवेशनम् ।
तावदन्यश्चरो वाक्यं शुश्राव यशसाऽन्वितम् ॥ ४० ॥
काचित्पुष्पमयीं शय्यां चन्दनं सह चन्द्रकम् ।
सर्वं विधाय कामार्हं जगाद वचनं पतिम् ॥ ४१ ॥
पते ! कुरुष्व भोगार्हं शयनं पुष्पमञ्चके । चन्दनादिकलेपं च यथा भोगमनेकधा ॥
त्वादृशा एव भोगार्हा न च रामपराङ्मुखाः । सर्वं रामकृपाप्राप्तमुपभुङ्क्ष्व यथातथम्
मत्सदृशी कामिनी ते चन्दनं तापहारकम् । पर्यङ्कः पुष्परचितः सर्वं रामकृपाभवम् ॥
ये रामं न भजिष्यन्ति ते नरा जठरं स्वयम् ।
न भर्तुं शक्नुवन्त्येव वस्त्रभोगादिवर्जिताः ॥ ४५ ॥
इति ब्रुवन्तीं महिलां हर्षितः पतिरब्रवीत् । सर्वं तथ्यं ब्रवीषि त्वं मम रामकृपाभवम्
इत्येवं रामभद्रस्य यशः श्रुत्वा गतश्चरः । तावदन्यस्य वेश्मस्थश्चरोऽन्यः शुश्रुवे वचः
काचित्कान्तेन पर्यङ्के वीणावादनतत्परा । कान्तेन रामसत्कीर्तिं गायमाना पतिं जगौ
स्वामिन्वयं धन्यतमा येषां पुर्याः पतिः प्रभुः ।
श्रीरामः स्वप्रजाः पुत्रानिव पाति च रक्षकः ॥ ४६ ॥
यो महत्कर्मदुःसाध्यं कृतवान्सुलभं न तत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समुद्रं यो निजग्राह सेतुं तत्र बबन्ध च ॥ ५० ॥
रावणं यो रिपुंहत्वा लङ्कां सम्भज्य वानरैः । जानकीमाजहारात्र महदाचारमाचरत ॥
इति प्रोक्तं समाकर्ण्य वचः सुमधुराक्षरम् ।
पतिः स्मितं चकारेमां वाक्यं पुनरथाब्रवीत् ॥ ५२ ॥
मुग्धेनेदं महत्कर्म रामचन्द्रस्य भामिनि ! । दशाननवधादीनि समुद्रदमनानि च ॥५३॥
लीलया योऽवनिं प्राप्तो ब्रह्मादिप्रार्थितो महान् ।
करोति सच्चरित्राणि महापापहराणि च ॥ ५४ ॥
मा जानीहि नरं रामं कौसल्यानन्ददायकम् । सृजत्यवति हन्त्येतद्विश्वं लीलात्तमानुषः
धन्या वयं ये रामस्य पश्यामो मुखपङ्कजम् । ब्रह्मादिसुरदुर्दर्शं महापुण्यकृतोवयम् ॥
अशृणोद्रामचन्द्रस्य चरित्रं श्रुतिसौख्यदम् ।
इत्यादि वाक्यं शुश्राव चारो द्वारि स्थितो मुहुः ॥ ५७ ॥
अन्यो ह्यन्यगृहं गत्वा तस्थौ श्रोतुं हरेर्यशः। तत्रापि रामभद्रस्य यशः शुश्राव शोभनम्
खेलन्ती स्वामिना सार्धंद्यूतेन सुमनोहरा । उवाच वाक्यं मधुरं नर्तयन्तीव कङ्कणे ॥
जितं मया कान्त ! जवेन सर्वं करिष्यसि त्वं किमु हारिमानसः ।
इत्यादि वाक्यं परिहासपूर्वकं कृत्वा स्वकान्तं परिषस्वजे मुदा ॥ ६० ॥
उवाच कान्तश्चार्वङ्गि जितमेव सुशोभने । रामं मे स्मरतो नित्यं न कुत्रापि पराजयः ॥
इदानीं त्वां तु जेष्यामि रामं स्मृत्वा मनोहरम् ।
देवा यथा पुरा स्मृत्वा दितिजानजयन्क्षणात् ॥ ६२ ॥
एवमुक्त्वा पाशकानां परिवर्तनमाकरोत् ।
तावज्जयं प्रपेदेऽसौ हर्षितो वाक्यमब्रवीत् ॥ ६३ ॥
मम प्रोक्तमृतं जातं जिता त्वं नवयौवना । रामस्मारी कदाप्येव न भवेद्रिपुतोभयी ॥
इत्येवं तौ वदन्तौ च परस्परमथोत्सुकौ । परिरभ्य दृढंप्रेम्णा ततश्चारोगतोगृहम् ॥
एवं पञ्चमहाचारा राज्ञः संश्रुत्य वै यशः । परस्परं प्रशंसन्तो गेहं स्वं स्वं ययुर्मुदा ॥
एकः षष्ठश्चरः कारुगेहानालोक्य तत्र ह ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जगाम श्रोतुकामोऽसौ यशो राज्ञो महीपतेः ॥ ६७ ॥
रजकः क्रोधसंस्पृष्टो भार्यामन्यगृहोषिताम् ।
पदा सन्ताडयामास धिक्कुर्वञ्छोणनेत्रवान् ॥ ६८ ॥
गच्छ त्वं मद्गृहात्तस्य गेहं यत्रोषिता दिनम् ।
नाहं गृह्णामि भवतीं दुष्टां वचनलङ्घिनीम् ॥ ६९ ॥
तदाऽस्य माता प्रोवाच मा त्यजैनां गृहागताम् । अपराधेन रहितां दुष्टकर्मविवर्जिताम्
मातरं प्रत्युवाचाथ रजकः क्रोधसंयुतः । नाहं राम इव प्रेष्ठां गृह्णाम्यन्यगृहोषिताम् ॥
स राजा यत्करोत्येव तत्सर्वं नीतिमद्भवेत् ।
अहं गृह्णामि नो भार्यां परवेश्मनि संस्थिताम् ॥ ७२ ॥
पुनः पुनरुवाचेदं नाहं रामो महीश्वरः । यः परस्य गृहे संस्थां जानकीं वै ररक्ष सः ॥
इति वाक्यं समाश्रुत्य चारः क्रोधपरिप्लुतः ।
खड्गं गृहीत्वा स्वकरे तं हन्तुं विदधे मनः ॥ ७४ ॥
स रामोक्तं च सस्मार न वध्यः कोऽपि मे जनः ।
इति ज्ञात्वा सरोषं तु सञ्जहार महामनाः ॥ ७५ ॥
तदा श्रुत्वा सुदुःखार्तः पञ्च चारा यतः स्थिताः ।
ततो गतः प्रकुपितो निःश्वसन्मुहुरुच्छ्वसन् ॥ ७६ ॥
ते व परस्परं तत्र मिलितास्तु समब्रुवन् । स्वश्रुतं रामचरितं सर्वलोकैकपूजितम् ॥
ते तद्भाषितमाकर्ण्य परस्परममन्त्रयन् ।
न वाच्यं रघुनाथायावाच्यं दुष्टजनोदितम् ॥ ७८ ॥
इति संमन्त्र्य ते गेहं गत्वा सुषुपुरुत्सुकाः । ।
प्रातः राज्ञे प्रशंसाम इति बुद्धया व्यवस्थिताः ॥ ७९ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे चारनिरीक्षणं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# षट्पञ्चाशत्तमोऽध्यायः

## प्रातः काले चारैः सभामागत्य रामाय रजकोक्तिकथनम् ।

शेष उवाच ।

प्रातर्नित्यं विधायासौ ब्राह्मणान्वेदवित्तमान् ।
हिरण्यदानैः सन्तर्प्य विधिवत्संसदं ययौ ॥ १ ॥
लोकाः सर्वं नमस्कर्तुं रघुनाथं महीपतिम् ।
पुत्रवत्स्वप्रजाः सर्वाः पालयन्तं ययुः सभाम् ॥ २ ॥
लक्ष्मणेनातपत्रं तु धृतं मूर्धनि भूपतेः । तदा भरतशत्रुघ्नौ चामरद्वन्द्वधारिणौ ॥ ३ ॥
वसिष्ठप्रमुखास्तत्र मुनयः पर्युपासत । सुमन्तप्रमुखास्तत्र मन्त्रिणो न्यायकर्तृकाः ॥
एवं प्रवृत्ते समये षट्चारास्ते स्वलङ्कृताः । समाजग्मुर्नरपतिं नमस्कर्तुं सभास्थितम्
तान्वक्तुकामान्संवीक्ष्य चारान्नृपतिसत्तमः । सभायामन्तरावेश्म रहः प्राविशदुत्सुकः
एकान्ते तांश्चरान्सर्वान्पप्रच्छ सुमतिर्नृपः । कथयन्तु चरा मह्यं यथातथ्यमरिन्दमाः ॥
लोका ब्रुवन्ति मे कीदृग्भार्याया मम कीदृशम् ।
मन्त्रिणां कीदृशं लोका वदन्ति चरितं कथम् ॥ ८ ॥
इति वाक्यं समाकर्ण्य चारा राममथाब्रुवन् ।
मेघगम्भीरया वाचा पृच्छन्तं रघुनायकम् ॥ ९ ॥

चारा ऊचुः ।

नाथ कीर्तिर्जनान्सर्वान्पावयत्यधुना भुवि । गृहे गृहे श्रुताऽस्माभिःपुरुषैः स्त्रीभिरीडिता
विवस्वतो महावंशं भवता परमेष्ठिना । अलङ्कर्तुं गतं भूमौ कीर्तिर्विस्तारिताः बहुः
अनेके सगराद्याश्च कीर्तिमन्तो महाबलाः । अभवंस्तादृशी कीर्तिस्तेषां नाभूद्यथा तव ॥
त्वया नाथेन सकलाः कृतार्थाश्च प्रजाः कृताः ।
यासां नाकालमरणं न च रोगाद्युपद्रुतिः ॥ १३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यादृशश्चन्द्रमा लोके यादृशी जाह्नवी सरित् ।
तादृक्तव च सत्कीर्तिः प्रकाशयति भूतलम् ॥ १४ ॥
ब्रह्मादिका भवत्कीर्तिमाकर्ण्य त्रपिता भृशम् ।
नाथ ! सर्वत्र ते कीर्तिः पावयत्यधुना जनान् ॥ १५ ॥
वयं धन्यतमाः सर्वे ये चारास्तव भूपते ! । क्षणे क्षणे तव मुखं लोकयाम मनोहरम् ॥
वचः श्रुत्वा तु चाराणां पञ्चानां राघवस्तदा । षष्ठं पप्रच्छ चारं तं विलक्षणमुखाङ्कितम्

राम उवाच ।

सत्यं वद महाबुद्धे ! यच्छ्रुतं लोकसङ्करे । तादृक्प्रशंस मे सर्वमन्यथा पातकादिकृत् ॥
पुनः पुनश्च तं रामः पप्रच्छाशु सविस्तरम् ।
तथापि न ब्रवीत्येव रामं लौकिकभाषितम् ॥ १९ ॥
तदा रामः प्रत्यवोचच्चारं मुखविलक्षितम् । शपामि त्वां तु सत्यं न शंस सर्वं यथातथम्
तदा रामं प्रत्युवाच चारो वाक्यं शनैः शनैः ।
अकथ्यमपि ते वाच्यं वाक्यं कारुजनोदितम् ॥ २१ ॥

चार उवाच ।

स्वामिन्सर्वत्र ते कीर्तिर्दशाननवधादिका । अन्यत्रराक्षसगृहे स्थिता यास्ते स्त्रियाअहो
कारुरेकस्तु रजको निशीथे महिलां स्वकाम् ।
अन्यगेहोषितां दृष्ट्वा धिक्कुर्वन्समताडयत् ॥ २३ ॥
तन्माता प्रत्युवाचेमां कथं ताडयसेऽनघाम् ।
गृहाण मा कृथा निन्दां स्त्रियं मद्वाक्यमाचर ॥ २४ ॥
तदाऽवोचत्स रजको नाहं रामो महीपतिः । यद्राक्षसगृहेऽध्युष्टांसीतामङ्गीचकार सः
सर्वं राज्ञः कृतं कर्म नीतिमद्भवति प्रभो ! । अन्येषां पुण्यकर्तॄणामपि कृत्यमनीतिमत्
पुनः पुनरुवाचासौ नाहं रामो महीपतिः । चुक्रुधे समये राजन्मया वाक्यं तव स्मृतम्
तदानीं शिर आच्छिद्य पातयामि महीतले । कृतः पुनर्विचारो मे क्व रामो रजकः क्व तु
अयं दुष्टोऽनृतं वक्ति नहीदं तथ्यमुच्यते । आज्ञापयसि चेद्राम साम्प्रतं मारयामि तम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवाच्यमपि ते प्रोक्तं त्वदाग्रहत उन्नयम् । राजा प्रमाणमत्रेदं विचारयतु सङ्गतम् ॥

शेष उवाच ।

इति वाक्यं समाकर्ण्य महावज्रनिभाक्षरम् ।
निःश्वसन्मुहुरुच्छ्वासमाचरन्मूर्च्छितोऽपतत् ॥ ३१ ॥
तं मूर्च्छितं नृपं दृष्ट्वा चारा दुःखसमन्विताः ।
वीजयामासुर्वासोग्रैर्दुःखापनयहेतवे ॥ ३२ ॥

स लब्धसंज्ञो नृपतिर्मुहूर्तेन जगाद तान् । गच्छन्तु भरतं शीघ्रं प्रेषयन्तु च मां प्रति ॥
ते दुःखिताश्चरास्तूर्णं भरतस्य गृहं गताः । कथयामासू रामस्य सन्देशं नयहारकाः ॥

भरतो रामसन्देशं श्रुत्वा धीमान्ययौ सदः ।
रामं प्रति रहः संस्थं श्रुत्वा तं त्वरया युतः ॥ ३५ ॥

आगत्य तं प्रतीहारं प्रत्युवाच महामनाः । कुत्रास्ते रामभद्रोऽसौ ममभ्राता कृपानिधिः
तन्निर्दिष्टं गृहं वीरो ययौ रत्नमनोहरम् । रामं विलोक्य विक्रान्तं भयमाप स मानसे

किं वाऽसौ कुपितो रामः किं वा दुःखमिदं विभोः ।
तदा प्रोवाच नृपतिं निःश्वसन्तं मुहुर्मुहुः ॥ ३८ ॥

स्वामिन्सुखसमाराध्यं वक्त्रं ते कथमानतम् । अश्रुभिर्लक्ष्यते राहुग्रस्तदेहः शशीव ते

सर्वं मे कारणं तथ्यं ब्रूहि मां किं करोमि ते ।
त्यज दुःखं महाराज ! कथं दुःखस्य भाजनम् ॥ ४० ॥

एवं भ्रात्रा प्रोच्यमानो गदद्गस्वरया गिरा । प्रोवाच भ्रातरं वीरो रामचन्द्रश्च धार्मिकः
शृणु भ्रातर्वचो मह्यं मम दुःखस्य कारणम् । तन्मार्जनं कुरुष्वाद्य भ्रातः प्रातर्महामते !॥
वंशे वैवस्वते राजा न कश्चिदयशःक्षतः । मत्कीर्तिरद्य कलुषा गङ्गा यमुनया गता ॥

येषां यशो नृणां भूमौ तेषामेव सुजीवितम् ।
अपकीर्तिक्षतानां तु जीवितं मृतकैः समम् ॥ ४४ ॥

येषां यशो भवेद्भूमौ तेषां लोकाः सनातनाः । अपकीर्त्युरगीदष्टास्तेषां भूयादधोगतिः

अद्य मे कलुषा कीर्तिः स्वर्धुनी लोकविश्रुता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तच्छृणुष्व वचो मेऽद्य रजकेन यथोदितम् ॥ ४६ ॥
अस्मिन्पुरेऽद्य रजक उक्तवाञ्जानकीभवम् ।
किञ्चिद्वाच्यं ततो भ्रातः किं करोमि महीतले ॥ ४७ ॥
किमात्मानं जहाम्यद्य किमेनां जानकीं स्त्रियम् ।
उभयोः किं मया कार्यं भवांस्तथ्यं ब्रवीतु तत् ॥ ४८ ॥
इत्युक्त्वा निर्गलद्बाष्पा वेपथु क्षुभिताङ्गकः ।
पपात भूमौ विरजो धार्मिकाणां शिरोमणिः ॥ ४९ ॥
भ्रातरं पतितं दृष्ट्वा भरतो दुःखसंयुतः । संवीक्ष्य शनकै रामं प्राप्तसंज्ञं चकार सः ॥
संज्ञां प्राप्तं तु संवीक्ष्य रामचन्द्रं सुदुःखितम् ।
उवाच दुःखनाशाय वाक्यं तु सुमनोहरम् ॥ ५१ ॥
कोऽयं वै रजकः किं तु वाच्यं वाक्यं यथाऽब्रवीत् ।
जिह्वाच्छेदं करिष्यामि जानकीवाच्यकारिणः ॥ ५२ ॥
तदा रामोऽब्रवीद्वाक्यं रजकस्य मुखोद्गतम् । श्रुतं चारेण तत्सर्वं भरताय महात्मने ॥
तच्छ्रुत्वा भरतः प्राह भ्रातरं दुःखशोकिनम् । जानकीवह्निशुद्धा भूल्लङ्कायां वीरपूजिता
ब्रह्माऽब्रवीदियं शुद्धा पिता दशरथस्तव । कथं सा रजकोक्तित्वाद्धातव्या लोकपूजिता
ब्रह्मादिसंस्तुता कीर्तिस्तव लोकान्पुनाति हि ।
सा कथं रजकोक्त्या वै कलुषाऽद्य भविष्यति ॥ ५६ ॥
तस्मात्त्यज महादुखं सीतावाच्यसमुद्भवम् ।
कुरु राज्यं तया सार्धमन्तर्वत्न्या सुभाग्यया ॥ ५७ ॥
त्वं कथं स्वशरीरं तु हातुमिच्छसि शोभनम् ।
वयं हताः स्म सर्वेऽद्य त्वां विना दुःखनाशकम् ॥ ५८ ॥
क्षणं सीता न जीवेत त्वां विना सुमहोदया ।
तस्मात्पतिव्रतासाकं भुनक्तु विपुलां श्रियम् ॥ ५९ ॥
इति वाक्यं समाकर्ण्य भरतस्य च धार्मिकः । पुनरेव जगादेमं वाक्यं वाक्यविदांवरः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्त्वं कथयसि भ्रातस्तत्सर्वं धर्मसंयुतम्। परं यद्वच्म्यहं वाक्यं तत्कुरुष्व ममाज्ञया ॥
जानाम्येनां वह्निशुद्धां पवित्रां लोकपूजिताम्।
लोकापवादाद्भीतोऽहं त्यजामि स्वां तु जानकीम् ॥ ६२ ॥
तस्मात्करे शितं धृत्वा करवालं सुदारुणम्।
शिरश्छिन्ध्यथवा जायां जानकीं मुञ्च वै वने ॥ ६३ ॥
इति वाक्यं समाकर्ण्य रामस्य भरतोऽपतत्।
मूर्च्छितः सन्क्षितौ देहे कम्पयुक्तः सवाष्पकः ॥ ६४ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे भरतवाक्यं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

---

## सप्तपञ्चाशत्तमोऽध्यायः

### सीताया भर्तृ वियोगकारणकथनम्।

वात्स्यायन उवाच।

जगत्पवित्रसत्कीर्तिजानक्या वाच्यवाचनम्। कथंसमकरोत्स्वामी तन्मे कथय सुव्रत!
यथा मे मनसः सौख्यं भविष्यति सुशोभनम्।
तथा कुरुष्व शेषाद्य त्वन्मुखान्निःसृतामृतम्।
पिवतस्तृप्तिरेवस्याद्यया संसृतिकृन्तनम् ॥ २ ॥

शेष उवाच।

मिथिलायां महापुर्यां जनको नाम भूपतिः।
तस्यां करोति सद्राज्यं धर्मेणाराधयन्प्रजाः ॥ ३ ॥
तस्य सङ्कर्षतो भूमिं सीतया दीर्घमुख्या। सीरध्वजस्य निरगात्कुमारी ह्यतिसुन्दरी ॥
तदाऽत्यन्तं मुदं प्राप्तः सीरकेतुर्महीपतिः। सीता नामाकरोत्तस्या मोहिन्या जगतःश्रियः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सैकदोद्यानविपिने खेलन्ती सुमनोहरा । अपश्यत्स्वमनः कान्तं शुकशुक्योर्युगं वदत् ॥
अत्यन्तं हर्षमापन्नमत्यन्तं काममलोलुपम् । परस्परं भाषमाणं स्नेहेन शुभया गिरा ॥
रममाणं तदा युग्मं नभसि क्षिप्रवेगतः । समुत्पतन्नगोपस्थे स्थितं शब्दं चकार तत्
रामो महीपतिर्भूमौ भविष्यति मनोहरः । तस्य सीतेति नाम्ना तु भविष्यति महेलिका

स तया सह वर्षाणां सहस्राण्येकयुग्दश ।
राज्यं करिष्यते धीमान्कर्षन्भूमिपतीन्बली ॥ १० ॥
धन्या सा जानकी देवी धन्योऽसौ रामसंज्ञितः ।
यौ परस्परमापन्नौ पृथिव्यां रंस्यतो मुदा ॥ ११ ॥
इति सम्भाषमाणं तु शुकयुग्मं तु मैथिली ।
ज्ञात्वेदं देवतायुग्मं वाणीं तस्य विलोक्य च ॥ १२ ॥
मदीयास्तु कथा रम्याः कुरुते शुकयोर्युगम् ।
एतद् गृहीत्वा पृच्छामि सर्वं वाक्यं गतार्थकम् ॥ १३ ॥

एवं विचार्य सा स्वीयाः सखीः प्रतिजगाद ह । गृह्णन्तु शनकैरेतत्पक्षियुग्मं मनोहरम्

सख्यस्तास्तद्गिरिं गत्वा गृह्णन्पक्षियुगं वरम् ।
निवेदयामासुरिदं स्वसख्याः प्रियकाम्यया ॥ १५ ॥

बहुधा विविधाञ्छब्दान्कुर्वद्वीक्ष्य मनोहरम् । आश्वासयामास तदा पप्रच्छ तदिदंवचः

सीतोवाच ।

मा भैष्टं तु युवां रम्यौ कौ वां कुत्र समागतौ ।
को रामः का च सा सीता तज्ज्ञानं तु कुतः स्मृतम् ॥ १७ ॥

तत्सर्वं शंसतं क्षिप्रं मत्तो वां व्येतु यद्भयम् । इति पृष्टं तया पक्षियुगं सर्वमशंसत ! ।

पक्षियुग्ममुवाच ।

वाल्मीकिरास्ते सुमहानृषिर्धर्मविदुत्तमः । आवां तदाश्रमस्थाने सर्वदा सुमनोहरे ॥

स शिष्यान्पाठयामास भावि रामायणं मुनिः ।
प्रत्यहं तत्पदस्मारी सर्वभूतहिते रतः ॥ २० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदावाभ्यां श्रुतं सर्वं भावि रामायणं महत्। मुहुर्मुहुर्गीयमानमायातं परिपाठितः
श्रृण्वावां तेऽभिधास्यावो यो रामो या च जानकी।
यद्यद्भविष्यते तस्या रामेण क्रीडितात्मना ॥ २२ ॥
ऋष्यश्रृङ्गकृतेष्ट्यां च चतुर्धा त्वं गतो हरिः।
प्रादुर्भविष्यति श्रीमानसुरस्त्रीगीतसत्कथः ॥ २३ ॥
स कौशिकेन मिथिलां प्राप्स्यते भ्रातृसंयुतः।
धनुष्पाणिस्तदा दृष्ट्वा दुर्ग्राह्यमन्यभूभुजाम् ॥ २४ ॥

धनुर्भङ्क्त्वा जनकजां प्राप्स्यते सुमनोहराम्। तया सह महद्राज्यं करिष्यतिश्रुतं वरे
एतदन्यच्च तत्रस्थैः श्रुतमस्माभिरुद्गतैः। कथितं तव चार्वङ्गि मुञ्चावां गन्तुकामुकौ
इति वाक्यं तयोर्धृत्वा श्रोत्रयोः सुमनोहरम्। पुनरेव जगादेदं वाक्यंपक्षियुगं प्रति
स रामः कुत्र वर्तेत कस्य पुत्रः कथं तु ताम्। परिग्रहीष्यति वरः कीदृग्रूपधरोनरः ॥
मया पृष्टमिदं सर्वं युवां ब्रूतं यथातथम्। पश्चात्सर्वं करिष्यामि प्रियं युष्मन्मनोहरम्

तच्छ्रुत्वा तां तु कामेन पीडितां वीक्ष्य सा शुकी।
जानकीं हृदये ज्ञात्वा पपाठ पुरतस्ततः ॥ ३० ॥
सूर्यवंशध्वजो धीमान्राजा पङ्क्तिरथो बली।
यं देवाः श्रित्य सर्वारीन्विजेष्यन्ते च सर्वशः ॥ ३१ ॥

तस्य भार्यात्रयं भावि शक्रमोहनरूपधृत्। तस्मिन्नपत्यचातुष्कं भविष्यति बलोन्नतम्
सर्वेषामग्रजो रामो भरतस्तदनुस्मृतः। लक्ष्मणस्तदनुश्रीमाञ्छत्रुघ्नः सर्वतो वरः ॥३३
रघुनाथ इति ख्यातिं गमिष्यति महामनाः। तेषामनन्तनामानि रामस्य बलिनः सखि!

पद्मकोश इव शोभनं मुखं पङ्कजाभनयने सुदीर्घके।
उन्नतापृथुमनोहरानसा वल्गुसङ्गतमनोहरे भ्रुवौ ॥ ३५ ॥
जानुलम्बितमनोहरौ भुजौ कम्बुशोभि गलकोऽतिह्रस्वकः।
सत्कपाटतलविस्तृतश्रिकं वक्ष एतदमलं सलक्ष्मकम् ॥ ३६ ॥
शोभनोरुकटिशोभया युतं जानुयुग्ममनलं स्वसेवितम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पादपद्ममखिलैर्निजैः सदा सेवितं रघुपतिं सुशोभनम् ॥ ३७ ॥
एतद्रूपधरो रामो मया किं तु स वर्ण्यते ।
शताननोऽपि नो याति पक्षिणः किमु मादृशाः ॥ ३८ ॥
यद्रूपं वीक्ष्य ललिता मनोहरवपुर्धरा । लक्ष्मीर्मुमोह भुवि का वर्तते यान मुह्यति ॥
महाबलो महावीर्यो महामोहनरूपधृत् । किं वर्णयामि श्रीरामं सर्वैश्वर्यगुणान्वितम्
धन्या सा जानकी देवी महामोहनरूपधृत् । रंस्यते तेन सह या वर्षाणामयुतं मुदा ॥
त्वं कासि किं नु ते नाम वद सुन्दरि यत्तु माम् ।
परिपृच्छसि वै दृध्याद्रामकीर्तनमादरात् ॥ ४२ ॥
एतद्वाक्यं समाकर्ण्य जानकीपक्षिणोर्युगम् ।
उवाच जन्मललितं शंसन्ती स्वस्य मोहनम् ॥ ४३ ॥
या त्वया जानकी प्रोक्ता साऽहं जनकपुत्रिका ।
स रामो मां यदाभ्येत्य प्राप्स्यते सुमनोहरः ॥ ४४ ॥
तदावां मोचयाम्यद्धा नान्यथा वाक्यलोभिता ।
लीलया च सुखेनास्तां मद्गेहे मधुरादकौ ॥ ४५ ॥
इत्युक्तं तत्समाकर्ण्य पक्षिणौ भयमापतुः । परस्परं प्रक्षुभितो जानकीमित्यवोचताम्
वयं वैपक्षिणःसाध्वि वनस्था वृक्षगोचराः । परिबभ्राम सर्वत्र नो सुखं नो भवेद्गृहे
अन्तर्वत्नी स्वके स्थाने गत्वा संसूय पुत्रकान् ।
त्वत्स्थानमागमिष्यामि सत्यं मे ह्युदितं वचः ॥ ४८ ॥
एवं प्रोक्ता तया सा तु न मुमोच शुकीं स्वयम् ।
तदा पतिस्तां प्रोवाच विनीतवदनुत्सुकः ॥ ४९ ॥
सीते मुञ्च कथं भार्यां रक्षसे मे मनोहरीम् । आवां गच्छाव विपिने विचरावः सुखं वने
अन्तर्वत्नी तु वर्तेत भार्या मम मनोरमा ।
तस्याः प्रसूतिं कृत्वा त्वामागमिष्यामि शोभने ! ॥ ५१ ॥
इत्युक्ता निजगादेमं सुखं गच्छ महामते ! ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतां रक्षामि सुखिनीं मत्पार्श्वे प्रियकारिणीम् ॥ ५२ ॥
इत्युक्तो दुःखितः पक्षी तामूचे करुणान्वितः ।
योगिभिः प्रोच्यते यद्वै तद्वचस्तथ्यमेव हि ॥ ५३ ॥
न वक्तव्यं न वक्तव्यं मौनमाश्रित्य तिष्ठताम् ।
नोचेत्स वाक्यदोषेण प्राप्नोत्यालानमुन्मदः ॥ ५४ ॥
वयं चेदत्र वाक्यं नाकरिष्याम नगोपरि । बन्धनं कथमावां स्यात्तस्मान्मौनं समाचरेत्
इत्युक्त्वा तां प्रत्युवाच नाहं जीवामि सुन्दरि ! ।
एतया भार्यया हीनस्तस्मान्मुञ्च मनोहरे ! ॥५६॥
अनेकविधवाक्यैः सा बोधिता नामुचत्तदा ।
कुपिता दुःखिता भार्या शशाप जनकात्मजाम् ॥ ५७ ॥
यथा त्वं पतिना सार्धं वियोजयसि मामितः ।
तथा त्वमपि रामेण वियुक्ता भव गर्भिणी ॥ ५८ ॥
इत्युक्तवत्यां तस्यां तु दुःखितायां पुनः पुनः । प्राणा निरगमन्दुःखात्पतिदुःखेन पूरितात्
रामं रामं स्मरन्त्याश्च वदन्त्याश्च पुनः पुनः ।
विमानमागतं सुष्टु पक्षिणी स्वर्गता बभौ ॥ ६० ॥
तस्यां मृतायां दुःखार्तो भर्ता तस्याः स पक्षिराट् ।
परमं क्रोधमापन्नो जाह्नव्यां दुःखितोऽपतत् ॥ ६१ ॥
तथा भवामि रामस्य नगरे जनपूरिते । मद्वाक्यादियमुद्विग्ना वियोगेन सुदुःखिता ॥
इत्युक्त्वा स पपातोदे जाह्नव्या भ्रमशोभिते ।
दुःखितः कुपितो भीतस्तद्वियोगेन कम्पितः ॥ ६३ ॥
क्रुद्धत्वाद्दुःखितत्वाच्च सीताया अपमाननात् ।
अन्त्यजत्वं परं प्राप्तो रजकः क्रोधानाभिधः ॥ ६४ ॥
यः क्रोधाच्च स्वकान्प्राणान्महतां दुष्टमाचरन् ।
सन्त्यजेत्स मृतो याति अन्त्यजत्वं द्विजोत्तमः ॥ ६५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तज्जातं रजकोक्त्याऽसौ निन्दिता च वियोजिता ।
रजकस्य च शापेन वियुक्ता सा वनं गता ॥ ६६ ॥
एतत्ते कथितं विप्र यत्तेपृष्टं विदेहजाम् । पुनरत्र परं वृत्तं शृणुष्व निगदामि तत् ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे रजकप्राग्जन्मकथनं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

---

## अष्टपञ्चाशत्तमोऽध्यायः

### भरतस्य सीतात्यागाज्ञाऽस्वीकारे शत्रुघ्नायाज्ञाकरणम् ।

शेष उवाच ।

भरतं मूर्च्छितं दृष्ट्वा रघुनाथः सुदुःखितः । प्रतिहारमुवाचेदं शत्रुघ्नं प्रापयाशु माम् ॥
तद्वाक्यं प्रोक्तमाकर्ण्य क्षणाच्छत्रुघ्नमानयत् । यत्र रामो निजभ्राता भरतेन सह स्थितः
भरतं मूर्छितं दृष्ट्वा रघुनाथं च दुःखितम् । प्रणम्यदुःखितोऽवोचत्किमिदं दारुणंमहत्
तदा रामोऽन्त्यजप्रोक्तं वाक्यं लोकविगर्हितम् ।
तं प्रत्युवाच रामोऽसौ शत्रुघ्नं पदसेवकम् ॥ ४ ॥
अधोमुखो दीनरवो गद्गदाक्षरवेपथुः । शृणु भ्रातर्वचोमेऽद्य कुरु तत्क्षिप्रमादरात् ॥
यथास्याद्विमला कीर्तिर्गङ्गेव पृथिवीं गता ।
सीताया वाच्यमतुलं लोके श्रुत्वाऽन्त्यजोदितम् ॥ ६ ॥
हातुमिच्छामि देहं स्वमेनां वा जानकीं किल ।
इति वाक्यं समाकर्ण्य रामस्य किल शत्रुहा ॥ ७ ॥
सवेपथुः पपातोर्व्यां दुःखितः परदारणः । संज्ञां प्राप्य मुहूर्तेन रघुनाथमवोचत ॥

शत्रुघ्न उवाच ।

किमेतदुच्यते स्वामिञ्जानकीं प्रति दारुणम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाखण्डैर्दुष्टचित्तैश्च सर्वधर्मबहिष्कृतैः ॥ ९ ॥
निन्दिता श्रुतिरग्राह्या भवति त्वग्र्यजन्मनाम् ।
जाह्नवी सर्वलोकानां पापघ्नी दुरितापहा ॥ १० ॥
निस्पृष्टा पापिभिः पुम्भिः सा स्पर्शे नार्हिता सताम् ।
सूर्यो जगत्प्रकाशाय समुदेति जगत्यहो ॥ ११ ॥
उलूकानां रुचिकरो न भवेत्तत्र का क्षतिः ।
तस्मात्त्वमेनां गृह्णीष्व मा त्यजानिन्दितां स्त्रियम् ॥ १२ ॥
श्रीरामभद्र कृपया कुरुष्व वचनं मम । एतच्छ्रुत्वा वचस्तस्य शत्रुघ्नस्य महात्मनः ॥
पुनःपुनर्जगादेमं यदुक्तं भरतम्प्रति । तन्निशम्य वचो भ्रातुर्दुःखपूरपरिप्लुतः ॥ १४ ॥
पपात मूर्च्छितो भूमौ छिन्नमूल इव द्रुमः ।
भ्रातरं पतितं वीक्ष्य शत्रुघ्नं दुःखितो भृशम् ॥ १५ ॥
प्रतिहारमुवाचेदं लक्ष्मणं त्वानयान्तिकम् । स लक्ष्मणगृहं गत्वा न्यवेदयदिदं वचः ॥

प्रतिहार उवाच ।

स्वामिन्रामो भवन्तं तु समाह्वयति वेगतः । स तच्छ्रुत्वा समाह्वानं रामचन्द्रेण वेगतः
जगाम तरसा तत्र यत्र सभ्रातृकोऽनघः । भरतं मूर्च्छितं दृष्ट्वा शत्रुघ्नमपि मूर्च्छितम्
श्रीरामचन्द्रं दुःखार्तं दुःखितो वाक्यमब्रवीत् ।
किमेतद्दारुणं राजन्दृश्यते मूर्च्छनादिकम् ॥ १९ ॥
तदाशु शंस मां सर्वं कारणं मुख्यतोऽनघ ! । एवं वदन्तं नृपतिर्वृत्तान्तं सर्वमादितः ॥
शशंस लक्ष्मणं क्षिप्रं दुःखपूरपरिप्लुतम् ।
लक्ष्मणस्तद्वचः श्रुत्वा सीतायास्त्यागसम्भवम् ॥ २१ ॥
निःश्वसन्मुहुरुच्छ्वसंस्तब्धगात्र इवाऽभवत् ।
भ्रातरं स्तब्धगात्रं च कम्पमानं मुहुर्मुहु ॥२२॥
न किञ्चन वदन्तं तं वीक्ष्य शोकार्दितोऽब्रवीत् ।
किं करिष्याम्यहं भूमौ स्थित्वा दुर्यशसाऽङ्कितः ॥ २३ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यजामीदं वपुः श्रीमल्लोकभीत्या च शोकवान्।
*सर्वदा भ्रातरो मह्यं मद्वाक्यकरणोत्सुकाः ॥ २४ ॥
इदानींतेऽपिदैवेन प्रतिकूलवचस्कराः । कुत्र गच्छामि कं यामि हसिष्यन्ति नृपा भुवि
दुर्यशोलाञ्छितं मां वै कुष्ठिनं रूपवन्नराः ।
मनोर्वंशे पुरा भूपा जाता जाता गुणाधिकाः ॥ २६ ॥
इदानीं मयि जाते तु विपरीतं बभूव तत् । इति सम्भाषमाणं तं रामभद्रं समीक्ष्य सः
संस्तभ्याऽश्रूणि विपुलान्युवाच विकलस्वरः ।
स्वामिन्विषादं मा कार्षीः कथं तव मतिर्हृता ॥ २८ ॥
सीतामनिन्दितां को नु त्यजति श्रुतवान्भवान् ।
आकारयामि रजकं परिपृच्छामि तत्प्रति ॥ २९ ॥
कथं त्वया निन्दिता सा जानकी योषिताम्वरा ।
तव देशे बलात्कश्चिद् बाध्यते न जनोऽल्पकः ॥ ३० ॥
तस्मात्तस्य यथा स्वान्ते प्रतीतिः स्यात्तथाऽऽचर ।
किमर्थं त्यज्यते भीरुः पतिव्रतपरायणा ॥ ३१ ॥
मनसा वचसा नान्यं जानाति जनकात्मजा ।
तस्मादेनां गृहाण त्वमेतां मा त्यज जानकीम् ॥ ३२ ॥
ममोपरि कृपां कृत्वा मदुक्तं संश्रयाऽऽशु तत् । एवं वदन्तं प्रत्यूचे रामः शोकेन कर्षितः
लक्ष्मणं धर्मवाक्येन बोधयंस्त्यजनोद्यमः ॥ ३३ ॥

राम उवाच ।

कथं तु मां ब्रवीषि त्वं मा त्यजैनामनिन्दिताम् ।
लोकापवादात्त्यक्ष्येऽहं जानन्नपि विपापिनीम् ॥ ३४ ॥
स्वयशः कारणेऽहं स्वं देहं त्यक्ष्यामिशोभनम् ।
त्वामपि भ्रातरं त्यक्ष्ये लोकवादाद्विगर्हितम् ॥ ३५ ॥

* शोकवन्तो भ्रातरो मे कर्तव्यो मूढचेतसः इति पुस्तकान्तरे पाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किमुतान्ये गृहा पुत्रा मित्राणि वसु शोभनम् ।
स्वयशः कारणे सर्वं त्यजामि किमु मैथिलीम् ॥ ३६ ॥
न तथा मे प्रियो भ्राता न कलत्रं न बान्धवाः ।
यथा मे विमला कीर्तिर्वल्लभा लोकविश्रुता ॥ ३७ ॥
इदानीं रजको नैव ( नाद्य ) प्रष्टव्यो भवति ध्रुवम् ।
कालेन सर्वं भविता लोकचित्तस्य रञ्जनम् ॥ ३८ ॥
आमयो यद्वदामस्तु न चिकित्स्यो भवेत्क्षितौ ।
स कालेन परीपाकाद्भेषजादेव नश्यति ॥ ३९ ॥

तथा कालेन सम्भावि साम्प्रतं माविलङ्घ्य । त्यजैनां विपिने साध्वीं मां वा खड्गेन घातय

इत्युक्तं वाक्यमाकर्ण्य दुःखितोऽभूत्तदा महान् ॥
चिन्तयामास च स्वान्ते लक्ष्मणः शोककर्शितः ॥ ४१ ॥
पित्राऽऽज्ञप्तो जामदग्न्यो मातरं चाप्यघातयत् ।
गुरोराज्ञा नैव लङ्घ्या युक्ताऽयुक्ताऽपि सर्वथा ॥ ४२ ॥

तस्मादेनां त्यजाम्येव रामस्य प्रियकाम्यया । इति सञ्चिन्त्य मनसि भ्रातरं प्रत्युवाच सः

लक्ष्मण उवाच ।

अकृत्यमपि कार्यं वै गुर्वाज्ञां नैव लङ्घयेत् । तस्मात्कुर्वे भवद्वाक्यं यत्त्वं वदसि सुव्रत !

इत्येवं भाषमाणं तं लक्ष्मणं प्रत्युवाच सः ।
साधु साधु महाप्राज्ञ ! त्वया मे तोषितं मनः ॥ ४५ ॥

अद्यैव रात्रौ जानक्या दोहदस्तापसीक्षणे । तन्मिषेण रथे स्थाप्य मोचयैनां महावने ॥
इत्थं भाषितमाकर्ण्य विशुष्यद्वदनोऽभितः । रुदन्बाष्पकलां मुञ्चञ्जगाम स्वं निवेशनम्
सुमन्त्रं तु समाहूय वचनं तमथाऽब्रवीत् । रथं मे कुरु सज्जं वै स*दश्ववरभूषितम् ॥
स तद्वाक्यं समाकर्ण्य रथमानीतवांस्तदा । आनीतं तं रथं दृष्ट्वा लक्ष्मणः शोककर्शितः
परमं दुःखमापन्नः संरुह्य स्यन्दनं वरम् । निःश्वसञ्जानकीगेहं प्रतस्थे भ्रातृसेवकः ॥

* 'सदश्वाम्बरभूषितम्' इति आनन्दाश्रम पुस्तके पाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गत्वा चान्तः पुरे भ्राता रामस्य मिथिलात्मजाम् ।
प्रत्यूचे निःश्वसन्वाक्यं दुःखपूरपरिप्लुतः ॥ ५१ ॥
मातर्जानकि ! रामेण प्रेषितो भवनं तव । तापसीः प्रति याहि त्वं दोहदप्राप्तिहेतवे ॥
इति वाक्यं समाकर्ण्य लक्ष्मणस्य विदेहजा । परमं हर्षमापन्ना लक्ष्मणं प्रत्यभाषत ॥

जानक्युवाच ।

धन्याहं मैथिली राज्ञी रामस्य चरणस्मरा । यस्या दोहदपूर्त्यर्थं प्रेषयामास लक्ष्मणम्
अद्याऽहं ता वनचरीस्तापसीः पतिदेवताः। नमस्कुर्यां च वासोभिः पूजयामि मनोहराः
इत्युक्त्वा रम्यवस्त्राणि महार्हाभरणानि च । मणीन्विमलमुक्ताश्च कर्पूरादिसुगन्धिमत्
चन्दनादिकवस्तूनि विचित्राणि सहस्रधा । जग्राह रघुनाथस्य पत्नी*स्वप्रियकाम्यया
सीता गृहीत्वा सर्वाणि दासीनां करयोर्मुहुः ।
लक्ष्मणं प्रतिगच्छन्ती देहल्यां चास्खलत्तदा ॥ ५८ ॥
अविचार्य तदौत्सुक्याल्लक्ष्मणं प्रियकारिणम् । उवाच कुत्र स रथो येन मां प्रापयिष्यसि
स निःश्वसन्रथं हैमं जानक्या सह निर्विशन् ।
सुमन्त्रं प्रत्युवाचासौ चालयाश्वान्मनो†जवान् ॥ ६० ॥
स ( तु ) सुयुक्तं रथं वाक्याल्लक्ष्मणस्य तु चालयन् ।
अश्रुपूर्णमुखं पश्यल्लक्ष्मणं स मुहुर्मुहुः ॥ ६१ ॥
आहतास्तेन कशया वाहास्तस्यापतन्पथि ।
न चलन्ति यदा वाहास्तदा लक्ष्मणमब्रवीत् ॥ ६२ ॥

सुमन्त्र उवाच ।

स्वामिंश्चलन्ति नो वाहा यत्नेन परिचालिताः ।
किं करोमि न जानेऽत्र कारणं वाहपातने ॥ ६३ ॥
एवं ब्रुवन्तं प्रत्यूचे लक्ष्मणो गद्गदस्वरः । सारथिं धैर्यमास्थाय ताडयैतान्कशादिभिः
एतच्छ्रुत्वोदितं यन्ता कथञ्चित्समचालयत् । तदाऽस्फुरद्दक्षनेत्रं जानक्या दुःखशंसकम्

---

* प्रियकरी वरा इति आनन्दाश्रम पुस्तके पाठः † मनोहरान्-इति च पाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदैव हृदये शोकः समभूद्दुःखशंसकः । तदैव पक्षिणः पुण्याः कुर्वन्ति परिवर्तनम् ॥
एवं वीक्ष्यैव वैदेही प्रत्युवाचाथ देवरम् । कथं मे तापसीक्षायै यातुमिच्छा रघूद्वह !
रामे भूयाद्धि कल्याणं भरते वा तथानुजे । तत्प्रजासु च सर्वत्र मा भवन्तु विपर्ययाः

एवं ब्रुवन्तीं सम्वीक्ष्य जानकीं च स ( स तु ) लक्ष्मणः ।
न किञ्चिदुक्तवान्रुद्धकण्ठो वाष्पप्रपूरितः ॥ ६६ ॥

सा गच्छन्ती मृगान्वामपरिवर्तनकारकान् । अपश्यद्दुःखसङ्घातकारकान्समभाषत

अद्य यन्मे मृगा वामं वर्तयन्ति तदिष्यते ।
श्रीरामचरणौ मुक्त्वा गच्छन्त्या युक्तमेव तत् ॥ ७१ ॥

महिलानां परो धर्मः स्वभर्तृचरणार्चनम् । तन्मुक्त्वाऽन्यत्र यान्त्या मे यद्भवेद्युक्तमेव तत्
एवं पथि विचारं तु कुर्वन्त्या परमार्थतः । जाह्नवी ददृशे देव्या मुनिवृन्दैकसेविता ॥

यस्यां जलस्य कल्लोला दृश्यन्ते दुग्धसन्निभाः ।
तरङ्गो दृश्यते यत्र स्वर्गसोपानमूर्तिभृत् ॥ ७४ ॥

यस्या वारिकणस्पर्शान्महापातकसञ्चयः । पलायते न कुत्रापि स्थानमीक्षन्समन्ततः

गङ्गां प्राप्याऽथ सौमित्रिर्जानकीं स्यन्दने स्थिताम् ।
उवाच निर्गलद्बाष्प एहि सीते ! रथाद्भुवि ॥ ७६ ॥
सीता तद्वाक्यमाकर्ण्य क्षणादवततार सा ।
लक्ष्मणेन धृता बाहौ स्खलन्ती पथि कण्टकैः ॥ ७७ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
जानक्या गङ्गादर्शनं नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# एकोनषष्टितमोऽध्यायः

## सीतालक्ष्मणसम्वादवर्णनम् ।

शेष उवाच ।

अथ नावा समुत्तीर्य जाह्नवीं लक्ष्मणस्तदा । जानकीं परतस्तीरे हस्ते धृत्वा वनं ययौ
सा चलन्ती पथि तदा शुष्यद्वदनलक्षिता । कण्टकक्षतसत्पादा स्खलन्ती च पदे पदे

लक्ष्मणस्तां महाघोरे विपिने दुःखदायिनि ।
प्रवेशयामास तदा राघवाज्ञाविधायकः ।
यत्र वृक्षा महाघोरा बर्बूराः खदिराघनाः ( धवाः ) ॥ ३ ॥
श्लेष्मातकाश्चिञ्चिणीकाः शुष्का दावेन वह्निना ॥ ४ ॥

कोटरस्था महासर्पाः फूत्कुर्वन्ति सुकोपिताः । घूका घूत्कुर्वते यत्र लोकचित्तभयङ्कराः

व्याघ्राः सिंहाः शृगालाश्च द्वीपिनोऽतिभयङ्कराः ।
दृश्यन्ते यत्र सरला ( असहनाः ) मनुष्यादाः सुकोपनाः ॥ ६ ॥

महिषाः शूकरा दुष्टा दंष्ट्राद्वयविलक्षिताः। कुर्वन्ति प्राणिनां तापं मानसस्य मदोद्धुराः
ईदृग्वनं प्रपश्यन्ती भयेनोपगतज्वराः । कण्टकैर्दष्टचरणा लक्ष्मणं वाक्यमब्रवीत् ॥ ८ ॥

जानक्युवाच ।

वीरर्षिमुनिसंसेव्यानाश्रमान्नेत्रसौख्यदान् । नाहं पश्यामि नो तेषां पत्नीश्च सुतपोधनाः
पश्यामि केवलं घोरान्पक्षिणः शुष्कवृक्षकान् । दावानलेन तत्सर्वं दह्यमानमिदं वनम्
त्वां च पश्यामि दुःखार्तमश्रुपूर्णाकुलेक्षणम् । शकुनेतरसाहस्रं भवेन्मम पदे पदे ॥११
तन्मे कथय वीराग्रय ! कथं मुक्ता महात्मना । रामेण दुष्टहृदया क्षिप्रं कथय मे हि तत्

इति वाक्यं समाकर्ण्य लक्ष्मणः शोककर्शितः ।
संरुद्धबाष्पवदनो ( नयनो ) न किञ्चित्प्रोक्तवांस्तदा ॥ १३ ॥

तदेव विपिनं घोरं गच्छन्ती लक्ष्मणान्विता । पुनरप्याह तं वीरं दुःखार्ता पश्यती मुखम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदापि स न तां वक्ति किमपि प्रेक्षुलोलुपः । तदा सात्यन्तनिर्बन्धं चकार परिपृच्छती
आग्रहेण यदा पृष्टो लक्ष्मणः सीतया तदा । रुद्धकण्ठो मुहुः शोचन्नवदत्त्यागसम्भवम्
तद्वाक्यं पविना तुल्यं निशम्य मुनिसत्तम ! । सुलता कृत्तमूलेव बभूवाऽऽकल्पवर्जिता

तदैव पृथिवी तां न जग्राह तनयामिमाम् ।
रामो विपापिनीं सीतां न जह्यादिति शङ्किनी ॥ १८ ॥
पतितां तां तु वैदेहीं दृष्ट्वा सौमित्रिरुत्सुकः ।
पल्लवाग्य्र ( ग्र ) समीरेण संज्ञितां तु चकार सः ॥ १६ ॥

संज्ञां प्राप्ता ब्रुवाचेदं मा हास्यं कुरु देवर ! । कथं मां पापरहितां त्यजते स रघूद्वहः

एवं बहु विलप्याऽथ लक्ष्मणं दुःखसंयुतम् ।
सम्वीक्ष्य मूर्च्छिता भूमौ पपात परिदुःखिता ॥ २१ ॥

मुहूर्तेनापि संज्ञां सा प्राप्य दुःखपरिप्लुता । जगाद् रामचरणौ स्मरन्ती शोकविक्षता

जानक्युवाच ।

रघुनाथो महाबुद्धिस्त्यजते मां कथं महान् । यो मदर्थे पयोराशिं बद्धवान्वानरैर्युतः ॥

स कथं मां महावीरो निष्पापां रजकोक्तितः ।
त्यजिष्यति ममैवात्र दैवं तु प्रतिकूलितम् ॥ २४ ॥
एवं वदन्ती पुनरपि मूर्च्छां प्राप्ता विदेहजा ।
मूर्च्छितां तां समीक्ष्याथ रुरोद विकृतस्वरः ॥ २५ ॥

पुनः संज्ञामवाप्यैवं सौमित्रिं निजगाद सा । दुःखातुरं वीक्षमाणारुद्धकण्ठं सुदुःखिता

सौमित्रे गच्छ रामं त्वं धर्ममूर्तिं यशोनिधिम् ।
मद्वाक्यमेवैतद् ब्रूयाः समक्षं तपसां निधेः ॥ २७ ॥

मां तत्याज भवान्यद्वै जानन्नपि विपापिनीम् । कुलस्य सदृशं वाशास्त्रज्ञानस्य तत्फलम्

नित्यं तव पदे रक्तां त्वदुच्छिष्टभुजं हि माम् ।
भवांस्तत्याज तत्सर्वं मम दैवं तु कारणम् ॥ २६ ॥

कल्याणं तव सर्वत्र भूयाद्वीरवरोत्तम ! । अहं तावद्वने त्वां हि स्मरन्ती प्राणधारिका

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनसा कर्मणा वाचा भवानेव ममोत्तमः । अन्ये तुच्छीकृताः सर्वे मनसा रघुवंशज ! ॥
भवे भवे भवानेव पतिर्भूयान्महीं(हे)श्वर ! । त्वत्पदस्मरणानेकहतपापा सतीश्वरी ॥
श्वश्रूजनं ब्रूहि सर्वं मत्सन्देशं रघूत्तम ! । त्यक्ता वने महाघोरे रामेण निरघा सती ॥
स्मरामि चरणौ युष्मद्वने मृगगणैर्युते । अन्तर्वत्नी वने त्यक्ता रामेण सुमहात्मना ॥
सौमित्रे ! शृणु मद्वाक्यं भद्रं भूयाद्रघूत्तमे । इदानीं सन्त्यजे प्राणान्रामवीर्यं सुरक्षती
त्वं रामवचनं तथ्यं यत्करोषि शुभं तव । परतन्त्रेण तत्कार्यं रामपादाब्जसेविना ॥

गच्छ त्वं रामसविधे शिवाः पन्थान एव ते ।
ममोपरि कृपा कार्या स्मर्तव्याऽहं कदा कदा ॥ ३७ ॥
इत्युक्त्वा मूर्च्छिता भूमौ पपात पुरतस्तदा ( स्ततः ) ।
लक्ष्मणो दुःखमापेदे वीक्ष्य मूर्च्छितजानकीम् ॥ ३८ ॥

वीजयामास वासोग्रैःसंज्ञाम्प्राप्तां प्रणम्य च । सौमित्रिःसान्त्वयामास वचनैर्मधुरैर्मुहुः

लक्ष्मण उवाच ।

एष गच्छामि रामं वै गत्वा शंसामि सर्वशः । समीपे ते मुनेरस्ति वाल्मीकेराश्रमोमहान्
इत्युक्त्वा तां परिक्रम्य दुःखितोबाष्पपूरितः । मुञ्चन्नश्रुकलादुःखाद्ययौरामं महीपतिम्
जानकी देवरं यान्तंवीक्ष्य विस्मितलोचना । हसत्ययं महाभागो लक्ष्मणो देवरो मम

कथं मां प्राणतः प्रेष्ठां विपापां राघवोऽत्यजत् ।
इति सञ्चिन्तयन्ती सा तमैक्षिष्टानिमेषणा ( तमैक्षदनिमेषणा ) ॥ ४३ ॥
जाह्नवीं सर्वथोत्तीर्णां ज्ञात्वा सत्यं स्वहापनम् ।
पतिता प्राणसन्देहं प्राप्ता मूर्च्छाऽऽगता तदा ॥ ४४ ॥

तदा हंसाः स्वपक्षाभ्यां जलमानीय सर्वतः । सिषिचुर्मधुरोवायुर्ववौ पुष्पसुगन्धिमान्
करिणः पुष्करैः स्वीयैर्जलपूर्णैः समन्ततः। व्याप्तं शरीरं रजसा क्षालयन्त इवाऽऽगताः

मृगास्तदन्तिकं प्राप्य सन्तस्थुर्विस्मितेक्षणा ।
नगाः पुष्पयुता आसंस्तत्कालं मधुना विना ॥ ४७ ॥

एतस्मिन्समये वृत्ते संज्ञां प्राप्य सती तदा । विललाप सुदुःखार्ता रामरामेति जल्पती

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हा नाथ ! दीनबन्धो हे करुणापयसां निधे । अपराधादृते मां त्वं कथं त्यजसि वै वने
इत्येवमादिभाषन्ती विलपन्ती मुहुर्मुहुः । इतस्ततः प्रपश्यन्ती संमूर्च्छन्ती पुनःपुनः ॥

तदा स्वशिष्यैर्भगवान्वाल्मीकिः सङ्गतो वनम् ।
शुश्राव रुदितं तत्र करुणास्वरभाषितम् ॥ ५१ ॥

शिष्यान्प्रतिजगादाथ पश्यन्तु वनमध्यतः । को रोदिति महाघोरे विपिने दुःखितस्वरः
ते प्रयुक्ताश्च मुनिना सञ्जग्मुर्यत्र जानकी । रामरामेति भाषन्ती बाष्पपूरपरिप्लुता ॥

तां दृष्ट्वा स्त्रियमौत्सुक्याद्वाल्मीकिं प्रत्यगुर्मुनिम् ।
श्रुत्वा तदीरितं वाक्यं जगामाऽऽसौ ततो मुनिः ॥ ५४ ॥

दृष्ट्वा तं तपसां राशिं जानकी पतिदेवता । नमोऽस्तु मुनये वेदमूर्तये व्रतवार्धये ॥

इत्युक्तवन्तीं तां सीतामाशीर्भिरभ्यनन्दयत् ।
भर्त्रा सह चिरं जीव पुत्रौ प्राप्नुहि शोभनौ ॥ ५६ ॥
काऽसि त्वं किं वने घोरे सङ्गताऽसि किमीदृशी ।
सर्वं मे शंस जानीयां तव दुःखस्य कारणम् ॥ ५७ ॥

सा तदा प्रत्युवाचेमं रामस्य महिलामुनिम् । निःश्वसन्ती करुणया गिरा सञ्जातवेपथुः

शृणु मे वाक्यमर्थोक्तं सर्वदुःखस्य कारणम् ।
जानीहि मां भूमिपते ! रघुनाथस्य सेविकाम् ॥ ५९ ॥

अपराधं विना त्यक्तां न जाने तत्र कारणम् । लक्ष्मणो मां विमुच्यात्र गतवान्राघवाज्ञया

इत्युक्त्वाऽश्रुकलापूर्णं बिभ्रतीं मुखपङ्कजम् ।
वाल्मीकिः सान्त्वयन्प्राह जानकीं कमलेक्षणाम् ॥ ६१ ॥

वाल्मीकिरुवाच ।

वाल्मीकिं मां विजानीहि पितुस्तव गुरुं मुनिम् ।
दुःखं मा कुरु वैदेहि ! ह्यागच्छ मम चाऽऽश्रमम् ॥ ६२ ॥

भिन्नस्थाने पितुर्गेहं जानीहि पतिदेवते । ईदृशे कर्मणि मम रोषोऽस्त्येव महीपतेः ॥
एवं वचःसमाकर्ण्य जानकी पतिदेवता । दुःखपूर्णाऽश्रवदना किञ्चित्सुखमवाप सा ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शेष उवाच ।

वाल्मीकिः सान्त्वयित्वैनां दुःखपूराकुलेक्षणाम् ।
निनाय स्वाश्रमं पुण्यं तापसीवृन्दपूरितम् ॥ ६५ ॥
सा गच्छन्ती पृष्ठतोऽस्य वाल्मीकेस्तपसां निधेः। रराजेन्दोः पृष्ठतो वै तारकेव मनोहरा॥
वाल्मीकिः प्राप्य च स्वीयमाश्रमं मुनिपूरितम् ।
तापसीःप्रतिसञ्चख्यौ जानकीं स्वाश्रमं गताम् ॥ ६७ ॥
वैदेही तापसीःसर्वा नमश्चक्रे महामनाः । परस्परं प्रहृष्य ताःपरिरम्भं समाचरन् ॥
वाल्मीकिर्निजशिष्यान्स प्रत्युवाच तपोनिधिः ।
रच्यतां बत जानक्याः पर्णशाला मनोरमा ॥ ६९ ॥
इत्युक्तं वाक्यमाकर्ण्य वाल्मीकेः सुमनोरमम् ।
व्यरचन्पत्रकैः शालां दारुभिः सुमनोहराम् ( सुमनोरमाम् ) ॥ ७० ॥
तत्रावसद्धि वैदेही पतिव्रतपरायणा । वाल्मीकेः परिचर्यां च कुर्वन्ती फलभक्षिका ॥
*जपन्तीरामरामेति मनसा वचसा स्वयम् । निनाय दिवसांस्तत्र जानकी पतिदेवता
काले साऽसूत पुत्रौ द्वौमनोहरवपुर्धरौ । रामचन्द्रप्रतिनिधी ह्यश्विनाविव जानकी ॥
तच्छ्रुत्वा तु मुनिर्हृष्टो जानक्याः पुत्रसम्भवम् ।
चकार जातकर्मादि संस्कारान्मन्त्रवित्तमः ॥ ७४ ॥
कुशैर्लवैश्च वाल्मीकिर्मुनिःकर्माणि चाऽऽचरत् ।
तन्नाम्ना पुत्रयोराख्या कुशोलव इति स्फुटा ॥ ७५ ॥
वाल्मीकिर्यत्र विरजा मङ्गलं तद्यथाचरत् । अत्यन्तं हृष्टचित्ता सा बभूव कमलेक्षणा ॥
तद्दिने लवणं हत्वा शत्रुघ्नःस्वल्पसैनिकः। आगमच्चाश्रमे चास्य वाल्मीकेर्निशि शोभने
तदा वाल्मीकिना शिष्टःशत्रुघ्नो रघुनायकम् ।
मा शंस जानकीपुत्रौ कथयिष्याम्यहं पुरः ॥ ७८ ॥
जानकीपुत्रकौ तत्र ववृधाते मनोरमौ । कन्दमूलफलैः पुष्टौ व्यदधादुन्मदौ वरौ ॥

* "राम राम जपन्त्याशु" इत्यानन्दाश्रमपुस्तके पाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुक्लप्रतिपदायाश्च शशीव सुमनोहरौ। कालेन संस्कृतौ जातावुपनीतौ मनोहरौ॥
उपनीय मुनिर्वेदं साङ्गमध्यापयत्सुतौ। सरहस्यं धनुर्वेदं रामायणमपाठयत्॥ ८१॥
वाल्मीकिना च धनुषी दत्ते स्वर्णसुभूषिते। अभेद्ये सगुणे श्रेष्ठे वैरिवृन्दविदारणे॥

इषुधी बाणसम्पूर्णे अक्षये करवालके।
वर्माण्यभेद्यानि ददौ जानक्यात्मजयोस्तदा॥ ८३॥

धनुर्धरौ धनुर्वेदपारगावाश्रमे मुदा। चरन्तौ तत्र रेजाते (द्वा) अश्विनाविव शोभनौ॥
जानकी वीक्ष्य पुत्रौ द्वौ खड्गचर्मधरौ वरौ। परमं हर्षमापन्ना विरहोद्भवमत्यजत्॥
एष ते कथितो विप्र! जानक्याः पुत्रसम्भवः। अतःशृणुष्व यद्वृत्तं वीरबाहुविकृन्तनम्

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे कुशलवोत्पत्तिकथानकं नामैकोनषष्टितमोऽध्यायः॥५९॥

---

## षष्टितमोऽध्यायः

### शत्रुघ्नसेनानिनः कालजितः लवेनयुद्धवर्णनम्।

शेष उवाच।

शत्रुघ्नो निजवीराणां छिन्नबाहून्निरीक्षयन्। उवाच तान्सुकुपितो रोषसन्दंशिताधरः
केन वीरेण वो बाहुकृन्तनं समकारि भोः। तस्याहं बाहुकृन्तामि देवगुप्तस्य वै भटाः

न जानाति महामूढो रामचन्द्रबलं महत्।
इदानीं दर्शयिष्यामि पराक्रान्त्या बलं स्वकम्॥ ३॥

स कुत्र वर्तते वीरो हयःकुत्र मनोरमः। को वाऽगृह्णात्सुप्तसर्पान्मूढोऽज्ञात्वा पराक्रमम्

इति ते कथिता वीरा विस्मिता दुःखिता भृशम्।
रामचन्द्रप्रतिनिधिं बालकं समशंसत॥ ५॥

तच्छ्रुत्वा रोषताम्राक्षो बालकेन हय*ग्रहम्। सेनान्यं वै कालजितमाज्ञापयद्युयुत्सुकः॥

---

* 'हयं हृतम्' इत्यपि पाठ आनन्दाश्रम पुस्तके।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शत्रुघ्न उवाच ।

सेनानीःसकलां सेनां व्यूहयस्व ममाऽऽज्ञया । रिपुःसम्प्रति गन्तव्यो महाबलपराक्रमः

नायं बालो हरिर्नूनं भविष्यति हयन्धरः ।

अथवा त्रिपुरारिः स्यान्नान्यथा मद्धयापहृत् ॥ ८ ॥

अवश्यं कदनं भावि सैन्यस्य बलिनो महत् ।

स्वच्छन्दचरितैः खेलन्नास्ते निर्भयधीःशिशुः ॥ ६ ॥

तत्र गन्तव्यमस्माभिःसन्नद्धै रिपुदुर्जयैः । एतन्निशम्य वचनं शत्रुघ्नस्य स सैन्यपः ॥

सज्जीचकार सेनां तां दुर्व्यूढां चतुरङ्गिणीम् ।

सज्जां तां शत्रुजिद्दृष्ट्वा चतुरङ्गयुतां वराम् ॥ ११ ॥

आज्ञापयत्ततो गन्तुं यत्र बालो हयन्धरः । सा चचाल तदा सेना चतुरङ्गसमन्विता ॥

कम्पयन्ती महीभागं त्रासयन्ती रिपून्बलात् । सेनानीस्तं ददर्शाऽथ बालकं रामरूपिणम्

विचार्य रामप्रतिममब्रवीद्वचनं हितम् । बाल ! मुञ्च हयश्रेष्ठं रामस्य बलशालिनः॥१४॥

सेनानीः कालजिन्नाम तस्य भूपस्य दुर्मदः ।

त्वां रामप्रतिमं दृष्ट्वा कृपा मे हृदि जायते ॥ १५ ॥

अन्यथा तव मे दौस्थ्याज्जीवितं न भविष्यति ।

एतद्वाक्यं समाकर्ण्य शत्रुघ्नस्य भटस्य हि १६ ॥

जहास किञ्चिदाकोपादुवाच च वचोऽद्भुतम् ।

गच्छ मुक्तोऽसि तं रामं कथयस्व हयग्रहम् ॥ १७ ॥

त्वत्तो बिभेमि नो शूर वाक्येन नयशालिना ।

ममाऽत्र गणना नास्ति त्वादृशाः कोटयो यदि ॥ १८ ॥

मातृपादप्रसादेन तूलीभूता न संशयः । कालजित्तव यन्नाम मात्राऽकारि मनोज्ञया ॥

पक्वबिम्बफलस्येव वर्णतो न च वीर्यतः ।

दर्शयस्वाऽधुना वीर्यं स्वनाम बलचिह्नितः ॥

मां कालं तव सञ्जित्य सत्यनामा भविष्यसि ॥ २० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शेष उवाच ।

स वाक्यैःपविनातुल्यैर्भिन्नःसुभटशेखरः । चुकोप हृदयेऽत्यन्तं जगाद वचनं पुनः ॥

कालजिदुवाच ।

कस्मिन्कुले समुत्पत्तिः किन्नामासि च बालक ! ।
त्वन्नाम नाभिजानामि कुलं शीलं वयस्तथा ॥ २२ ॥

पादचारं रथस्थाऽहसधर्मेण कथं जये । तदाऽत्यन्तं कुपितो जगाद वचनं पुनः ॥२३॥

लव उवाच ।

कुलेन किं च शीलेन नाम्ना वा सुमनोहृता ( वयसा भट ! ) ।
लवोऽहं लवतः सर्वाञ्जेष्यामि रिपुसैनिकान् ॥ २४ ॥

इदानीं त्वामपि भटं करिष्ये पादचारिणम् । इत्थमुक्त्वा धनुःसज्यं चकार स लवोवली
टङ्कारयामास तदा वीरानाकम्पयन्हृदि । वाल्मीकिं प्रथमं स्मृत्वा जानकीं मातरं लवः

मुमोच बाणान्निशितान्सद्यः प्राणापहारिणः ।
कालजित्स्वधनुः कृत्वा सज्यं ( ज्जं ) कोपसमन्वितः ॥ २७ ॥
ताडयामास जवनो लवं रणविशारदः ।
तद्बाणाञ्छतधा छित्त्वा क्षणाद्वेगात्कुशानुजः (ग.) ॥ २८ ॥
सेनानीं चक्रे विरथं ( बहुभिः ) वसुभिः स्वशिरोत्तमैः ( स्वशरोत्तमैः ) ।
विरथो गजमानीतमारुरोह भटैर्निजैः ॥ २९ ॥

मदोन्मत्तं महावेगं सप्तधा प्रस्रवान्वितम् । गजारूढं तु तं दृष्ट्वा दशभिर्धनुषोगतैः ॥

बाणैर्विव्याध विहसन्सर्वान्रिपुगणाञ्जयी ।
कालजित्तस्य वीर्यं तु दृष्ट्वा विस्मितमानसः ॥ ३१ ॥

गदां मुमोच महतीं महायसविनिर्मिताम् । आपतन्तीं गदां वेगाद्भारायुतविनिर्मिताम् ॥
त्रिधा चिच्छेद तरसा क्षुरप्रैः स कुशानुजः । परिघं निशितं घोरं वैरिप्राणहरोदितम्
मुक्तं पुनस्तेन लवश्चिच्छेद तरसाऽन्वितः । छित्त्वा तत्परिघं घोरं कोपादारक्तलोचनः
गजोपस्थे समारूढं मन्यमानश्चुकोप ह । तत्क्षणादच्छिनत्तस्य शुण्डां खड्गेन दन्तिनः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दन्तयोश्चरणौ धृत्वाऽऽरुरोह गजमस्तके । मुकुटं शतधा कृत्वा कवचं तु सहस्रधा ॥
केशेष्वाकृष्य सेनान्यं पातयामास भूतले । पातितःसगजोपस्थात्सेनानीः कुपितःपुनः
हृदये ताडयामास मुष्टिना वज्रमुष्टिना । स आहतो मुष्टिभिस्तु क्षुरप्रान्निशितान्छरान्

मुमोच हृदये क्षिप्रं कुण्डलीकृतधन्ववान् ।
स रराज रणोपान्ते कुण्डलीकृतचापवान् ॥ ३९ ॥

शिरस्त्रं कवचं बिभ्रदभेद्यं शरकोटिभिः। स विद्धः सायकैस्तीक्ष्णैस्तं हन्तुं खड्गमाददे

दशन्रोषात्स्वदशनान्निःश्वशन्नुच्छसन्मुहुः ।
खड्गहस्तं समायान्तं शूरं सेनापतिं लवः ॥ ४१ ॥
विच्छेद भुजमध्यं तुसखड्ग पाणिरापतत् ।
छिन्नं खड्गधरं हस्तंवीक्ष्यकोपाच्चमूपतिः ॥ ४२ ॥
वामेन गदया हन्तुं प्रचक्राम भुजेन तम् ।
सोऽपिच्छिन्नोभुजस्तस्यसाङ्गदस्तीक्ष्णसायकैः ॥ ४३ ॥

तदा प्रकुपितो वीरः पादाभ्यामहनल्लवम् । लवः पादाहतस्तस्य न चचाल रणाङ्गणे ॥
राजा हतो द्विप इव चरणच्छेदनं व्यधात् ।तदाऽपि तं मौलिनाऽसौ प्रहर्तुमुपचक्रमे ॥
तदा लवश्चमूनाथं मन्यमानोऽधिपौरुषम् । करवालं समादाय करे कालानलोपमम्
अच्छिनच्छिर एतस्य महामुकुटशोभितम् । हाहाकारो महानासीच्चमूनाथे निपातिते
सैनिकाःपरिसङ्क्रुद्धा लवं हन्तुं समागताः । लवस्तान्स्वशराघातैःपलायनपरान्व्यधात्

छिन्ना भिन्नाङ्गकाः केचिद् गताः केचिद्रणाङ्गणात् ।
स निवार्याखिलान्योधान्विजगाह चमुं मुदा ॥ ४९ ॥
वाराहइव निःश्वस्य प्रलये (षु) सु महार्णवम् ।
गजा भिन्नाद्विधा जातामौक्तिकैःपूरितामही ॥ ५० ॥

दुर्गमाऽभूद्भटाग्र्याणां पर्वतैर्व्यापृता यथा । अश्वाःकनपल्याणा रुचिरा रत्नराजिताः
अपतन्रुधिरा प्लुष्टे हृदे बलसुशोभिताः । रथिनः करमध्यस्थधनुर्दण्डसुशोभिन (त्सः)
रथोपस्थे निपतिताः स्वर्गगा इव वै सुराः । सन्दष्टौष्ठपुटा वक्त्रभ्रमल्लक्ष्मीविलक्षिताः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पतितास्तत्र दृश्यन्ते वीरा रणविशारदाः । सुस्राव शोणितसरिद्धयमस्तककच्छपा ॥
महाप्रवाहललि( सि )ता वैरिणां भयकारिका ।
केषां चिद्बाहवश्छिन्नाःकेषां पादा विकर्तिताः ॥ ५५ ॥
केषां कर्णाश्च नासाश्च केषां कवचकुण्डले । एवं तु कदनं जातं सेनान्यां पतिते रणे
सर्वे निपतिता वीरा न केचिज्जीवितास्ततः ।
लवो जयं रणे प्राप्य वैरिवृन्दं विजित्य च ॥ ५७ ॥
अन्यागमनशङ्कायां मनःकुर्वन्नवैक्षत । केचिदुर्वरिता युद्धाद्भाग्येन न रणे मृताः ॥
शत्रुघ्नसविधे जग्मुः शंसितुं वृत्तमद्भुतम् । गत्वा ते कथयामासुर्यथावृत्तं रणाङ्गणे ॥
कालजिन्निधनंबालाच्चित्रकारिरणोद्यमम् । तच्छ्रुत्वा विस्मयं प्राप्तःशत्रुघ्नस्तानुवाच ह
इसन्रोषाद्दशन्दन्तान्बालग्राहहयं स्मरन् । रे वीराःकिं मदोन्मत्ता यूयं किम्वाछलग्रहाः
किम्वा वैकल्यमायातं कालजिन्मरणं कथम् ।
यः सङ्ख्ये वैरिवृन्दानां दारुणः समितिञ्जयः ॥ ६२ ॥
तं कथं वालको जीयाद्यमस्यापिदुरासदम् । शत्रुघ्नवाक्यंसंश्रुत्यवीराःप्रोचुरसृक्प्लुताः
नास्माकं मदमत्तादि न च्छलो न च देवनम् ।
कालजिन्मरणं सत्यं लवाज्जानीहि भूपते ! ॥ ६४ ॥
बलं च कृत्स्नं मथितं बालेनातुलशौण्डिना । अतःपरं तु यत्कार्यं ये प्रेष्या नृवरोत्तमाः
चालं ज्ञात्वा भवान्नाऽत्र करोतु बलसाहसम् । इतिश्रुत्वा वचस्तेषां वीराणां शत्रुहा तदा
सुमतिं च मतिश्रेष्ठमुवाच रणकारणे ॥ ६७ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे कुशलवयुद्धे सैन्यपराजयकालजित्सेनानीमरणं नाम षष्टितमोऽध्यायः ॥ ६० ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# एकषष्टितमोऽध्यायः

## शत्रुघ्नलवयोस्तुमुलसंग्रामवर्णनम् ।

शत्रुघ्न उवाच ।

जानासि किं महामन्त्रिन्को वालो हयमाहरत् । येन मे क्षपितं सर्वं बलं वारिधिसन्निभम्

सुमतिरुवाच ।

स्वामिन्नयं मुनिश्रेष्ठवाल्मीकेराश्रमो महान् ।
क्षत्त्रियाणामत्र वासो नास्त्येव परतापन ! ॥ २ ॥

इन्द्रो भविष्यति परमम(ह)र्षी हयमाहरत् । पुरारिर्वान्यथा वाहं तव कः समुपाहरेत् ॥
कालजिद्येन नाशं वै प्राप्तः परमदारुणः। तं प्रति श्रीमहाराज ! गन्ता कः पुष्कलान्वितः
त्वं च वीरैर्भटैःसर्वैराजभिः परिवारितः । तत्र गच्छस्व सैन्येन महताशत्रुकृन्तनः ॥

गत्वा सजीवितं वीरं बद्ध्वा तु कुतुकार्थिने ।
दर्शयिष्यामि रामाय मतं मे त्विदमाद्भुतम् ॥ ६ ॥

इति वाक्यं समाकर्ण्य वीरान्सर्वान्समादिशत् । सैन्येन महतायात यूयमायामि पृष्ठतः
निर्दिष्टास्ते क्षणाद्वीरा जग्मुर्यत्र लवो बली । धनुर्विस्फारयंस्तत्र सुदृढं गुणपूरितम् ॥
आयातं तन्महद्दृष्ट्वा बलं वीरप्रपूरितम् । न किञ्चिन्मनसा बिभ्ये लवेन बलशालिना

लवः सिंह इवोत्तस्थौ मृगान्मत्वाऽखिलान्भटान् ।
धनुर्विस्फारयन्रोषाच्छरान्मुञ्चन्सहस्रशः ॥ १० ॥

ते शरैः पीड्यमानास्तु महारोषेणपूरिताः । वीरं बालं मन्यमानाःसम्मुखं प्राद्रवंस्तदा
वीरान्सहस्रशो दृष्ट्वा भ्रमिभिःपर्यवस्थितान् । लवो जवेन सन्धाय शरान्रोषप्रपूरितः
भ्रमिराद्या सहस्रेण द्वितीयाऽयुतसङ्ख्यया । तृतीयायुतयुग्मेन तुरीयाऽयुतपञ्चभिः ॥
पञ्चमी लक्षयोधानां षष्ठी योधायुताधिकैः । सप्तमी लक्षयुग्मेन सप्तभिर्भ्रमिभिर्वृतः ॥

मध्ये लवो भ्रमिव्याप्तः सञ्चरन्वह्निवत्तदा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दाहयामास सर्वान्वै सैनिकान्भ्रमिकारकान् ॥ १५ ॥
केचित्खड्गैः शरैः केचित्केचित्प्रासैश्च कुन्तलैः ।
पट्टिशैः परिघैः सर्वा भ्रमिर्भग्ना महात्मना ॥ १६ ॥
सप्तभिर्भ्रमिभिर्मुक्तो रराज स कुशानुजः । मेघवृन्दविनिर्मुक्तःशशीव शरदागमे ॥
प्राहरत्सर्वथा योधान्भिन्दन्गजकरान्बहून् ।
छिन्दञ्छिरांसि वीराणां चक्रभ्रूणि महान्ति च ॥ १८ ॥
अनेके पतिता वीरा लवबाणप्रपीडिताः । मुमुहुःसमरेऽथान्ये नष्टा अन्ये सुकातराः
पलायनपरं सैन्यं लवबाणप्रपीडितम् । वीक्ष्य वीरो रणे योद्धुं प्रायात्पुष्कलसंज्ञकः ॥
तिष्ठतिष्ठेति च वदन्रोषपूरितलोचनः । रथे सुहयशोभाढ्ये तिष्ठन्प्रायाल्लवं बली ॥
स लवं प्रत्युवाचाथ पुष्कलःपरमास्त्रवित् । तिष्ठ दत्ते मयासङ्ख्ये रथे सुहयशोभिते ॥
पदातिना त्वया युद्धं करोमि कथमाहवे । तस्मात्तिष्ठ रथे पश्चाद्युद्ध्येऽहं भवता सह ॥
एतद्वाक्यं निशम्याऽसौ लवः पुष्कलमब्रवीत् ॥ २३ ॥

लव उवाच ।

त्वयादत्ते रथेस्थित्वा युद्धं कुर्यामहं रणे । तदा मे पापमेवस्याज्जयःसन्दिग्ध एव हि
न वयं ब्राह्मणा वीर ! प्रतिग्रहपरायणाः । वयं तु क्षत्त्रिया नित्यं दानकर्मक्रियारताः
इदानीं त्वद्रथं कोपाद्भनज्मि प्रत्यहं भवान् । पादचारी भवत्येव पश्चाद्युद्धं करिष्यति
पुष्कलो वाक्यमाकर्ण्य धर्मधैर्यसमन्वितम् । स्मयमाप चिरंचित्ते धनुःसज्यमथाकरोत्
तमात्तधनुषं दृष्ट्वा लवःकोपसमन्वितः । चापं चिच्छेद पाणिस्थं शरसन्धानमाचरन्
स यावत्सगुणं चापं कुरुते तावदुद्धतः । रथभङ्गं चकारास्य समरे प्रहसन्बली ॥
भग्नं रथं स्वकं वीक्ष्य धनुश्छिन्नं महात्मना । महावीरं मन्यमानःपदातिःप्राद्रवद्रणे
उभौ धनुर्धरौ वीरावुभावपि शरोद्धतौ । उभौ क्षतजविप्लुष्टौछिन्नसन्नाहितावुभौ ॥
परस्परं वाणघातविशीर्णतनुलक्षितौ । जयाकाङ्क्षां प्रकुर्वन्तौ परस्परवधैषिणौ ॥
जयन्तकार्तिकेयौ वा पुरारिःपुरभिद्यथा । एवं परस्परं युद्धं प्रकुर्वाणौ रणाङ्गणे ॥
पुष्कलः प्रत्युवाचाथ लवशूरशिरोमणे । त्वादृशो न मया दृष्टःकश्चिद्वीरशिरोमणिः ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिरस्ते पातयाम्यद्य बाणैः शितसुपर्वभिः । मा पलायस्व समरे प्राणान्रक्षस्व संयतः
एवमुक्त्वा लवं वीरं चकार शरपञ्जरे । पुष्कलस्य शरा भूमौ नभसि व्याप्य संस्थिताः
शरपञ्जरमध्यस्थो लवः पुष्कलमब्रवीत् । महत्कर्मकृतं वीर ! यन्मां बाणैरपीडयत् ॥
इत्युक्त्वा बाणसङ्घातं प्रच्छिद्य वचनं पुनः । जगाद पुष्कलं वीरःशरसन्धानकोविदः
पालयात्मानमाजिस्थं मच्छराघातपीडितः । पतिष्यसि महीपृष्ठे रुधिरेण परिप्लुतः
एवमुक्तं समाकर्ण्य पुष्कलःकोपसंयुतः । रणे संयोधयामास लवं वीरं महाबलम् ॥
लवःप्रकुपितो बाणं तीक्ष्णं वैरिविदारणम् । जग्राह लवतःकोशादाशीविषमिव क्रुधा
जाज्वल्यमानःसशरश्चापमुक्तो लवस्य च । हृदयं भेत्तुमुद्युक्तश्छिन्नो भारतिनाऽऽशु सः
छिन्नेभारतिनासङ्ख्ये शरेण प्राणहारिणा । अत्यन्तं कुपितो घोरं शरमन्यंसमाददे ॥
आकर्णाकृष्टचापेन समुक्तो निशितः शरः । बिभेद हृदयं तस्य पुष्कलस्य महारणे ॥
भिन्नो वक्षसि वीरेण सायकेनाशुगामिना । पपात धरणीपृष्ठे महाशूरशिरोमणिः ॥
पतितं तं समालोक्य पुष्कलं पवनात्मजः । गृहीत्वा राघवभ्रात्रे ददौ मूर्च्छासमन्वितम्
मूर्च्छितं तं समालोक्य शोकविह्वलमानसः । हनूमन्तं लवं हन्तुं निदिदेश क्रुधान्वितः

हनूमान्क्रोधसम्प्लुष्टो लवं सङ्ख्ये महाबलम् ।
विजेतुं तरसा प्रागाद् वृक्षमुद्यम्य शाल्मलिम् ॥ ४८ ॥

वृक्षेण हतवान्मूर्ध्नि लवस्य हनुमान्बली । तमापतन्तं तरसा चिच्छेद शतधा लवः ॥
छिन्नेनगे पुनः कोपाद्वृक्षानुत्पाट्य मूलतः । ताडयामास हृदये मस्तके च महाबलः
यान्यान्वृक्षान्समादत्ते ताडनाय स मारुतिः । तांस्तांश्चिच्छेद तरसा बलवान्नतपर्वभिः

तदा शिलाः समुत्पाट्य गण्डशैलोपमाः कपिः ।
पातयामास शिरसि क्षिप्रवेगेन मारुतिः ॥ ५२ ॥
स आहतः शिलासङ्घैः सङ्ख्ये कोदण्डमुन्नयन् ।
बाणैस्ताश्चूर्णयामास यन्त्रिकाभिर्यथा कणाः ॥ ५३ ॥

तदाऽत्यन्तं प्रकुपितो मारुतिः पुच्छवेष्टनम् । चकार समरोपान्ते लवस्य बलिनः कृती ।

स्वं पुच्छेन समाविद्धं वीक्ष्य स्वाम्बां हृदि स्मरन् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुष्टिना ताडयामास लाङ्गूलं मारुतेर्बली ॥ ५५ ॥
तन्मुष्टिघातव्यथितो मारुतिस्तममूमुचत् । समुक्तः पुच्छतो युद्धे शरान्मुञ्चन्नभूद्बली ॥
दुर्वारशरघातेन सम्पीडिततनुः कपिः । बाणवर्षं मन्यमानो दुःसहं समरे बहु ॥५७ ॥
किंकर्तव्यमितोऽस्माभिः पलाय्य यदि गम्यते ।
तदा मे स्वामिनो लज्जा ताडयेद् बालकोऽत्र माम् ॥ ५८ ॥
ब्रह्मदत्तवरत्वात्तु मूर्च्छा न मरणं न हि । दुःसहा बाणपीडाऽत्र किंकर्तव्यं मयाऽधुना
शत्रुघ्नः समरे गत्वा जयं प्राप्नोतु बालकात् ।
अहं तावज्जयाकाङ्क्षी शये कपटमूर्च्छया ॥ ६० ॥
इत्येवं मानसे कृत्वा पपात रणमण्डले । पश्यतां सर्ववीराणां कपटेन विमूर्च्छितः ॥
तं मूर्च्छितं समाज्ञाय हनूमन्तं महाबलम् । जघान सर्वान्नृपतीञ्छरमोक्षविचक्षणः ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे
हनुमत्पतनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## द्विषष्टितमोऽध्यायः

### शत्रुघ्नेन सह घोरयुद्धे लवस्य मूर्च्छावर्णनम् ।

शेष उवाच ।

मूर्च्छितं मारुतिं श्रुत्वा शत्रुघ्नः शोकमाययौ ।
किं कर्तव्यं मया सङ्ख्ये बालकोऽयं महाबलः ॥ १ ॥
स्वयं रथे हेममये तिष्ठन्वीरवरैःसह । योद्धुं प्रागाल्लवो यत्र विचित्ररणकोविदः ॥ २ ॥
लवं ददर्श शिशुतां प्राप्तं राममिव क्षितौ । धनुर्बाणकरं वीरान्क्षिपन्तं रणमूर्धनि ॥
विचारयामास तदा कोऽयं रामस्वरूपभृत् । नीलोत्पलदलश्यामं वपुर्बिभ्रन्मनोहरम् ॥
एष वैदेहतनुजासुनो भवति नान्यथा । अस्मान्विजित्य समरे यास्यते मृगराडिव ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्माकं नो जयो भाव्यः शक्त्या विरहितात्मनाम् ।
अशक्ताः किं करिष्यामः समरे रणकोविदाः ॥ ६ ॥
इत्येवं स विचार्याथ बालकं तु वचोऽब्रवीत् ।
रणे कुतुककर्तारं वीरकोटिनिपातकम् ॥ ७ ॥
कस्त्वं बाल ! रणेऽस्माकं वीरान्पातयसि क्षितौ ।
न जानीषे बलं राज्ञो रामस्य दनुजार्दिनः ॥ ८ ॥
का ते माता पिता कस्ते सुभाग्यो जयमाप्तवान् ।
नाम किं विश्रुतं लोके जानीयां ते महाबल ! ॥ ९ ॥

मुञ्च वाहं कथं बद्धःशिशुत्वात्तत्क्षमामिते । आयाहि रामं वीक्षस्व दास्यते बहुलं तव

इत्युक्तो बालको वीरो वचः शत्रुघ्नमादरात् ।
किं ते नाम्नाऽथ पित्रा वा कुलेन वयसा तथा ॥ ११ ॥

युध्यस्व समरे वीर ! चेत्त्वं बलयुतोभवः । कुशं वीरं नमस्कृत्य पादयोर्याहि नान्यथा
भ्राता रामस्य वीरोऽभूर्नावयोर्बलिनांवरः । वाहंविमोचय बलाच्छक्तिस्ते विद्यते यदि
इत्युक्त्वा शरसन्धानं कृत्वा प्राहरदुद्भटः । हृदये मस्तके चैव भुजयो रणमण्डले ॥
तदा प्रकुपितो राजा धनुः सज्यमथाकरोत् । नादयन्मेघगम्भीरं त्रासयन्निव बालकम्

बाणानपरिसङ्ख्यातान्मुमोच बलिनां वरः ।
बालो बलेन चिच्छेद सर्वांस्तान्सायकव्रजान् ॥ १६ ॥

लवस्यानेकधा मुक्तैर्बाणैर्व्याप्तं महीतलम् । व्यतीपाते प्रदत्तस्य दानस्येवाक्षयंगताः
ते बाणा व्योमसकलं व्याप्नुवंल्लवसंहिताः । सूर्यमण्डलमासाद्य प्रवर्तन्ते समन्ततः

मारुतेनाविशद्यत्र बाणपञ्जरगोचरे ।
मनुष्याणां तु का वार्ता क्षणजीवितशंसिनाम् ॥ १९ ॥

तद्बाणान्विस्तृतान्दृष्ट्वाशत्रुघ्नो विस्मयंगतः। अच्छिनच्छतसाहस्रं बाणमोचनकोविदः

ताञ्छिन्नान्सायकान्सर्वान्स्वीयान्दृष्ट्वा कुशानुजः ।
धनुश्चिच्छेद तरसा शत्रुघ्नस्य महीपतेः ॥ २१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सोऽन्यद्धनुरुपादाय यावन्मुञ्चति सायकान् । तावद्बभञ्जस रथं सायकैःशितपर्वभिः ॥
करस्थमच्छिनच्चापं सुदृढं गुणपूरितम् । तत्कर्मा पूजयन्वीरा रणमण्डलवर्तिनः ॥२३॥

स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
अन्यं रथं समास्थाय ययौ योद्धुं लवं बलात् ॥ २४ ॥

अनेकबाणनिर्भिन्नः स्रवद्रक्तकलेवरः । पुष्पितःकिंशुक इव शुशुभे रणमध्यगः ॥ २५ ॥
शत्रुघ्नबाणप्रहतःपरंकोपमुपागमत् । बाणसन्धानचतुरः कुण्डलीकृतचापवान् ॥ २६ ॥
विशीर्णकवचं देहं शिरो मुकुटवर्जितम् । स्रवद्रक्तपरिप्लुष्टं शत्रुघ्नस्य चकार सः ॥२७॥

तदा रामानुजः क्रुद्धो दशबाणाञ्छिताग्रकान् ।
मुमोच प्राणसंहारकारकान्कुपितो भृशम् ॥ २८ ॥

स तांस्तांस्तिलशःकृत्वा बाणैर्निशितपर्वभिः । ताडयामास हृदये शत्रुघ्नस्याष्टभिःशरैः
अत्यन्तं बाणपीडार्तो लवं बलिनमुत्स्मरन् । दुःसहं मन्यमानस्तं शरान्मुञ्चन्नभूत्तदा
तदा लवेन तीक्ष्णेन हृदिभिन्नो विशालके । अर्धचन्द्रसमानेन तीक्ष्णपर्वसुशोभिना ॥

स विद्धो हृदि बाणेन पीडां प्राप्तः सुदारुणाम्
पपात स्यन्दनोपस्थे धनुष्पाणिः सुशोभितः ॥ ३२ ॥

शत्रुघ्नं मूर्च्छितं दृष्ट्वा नृपाश्च सुरथादयः । दुद्रुवुर्लवमुद्युक्ता जयप्राप्त्यै रणे तदा ॥
सुरथो विमलो वीरो राजा वीरमणिस्तथा । सुमदो रिपुतापाद्याःपरिवव्रुश्च संयुगे ॥
केचित्क्षुरप्रैर्मुसलैःकेचिद्बाणैःसुदारुणैः । प्रासैःपरशुभिःकेचित्सर्वतःप्राहरन्नृपाः ॥

तानधर्मेण युद्धोत्कान्दृष्ट्वा वीरशिरोमणिः ।
दशभिर्दशभिर्बाणैस्ताडयामास संयुगे ॥ ३६ ॥

ते बाणवर्षविहता रणमध्ये सुकोपनाः । केचित्पलायिताःकेचिन्मुमुहुर्युद्धमण्डले ॥

तावत्स राजा शत्रुघ्नो मूर्च्छां सन्त्यज्य सङ्गरे ।
लवं प्रायान्महावीरं योद्धुं बलसमन्वितः ॥ ३८ ॥
आगत्य तं लवं प्राह धन्योऽसि शिशुसन्निभः ।
न बालस्त्वं सुरः कश्चिच्छलितुं मां समागतः ॥ ३९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केनापि न हि वीरेण पातितो रणमण्डले । त्वयाऽहं प्रापितो मूर्च्छां समक्षं ममपश्यतः

इदानीं पश्य मे वीर्यं त्वां सङ्ख्ये पातयाम्यहम् ।
सहस्व बाणमेकं त्वं मा पलायस्व बालक ! ॥ ४१ ॥

इत्युक्त्वा समरे बालं शरमेकं समाददे । यमवक्त्रसमं घोरं लवणो येन घातितः ॥४२॥
सन्धायबाणं निशितं हृदिभेत्तुं मनोदधत् । लवं वीरसहस्राणां वह्निवत्सर्वदाहकम् ॥

तं बाणं प्रज्वलन्तं स द्योतयन्तं दिशोदश ।
दृष्ट्वा सस्मार बलिनं कुशं वैरिनिपातिनम् ॥ ४४ ॥

यद्यस्मिन्समये वीरो भ्रातास्याद्बलवान्मम । तदा शत्रुघ्नवशता न मे स्याद्भयमुल्वणम्
एवं तर्कयतस्तस्तस्यलवस्य च महात्मनः । हृदिलग्नो महाबाणो घोरःकालानलोपमः
मूर्च्छां प्राप तदा वीरो भूपसायकसंहतः । सङ्गरे सर्ववीराणां शिरोभिःसमलङ्कृते

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे लवमूर्च्छानाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

# त्रिषष्टितमोऽध्यायः

## लवस्य पतनात्सीतया शोककरणम् ।

शेष उवाच ।

लवं विमूर्च्छितं दृष्ट्वा बलिवैरिविदारणम् । शत्रुघ्नो जयमापेदे रणमूर्ध्नि महाबलः ॥

लवं बालं रथे स्थाप्य शिरस्त्राणाद्यलङ्कृतम् ।
रामप्रतिनिधिं मूर्त्या ततो गन्तुमियेष सः ॥ २ ॥

स्वमित्रं शत्रुणाग्रस्तमितिदुःसमन्विताः। बालामात्रेऽस्य सीतायै त्वरिताःसंन्यवेदयन्

बाला ऊचुः ।

मातार्जानकि ! ते पुत्रो बलाद्वाहमपाहरत् । कस्यचिद्भूपवर्यस्य बलयुक्तस्य मानिनः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततो युद्धमभूद्घोरं तस्य सैन्येन जानकि ! । तदा वीरेण पुत्रेण तव सर्वं निपातितम्
पश्चादपि जयंप्राप्तःसुतस्तव मनोहरः । तं भूपं मूर्च्छितं कृत्वा जयमाप रणाङ्गणे ॥ ६ ॥
ततो मूर्च्छां विहायैष राजा परमदारुणः । सङ्कुप्य पातयामास तवपुत्रं रणाङ्गणे ॥

अस्माभिर्वारितः पूर्वं मा गृहाण हयोत्तमम् ।
अस्मान्सर्वांश्च धिक्कृत्य ब्राह्मणान्वेदपारगान् ॥ ८ ॥

इतिवाक्यं शिशूनां सा समाकर्ण्य सुदारुणम् । पपात भूतलोपस्थे दुःखयुक्ता रुरोदह

सीतोवाच ।

कथं नृपो दयाहीनो बालेनसह युध्यति । अधर्मकृतदुर्बुद्धिर्यो मद्बालं न्यपातयत् ॥
लववीर ! भवान्कुत्र वर्ततेऽतिबलान्वितः। कथंत्वं निष्कृपस्याहो राज्ञोऽहार्षीर्हयोत्तमम्

त्वं बालस्ते दुराक्रान्ताः सर्वशस्त्रविशारदाः ।
रथस्था विरथस्त्वं वै कथं युद्धं समं भवेत् ॥ १२ ॥

ताताहंतु त्वयासार्द्धं रामत्यागा सुखं जहौ । इदानीं रहिता युष्मन्कथं जीवामि कानने
एहि मां मुञ्च यज्ञाश्वं गच्छत्वेष महीपतिः। मद्दुःखंनाभिजानासि मम दुःखप्रमार्जकः
कुशो यद्यभविष्यत्स रणे वीरशिरोमणिः । अमोचयिष्यदधुना भवन्तं भूपपार्श्वतः ॥
सोऽपि मद्दैवतो नास्ति समीपे किं करोम्यतः । दैवमेव ममाप्यत्र कारणं दुःखसम्भवे
एवमादि बहुश्रीमत्येषा वै विललाप ह । पादाङ्गुष्ठेन लिखती भूमिं नेत्रद्वयाश्रुभिः ॥
बालान्प्रति जगादासौ पृथुकाःस च भूपतिः । कथं मत्सुतमापात्य रणे कुत्र गमिष्यति

इति वाक्यं वदत्येषा जानकी पतिदेवता ।
तावत्कुशस्तु सम्प्राप्त उज्जयिन्या महर्षिभिः ॥ १६ ॥

माघासितचतुर्दश्यां महाकालं समर्च्य च । प्राप्य भूरिवरांस्तस्मादागमन्मातृसन्निधौ

जानकीं विह्वलां दृष्ट्वा नेत्रोद्भूताश्रुविक्लवाम् ।
शोकविह्वलदीनाङ्गीं बभाषे यावदुत्सुकः ॥ २१ ॥

तदा स्वबाहुरवदत्स्फुरन्युद्धाभिशंसनः । हृदये च रणोत्साहो बभूवातिरथस्य हि ॥
स प्रत्युवाच जननीं दीनगद्गदभाषिणीम् । मातस्तव गतं दुःखं मयि पुत्र उपस्थिते ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मयि जीवति ते नेत्रादश्रूणि भुवि नोऽपतन् ।
प्रस्वं चोवाचाश्रुखिन्नां दीनगद्गदभाषिणीम् ॥ २४ ॥
कुशो दुःखमितःसद्यो दुःखितां धीरमानसः । मम भ्राता लवःकुत्र वर्तते वैरिमर्दनः ॥
सदा मामागतं ज्ञात्वा प्रहर्षन्सन्निधावियात् । न दृश्यते कथं वीरःकुत्ररन्तुं गतोवली
केन वा सह बालत्वाद्गतो मां वै निरीक्षितुम् ।
किं त्वं रोदिषि मे मातर्लवः कुत्र स वर्तते ॥ २७ ॥
तन्मे कथय सर्वं यत्तव दुःखस्य कारणम् ।
तच्छ्रुत्वा पुत्रवाक्यं सा दुःखिता कुशब्रवीत् ॥ २८ ॥

जानक्युवाच ।

लवोधृतो नृपेणात्र केनचिद्धयरक्षिणा । बबन्ध बालको मेऽत्र हयं यागक्रियोचितम् ॥
तद्रक्षकान्वहूञ्जित्य एकोऽनेकान्रिपून्बली । राजा तं मूर्च्छितं कृत्वा बबन्ध रणमूर्धनि
बालका इति मामूचुःसहगन्तार एव हि । ततोऽहं दुःखिता जाता निशम्य लवमाधृतम्
त्वं मोचय बलात्तस्मात्काले प्राप्तो नृपोत्तमात् ।
निशम्य मातुर्वचनं कुशःकोपसमन्वितः । जगाद तां दशन्नोष्ठं दन्तैर्दन्तान्विनिष्पिषन्

कुश उवाच ।

मातर्जानीहि तं मुक्तं लवं पाशस्य बन्धनात् । इदानीं हन्मि तं बाणैःसमग्रबलवाहनम्
यदि देवोऽमरो वापि यदि शर्वःसमागतः । तथापि मोचये तस्माद्बाणैर्निशितपर्वभिः
मा रोदिषि मातरिह वीराणां रणमूर्जितम् । कीर्तयेऽत्र भवत्येव पलायनमकीर्तये ॥
देहि मे कवचं दिव्यं धनुर्गुणसमन्वितम् । शिरस्त्राणं च मे मातःकरवालं तथाशितम्
इदानीं यामि समरे पातयामि बलं महत् ।
मोचयामि भ्रातरं स्वं रणमध्याद्विमूर्च्छितम् ॥ ३७ ॥
न मोचयाम्यद्य पुत्रं तव मातर्महारणात् । तदा तौ मे भवत्पादौ संस्पृष्टौ भवतां क्षितौ

शेष उवाच ।

इतिवाक्येन सन्तुष्टा जानकी शुभलक्षणा । सर्वं प्रादादस्त्रवृन्दं जयाशीर्भिर्नियुज्य तम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रयाहि पुत्र! सङ्ग्रामं लवं मोचय मूर्च्छितम्।
इत्याज्ञप्तः कुशः सङ्ख्ये कवची कुण्डली बली ॥ ४० ॥
मुकुटी करवाली च चर्मधारी धनुर्धरः। अक्षयाविषुधी कृत्वा स्कन्धयोःसिंहवीर्ययोः
जगाम तरसा नत्वा मातृपादौ रथाग्रणीः। वेगेन यावद्युद्धाय गच्छति क्षिप्रमाहवे ॥
तावद्ददर्श सलवं वैरिवृन्दनिपातितम्। आयान्तं तं कुशं वीरा ददृशुःसुमहाभटाः ॥
कृतान्तमिव संहर्तुं सर्वं विश्वमुपस्थितम्। लवो महाबलं दृष्ट्वा कुशं भ्रातरमागतम्
अत्यन्तं वह्निवद्युद्धे दिदीपे वायुनासमम्।
रथादुन्मुच्य चात्मानं युद्धाय स विनिर्गतः ॥ ४५ ॥
कुशः सर्वान्रणस्थान्वै वीरान्पूर्वदिशि क्षिपन्।
पश्चिमायां दिशि लवः कोपात्सर्वान्समैरयत् ॥ ४६ ॥
कुशबाणव्यथाव्याप्ता लवसायकपीडिताः। सैन्येजनामुनेसर्वउत्कल्लोलाम्बुधिभ्रमाः ॥
कुशेन च लवेनाथ शरव्रातैःप्रपीडितम्। न शर्म लेभे सकलं सैन्यं वीरप्रपूरितम् ॥
इतस्ततःप्रभग्नं तद्बलं त्रस्तं पुनःपुनः। न कुत्रचिद्रणे स्थित्वा युद्धमैच्छद्बलान्वितः
एतस्मिन्समये राजा शत्रुघ्नःपरतापनः। कुशं वीरं ययौ योद्धुं तादृशं लवसन्निभम् ॥
कुशं दृष्ट्वा बलाक्रान्तं राममूर्तिसमप्रभम्। रथे तिष्ठन्हेममये जगाद परवीरहा ॥५१॥
शत्रुघ्न उवाच।
कोऽसि त्वं सन्निभो भ्रात्रा लवेन सुमहाबल!।
किन्नामऽसि महावीर! कस्ते तातः क्व ते प्रसूः ॥ ५२ ॥
कथं वने द्विजैर्जुष्टे तिष्ठसि त्वं नरर्षभ!। सर्वं शंस यथा युध्ये त्वयासह महाबल!॥
इतिवाक्यं समाकर्ण्य कुशःप्रोवाच भूमिपम्। मेघगम्भीरयावाचा नादयन्रणमण्डलम्
केवलं सुषुवे सीता पतिव्रतपरायणा। वने वसावो वाल्मीकेश्चरणार्चनतत्परौ ॥५५॥
मातृसेवासमुद्युक्तौ सर्वविद्याविशारदौ। कुशोलव इतिप्रख्यामागतौ भूपतेऽनघ!॥
कस्त्वं वीरो रणश्लाघी किमर्थं हयसत्तमः।
मुक्तोऽस्ति समरे त्वद्य जेतासि बलसंयुतः ॥ ५७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

युध्यस्व त्वं मया सार्द्धं यदि वीरोऽसि भूमिप ! ।
इदानीं पातयिष्यामि भवन्तं रणमूर्धनि ॥ ५८ ॥
शत्रुघ्नस्तं सुतं ज्ञात्वा सीताया रामसम्भवम् ।
विसिष्मिये स्वयं चित्ते कोपाद्धनुरुपाददत् ॥ ५९ ॥
तमात्तधनुषं दृष्ट्वा कुशःकोपसमन्वितः । विस्फारयामास धनुःस्वीयं सुदृढमुत्तमम्
मुमोच बाणान्निशिताञ्छत्रुघ्नःसर्वशस्त्रवित् ।
तांश्चिच्छेद कुशः सर्वाँल्लीलया प्रहसन्रणे ॥ ६१ ॥
बाणाश्च शतसाहस्राःकुशस्य च नृपस्य च । भुवनं व्याप्नुवन्सर्वं तच्चित्रमभवन्मुने ॥
अग्न्यस्त्रेण नृपःसर्वान्ददाह तरसा बली । शमयामास तं कुशःपर्जन्यास्त्रेण वीर्यवान्
शमयामास तं भूपःवायव्येनातिविक्रमः । तदा वायुरभूत्तीव्रःसर्वतो रणमण्डले ॥६४॥
पर्वतास्त्रेण तं वायुं स कुशस्तु समावृणोत् ।
वज्रास्त्रेण नृपः सङ्ख्ये चिच्छेद स नगोपलान् ॥ ६५ ॥
तदा नारायणास्त्रं स मुमोच कुशउद्भटः । नारायणं तदा भूपं नाशकत्परिबाधितुम् ॥
तदा प्रकुपितोऽत्यन्तं कुशःकोपपरायणः । उवाच भूपं शत्रुघ्नं महाबलपराक्रमम् ॥
जानामि त्वां महावीरं सङ्ग्रामे जयकारिणम् ।
यत्त्वां नारायणास्त्रं मे न बबाधे भयानकम् ॥ ६८ ॥
इदानीं पातयाम्यद्य भूमौ त्वां नृपते शरैः । त्रिभिश्चेन्न करोम्येतत्प्रतिज्ञां तर्हि मे शृणु
यो मनुष्यवपुःप्राप्य दुर्लभंपुण्यकोटिभिः । तन्नाद्रियेत संमोहात्तस्य मेऽस्त्वत्र पातकम्
सावधानो भवानत्र भवतु प्रधनाङ्गणे । पातयामि क्षितौ सद्य इत्युक्त्वा स्वशरासने
शरं संरोपयामास घोरं कालानलप्रभम् । लक्षीकृत्य रिपोर्वक्षो विपुलं कठिनंमहत् ॥
तं संहितं शरं दृष्ट्वा शत्रुघ्नःकोपमूर्च्छितः ।
मुमोच बाणान्निशितान्कुशत्वग्भेदकारकान् ॥ ७३ ॥
स बाणो हृदयं तस्य भेत्तुं तत्प्रचचाल वै । घोररूपो वह्निसम आशीविषवदुच्छ्वसन्
स बाणो नृपवर्येण रामं स्मृत्वाऽऽशु लक्षितः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चिच्छेद कुशमुक्तं स सायकं शितपर्वकम् ॥ ७५ ॥
तदाऽत्यन्तं प्रकुपितःकुशो बाणस्य कृन्तनात् । अपरं सायकं चापे दधारशितपर्वकम्
स यावत्तदुरोभेत्तुं करोति च बलोद्धुरः । तं तावदच्छिनत्तस्य शरं कालानलप्रभम् ॥
तदा कुशो मातृपादौ स्मृत्वा रोषसमन्वितः । तृतीयं चापके स्वीये दधार शरमद्भुतम्
शत्रुघ्नस्तमपि क्षिप्रं छेत्तुं बाणं समाददे ।
तावच्छिद्धः शरेणासौ पपात धरणीतले ॥ ७६ ॥
हाहाकारो महानासीच्छत्रुघ्ने विनिपातिते । जयमाप कुशस्तत्र स्वबाहुबलदर्पितः ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे शत्रुघ्नमूर्च्छने कुशजयो नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

# चतुःषष्टितमोऽध्यायः

## कुशेन बद्धौ हनूमत्सुग्रीवौ सीतायै प्रदर्श्य युद्धवृत्तान्तनिवेदनम् ।

शेष उवाच ।

शत्रुघ्नं पतितं वीक्ष्य सुरथः प्रवरो नृपः । प्रययौ मणिनासृष्टे रथे तिष्ठन्महाद्युते ॥१॥
पुष्कलस्तु रणे पूर्वं पातितःस विचारयन् । लवं ययौ तदायोद्धुं महावीरबलोन्नतम्
सुरथःकुशमासाद्य बाणान्मुञ्चन्ननेकधा । व्यथयामास समरे महावीरशिरोमणिः ॥
सुरथं विरथं चक्रे बाणैर्दशभिरुच्छ्रितैः । धनुश्चिच्छेद तरसा सुदृढं गुणपूरितम् ॥४॥
अस्त्रप्रत्यस्त्रसंहारैःक्षेपणैःप्रतिक्षेपणैः । अभवत्तुमुलं युद्धं वीराणां रोमहर्षणम् ॥
अत्यन्तं समरोद्युक्ते सुरथे दुर्जये नृपे । कुशः सञ्चिन्तयामास किं कर्तव्यं रणे मया ॥
विचार्य निशितं घोरं सायकंसमुपाददे । हननाय नृपस्यास्य महाबलसमन्वितः ॥७॥
तमागतं शरं दृष्ट्वा कालानलसमप्रभम् । छेत्तुं मतिं चकाराशु तावल्लग्नो महाशरः ॥८॥
मुमूर्च्छ समरे वीरो महावीरबलस्ततः । पपात स्यन्दनोपस्थे सारथिस्तमुपाहरत् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुरथे पतिते दृष्ट्वा कुशं जयसमन्वितम् । त्रासयन्तं वीरगणं नियाय पवनात्मजः ॥

समीरसूनुं प्रबलमायान्तं वीक्ष्य वानरम् । जहास दर्शयन्दन्तान्कोपयन्निव तं क्रुधा ॥

उवाच च हनूमन्तमेहि त्वं मम संमुखम् ।

भेत्स्ये बाणसहस्रेण मृतो यास्यसि यामिनीम् ॥ १२ ॥

इत्युक्तो हनुमाञ्ज्ञात्वा रामसूनुं महाबलम् ।

स्वामिकार्यं प्रकर्तव्यमिति कृत्वा प्रधावितः ॥ १३ ॥

शालमुत्पाट्य तरसा विशालं शतशाखिनम् । कुशं वक्षसि संलक्ष्ययय्यौयोद्धुंमहाबलः

शालहस्तं समायान्तं हनूमन्तं महाबलम् । त्रिभिःक्षुरप्रैर्विव्याध सोऽर्धचन्द्रोपमैर्बली

स बाणविद्धस्तरसा कुशेन बलशालिना ।

शालेन हृदि सन्नद्धे दन्तान्निष्पिष्य मारुतिः ॥ १६ ॥

शालाहतस्तदा बालः किञ्चिन्नाकम्पत स्मयात् ।

तदा वीराः प्रशंसां तु प्रचक्रुस्तस्य बाल्यतः ॥ १७ ॥

स शालेन हतो वीरःसंहारास्त्रं समाददे । संहर्तुं वैरिणं कोपात्कुशःस परमास्त्रवित्

संहारास्त्रं समालोक्य दुर्जयं कुशमोचितम् ।

दध्यौ रामं स्वमनसा भक्तविघ्नविनाशकम् ॥ १९ ॥

तदा मुक्तं कुशेनाशु तदस्त्रं हृदि मारुतेः । लग्नं महाव्यथाकारि तेन मूर्च्छामितःपुनः ॥

मूर्च्छां प्राप्तं तु तं दृष्ट्वा प्लवगं बलसंयुतः ।

विव्याध सायकैस्तीक्ष्णैः सैन्यं तत्सकलं महत् ॥ २१ ॥

तस्य बाणायुतैर्भग्नं बलं सर्वं रणाङ्गणे । पलायनपरं जातं चतुरङ्गसमन्वितम् ॥ २२ ॥

तदा कपिपतिः कोपात्सुग्रीवो रक्षको महान् ।

अभ्यधावन्नगान्नैकानुत्पाट्य कुशमुद्भटम् ॥ २३ ॥

कुशःसर्वान्प्रचिच्छेदलीलया प्रहसन्नगान् । पुनरप्यागतान्वृक्षांश्चिच्छेद तरसा बली ॥

अनेकबाणव्यथितः सुग्रीवःसमराङ्गणे । जग्राह पर्वतं घोरं कुशमस्तकमध्यतः ॥२५॥

कुशस्तं नगमायान्तं वीक्ष्य बाणैरनेकधा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निष्पिपेष चकाराशु महारुद्राङ्ग्याग्यताम् ॥ २६ ॥

सुग्रीवस्तन्महत्कर्म दृष्ट्वा बालेन निर्मितम् । जयाशां प्रतिनिर्वृत्तो बभूव समराङ्गणे
रणमध्ये दुराक्रान्तं कुशं लाङ्गूलताडकम् । अत्यमर्षी रुषाक्रान्तस्तं हन्तुं नगमाददे
आत्मानं हन्तुमुद्युक्तं वीक्ष्य सुग्रीवमादरात् । ताडयामास बहुभिःसायकैःशितपर्वभिः
स ताडितो बहुविधैःशरैःपीडासमन्वितः । कुशं हन्तुं समारब्धो ययौ शालं समाददे
तदाऽपि च कुशोवीरो वारुणास्त्रं समाददे । बबन्ध तं च पाशेन दृढेन सलवाग्रजः
स बद्धःपाशकैःस्निग्धैःकुशेन बलशालिना । पपात रणमध्ये वै महावीरैरलङ्कृते ॥

सुग्रीवं पतितं दृष्ट्वा वीराः सर्वत्र दुद्रुवुः ।
जयमाप लवभ्राता महावीरशिरोमणिः ॥ ३३ ॥

तावल्लवो भटाञ्जित्वा पुष्कलं चाङ्गदं तथा । प्रतापाग्र्यं वीरमणिं तथाऽन्यानपिभूभुजः
जयं प्राप्य रणे वीरो लवो भ्रातरमागमत् । सङ्ग्रामे जयकर्तारं वैरिकोटिनिपातकम्
परस्परं प्रहृषितौ परिरम्भं प्रकुर्वतः । जयंप्राप्तौ तदा वार्तां मुने चक्रतुरुन्मदौ ॥ ३६ ॥

लव उवाच ।

भ्रातस्तव प्रसादेन निस्तीर्णो रणतोयधिः । इदानीं वीर ! रणकं शोधयावः सुशोभिम्

इत्युक्त्वा राजसविधे जगाम सलवः कुशः ।
राज्ञो मौलिमणिं चित्रं जग्राह कनकाचितम् ॥ ३८ ॥

पुष्कलस्य लवोवीरो जाग्रह मुकुटं शुभम् । अङ्गदे च महानर्घ्ये शत्रुघ्नस्यापरस्य च ॥

गृहीत्वा शस्त्रसङ्घातं हनूमन्तं कपीश्वरम् ।
सुग्रीवं सविधे गत्वा उभावपि बबन्धतुः ॥ ४० ॥

पुच्छे वायुसुतस्यायं गृहीत्वा तु कुशानुजः ।
भ्रातरं प्रत्युवाचेदं नेष्यामि स्वकमन्दिरम् ॥ ४१ ॥

आवयोर्जननीप्रीत्यै गृहीत्वा पुच्छकेत्वहम् । क्रीडार्थमृषिपुत्राणां कौतुकार्थं ममैव च

एतच्छ्रुत्वा ततो वाक्यमुवाच च कुशो लवम् ।
अहमेनं ग्रहीष्यामि वानरं बलिनं दृढम् ॥ ४३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्येवं भाषमाणौ तौ बद्ध्वा तौ बलिनां वरौ ।
पुच्छयोर्बलिनौ धृत्वा जग्मतुः स्वाश्रमम्प्रति ॥ ४४ ॥
स्वाश्रमाय प्रगच्छन्तौ वीक्ष्य तौ कपिसत्तमौ ।
कम्पमानौ जगदतुरन्योन्यं भीतया गिरा ॥ ४५ ॥
हनूमान्कपिराजानं प्रत्युवाच भयार्द्रधीः । एतौ रामसुतावस्मान्नेष्यतःस्वाश्रमम्प्रति ॥
मयापूर्वं कृतंकर्म जानकीम्प्रति गच्छता । तत्र मे जानकीदेवी संमुखाऽभून्मनोहरा ॥
सा मां द्रक्ष्यति वैदेही बद्धं पाशेन वैरिणा ।
तदा हसिष्यति वरा त्रपा मेऽत्र भविष्यति ॥ ४८ ॥
मया किमत्र कर्तव्यं प्राणत्यागो भविष्यति ।
महद्दुःखं चापतितं स रामः किं करिष्यति ॥ ४६ ॥
सुग्रीवस्तद्वचःश्रुत्वा ममाप्येवं महाकपे ! । नेष्यते यदि मामेवं निधनं तु भविष्यति ॥
एवं कथयतोरेव ह्यन्योन्यं भयभीतयोः । कुशोलवश्च भवनं मातुः प्रापतुरोजसा ॥
तावायातौ समीक्ष्यैव जहर्ष जननी तयोः । अन्योन्यं परमप्रीत्या परिरेभे निजौ सुतौ
ताभ्यां पुच्छगृहीतौ तौ वानरौ वीक्ष्य जानकी ।
हनूमन्तं च सुग्रीवं सर्ववीरं कपीश्वरम् ॥ ५३ ॥
जहास पाशबद्धौ तौ वीक्षमाणा वराङ्गना । उवाच च विमोक्षार्थं वदन्ती वचनं दरम्
पुत्रौ ! प्रमुञ्चतं कीशौ महावीरौ महाबलौ ।
द्रक्ष्यतो मां यदि स्फीतौ प्राणत्यागं करिष्यतः ॥ ५५ ॥
अयं वै हनुमान्वीरो यो ददाह दनोः पुरीम् ।
अयमप्यृक्षराजो हि सर्ववानरभूमिपः ॥ ५६ ॥
किमर्थं विधृतौ कुत्र किंवा कृतमनादरात् ।
पुच्छे युवाभ्यां विधृतौ स महान्विस्मयोऽस्ति मे ॥ ५७ ॥
इति मातुर्वचःश्लक्ष्णं श्रुत्वा तां पुत्रकौ तदा । ऊचतुर्विनयश्रेष्ठौ महाबलसमन्वितौ ॥
मातःकश्चन भूपालो रामो दाशरथिर्बली । तेन मुक्तोहयःस्वर्णभालपत्रःसुशोभितः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्रैवं लिखितं मातरैकवीरा प्रसूर्मम। ये क्षत्रियास्ते गृह्णन्तु नोचेत्पादतलार्चकाः ॥

तदा मया विचारो वै कृतः स्वान्ते पतिव्रते ! ।

भवती क्षत्रिया किं न वीरसूः किं न वा भवेत् ॥ ६१ ॥

धार्ष्ट्यं तद्वीक्ष्य भूपस्य गृहीतोऽश्वो मया बलात् ।

जितं कुशेन वीरेण सैन्यं तत्पातितं रणे ॥ ६२ ॥

मुकुटोऽयं भूमिपतेर्जानीहि पतिदेवते ! । अयमप्यन्यवीरस्य पुष्कलस्य महात्मनः ॥

जानीहि मुकुटं त्वन्यं मणिमुक्ताविराजितम् ।

अश्वोऽयं मे मनोहारी कामयानो हि भूपतेः ॥ ६४ ॥

आरोहणाय मद्भ्रातुर्जानीहि बलिनोवरे । इमौ कीशौ मयारन्तुमानीतौ बलिनांवरौ

कौतुकार्थं तवैवैतौ सङ्ग्रामे युद्धकारकौ ।

इति वाक्यं समाकर्ण्य जानकी पतिदेवता ॥ ६६ ॥

जगाद पुत्रौ तौ वीरौ वीरवानरमुक्तये ॥ ६७ ॥

सीतोवाच ।

युवाभ्यामनयःसृष्टो हृतो रामहयो महान् । अनेके पातिता वीरा इमौ बद्धौ कपीश्वरौ

पितुस्तव हयो वीरौ यागार्थं मोचितोऽमुना ।

तस्यापि हृतवन्तौ किं वाजिनं मखसत्तमे ॥ ६९ ॥

मुञ्चतं प्लवगावेतौ मुञ्चतं वाजिनांवरम् । क्षाम्यतां भूपतेर्भ्राता शत्रुघ्नः परकोपनः ॥

जनन्यास्तद्वचः श्रुत्वा ऊचतुस्तां बलान्वितौ ।

क्षात्त्रधर्मेण तं भूपं जितवन्तौ बलान्वितम् ॥ ७१ ॥

नास्माकमनयो भावि क्षात्त्रधर्मेण युध्यताम् ।

वाल्मीकिना पुरा प्रोक्तमस्माकं पठतांपुरः ॥ ७२ ॥

दुष्यन्तेन समंयुद्धं भरतेन कृतंपुरा । कण्वस्याश्रमके वाहं धृत्वा यागक्रियोचितम् ॥

तस्मात्सुतः स्वपित्राऽपि युध्येद्‌ भ्रात्राऽपि चानुजः ।

गुरुणा शिष्य एवापि तस्मान्नो पापसम्भवः ॥ ७४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वदाज्ञातोऽधुना चावां दास्यावो हयमुत्तमम् ।
मोक्ष्यावः कीशावेतौ हि करिष्यावो वचस्तव ॥ ७५ ॥
इत्युक्त्वा मातरं वीरौ गतौ रणे कपीश्वरौ ।
अमुञ्चतां हयं चापि हयमेधक्रियोचितम् ॥ ७६ ॥
सीतादेवी स्वपुत्राभ्यां श्रुत्वा सैन्यं निपातितम् ।
श्रीरामं मनसा ध्यात्वा भानुमैक्षत साक्षिणम् ॥ ७७ ॥
यद्यहं मनसावाचा कर्मणा रघुनायकम् । भजामि नान्यं मनसा तर्हि जीवेदयं नृपः ॥
सैन्यं चापि महत्सर्वं यन्नाशितमिदं बलात् ।
पुत्राभ्यां तत्तु जीवेत मत्सत्याज्जगतास्पते ! ॥ ७९ ॥
इति यावद्वचो ब्रूते जानकी पतिदेवता । तावद्बलं च तत्सर्वं जीवितं रणमूर्द्धनि ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे
सैन्यजीवनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः

### अश्वेन सह शत्रुघ्नादीनामयोध्यां प्रत्यागमनम् ।

शेष उवाच ।

क्षणान्मूर्च्छां जहौ वीरः शत्रुघ्नः समराङ्गणे ।
अन्येऽपि वीरा बलिनो मूर्च्छां प्राप्ताःसुजीविताः ॥ १ ॥
शत्रुघ्नो वाजिनांश्रेष्ठं ददर्श पुरतःस्थितम् । आत्मानं चशिरस्त्रणरहितं सैन्यजीवितम्
वीक्ष्य चित्रमिदं स्वान्ते चकार च जगाद ह ।
सुमतिं मन्त्रिणां श्रेष्ठं मूर्च्छाविरहितं तदा ॥ ३ ॥
कृपां कृत्वा हयं प्रादाद् बालो यज्ञस्य पूर्तये ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गच्छाम रामं तरसा हयागमनकाङ्क्षिणम् ॥ ४ ॥

इत्युक्त्वा स रथेस्थित्वा हयमादाय वेगतः । ययौ तदाश्रमाद्दूरं भेरीशङ्खविवर्जितः॥
तत्पृष्ठतो महासैन्यं चतुरङ्गसमन्वितम् । चचाल कुर्वन्सम्भग्नं स्वभारेण फणीश्वरम्
जवेन जाह्नवीं तीर्त्वा कल्लोलजलशालिनीम् । जगाम विषये स्वीये स्वकीयजनशोभिते
पुष्कलेनयुतो राजा सुरथेन समन्वितः । रथे मणिमये तिष्ठन्महाकोदण्डधारकः ॥८॥
हयं तं पुरतःकृत्वा रत्नमालाविभूषितम् । श्वेतातपत्रं तस्यैव मूर्ध्नि चामरभूषितम् ॥
अनेकरथसाहस्रैःपरीतो बलिभिर्नृपैः । उद्यत्कोदण्डललितैर्वीरनादविभूषितैः ॥ १० ॥
क्रमेण नगरीं प्राप सूर्यवंश विभूषिताम् । अनेकैःकेतुभिःश्रेष्ठैर्भूषितां दुर्गराजिताम् ॥
रामःश्रुत्वा हयंप्राप्तं शत्रुघ्नेन सहामुना । पुष्कलेन च वीरेण ययौ हर्षमनेकधा ॥१२॥
कटकं निर्दिदेशासौ चतुरङ्गं महाबलम् । लक्ष्मणं प्रेषयामास भ्रातरं बलिनांवरम् ॥

लक्ष्मणः सैन्यसहितो गत्वा भ्रातरमागतम् ।
परिरेभे मुदाक्रान्तः क्षत शोभितगात्रकम् ॥ १४ ॥

सर्वत्र कुशलं पृष्टो वार्तां चात्र चकार सः । परमं हर्षमापन्नः शत्रुघ्नः सङ्गतो मुदा ॥
सौमित्रिः स्वरथेस्थित्वाभ्रात्रासह महामनाः । सैन्येनमहतावीरो ययौ स्वनगरीं प्रति
सरयूःपुण्यसलिला पवित्रितजगत्त्रया । रामपादरजःपूता शरच्चन्द्रसमप्रभा ॥ १७ ॥
हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता । विचित्रतरवर्णैश्च पक्षिभिर्नादिताभृशम् ॥
मण्डपास्तत्र बहुशो रामचन्द्रेण कारिताः । ब्राह्मणानां वेदविदां पृथक्पाठनिनादकाः

क्षत्रियास्तत्र बहवो धनुष्पाणिसुशोभिताः ।
ज्याटङ्कारेण बहुना नादयन्तो महीतलम् ॥ २० ॥

भुञ्जते ब्राह्मणा यत्र विचित्रान्नैर्मनोहरैः । परस्परं प्रपश्यन्तो वार्तां चक्रुर्मनोहराम् ॥

पयसाऽन्नानि शुभ्राणि चन्द्रकान्तिसमानि च ।
क्षीराज्यबहुयुक्तानि शर्करामिश्रितानि च ॥ २२ ॥

अपूपास्तत्र बहुलाश्चन्द्रबिम्बसमाःश्रिया । कर्पूरादि सुगन्धेन वासिताःसुमनोहराः ॥

फेनिका घटकाःस्निग्धाः शतच्छिद्रा विरन्ध्रकाः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शष्कुल्यो मण्डकामृष्टा मधुरान्नसमन्विताः ॥ २४ ॥

भक्तं कुमुदसङ्काशं मुद्गदालि विमिश्रितम् । सुगन्धेन समायुक्तमत्यन्तं प्रीतिदायकम् ॥

कर्पूरेणान्वितो दध्ना यथेष्टं सिक्तओदनः । स्वादुपाककरैःसृष्टःपात्रेमुक्तःप्रवेषकैः ॥२६॥

तत्र केचिद् द्विजाःपात्रे निक्षिप्तं वीक्ष्य पायसम् ।

परस्परं ते प्रत्यूचुः किमिदं दृश्यतेऽद्भुतम् ॥ २७ ॥

किं चन्द्रविम्बं नभसःपतितं तमसोभयात् । अमृतं तु भवत्यत्र मृत्युनाशकमद्भुतम् ॥

तच्छ्रुत्वा रोषताम्राक्षः प्रोवाचान्यो द्विजोत्तमः ।

न भवत्येव चन्द्रास्यविम्बं त्वमृतविप्लुतम् ॥ २६ ॥

एकमिन्दोर्वपुस्त्वेतद्दृश्यते सदृशं कथम् । ब्राह्मणानां सहस्रस्य पात्रेपात्रे पृथक्पृथक्

ततो जानीहि कुमुदं कर्पूरं वा भविष्यति ।

मा जानीहि मृगाङ्कस्य विम्बं शुभ्रश्रियान्वितम् ॥ ३१ ॥

तावदन्यो रुषाक्रान्तो धुन्वन्स्वं मस्तकं तथा ।

न जानन्ति द्विजा मूढाःस्वादुज्ञानविचक्षणाः ॥ ३२ ॥

इदं तु क्षौद्रकन्दस्य रसेन परिपाचितम् । जानीहि शतपत्रस्य पुष्पाणि मधुराणि च

एवं परस्परं विप्राःकन्दमूलफलाशिनः । तर्कयन्ति मुने प्रीता रसज्ञानेऽतिलोलुपाः ॥

तावदन्यो द्विजःप्राहः क्षत्त्रियाणां वरं जनुः ।

भोक्ष्यन्ते तादृशं त्वन्नं महापुण्यैरुपस्कृतम् ॥ ३५ ॥

तदा तं प्राब्रवीद्विप्रो दत्तस्य फलमीदृशम् । ये ददत्यग्रजन्मभ्यःप्राप्नुवन्ति तदीप्सितम्

यैरर्चितोनैव हरिर्नैवेद्यैर्विविधैर्मुहुः । तेषामेतादृशं भोज्यं न भवेदक्षिगोचरम् ॥ ३७ ॥

यैर्नरैरग्रजन्मानो भोजिता विविधैरसैः । भुञ्जते ते स्वादुरसं पापिनां चक्षुरुज्झितम्

एवंविधै रसैर्मिष्टैर्भोजिता द्विजसत्तमाः । मण्डपे विपठन्तस्ते शब्दब्रह्मविचक्षणाः ॥

नृत्यन्त्येके हसन्त्येके नदन्त्येके प्रहर्षिताः ।

उत्सवो बहुरुद्भाति तत्र शत्रुघ्न आगमत् ॥ ४० ॥

रामःशत्रुघ्नमायान्तं पुष्कलेन समन्वितम् । निरीक्ष्यमुदमुद्भूतां रक्षितुं नाशकत्तदा ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यावदुत्तिष्ठते रामो भ्रातरं हयपालकम् । तावद्रामपदे लग्नःशत्रुघ्नो भ्रातृवत्सलः ॥ ४२ ॥
पादयोःपतितं वीक्ष्य भ्रातरं विनयान्वितम् । परिरेभे दृढं प्रीतःक्षतसंशोभिताङ्गकम् ॥
अश्रूणि बहुधा मुञ्चन्हर्षाच्छिरसि राघवः । अत्यन्तं परमां प्राप मुदंवचन दूरगाम् ॥
पुष्कलं स्वीयपदयोर्नम्रं विनयविह्वलः । सुदृढं भुजयोर्मध्ये विनीयापीडयद् भृशम् ॥
हनूमन्तं तथावीरं सुग्रीवं चाङ्गदं तथा । लक्ष्मीनिधिं जनकजं प्रतापाग्र्यं रिपुञ्जयन् ॥
सुबाहुं सुमदं वीरं विमलं नीलरत्नकम् । सत्यवन्तं वीरमणिं सुरथं रामसेवकम् ॥

अन्यानपि महाभागान्रघुनाथःस्वयं तदा ।
परिरेभे दृढं स्निग्धान्पादयोः प्रणतान्नृपान् ॥ ४८ ॥

सुमतिःश्रीरघुपतिं भक्तानुग्रहकारकम् । परिरभ्य दृढं प्रीतःसंमुखेऽतिष्ठदुन्नतः ॥ ४६ ॥

तदा रामो निजामात्यं वीक्ष्य सान्निध्यमागतम् ।
उवाच परमप्रीत्या मन्त्रिणं वदतां वरः ॥ ५० ॥

श्रीराम उवाच ।

सुमते मन्त्रिणांश्रेष्ठ शंस मे वाग्मिनांवर ! । क एते भूमिपाःसर्वे कथमत्र समागताः
कुत्रकुत्र हयःप्राप्तःकेनकेन नियन्त्रितः । कथं वै मोचितो भ्रात्रा महाबल सुशालिना ॥

शेष उवाच ।

इत्युक्तो मन्त्रिणां श्रेष्ठः सुमतिः प्राह राघवम् । प्रहसन्मेघगम्भीरनादेन च सुबुद्धिमान्

सुमतिरुवाच ।

सर्वज्ञस्य पुरस्तेऽद्य मया कथमुदीर्यते ।
पृच्छसि त्वं लोकरीत्या सर्वं जानासि सर्वदृक् ॥ ५४ ॥

तथापि तवनिर्देशं शिरस्याधाय सर्वदा । ब्रवीमि तच्छृणुष्वाद्य सर्वराज शिरोमणे ॥
त्वत्प्रसादादहो स्वामिन्सर्वत्र जगतीतले । परिबभ्रामतेवाहो भालपत्रसुशोभितः
न कश्चित्तं निजग्राह स्वनाम बलदर्पितः । स्वंस्वं राज्यं समर्प्याथ प्रणेमुस्ते पदाम्बुजम्

को वा रावणदैत्येन्द्र निहन्तुर्वाजिसत्तमम् ।
गृह्णाति विजयाकाङ्क्षी जरामरणवर्जितः ॥ ५८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहिच्छत्रां गतस्तावत्तव वाजी मनोरमः। तद्राजा सुमदःश्रुत्वा हयं प्राप्तं तवप्रभो॥
सपुत्रःप्रबलःसर्वसैन्येन बलिनावृतः। सर्वं समर्पयामास राज्यं निहतकण्टकम् ॥६०॥
यो राजा जगतांनेत्रीं मातरं जगदम्बिकाम्।
प्रसाद्य चिरमायुष्यं लेभे राज्यमकण्टकम् ॥ ६१ ॥
स एष त्वां प्रणमति सुमदःप्रभुसेवितम्। तं गृहाण कृपादृष्ट्या चिरादर्शनकाङ्क्षकम्
ततःसुबाहुःभूपस्य नगरे बलपूरिते। दमनस्तस्य वै पुत्रःप्रजग्राह हयोत्तमम् ॥ ६३ ॥
तेनसाकं महद्युद्धं बभूव दमनेन च। पुष्कलो जयमापेदे संमूर्छ्यं सुभुजात्मजम् ॥६४॥
ततःसुबाहुःसङ्क्रुद्धो रणे पवनजं बलात्। युयुजे तव पादाब्जसेवकं बलिनांवरम्॥
तस्य पादाहतो ज्ञानं प्राप्य शापतिरस्कृतम्।
तुभ्यं समर्प्य सकलं वाजिनः पालकोऽभवत् ॥ ६६ ॥
एष त्वां सुभुजोराजा प्रणमत्युन्नताङ्कः। कृपादृष्ट्याभिषिञ्च त्वं सुबाहुं नयकोविदम्
ततो मुक्तो हयो रेवाहृदे स निममज्जह। तत्र प्राप्तं मोहनास्त्रं शत्रुघ्नेन बलीयसा॥
ततो देवपुरे प्रागाच्छिववासविभूषिते। तत्रत्यं तु विजानासि यतस्त्वं तत्र चागतः
विद्युन्माली हतोदैत्यःसत्यवान्सङ्गतस्ततः। सुरथेन समंयुद्धं जानासि त्वं महामते॥
ततःकुण्डलकान्मुक्तो हयो बभ्राम सर्वतः। न कश्चित्तं निजग्राह स्ववीर्यबलदर्पितः॥
वाल्मीकेराश्रमेरम्ये हयःप्राप्तो मनोरमः। तत्र यत्कुतुकंजातं तच्छृणुष्व नरोत्तम !॥७२॥
तत्रार्भस्तव सारूप्यं बिभ्रत्षोडशवार्षिकः। जग्राह वीक्ष्यपत्राङ्कं वाजिनं बलवत्तमः॥
तत्र कालजितायुद्धं महज्जातं नरोत्तम। निहतस्तेन वीरेण शितधारेणहेतिना ॥ ७४ ॥
अनेके निहताःसङ्ख्ये पुष्कलाद्या महाबलाः।
मूर्च्छितं चापि शत्रुघ्नं चक्रे वीरशिरोमणिः ॥ ७५ ॥
तदा राजा महद्दुःखं विचार्य हृदि संयुगे। कोपेन मूर्च्छितं चक्रे वीरोहि बलिनांवरः॥
स यावन्मूर्च्छितो राज्ञा तावदन्यःसमागतः। तेनैतेन च सञ्जीव्य नाशितं कटकं तव॥
सर्वेषां मूर्च्छितानां तु शस्त्राण्याभरणानि च।
गृहीत्वा वानरौ बद्धौ जग्मतुःस्वाश्रमं प्रति ॥ ७८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृपांकृत्वा पुनस्तेन दत्तोऽश्वो यज्ञियो महान्। जीवनं प्रापितंसर्वं कटकं नष्टजीवितम्
वयं गृहीत्वा तं वाहं प्राप्तास्तव समीपतः। एतदेव मया ज्ञातं तदुक्तं ते पुरोवचः॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे
सुमतिनिवेदनं नाम पञ्चषष्टितमोऽध्यायः॥ ६५॥

---

# षट्षष्टितमोऽध्यायः

## रामस्य वाल्मीकिनासह संवादः।

शेष उवाच।

कथितौ वै सुमतिना वाल्मीकेराश्रमे शिशू।
पुत्रौ स्वीयाविति ज्ञात्वा वाल्मीकिंप्रति सञ्जगौ॥ १॥

श्रीराम उवाच॥

कौ शिशू मम सारूप्यधारकौ बलिनांवरौ। किमर्थं तिष्ठतस्तत्र धनुर्विद्याविशारदौ॥
आ मात्य कथितौ श्रुत्वा विस्मयो मम जायते। यौ शत्रुघ्नं हनूमन्तंलीलयाङ्गं ववन्धतुः
तस्माच्छंस मुने सर्वं बालयोश्च विचेष्टितम्। यथा मे परमाप्रीतिर्भवत्येवमभीप्सिता
इति तत्कथितं श्रुत्वा राजराजस्य धीमतः। उवाच परमंवाक्यं स्पष्टाक्षर समन्वितम्

वाल्मीकिरुवाच।

तवान्तर्यामिणो नृणां कथं ज्ञानं च नो भवेत्।
तथापि कथयाम्यत्र तव सन्तोषहेतवे॥ ६॥

राजन्यौ बालकौ मद्यमाश्रमे बलिनांवरौ। त्वत्सारूप्यधरौ स्वाङ्ग मनोहरवपुर्धरौ॥
त्वया यदा वनेत्यक्ता जानकी वैनिरागसी। अन्तर्वत्नी वनेघोरे विलपन्ती मुहुर्मुहुः
कुररीमिव दुःखार्तां वीक्ष्याहं तववल्लभाम्। जनकस्यसुतां पुण्यामाश्रमे त्वानयं यदा
तस्याःपर्णकुटिरस्या रचिता मुनिपुत्रकैः। तस्यामसूतपुत्रौ द्वौ भासयन्तौ दिशोदश॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तयोरकरवं नाम कुशोलव इतिस्फुटम् । ववृधातेऽनिशं यत्र शुक्लपक्षे यथा शशी ॥११॥
कालेनोपनयाद्यानि सर्वाणि कृतवानहम् । वेदान्साङ्गानहं सर्वान्ग्राहयामास भूपते ! ॥
सर्वाणि सरहस्यानि शृणुष्व मुखतो मम । आयुर्वेदं धनुर्विद्यां शस्त्रविद्यां तथैव च ॥
विद्यां जालन्धरीं चाथ सङ्गीतकुशलौ कृतौ । गङ्गाकूले गायमानौ लताकुञ्जवनेषु च ॥

चञ्चलौ चलचित्तौ तौ सर्वविद्याविशारदौ ।
तदाऽहमतिसन्तोषं प्राप्तःपरमबालयोः ॥ १५
दत्त्वा सर्वाणि चास्त्राणि मस्तके निहितःकरः ।
अतीवगानकुशलौ दृष्ट्वा लोको विसिष्मिये ॥ १६ ॥

षड्जमध्यमगान्धारस्वरभेदविशारदौ । तथाविधौ विलोक्याहं गापयामि मनोहरम् ॥
भविष्यज्ज्ञानयोगाच्च कृतं रामायणंशुभम् । मृदङ्गपणवाद्यादि यन्त्रवीणा विशारदौ
वने वने च गायन्तौ मृगपक्षि विमोहकौ । अद्भुतं गीतमाधुर्यं तव रामकुमारयोः ॥

श्रोतुं तौ वरुणो बालावानिनाय विभावरीम् ।
मनोहरवयोरूपौ गानविद्याब्धिपारगौ ॥ २० ॥

कुमारौ जगदुस्तत्र लोकेशादेशतः कलम् । परमं मधुरं रम्यं पवित्रं चरितं तव ॥२१॥
शुश्राव वरुणःसार्द्धं कुटुम्बेन च गायकैः । शृण्वन्नैवगतस्तृप्तिं मित्रेणवरुणःसह ॥
सुधातोऽपि परंस्वादु चरितं रघुनन्दन । गानानन्दमहालोभहृतप्राणेन्द्रियक्रियः ॥२३॥

प्रत्यागन्तुं दिदेशासौ कुमारौ न हि तावकौ ।
रमणीय महाभोगैर्लोभितावपि बालकौ ॥ २४ ॥
चलितौ न गुरोश्चात्ममातुःपादाम्बुजस्मृतेः ।
अहं चापि गतःपश्चाद्वरुणालयमुत्तमम् ॥ २५ ॥

वरुणःप्रेमसहितः पूजांचक्रे मम प्रभो । पृच्छते जन्मकर्मादि सर्वज्ञायापि बालयोः ॥
वरुणायाब्रुवं सर्वं जन्मविद्याद्युपागमम् । श्रुत्वा सीतासुतौ देवः सचक्रेऽम्बरभूषणैः॥

देवदत्तमतोग्राह्यमिति मद्वाक्यगौरवात् ।
आहृतं राजपुत्राभ्यां यद्दत्तं वरुणेन तत् ॥ २८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रसन्नेन तयोर्वाद्य गानविद्यावयोगुणैः । ततो मामब्रवीत्सीतामुद्दिश्य वरुणः कृती ॥
सीता पतिव्रता धुर्या रूपशीलवयोऽन्विता । वीरपुत्रा महाभागा त्यागंनार्हतिकर्हिचित्

महतीहानिरेतस्यास्त्यागे हि रघुनन्दन ।
सिद्धीनां परमासिद्धिरेषा तेह्यनपायिनी ॥ ३१ ॥

पामरैर्महिमा नास्या ज्ञायते यदि दूषितैः । काहानिस्तावता राम ! पुण्यश्रवणकीर्तन !

अस्मत्साक्षिकमेतस्याः पावनं चरितं सदा ।
सद्यस्ते सिद्धिमायान्ति ये सीतापदचिन्तकाः ॥ ३३ ॥
यस्याःसङ्कल्पमात्रेण जन्मस्थितिलयादिकाः ।
भवन्ति जगतां नित्यं व्यापारा ऐश्वरा अमी ॥ ३४ ॥
सीता मृत्युःसुधाचेयं तपत्येषा च वर्षति ।
स्वर्गो मोक्षस्तपो योगो दानं च तव जानकी ॥ ३५ ॥
ब्रह्माणं शिवमन्यांश्च लोकपालान्मदादिकान् ।
करोत्येषाकरोत्येव नान्या सीता तव प्रिया ॥ ३६ ॥
त्वं पिता सर्वलोकानां सीता च जननीत्यतः ।
कुदृष्टिरत्र तु क्षेमयोग्या न तव कर्हिचित् ॥ ३७ ॥
वेत्ति सीतां सदाशुद्धां सर्वज्ञो भगवान्स्वयम् ।
भवानपि सुतांभूमेः प्राणादपि गरीयसीम् ॥ ३८ ॥
आदर्तव्या त्वया तस्मात्प्रिया शुद्धेति जानकी ।
न च शापपराभूतिः सीतायां त्वयि वा विभो ॥ ३९ ॥
इमानि ममवाक्यानि वाच्यानि जगतांपतिम् ।
रामम्प्रति त्वया साक्षाद्वाल्मीके ! मुनिसत्तम ! ॥ ४० ॥

इत्युक्तो वरुणेनाहं सीतासङ्ग्रहकारणात् । एवमेवहि सर्वैश्च लोकपालैरपि प्रभो ! ॥
श्रुतं रामयणोद्गानं पुत्राभ्यां ते सुरासुरैः । गन्धर्वैरपि सर्वैश्च कौतुकाविष्टमानसैः ॥
प्रसन्ना एव सर्वेऽपि प्रशशंसुःसुतौ च ते । त्रैलोक्यं मोहितं ताभ्यां रूपगानवयोगुणैः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दत्तं यल्लोकपालैस्तु सुताभ्यां स्वीकृतं हि तत् ।
ऋषिभिश्च वरा आभ्यामन्येभ्यः कीर्तिरेव च ॥ ४४ ॥
एकरामं जगत्सर्वं पूर्वं मुनिविलोकितम् । त्रिराममधुनाजातं सुताभ्यांतेऽखिलेक्षितम्
एककामपरामूर्तिर्लोके पूर्वमवेक्षिता । कामैश्चतुर्भिराद्यायं जायते च यतस्ततः ॥ ४६ ॥
सर्वत्रान्यत्र राजेन्द्र ! रामपुत्रो कुशीलवौ । गीयेते अत्र सङ्कोचः किं कृतो विदुषित्वयि
कृतेषु तवसर्वेषुश्रूयते महतीस्तुतिः । त्यागादन्यत्र सीतयाः पुण्यश्लोकशिरोमणे ॥४८॥
त्वया त्रैलोक्यनाथेन गार्हस्थ्यमनुकुर्वता ।
अङ्गीकार्यौ सुतौ राम विद्याशीलगुणान्वितौ ॥ ४६ ॥
न तौ स्वाम्मातरं हित्वा स्थास्यतो भवदन्तिके ।
जनन्या सहितौ तस्मादाकार्यौ भवता सुतौ ॥ ५० ॥
दत्त एव तयेदानीं सेनासञ्जीवनात्पुनः । प्रत्ययःसर्वलोकानां पावनःपततामपि ॥५१॥
नाज्ञातं तेन चास्माकं नामराणाश्चमानद ।शुद्धौ तस्यास्तु लोकानां यन्नष्टं तदिह ध्रुवम्

शेष उवाच ।

इति वाल्मीकिना रामः सर्वज्ञोऽप्यवबोधितः ।
स्तुत्वा नत्वा च वाल्मीकिं प्रत्युवाच सलक्ष्मणम् ॥ ५३ ॥
गच्छताताधुना सीतामानेतुं धर्मचारिणीम् । सपुत्रां रथमास्थाय सुमन्तसहितःसखे !
श्रावयित्वा ममेमानि मुनेश्च वचनान्यपि ।
सम्बोध्य च पुरीमेतां सीतां प्रत्यानयाशु ताम् ॥ ५५ ॥

लक्ष्मण उवाच ।

यास्यामि तव सन्देशात्सर्वेषां नः प्रभोर्विभो ।
देव्यायास्यति चेद्देव यात्रा मे सफला ततः ॥ ५६ ॥
मयि सा साम्यसूयैव पूर्वदोषवशात्सती ।
अनागतायां तस्यां तु क्षमस्वागन्तुकं हि माम् ॥ ५७ ॥
इत्युक्त्वा लक्ष्मणो रामं रथे स्थित्वा नृपाज्ञया ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुमित्रमुनिशिष्याभ्यां युतोऽगाद्भूमिजाश्रमम् ॥ ५८ ॥

कथं प्रसादनीयास्यात्सीताभगवती मया । पूर्वदोषं विजानन्ती रामाधीनस्य मे सदा

एवं सञ्चिन्तयन्नन्तर्हर्षसङ्कोच मध्यगः । लक्ष्मणःप्राप सीताया आश्रमं श्रमनाशनम् ॥

रथात्सोऽथावरुह्याराादश्रुरुद्धविलोचनः । आर्ये पूज्ये भगवति शुभे इति वदन्मुहुः ॥

पपात पादयोस्तस्या वेपामानाखिलाङ्गकः। उत्थापिस्तया देव्या प्रीतिविह्वलया स च

सीतोवाच ।

किमर्थमागतःसौम्य! वनं मुनिजनप्रियम् । आस्ते स कुशलीदेवःकौशल्या शुक्तिमौक्तिकः

अरोषो मयि कच्चित्स कीर्त्याकेवलायादृतः । कीर्त्यते सर्वलोकैश्च कल्याण गुणसागरः

अकीर्तिभीतिमापन्नस्त्यक्तु मां त्वां नियुक्तवान् ।
यदि ततश्च लोकेषु कीर्तिस्तस्यामलाऽभवत् ॥ ६५ ॥
मृत्वाऽपि पतिसत्कीर्तिं कुर्वन्त्या मे हि सुस्थिरा ।
पतिसामीप्यमेवाशु भूयादेव हि देवर ! ॥ ६६ ॥

त्यक्तयाऽपि मया तेन नासौत्यक्तो मनागपि । फलं हि साधनायत्तं हेतुःफलवशो न तु

कौशल्याशल्यशून्याऽसौ कृपापूर्णा सदा मयि ।
आस्ते कुशलिनी यस्याः पुत्रस्त्रैलोक्यपालकः ॥ ६८ ॥

सर्वे कुशलिनःसन्ति भरताद्याश्च बान्धवाः। सुमित्रा च महाभागा यस्याःप्राणादहंप्रिया

मद्वर्त्कि त्वमपि त्यक्तः सर्वलोकेषु कीर्तये ।
राज्ञः किं दुस्त्यजं तस्य स्वात्माऽपि यस्य न प्रियः ॥ ७० ॥

इत्येवं बहुधा पृष्टस्तया रामानुजः स ताम् । उवाच कुशलीदेवः कुशलं त्वयि पृच्छति

कौशल्या च सुमित्रा च याश्चान्या राजयोषितः ।
पप्रच्छुः कुशलं देवि प्रीत्या त्वामाशिषा सह ॥ ७२ ॥

कुशलप्रश्नपूर्वं हि तवपादाभिवन्दनम् । निवेदयामि शत्रुघ्नभरताभ्यां कृतं शुभे ! ॥७३॥

गुरुभिर्गुरुपत्नीभिःसर्वाभिरपि ते शुभे । दत्ताशीःकुशलप्रश्नः कृतश्च त्वयिजानकि

आकारयति देवस्त्वां निर्व्यलीकेन चात्मना ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अलभ्यान्यरतिस्त्वत्तोऽन्यत्र सर्वत्र भामिनि ॥ ७५ ॥

शून्या एव दिशः सर्वास्त्वां विना जनकात्मजे ।

पश्यन्नोदिति नाथो नो रोदयन्नितरानपि ॥ ७६ ॥

यत्र देविस्थितासि त्वं नित्यं स्मरति राघवः । अशून्यं तु तमेवासौ मन्यमानोविदेहजे

धन्योऽयमाश्रमोजातो वाल्मीकेर्यत्र जानकी । कालंक्षपतिवार्ताभिर्मदीयाभिर्वदन्निति

उक्तवान्यद्वदन्किञ्चित्स्वामीनस्त्वयितच्छृणु । व्यक्तीभवति वक्तुर्यद्धृद्गतं तदसंशयम्

लोकावदन्ति मामेव सर्वेषामीश्वरेश्वरम् । अहं त्वदृष्टमेवैषां स्वतन्त्रं कारणंब्रुवे ॥

अदृष्टमेव कार्येषु सर्वेशोऽप्यनुगच्छति । ईशनीयाःकुतो नैतदन्वीयुः सुखदुःखयोः ॥

धनुर्भङ्गेमतिभ्रंशे कैकेय्यां मरणेपितुः । अरण्यगमने तत्र हरणे तव वारिधेः ॥ ८२ ॥

तरणे रक्षसांभर्तुर्मारणेऽपि रणेरणे । सहायीभवने मह्यमृक्षवानररक्षसाम् ॥ ८३ ॥

लाभे तव प्रतिज्ञायाः सत्यत्वे च सतीमणे ! ।

पुनः स्वबन्धुसम्बन्धे राज्यप्राप्तौ च भामिनि ! ॥ ८४ ॥

पुनः प्रियावियोगे च कारणं यदवारणम् । प्रसीदति तदेवाद्य संयोगे पुनरावयोः॥८५॥

वेदोऽन्यथा कृतो येन लोकोत्पत्तिलयौयतः । लोलाननुगतस्तस्मात्कारणं प्रथमंत्वहम्

अदृष्टमनुवर्तन्ते लोकाःसम्प्रति बोधकाः । भोगेन जीर्यतेऽदृष्टं तत्तद्भुक्तं त्वयावने ॥

स्नेहोऽकारणकः सीते वर्धमानो मम त्वयि ।

लोकादृष्टे तिरस्कृत्य त्वामाह्वयत आदरात् ॥ ८८ ॥

शङ्कितेनापि दोषेण स्नेहनैर्मल्यमज्ञनम् । भवतीति स वै शुद्धं आस्वाद्यो विबुधैः सदा

स्नेहशुद्धिरियं भद्रे ! कृता मे त्वयि नान्यथा ।

मन्तव्यं रक्षितोऽप्येषः लोकः शिष्टानुवर्तिना ॥ ९० ॥

आवयोर्नान्दया देवि ! सर्वावस्थासु शुद्धये । लोको नश्येद्धि संमूढश्चरितैर्महतामयम्

आवयोरुज्ज्वलाकीर्तिरावयोरुज्ज्वलोरसः ।

आवयोरुज्ज्वलौ वंशावावयोरुज्ज्वलाः क्रियाः ॥ ९२ ॥

भवेयुरावयोःकीर्तिगायका उज्ज्वलाभुवि । आवयोर्भक्तिमन्तो येतेयान्त्यन्तेभवाम्बुधेः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्युक्ता भवती तेन प्रीयमाणेन ते गुणैः । पत्युःपादाम्बुजे द्रष्टुं करोतु सदयं मनः ॥

वासांसि रमणीयानि भूषणानि महान्ति च ।

अङ्गरागस्तथा गन्धा मनोज्ञास्त्वयि योजिताः ॥ ९५ ॥

रथोदास्यश्च रामेण प्रेषिता उत्सवायते । छत्रं च चामरे शुभ्रे गजा अश्वाश्च शोभने ॥

स्तूयमानाद्विजश्रेष्ठैःसूतमागधवन्दिभिः । वन्द्यमानापुरस्त्रीभिःसेव्यमाना च योद्धृभिः

पुष्पैः संछाद्यमाना च देवी देवाङ्गनादिभिः ।

धनानि ददती तेभ्यो द्विजातिभ्यो यथेप्सितम् ॥ ९८ ॥

गजारूढौ कुमारौ च पुरस्कृत्यजनेश्वरी । मयानुगम्यमाना च गच्छायोध्यांनिजांपुरीम्

त्वयि तत्र गतायां तु सङ्गतायां प्रियेणते । सर्वासां राजनारीणामागतानां च सर्वशः

सर्वासामृषिपत्नीनां कौसलानां तथैव च । मङ्गलैर्वाद्यगीताद्यैर्भवत्वद्यमहोत्सवः ॥

शेष उवाच ।

इति विज्ञापनां देवी श्रुत्वा सीता तमाह सा ।

नाहं कीर्तिकरी राज्ञो ह्युपकीर्तिः स्वयंत्वहम् ॥ १०२ ॥

किं मया तस्य साध्यं स्याद्धर्मकामार्थशून्यया । सत्येवंभवतां भूपेकोविश्वासोनिरङ्कुशे

प्रत्यक्षा वा परोक्षा वा भर्तुर्दोषा मनःस्थिताः ।

न वाच्या जातु मादृश्या कल्याणकुलजातया ॥ १०४ ॥

पाणिग्रहणकाले मे यद्रूपो हृदयेस्थितः । तद्रूपोहृदयान्नासौ कदाचिदपसर्पति ॥१०५॥

लक्ष्मणेमौ कुमारौ मे तत्तेजोंशसमुद्भवौ । वंशाङ्कुरौ महाशूरौ धनुर्विद्याविशारदौ ॥

नीत्वा पितुःसमीपं तु लालनीयौ प्रयत्नतः। तपसाराधयिष्यामि रामंकाममिहस्थिता

वाच्यं त्वया महाभाग पूज्यपादाभिवन्दनम् । सर्वेभ्यः कुशलं चापिगत्वेतो मदपेक्षया

पुत्रौ समादिशत्सीता गच्छतंपितुरन्तिकम् । शुश्रूषणीय एवासौ भवद्भ्यांस्वपदप्रदः

आज्ञप्तावप्यनिच्छन्तौ तौ कुमारौ कुशीलवौ । वाल्मीकिवचनात्तत्रजग्मतुश्चसलक्ष्मणौ

वाल्मीकेरेव पादाब्जसमीपं तत्सुतौ गतौ । लक्ष्मणोऽपि ववन्देतं गत्वाबालकसंयुतः

वाल्मीकिर्लक्ष्मणस्तौ तु कुमारौ मिलिता अमी ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सभायां संस्थितं रामं ज्ञात्वा ते जग्मुरुत्सुकाः ॥ ११२ ॥
लक्ष्मणः प्रणिपत्याथ सीतावाक्यादि सर्वशः ।
कथयामास रामाय हर्षशोकयुतःसुधीः ॥ ११३ ॥
सीतासन्देशवाक्येभ्यो रामो मूर्च्छां समन्वभूत् ।
संज्ञामवाप्य चोवाच लक्ष्मणं नयकोविदम् ॥ ११४ ॥
गच्छमित्र पुनस्तत्र यत्नेन महता च ताम् । शीघ्रमानय भद्रं ते मद्वाक्यानि निवेद्य च
अरण्ये किन्तपस्यन्त्या गतिरन्या विचिन्तिता ।
श्रुता दृष्टाऽथ वा मत्तो यन्नागच्छसि जानकि ॥ ११६ ॥
त्वदिच्छया त्वमेवेतो गतारण्यं मुनिप्रियम् ।
पूजिता मुनिपत्न्यस्ता दृष्टा मुनिगणास्त्वया ॥ ११७ ॥
पूर्णो मनोरथस्तेऽद्य किं नागच्छसि भामिनि ! ।
न दोषं मयि पश्येस्त्वं स्वात्मेच्छायाविलोकनात् ॥ ११८ ॥
गत्वा गत्वाऽथ वामोरु ! पतिरेव गतिः स्त्रियाः ।
निर्गुणोऽपि गुणाम्भोधिः किं पुनर्मनसेप्सितः ॥ ११९ ॥
या या क्रियाकुलस्त्रीणां सा सा पत्युः प्रतुष्टये ।
पूर्वमेव प्रतुष्टोऽहमिदानीं सुतरां त्वयि ॥ १२० ॥
यागो जपस्तपो दानं व्रतं तीर्थं दयादिकम् । देवाश्च मयि सन्तुष्टे तुष्टमेतदसंशयम् ॥

शेष उवाच ।

इति सन्देशमादाय सीतां प्रति जगत्पतेः । आह लक्ष्मण आत्मेशमानतः प्रणयाद्धरौ ॥
सीतानयनमुद्दिश्य प्रसन्नस्त्वं यदूचिवान् ।
कथयिष्यामि तद्वाक्यं विनयेन समन्वितम् ॥ १२३ ॥
इत्युक्त्वा पादयोर्नत्वा रघुनाथस्य लक्ष्मणः ।
जगाम त्वरितः सीतां रथे तिष्ठन्महाजवे ॥ १२४ ॥
वाल्मीकिः श्रीयुतौ वीक्ष्य रामपुत्रौ महौजसौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उवाच स्मितमाधाय मुखं कृत्वा मनोहरम् ॥ १२५ ॥

युवां प्रगायतं पुत्रौ रामचारित्रमद्भुतम् । वीणां प्रवादयन्तौ च कलगानेन शोभितम्

इत्युक्तौ तौसुतौ रामचारित्रं वहुपुण्यदम् । अगायतां महाभागौ सुवाक्यपदचित्रितम्

यस्मिन्धर्मविधिः साक्षात्पातिव्रत्यं तु यत्स्थितम् ।

भ्रातृस्नेहो महान्यत्र गुरुभक्तिस्तथैव च ॥ १२८ ॥

स्वामिसेवकयोर्यत्र नीतिर्मूर्तिमती किल । अधर्मकरशास्तिर्वै यत्र साक्षाद्रघूद्वहात् ॥

तद्गानेन जगद्व्याप्तं दिवि देवा अपि स्थिताः ।

किन्नरा अपि यद्गानं श्रुत्वा मूर्च्छामिताः क्षणात् ॥ १३० ॥

वीणाया रणितं श्रुत्वा तालमानेन शोभितम् ।

निखिला परिषत्तत्र शालभञ्जीव चित्रिता ॥ १३१ ॥

हर्षादश्रूणि मुञ्चन्तो रामाद्य भूमिपास्तथा । तद्गानपञ्चमालापमोहिताश्चित्रितोपमाः ॥

तत्र रामः सुतौ दृष्ट्वा महागानविमोहकौ ।

अदात्ताभ्यां सुवर्णस्य लक्षं लक्षं पृथक्पृथक् ॥ १३३ ॥

तदा दानपरं दृष्ट्वा वाल्मीकिमुनिसत्तमम् । अब्रूतां प्रहसन्तौ तौ किञ्चिद्वक्रभ्रुवौ ततः

मुने महानयोऽनेन क्रियते भूमिपेन वै । यदावाभ्यां सुवर्णानि दातुमिच्छति लोभयन्

प्रतिग्रहो ब्राह्मणानां शस्यते नेतरेषु वै । प्रतिग्रहपरो राजा नरकायैव कल्पते ॥१३६॥

आवयोः कृपया मुक्तं राज्यं भुङ्क्ते महीपतिः ।

कथं दातुं सुवर्णानि वाञ्छति श्रेयसाञ्चितः ॥ १३७ ॥

इत्युक्तवन्तौ तौ दृष्ट्वा वाल्मीकिः कृपयायुतः ।

असंशयुष्मत्पितरं जानीथां नीतिवित्तमौ ॥ १३८ ॥

इति श्रुत्वा मुनेर्वाक्यं बालकौ नृपपादयोः । लग्नौ विनयसंयुक्तौ मातृभक्त्याऽतिनिर्मलौ

रामो बालौ दृढं स्वाङ्के परिरभ्य मुदान्वितः ।

मेने स्वीयौ तदा धर्मौ मूर्तिमन्तावुपस्थितौ ॥ १४० ॥

सभाऽपिरामसुतयोर्वीक्ष्य वक्त्रे मनोरमे । जानकीपतिभक्तित्वं सत्यं मेने मुनीश्वर!॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतिशेषमुखप्रोक्तं श्रुत्वा वात्स्यायनोऽब्रवीत् । रामायणं श्रोतुमनाः सर्वधर्मसमन्वितम्

वात्स्यायन उवाच ।

कस्मिन्कालेऽकृतं स्वामिन्रामायणमिदं महत् ।
कस्माच्चकार किन्तत्र वर्णनं तद्वदस्व मे ॥ १४३ ॥

शेष उवाच ।

एकदागतवान्विप्रो वाल्मीकिर्विपिनं महत् ।
यत्र तालास्तमालाश्च किंशुका यत्र पुष्पिता ॥ १४४ ॥

केतकी यत्र रजसा कुर्वती सौरभं वनम् । शशिप्रभेव महती दृश्यते शुभ्रकर्णभृत् ॥१४५
चम्पको बकुलश्चापि कोविदारः कुरण्टकः । अनेके पुष्पिता यत्र पादपाः शोभने वने ॥

कोकिलानां विरावेण षट्पदानां च शब्दितैः ।
सङ्घुष्टं सर्वतो रम्यं मनोहरवयोन्वितम् ॥ १४७ ॥

तत्र क्रौञ्चयुगं रम्यं कामबाणप्रपीडितम् । परस्परं प्रहर्षितं रेमे स्निग्धतया स्थितम्
तदा व्याधः समागत्य तयोरेकं मनोहरम् । अवधीन्निर्दयः कश्चिन्मांसास्वादनलोलुपः

तदा क्रौञ्चीव्याधहतं स्वपतिं वीक्ष्य दुःखिता ।
विललाप भृशं दुःखान्मुञ्चन्ती रावमुच्चकैः ॥ १५० ॥

तदा मुनिः प्रकुपितो निषादं क्रौञ्चघातकम् । शशाप वार्युपस्पृश्य सरितः पावनं शुभम्

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समा ।
यत्क्रौञ्चपक्षिणोरेकमवधीः काममोहितम् ॥ १५२ ॥
तदा प्रबन्धं श्लोकस्य जातं मत्वा ह्यनुद्विजाः ।
ऊचुर्मुनिं प्रहृष्टास्ते शंसन्तः साधुसाध्विति ॥ १५३ ॥
स्वामिञ्छापोदिते वाक्ये भारती श्लोकमातनोत् ।
अत्यन्तं मोहनो जातः श्लोकोऽयं मुनिसत्तम ॥ १५४ ॥

तदा मुनिः प्रहृष्टात्मा बभूव वाडवर्षभ ! । तस्मिन्काले समागत्य ब्रह्मा पुत्रैः समन्वितः

वचो जगाद वाल्मीकिं धन्योऽसि त्वं मुनीश्वर ! ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भारती त्वन्मुखे स्थित्वा श्लोकत्वं समपद्यत ॥ १५६ ॥

तस्माद्रामायणं रम्यं कुरुष्व मधुराक्षरम् । येन ते विमलाकीर्तिराकल्पान्तं भविष्यति

धन्या सैव मुखे वाणी रामनाम्ना समन्विता ।

अन्या कामकथा नृणां जनयत्येव पातकम् ॥ १५८ ॥

तस्मात्कुरुष्व रामस्य चरितं लोकविश्रुतम् । येन स्यात्पापिनां पापहानिरेव पदेपदे ॥

इत्युक्त्वान्तर्दधे स्रष्टा सर्वदेवैः समन्वितः । ततः सचिन्तयामास कथं रामायणं भवेत्

तदा ध्यानपरो जातो नदीतीरे मनोरमे । तस्य चेतस्यथो रामः प्रादुर्भूतो मनोहरः ॥

नीलोत्पलदलश्यामं रामं राजीवलोचनम् ।

निरीक्ष्य तस्य चरितं भूतं भावि भवच्च यत् ॥ १६२ ॥

तदाऽत्यन्तं मुदं प्राप्तो रामायणमथासृजत् । मनोरमपदैर्युक्तं वृत्तैर्बहुविधैरपि ॥१६३॥

षट्काण्डानि सुरम्याणि यत्र रामायणेऽनघ ! ।

बालमारण्यकं चान्यत्किष्किन्धासुन्दरं तथा ॥ १६४ ॥

युद्धमुत्तरमन्यच्च षडेतानि महामते । शृणुयाद्यो नरः पुण्यात्सर्वपापैः प्रमुच्यते ॥

तत्रबालेतु सन्तुष्टः पुत्रेष्ट्या चतुरस्सुतान् ।

प्राप पङ्क्तिरथः साक्षाद्धरिं ब्रह्म सनातनम् ॥ १६६ ॥

स कौशिकमखं गत्वा सीतामुद्वाह्य भार्गवम् । आगत्य पुरमुत्कृष्टो यौवराज्यप्रगल्भकः

मातृवाक्याद्वनं प्रागाद्गङ्गामुत्तीर्य पर्वतम् । चित्रकूटं महिलया लक्ष्मणेन समन्वितः ॥

भरतस्तं वने श्रुत्वा जगाम भ्रातरं नयी । तमप्राप्य स्वयं नन्दिग्रामे वासमचीकरत् ॥

बालमेतच्छृणुष्वान्यदारण्यकसमुद्भवम् । मुनीनाश्रमे वासस्तत्र तत्रोपवर्णनम् ॥१७०॥

नासाच्छेदः शूर्पणख्याः खरदूषणनाशनम् । मायामारीचहननं दैत्याद्रामापहारणम् ॥

वने विरहिणा भ्रान्तं मनुष्यचरितं भृतम् । कबन्धप्रेक्षणं तत्र पम्पायां गमनं तथा ॥

हनूमता सङ्गमनमित्येतद्वनसंज्ञितम् । अपरं च शृणु मुने ! संक्षिप्य कथयाम्यहम् ॥१७३

सप्ततालप्रभेदश्च बालेर्मारणमद्भुतम् । सुग्रीवे राज्यदानं च नगवर्णनमित्युत ॥ १७४ ॥

लक्ष्मणात्कर्मसन्देशः सुग्रीवस्य विवासनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथा सैन्यसमुद्देशः सीतान्वेषणमप्युत ॥ १७५ ॥
सम्पातिप्रेक्षणं तत्र वारिधेर्लङ्घनं तथा । परतीरे कपिप्राप्तिः कैष्किन्धं काण्डमद्भुतम्
सुन्दरं शृणु काण्डं वै यत्र रामकथाद्भुता । प्रतिगेहं परिभ्रान्तिः कपेश्चित्रस्य दर्शनम्
सीतासन्दर्शनं तत्र जानक्या भाषणं तथा । वनभङ्गः प्रकुपितैर्बन्धनं वानरस्य च ॥
ततो लङ्काप्रज्वलनं वानरैः सङ्गतिस्ततः । रामाभिज्ञानदानं च सैन्यप्रस्थानमेव च ॥
समुद्रे सेतुकरणं शुकसारणसङ्गतिः । इति सुन्दरमाख्यातं युद्धे सीतासमागमः ॥१८०
उत्तरे ऋषिसम्वादो यज्ञप्रारम्भ एव च । तत्रानेका रामकथाः शृण्वतां पापनाशिकाः
इति षट्काण्डमाख्यातं ब्रह्महत्यापनोदनम् । संक्षेपतो मया तुभ्यमाख्यातं सुमनोहरम्
चतुर्विंशतिसाहस्रं षट्काण्डपरिचिह्नितम् । तद्धे रामायणं प्रोक्तं महापातकनाशनम् ॥

तच्छ्रुत्वा राघवः प्रीतः पुत्रावाधाय चासने ।
दृढं तौ परिरभ्याथ सीतां सस्मार वल्लभाम् ॥ १८४ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे रामायणगानं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

———

## सप्तषष्टितमोऽध्यायः

### लक्ष्मणेनसह सीतायाः श्रीरामयज्ञमण्डप आगमनम् ।

शेष उवाच ।

अथ सौमित्रिरागत्य जानकीं नतवान्मुहुः । प्रेमगद्गदया शंसन्वाचं रामप्रणोदिताम् ॥

सीता समागतं दृष्ट्वा लक्ष्मणं विनियान्वितम् ।
तन्मुखाद्रामसन्देशं श्रुत्वोवाच विलज्जिता ॥ २ ॥
सौमित्रे कथमागच्छे रामत्यक्ता महावने ।
तिष्ठामि रामं स्मरन्ती वाल्मीकेराश्रमे त्वहम् ॥ ३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्या मुखोदितं वाक्यं श्रुत्वा सौमित्रिरब्रवीत् ।
मातः ! पतिव्रते ! रामस्त्वामाकारयते मुहुः ॥ ४ ॥
पतिव्रता पतिकृतं दोषं नानयते हृदि । तस्मादागच्छ हि मया स्थित्वा स्यन्दन उत्तमे
इत्यादिवचनं श्रुत्वा जानकी पतिदेवता ।
मनो रोषं परित्यज्य तस्थौ सौमित्रिणा रथे ॥ ६ ॥
तापसीः सकला नत्वा मुनींश्च निगमोज्ज्वलान् ।
रामं स्मरन्ती मनसा रथे स्थित्वाऽगमत्पुरीम् ॥ ७ ॥
क्रमेण नगरीं प्राप्ता महार्हाभरणान्विता । सरयूं सरितं प्राप यत्र रामः स्वयं स्थितः
रथादुत्तीर्य ललिता लक्ष्मणेन समन्विता । रामस्य पादयोर्लग्ना पतिव्रतपरायणा ॥
रामस्तामागतां दृष्ट्वा जानकीं प्रेमविह्वलाम् ।
साध्वि ! त्वया सहेदानीं कुर्वे यज्ञसमापनम् ॥ १० ॥
वाल्मीकिं सा नमस्कृत्य तथान्यान्विप्रसत्तमान् ।
जगाम मातृपद्योः सन्नतिं कर्तुमुत्सुका ॥ ११ ॥
कौसल्या तामथायान्तीं वीरसूं जानकीं प्रियाम् ।
आशीर्भिरभिसंयुज्य ययौ हर्षमनेकधा ॥ १२ ॥
कैकेयीपद्योर्नम्रां वीक्ष्य वैदेहपुत्रिकाम् । भर्त्रा सह चिरं जीव सपुत्रेत्याशिषं व्यधात्
सुमित्रा स्वपदेनम्रांवीक्ष्य वैदेहपुत्रिकाम् । आशिषं व्यदधात्तस्याः पुत्रपौत्रप्रदायिनीम्
सीता ताः सर्वतो नत्वा रामचन्द्रप्रिया सती । परमं हर्षमापन्ना बभूव किल वाडव!
समागतां वीक्ष्य पत्नीं रामचन्द्रस्य कुम्भजः ।
सुवर्णपत्नीं धिक्कृत्य तामधाद्धर्मचारिणीम् ॥ १६ ॥
रामस्तदा यज्ञमध्ये शुशुभे सीतयासह । तारयानुगतो यद्वच्छशीव शरदुत्प्रभः ॥ १७ ॥
प्रयोगमकरोत्तत्र काले प्राप्ते मनोरमे । वैदेह्या धर्मचारिण्या सर्वपापापनोदनम् ॥१८॥
सीतया सहितं रामं प्रसक्तं यज्ञकर्मणि । निरीक्ष्य जहृषुस्तत्र कौतुकेन समन्विताः ॥
वसिष्ठं प्राह सुमतिं रामस्तत्र क्रतौ वरे । किं कर्तव्यं मया स्वामिन्नतः परमवश्यकम्



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रामस्य वचनं श्रुत्वा गुरुः प्राह महामतिः । ब्राह्मणानां प्रकर्तव्या पूजा सन्तोषकारिका
मरुत्तेन क्रतुः सृष्टः पूर्वं सम्भारसम्भृतः । ब्राह्मणास्तत्र वित्ताद्यैस्तोषिता अभवंस्तदा
अत्यन्तं वित्तसम्भारं नेतुं तमशकन्नहि । प्राक्षिपन्नहिमवद्देशे वित्तभारासहाद्द्विजाः ॥

तस्मात्त्वमपि राजाग्र्य लक्ष्मीवान्नृपसत्तम ! ।
देहि दानादि विप्रेभ्यो यथा स्यात्प्रीतिरुत्तमा ॥ २४ ॥

एतच्छ्रुत्वा स राजाग्र्यः पूज्यं मत्वा घटोद्भवम् । प्रथमं पूजयामास ब्रह्मपुत्रं तपोधनम्
अनेकरत्नसम्भारैः स्वर्णभारैरनेकधा । देशैर्जनैः परिवृतैरत्यन्तप्रीतिदायकैः ॥ २६ ॥
अगस्त्यं पूजयामास सपत्नीकं मनोरमम् । तथैव रत्नैः स्वर्णैश्च देशैश्च विविधैरपि ॥
व्यासं सत्यवतीपुत्रं तथैव समपूजयत् । च्यवनं भार्यया साकं सुरत्नैः समपूजयत् ॥
अन्यानपि मुनीन्सर्वानृत्विजस्तपसां निधीन् । पूजयामास रत्नौघैः स्वर्णभारैरनेकधा
अदात्तदाक्रतौ रामो विप्रेभ्यो भूरिदक्षिणाम् । लक्षं लक्षं सुवर्णस्यप्रत्येकं त्वग्रजन्मने
दीनान्धकृपणेभ्यश्च ददौ दानमनेकधा । यथा सन्तोषविहितैर्वित्तै रत्नैर्मनोहरैः ॥३१॥

वासांसि च विचित्राणि भोजनानि मृदूनि च ।
तत्र प्रादाद्यथा शास्त्रं सर्वेषां प्रीतिदायकम् ॥ ३२ ॥

हृष्टपुष्टजनाकीर्णं सर्वसत्त्वोपद्रवं हितम् । अत्यन्तमभवद्धृष्टं पुरं पुंस्त्रीसमावृतम् ॥३३॥
दानं ददन्तं सर्वेषां वीक्ष्य कुम्भोद्भवो मुनिः । अत्यन्तपरमप्रीतिं ययौ क्रतुवरे द्विजः
तदाभिषेकतोयार्थं पानीयममृतोपमम् । आनेतुं च चतुःषष्टिनृपान्सस्त्रीन्समाह्वयत् ॥
रामस्तु सीतया सार्द्धमानेतुमुदकं ययौ । घटेन स्वर्णवर्णेन सर्वालङ्कारशोभया ॥३६॥

सौमित्रिरप्यूर्मिलया माण्डव्याभरतो नृपः ।
शत्रुघ्नः श्रुतकीर्त्या च कान्तिमत्या च पुष्कलः ॥ ३७ ॥
सुबाहुः सत्यवत्या च सत्यवान्वीरभूषया ।
सुमदस्तत्र सत्कीर्या राज्ञ्या च विमलो नृपः ॥ ३८ ॥

राजा वीरमणिस्तत्र श्रुतवत्या मनोज्ञया । लक्ष्मीनिधिः कोमलया रिपुतापोऽङ्गसेनया
विभीषणो महामूर्त्या प्रतापाग्र्यः प्रतीतया । उग्राश्वः कामगमया नीलरत्नोऽधिरम्यया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुरथः सुमनोहार्या तथा मोहनया कपिः ।
इत्यादीन्नृपतीन्विप्रो वसिष्ठः प्राहिणोन्मुनिः ॥ ४१ ॥

वसिष्ठः सरयूं गत्वा शिवपुण्यजलाप्लुताम् । उदकं मन्त्रयामास वेदमन्त्रेण मन्त्रवित्
पयः पुनीह्यमुं वाहमुदकेन मनोहृता । यज्ञार्थं रामचन्द्रस्य सर्वलोकैकरक्षितुः ॥ ४३ ॥
उदकं तन्मुनिस्पृष्टं सर्वे रामादयो नृपाः । आजह्रुर्मण्डपतले विप्रवर्यैरुपस्तु ते ॥ ४४ ॥

पयोभिर्निर्मलैः स्नाप्य वाजिनं क्षीरसन्निभम् ।
मन्त्रेण मन्त्रयामास रामहस्तेन कुम्भजः ॥ ४५ ॥

पुनीहि मां महावाह अस्मिन्ब्रह्मसमाकुले । त्वन्मेधेनाखिलादेवाःप्रीणन्तु परितोषिताः
इत्युक्त्वा स नृपोरामःसीतया सममस्पृशत् । तदा सर्वे द्विजाश्चित्रममन्यन्तकुतूहलात्
परस्परममोचंस्ते यन्नामस्मरणान्नराः । महापापात्प्रमुच्यन्ते स रामःकिं वदत्यहो ॥
इत्युक्तवति भूमीशे रामे कुम्भोद्भवोमुनिः । करवालं चाभिमन्त्र्या ददौ रामकरे मुनिः ॥
करवाले धृतेस्पृष्टे रामेण सहयःक्रतौ । पशुत्वं तु विहायाशु दिव्यरूपमपद्यत ॥ ५० ॥
विमानवरमारूढश्चाप्सरोभिःसमन्ततः । चामरैर्वीज्यमानश्च वैजयन्त्या विभूषितः ॥

तदा तं वाजितां त्यक्त्वां दिव्यरूपधरं वरम् ।
वीक्ष्य लोकाःक्रतौ सर्वे विस्मयं प्राप्नुवंस्तदा ॥ ५२ ॥

तदा रामःस्वयं जानञ्ज्ञापयन्सर्वतो नरान् । पप्रच्छ दिव्यरूपं तं सुरं परमधार्मिकः ॥

कस्त्वं दिव्यवपुः प्राप्तः कस्मात्त्वं वाजितां गतः ।
कथं सुरस्त्रीसहितःकिं चिकीर्षसि तद्वद ॥ ५४ ॥

रामस्य वचनंश्रुत्वा देवःप्रोवाच भूमिपम् । हसन्मेघरवां वाणीमवदत्सुमनोहराम् ॥
तवाज्ञातं न सर्वत्र बाह्याभ्यन्तरचारिणः । तथापि पृच्छते तुभ्यं कथयामि यथातथम्
अहं पुरा भवे राम द्विजःपरमधार्मिकः । अचरं प्रतिकूलं वै वेदस्य रिपुतापन ॥ ५७ ॥
कदाचिद्धूतपापायास्तीरेऽहं गतवान्पुरा । अनेकवृक्षललिते सर्वत्र सुमनोरमे ॥ ५८ ॥

तत्र स्नात्वा पितॄंस्तृप्त्वा दानं दत्त्वा यथाविधि ।
ध्यानं तव महाबाहो कृतवान्वेदसंमितम् ॥ ५९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदा जनाःसमायाता बहवस्तत्र भूपते ! । तेषां प्रवञ्चनार्थाय दम्भमेनमकारिषम् ॥
अनेकक्रतुसम्भारैः पूर्णमजिरमुत्तमम् । वासोभिश्छादितं रम्यं चषालादियुतं महत् ॥
अग्निहोत्रोद्भवोधूमःसर्वतो नभसोऽङ्गणम् । चकार रम्यमतुलं चित्रकारिवपुर्धरः ॥
अनेकतिलकश्रीभिःशोभिताङ्गो महत्तपाः । दर्भशोभःसमित्पाणिर्दम्भो मूर्तिधरःकिमु
दुर्वासास्तत्र स्वच्छन्दं पर्यटञ्जगतीतलम् । प्राप तत्र महातेजा धूतपापा सरित्तटे ॥
ददर्श मां दम्भकरं मौनधारिणमग्रतः । अनर्घ्यकरमुन्मत्तमस्वागतवचःकरम् ॥ ६५ ॥

दृष्ट्वाऽतीव क्रुधाक्रान्तः समुद्र इव पर्वणि ।
शशापासौ मुनिस्तीव्रो दम्भिनं मां महामतिः ॥ ६६ ॥

दम्भं करोषि यत्तीरे सरितस्त्वं सुदुर्मते । तस्मात्प्राप्नुहि निर्वाच्यं पशुत्वं तापसांधम
शापं प्रदत्तं संश्रुत्य दुःखतोऽहं तदाऽभवम् । अग्राहिषं पदे तस्या मुनेर्दुर्वाससःकिल
तदा मे कृतवान्नाम द्विजोऽनुग्रहमुत्तमम् । वाजितां प्राप्नुहि मखे राजराजस्य तापस !॥
पश्चात्तद्धस्तसम्पर्काद्याहि तत्परमं पदम् । दिव्यंवपुर्मनोहारि धृत्वा दम्भविवर्जितम् ॥
तेन शापोऽपि सन्दिष्टो ममानुग्रहतां गतः । यदहं तव हस्तस्य स्पर्शं प्राप्तो मनोरमम्
यदेव रामदेवादिदुर्लभं बहुजन्मभिः । तत्तेऽहं करजस्पर्शं प्राप्तवानिह दुर्लभम् ॥ ७२ ॥

आज्ञापय महाराज ! त्वत्प्रसादादहं महत् ।
गच्छामि शाश्वतं स्थानं तव दुःखादिवर्जितम् ॥ ७३ ॥
न यत्र शोको न जरा न मृत्युः कालविभ्रमः ।
तत्स्थानं देव गच्छामि त्वत्प्रसादान्नराधिप ! ७४ ॥

इत्युक्त्वा तं परिक्रम्य विमानवरमारुहत् । अनेकरत्नखचितं सर्वदेवाभिवन्दितम् ॥
गतोऽसौ शाश्वतं स्थानं रामपादप्रसादतः । पुनरावृत्तिरहितं शोकमोहविवर्जितम् ॥

तेन तत्कथितं श्रुत्वा रामं ज्ञात्वेतरे जनाः ।
विस्मयं प्रापिरे सर्वे परस्परमुदुत्मदाः ॥ ७७ ॥

शृणु द्विज महाबुद्धे दम्भेनापि स्मृतो हरिः । ददाति मोक्षं सुतरां किंपुनर्दम्भवर्जनात्
यथा कथञ्चिद्रामस्य कर्तव्यं स्मरणं परम् । येन प्राप्नोति परमं पदं देवादिदुर्लभम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तच्चित्रं वीक्ष्य मुनयः कृतार्थं मेनिरे निजम् । यद्रामचरणप्रेक्षा करस्पर्शपवित्रितम् ॥
गते तस्मिन्सुरे स्वर्गं हयरूपधरे पुरा । उवाच रामस्तपसां निधीन्वेदविदुत्तमान् ॥
किं कर्तव्यं मयाब्रह्मन्हयो नष्टो गतःसुखम् । होमः कथं पुरो भावी सर्वदैवततर्पकः ॥

यथा स्यात्सुरसन्तृप्तिर्यथा मे मख उत्तमः ।
तथा कुर्वन्तु मुनियो यथा मे स्याद्विधिश्रुतम् ॥ ८३ ॥

इति वाक्यं समाश्रुत्य जगाद मुनिसत्तमः । वसिष्ठः सर्वदेवानां चित्ताभिज्ञानकोविदः
कर्पूरमाहर क्षिप्रं येन देवाः स्वयं पुरा । प्राप्य हव्यं ग्रहीष्यन्ति मद्वाक्यप्रेरिताधुना ॥
इति वाक्यं समाकर्ण्य रामः क्षिप्रमपाहरत् । कर्पूरं बहुदेवानां प्रीत्यर्थं बहुशोभनम् ॥
तदा मुनिः प्रहृष्टात्मा देवानाह्वयदद्भुतान् । ते सर्वे तत्क्षणात्प्राप्ताःस्वपरीवारसंवृताः

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
यज्ञप्रारम्भो नाम सप्तषष्ठितमोऽध्यायः ॥ ६७ ॥

---

## अष्टषष्टितमोऽध्यायः

### रामस्य यज्ञान्तस्नानम् ।

शेष उवाच ।

इन्द्रस्तत्र हविर्मृष्टं रामचन्द्रेण वीक्षितम् । परिस्वादं क्रतौ तृप्तिं न प्राप सुरसंयुतः ॥
नारायणो महादेवो ब्रह्मा तत्र चतुर्मुखः । वरुणश्च कुबेरश्च तथाऽन्ये लोकपालकाः ॥

तत्रास्वाद्य हविः स्निग्धं वसिष्ठेन परिष्कृतम् ।
तत्र पुनर्हि विप्रेन्द्राः क्षुधार्ता इव भोजनात् ॥ ३ ॥

सर्वान्देवांश्च सन्तर्प्य हविषा करुणानिधिः । वसिष्ठप्रेरितः सर्वमिति कर्तव्यमाचरत्

ब्राह्मणा दानसन्तुष्टाः हविस्तुष्टाः सुरावराः ।
तृप्ताः सर्वे स्वकं भागं गृहीत्वा स्वालयं ययुः ॥ ५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऋषिभ्यो होतृमुख्येभ्यः प्रादाद्राज्यं चतुर्दिशम् ।
सन्तुष्टास्ते द्विजा राममाशीर्भिरददुः शुभम् ॥ ६

पूर्णाहुतिं ततः कृत्वा वसिष्ठः प्राह सुस्त्रियः । वर्धापयन्तु भूमीशं यागपूर्तिकरं परम् ॥
तद्वाक्यं ताःस्त्रियः श्रुत्वा लाजैरवाकिरन्मुदा । लावण्यजितकन्दर्पं महामणिविभूषितम्
ततोऽवभृथस्नानार्थं प्रेरयामास भूमिपम् । ययौ रामः सह स्वीयैः सरयूतीरमुत्तमम्
अनेकराजकोटीभिः परीतः पादचारिभिः । जगाम ससरिच्छ्रेष्ठां पक्षिवृन्दसमाकुलाम्
तारापतिरिवस्वाभिर्भार्याभिर्वृ तउत्प्रभः । विरोचते तथा तद्वद्रामो राजगणैर्वृ तः ॥
तदुत्सवं समाज्ञाय ययुर्लोकास्त्वरायुताः । सीतापतिमुखालोकनिश्चलीभूतलोचनाः

राजेन्द्रं सीतया साकं गच्छन्तं सरितम्प्रति ।
विलोक्य मुदिता लोकाश्चिरं दर्शनलालसाः ॥ ॥ १३ ॥

अनेकनटगन्धर्वा गायन्तो यश उज्ज्वलम् । अनुजग्मुर्महीशानं सर्वलोकनमस्कृतम् ॥

नर्तक्यस्तत्र नृत्यन्त्यः क्षोभयन्त्यः पतेर्मनः ।
जलयन्त्रैश्च सिञ्चन्त्यो ययुः श्रीरामसेवनम् ॥ १५ ॥

महाराजं विलिम्पन्त्यो हरिद्राकुङ्कुमादिभिः । परस्परं प्रलिम्पन्त्यो मुदं प्रापुर्महत्तराम्
कुचयुग्मोपरिन्यस्तमुक्ताहारसुशोभिताः । श्रवणद्वन्द्वसंमृष्टस्वर्णकुण्डललक्षिताः ॥१६॥
अनेकनरनारीभिः सङ्कीर्णं मार्गमाचरन् । यथा वत्सरितं प्राप शिवपुण्यजलाप्लुताम्
तत्र गत्वा स वैदेह्या रामः कमलोचनः । प्रविवेश जलं पुण्यं वसिष्ठादिभिरन्वितः ॥
अनुप्रविविशुः सर्वे राजानो जनतास्तथा । तत्पादरजसा पूतजलं लोकैकवन्दितम् ॥
परस्परं प्रसिञ्चन्तो जलयन्त्रैर्मनोरमैः । सुशोणनयनाः सर्वे हर्षं प्रापुर्मनोऽधिकम् ॥
सरामः सीतया सार्धं चिरं पुण्यजलप्लवे । क्रीडित्वा जलकल्लोलैर्निरगाद्धर्मसंयुतः ॥

दुकूलवासाः सकिरीटकुण्डलः केयूरशोभावरकङ्कणान्वितः ।
कन्दर्पकोटिश्रियमुद्वहन्नृपो राजाग्र्यवर्यैरुपसंस्तुतो बभौ ॥ २३ ॥
स यागयूपं वरवर्णशोभितं कृत्वा सरित्तीरवरे महामनाः ।
त्रैलोक्यलोकश्रियमाप ह्यद्भुतामन्यैर्दुरापां नृपतिर्भुजैर्निजैः ॥ २४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं जनकपुत्र्याऽसौ हयमेधत्रयं चरन् । त्रैलोक्ये कीर्तिमतुलां प्राप देवैः सुदुर्लभाम

एवंते वर्णितं तात यत्पृष्टो रामसत्कथाम् ।
विस्तृतः कथितो मेधो भूयः किं पृच्छसे द्विज ॥ २६ ॥ !
यः शृणोति हरैर्भक्त्या रामचन्द्रस्य सन्मखम् ।
ब्रह्महत्यां क्षणात्तीर्त्वा ब्रह्मशाश्वतमाप्नुयात् ॥ २७ ॥
अपुत्रतो लभते पुत्रान्निर्धनो धनमाप्नुयात् ।
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ २८ ॥

यत्कथाश्रवणाद्दुष्टः श्वपचोऽपि परं पदम् । प्राप्नोति किमु विप्राग्र्यो रामभक्तिपरायणः
रामंस्मृत्वा महाभागं पापिनः परमं पदम् । प्राप्नुयुः परमंस्वर्गं शक्रदेवादिदुर्लभम् ॥

ते धन्या मानवा लोके ये स्मरन्ति रघूत्तमम् ।
ते क्षणात्संसृतिं तीर्त्वा गच्छन्ति सुखमव्ययम् ॥ ३१ ॥

प्रत्येकमक्षरं ब्रह्म हत्यावंशदवानलः । तं यः श्रावयते धीमास्तं गुरुं सम्प्रपूजयेत् ॥३२॥
श्रुत्वा कथां वाचकाय गवां द्वन्द्वं प्रदापयेत् ।सपत्नीकाय सम्पूज्य वस्त्रालङ्कारभोजनैः

कुण्डलाभ्यां विराजन्त्यौ मुद्रिकाभिरलङ्कृते ।
रामसीते स्वर्णमय्यौ प्रतिमे शोभने वरे ॥ ३४ ॥

कृत्वा तु वाचकायैव दातव्ये भोद्विजोत्तम । तस्य देवाश्च पितरोवैकुण्ठंप्राप्नुयुस्तदा ॥
त्वया पृष्टा रामकथामयातेकथितापुरा । किमन्यत्कथ्यतांब्रह्मन्पुरतस्तवधीमतः ॥३६॥

शृण्वन्ति येकथामेतांब्रह्महत्यौघनाशिनीम् ।
ते यान्ति परमं स्थानं यच्च देवैः सुदुर्लभम् ॥ ३७ ॥

गोघ्नश्चापि सुतघ्नश्च सुरापो गुरुतल्पगः । क्षणात्पूतो भवत्येव नात्र संशयितुं क्षमम्

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेध-श्रवणपठनपुण्यवर्णनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

इतिरामाश्वमेधः समाप्तः ।

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# एकोनसप्तितमोऽध्यायः

## श्रीकृष्णचरित्रवर्णनम् ।

ऋषय ऊचुः ।

सम्यक्छ्रुतोमहाभागत्वत्तोरामाश्वमेधकः । इदानींवदमाहात्म्यं श्रीकृष्णस्य महात्मनः

सूत उवाच ।

श्रृण्वन्तु मुनिशार्दूलाः श्रीकृष्णचरितामृतम् । शिवापप्रच्छ भूतेशं यत्तद्वः कीर्तयाम्यहम्

एकदा पार्वती देवी शिवं संस्निग्धमानसा । प्रणयेन नमस्कृत्य प्रोवाच वचनं त्विदम्

पार्वत्युवाच ।

अनन्तकोटिब्रह्माण्डे तद्बाह्याभ्यन्तरस्थितेः ।
विष्णोः स्थानं परं तेषां प्रधानं वरमुत्तमम् ॥ ४ ॥
यत्परं नास्ति कृष्णस्य प्रियं स्थानं मनोरमम् ।
तत्सर्वं श्रोतुमिच्छामि कथयस्व महाप्रभो ॥ ५ ॥

ईश्वर उवाच ।

गुह्याद्गुह्यतरं पुण्यं परमानन्दकारकम् । अत्यद्भुतं रहः स्थानमानन्दं परम् ॥ ६ ॥
दुर्लभानां च परमं दुर्लभं मोहनं परम् । सर्वशक्तिमयं देवि सर्वस्थानेषु गोपितम् ॥७॥
सात्वतां स्थानमूर्द्धन्यं विष्णोरत्यन्तदुर्लभम् ।
नित्यं वृन्दावन नाम ब्रह्माण्डोपरि संस्थितम् ॥ ८
पूर्णब्रह्मसुखैश्वर्यं नित्यमानन्दमव्ययम् । वैकुण्ठादि तदंशांशं स्वयं वृन्दावनं भुवि ॥९॥
गोलोकैश्वर्यं यत्किञ्चिद्गोकुले तत्प्रतिष्ठितम् । वैकुण्ठवैभवं यद्वै द्वारकायां प्रतिष्ठितम्
यद्ब्रह्मपरमैश्वर्यं नित्यं वृन्दावनाश्रयम् । कृष्णधामपरं तेषां वनमध्ये विशेषतः ॥११॥
तस्मात्त्रैलोक्यमध्ये तु पृथ्वी धन्येति विश्रुता ।
यस्मान्माथुरकं नाम विष्णोरेकान्तवल्लभम् ॥ १२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वस्थानमधिकं नामधेयं माथुरमण्डलम् । निगूढं विविधं स्थानं पुर्यभ्यन्तरसंस्थितम्
सहस्रपत्रकमलाकारं माथुरमण्डलम् । विष्णुचक्रपरिभ्रामद्धामवैष्णवमद्भुतम् ॥१४॥
कर्णिकापर्णविस्तारं रहस्यद्रुममीरितम् । प्रधानं द्वादशारण्यं माहात्म्यं कथितं क्रमात्
भद्रश्रीलोहभाण्डीरमहातालखदीरकाः । बकुलं कुमुदं काम्यं मधु वृन्दावनं तथा ॥१६॥

द्वादशैतावती सङ्ख्या कालिन्द्याः सप्त पश्चिमे ।
पूर्वे पञ्चवनं प्रोक्तं तत्रास्ति गुह्यमुत्तमम् ॥ १७ ॥

महारण्यं गोकुलाख्यं मधुवृन्दावनं तथा । अन्यच्चोपवनं प्रोक्तं कृष्णक्रीडारसस्थलम्
कदम्बखण्डनं नन्दवनं नन्दीश्वरं तथा । नन्दनन्दनखण्डं च पलाशाऽशोककेतकी ॥
सुगन्धमानसं कैलममृतं भोजनस्थलम् । सुखप्रसाधनं वत्स हरणं शेषशायिकम् ॥
श्यामपूर्वोदधिग्रामश्चक्रभानुपुरं तथा । सङ्केतं द्विपदं चैव बालक्रीडनधूसरम् ॥२१॥
कामद्रुमं सुललितमुत्सुकं चापि काननम् । नानाविधरसक्रीडा नानालीलारसस्थलम्
नागविस्तारविष्टम्यं रहस्यद्रुममीरितम् । सहस्रपत्रकमलं गोकुलाख्यं महत्पदम् ॥२३॥
कर्णिकातन्महद्धाम गोविन्दस्थानमुत्तमम् । तत्रोपरिस्वर्णपीठे मणिमण्डपमण्डितम्
कर्णिकायां क्रमाद्दिक्षु विदिक्षु दलमीरितम् । यद्दलं दक्षिणे प्रोक्तं परं गुह्योत्तमोत्तमम्

तस्मिन्दले महापीठं निगमागमदुर्गमम् ।
योगीन्द्रैरपि दुष्प्राप्यं सर्वात्मा यच्च गोकुलम् ॥ २६ ॥

द्वितीयं दलमाग्नेय्यां तद्रहस्यं दलं तथा । सङ्केतं द्विपदं चैव कुटी द्वौ तत्कुले स्थितौ
पूर्वं दलंतृतीयं च प्रधानस्थानमुत्तमम् । गङ्गादि सर्वतीर्थानां स्पर्शाच्छतगुणं स्मृतम्

चतुर्थं दलमैशान्यां सिद्धपीठेऽपि तत्पदम् ।
कात्यायन्यर्चनाद्गोपी तत्र कृष्णं पतिं लभेत् ॥ २९ ॥

वस्त्रालङ्कारहरणं तद्दले समुदाहृतम् । उत्तरे पञ्चमं प्रोक्तं दलं सर्वदलोत्तमम् ॥ ३० ॥
द्वादशादित्यमत्रैवं दलं च कर्णिकासमम् । वायव्यां तु दलं षष्ठं तत्र कालीह्रदः स्मृतः

दलोत्तमोत्तमं चैव प्रधानं स्थानमुच्यते
सर्वोत्तमदलं चैव पश्चिमे सप्तमं स्मृतम् ॥ ३२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यज्ञपत्नीगणानां च तदीप्सितवरप्रदम् । अत्रासुरोऽपि निर्वाणं प्राप त्रिदशदुर्लभम् ॥
ब्रह्ममोहनमंत्रैव दलं ब्रह्महृदाभिधम् । नैर्ऋत्यां तु दलं प्रोक्तमष्टमं व्योमघातनम् ॥३५॥
शङ्खचूडवधस्तत्र नानाकेलि रसस्थलम् । श्रुतमष्टदलं प्रोक्तं वृन्दारण्यान्तरस्थितम् ॥
श्रीमद्वृन्दावनं रम्यं यमुनायाःप्रदक्षिणम् । शिवलिङ्गमधिष्ठानं दृष्टं गोपीश्वराभिधम्
तद्वाह्ये षोडशदलं श्रियापूर्णं तमीश्वरम् । सर्व्वासु दिक्षुयत्प्रोक्तं प्रादक्षिण्याद्यथाक्रमम्

महत्पदं महद्धाम स्वधामाधवसंज्ञकम् ।
प्रथमैकदलं श्रेष्ठं माहात्म्यं कर्णिकासमम् ॥ ३८ ॥

तत्र गोवर्द्धनगिरौ रम्ये नित्यरसाश्रये । कर्णिकायां महल्लीला तल्लीलारसगह्वरौ ॥३६॥

यत्र कृष्णो नित्यवृन्दाकाननस्य पतिर्भवेत् ।
कृष्णो गोविन्दतां प्राप्तःकिमन्यैर्बहुभाषितैः ॥ ४० ॥

दलं तृतीयमाख्यातं सर्वश्रेष्ठोत्तमोत्तमम् । चतुर्थं दलमाख्यातं महाद्भुतरसस्थलम् ॥
नन्दीश्वरवनं रम्यं तत्र नन्दालयःस्मृतः । कर्णिकादलमाहात्म्यं पञ्चमं दलमुच्यते ॥
अधिष्ठाताऽत्र गोपालो धेनुपालनतत्परः । षष्ठंदलं यदाख्यातं तत्र नन्दवनं स्मृतम् ॥
सप्तमं वकुलारण्यं दलंरम्यं प्रकीर्तितम् । तत्राष्टमं तालवनं तत्र धेनुवधःस्मृतः ॥ ४४ ॥
नवमं कुमुदारण्यं दलं रम्यं प्रकीर्तितम् । कामारण्यं च दशमं प्रधानं सर्वकारणम् ॥
ब्रह्मप्रसाधनं तत्र विष्णुच्छद्म प्रदर्शनम् । कृष्णक्रीडारसस्थानं प्रधानं दलमुच्यते ॥

दलमेकादशं प्रोक्तं भक्तानुग्रहकारकम् ।
निर्माणं सेतुबन्धस्य नानावनमयस्थलम् ॥ ४७ ॥

भाण्डीरं द्वादशदलं वनं रम्यं मनोहरम् । कृष्णःक्रीडारतस्तत्र श्रीदामादिभिरावृतः ॥
त्रयोदशं दलं श्रेष्ठं तत्र भद्रवनं स्मृतम् । चतुर्दशदलं प्रोक्तं सर्वसिद्धिप्रदस्थलम् ॥४६॥
श्रीवनं तत्र रुचिरं सर्वैश्वर्यस्यकारणम् । कृष्णक्रीडादलमयं श्रीकान्तिकीर्तिवर्द्धनम् ॥
दलं पञ्चदशंश्रेष्ठं यत्र लोहवनं स्मृतम् । कथितं षोडशदलं माहात्म्यं कर्णिकासमम् ॥
महावनं तत्र गीतं तत्रास्ति गुह्यमुत्तमम् । बालक्रीडारतस्तत्र वत्सपालैःसमावृतः ॥
पूतनादि वधस्तत्र यमलार्जुनभञ्जनम् । अधिष्ठाता तत्र बालगोपालःपञ्चमाब्दिकः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाम्ना दामोदरःप्रोक्तःप्रेमानन्दरसार्णवः। दलं प्रसिद्धमाख्यातं सर्वश्रेष्ठदलोत्तमम् ॥५४॥
कृष्णक्रीडा च किञ्जल्की विहारदलमुच्यते। सिद्धप्रधानकिञ्जल्क दलं च समुदाहृतम्

पार्वत्युवाच।

वृन्दारण्यस्य माहात्म्यं रहस्यं वा किमद्भुतम्।
तदहं श्रोतुमिच्छामि कथयस्व महाप्रभो ! ॥ ५६ ॥

ईश्वर उवाच।

कथितं ते प्रियतमे गुह्याद्गुह्योत्तमोत्तमम्। रहस्यानां रहस्यं यद्दुर्लभानां च दुर्लभम्
त्रैलोक्यगोपितं देवि देवेश्वरसुपूजितम्।
ब्रह्मादि वाञ्छितं स्थानं सुरसिद्धादिसेवितम् ॥ ५८ ॥
योगीन्द्रा हि सदा भक्त्या तस्य ध्यानैकतत्पराः।
अप्सरोभिश्च गन्धर्वैर्नृत्यगीतनिरन्तरम् ॥ ५९ ॥
श्रीमद्वृन्दावनं रम्यं पूर्णानन्दरसाश्रयम्। भूरिचिन्तामणिस्तोयममृतं रसपूरितम् ॥
वृक्षं गुरुद्रुमं तत्र सुरभीवृन्दसेवितम्। स्त्रीं लक्ष्मीं पुरुषं विष्णुं तद्दशांशसमुद्भवम् ॥
तत्र कैशोरवयसं नित्यमानन्दविग्रहम्। गीतनाट्यकलालापं स्मितवक्त्रं निरन्तरम् ॥
शुद्धसत्त्वैःप्रेमपूर्णैर्वैष्णवैस्तद्धनाश्रितम्। पूर्णब्रह्मसुखेमग्नं स्फुरत्तन्मूर्ति तन्मयम् ॥६३॥
मत्तकोकिलभृङ्गाद्यैःकूजत्कलमनोहरम्। कपोल शुकसङ्गीतमुन्मत्तालि सहस्रकम् ॥
भुजङ्गशत्रुनृत्याढ्यं सकलामोदविभ्रमम्। नानावर्णैश्च कुसुमैस्तद्रेणुपरिपूरितम् ॥६५॥
पूर्णेन्दु नित्याभ्युदयं सूर्यमन्दांशुसेवितम्। अदुःखं दुःखविच्छेदं जरामरणवर्जितम् ॥
अक्रोधं गतमात्सर्यमभिन्नमनहङ्कृतम्। पूर्णानन्दामृतरसं पूर्णप्रेम सुखार्णवम् ॥६७॥
गुणातीतं महद्धाम पूर्णप्रेम स्वरूपकम्।
वृक्षादि पुलकैर्यत्र प्रेमानन्दाश्रुवर्षितम् ॥ ६८ ॥
किं पुनश्चेतनायुक्तैर्विष्णुभक्तैःकिमुच्यते।
गोविन्दाङ्घ्रिरजःस्पर्शान्नित्यं वृन्दावनं भुवि ॥ ६९ ॥
सहस्रदलपद्मस्य वृन्दारण्यं वराटकम्। यस्य स्पर्शनमात्रेण पृथ्वीधन्या जगत्त्रये ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुह्याद्गुह्यतरं रम्यं मध्येवृन्दावनं भुवि। अक्षरं परमानन्दं गोविन्दस्थानमव्ययम् ॥७१॥
गोविन्द देहतोऽभिन्नं पूर्णब्रह्म सुखाश्रयम्।
मुक्तिस्तत्र रजःस्पर्शात्तन्माहात्म्यं किमुच्यते ॥ ७२ ॥
तस्मात्सर्वात्मना देवि हृदिस्थं तद्वनं कुरु। वृन्दावनविहारेषु कृष्णं कैशोरविग्रहम् ॥
कालिन्दी चाकरोद्यस्य कर्णिकायाःप्रदक्षिणाम्।
लीलानिर्वाणगम्भीरं जलं सौरभमोहनम् ॥ ७४ ॥
आनन्दामृततन्मिश्रमकरन्दघनालयम्। पद्मोत्पलाद्यैःकुसुमैर्नानावर्णसमुज्ज्वलम् ॥७५॥
चक्रवाकादि विहगैर्मञ्जु नाना कलस्वनैः। शोभमानं जलंरम्यं तरङ्गातिमनोरमम् ॥
तस्योभयतटीरम्या शुद्धकाञ्चननिर्मिता। गङ्गा कोटिगुणःप्रोक्तो यत्रस्पर्शवराटकः ॥
कर्णिकायां कोटिगुणो यत्र क्रीडारतो हरिः।
कालिन्दी कर्णिका कृष्णमभिन्नमेकविग्रहम् ॥ ७८ ॥

पार्वत्युवाच।

गोविन्दस्य किमाश्चर्यं सौन्दर्याकृतिविग्रह। तदहं श्रोतुमिच्छामि कथयस्व दयानिधे

ईश्वर उवाच।

मध्ये वृन्दावने रम्ये मञ्जुमञ्जीरशोभिते। योजनाश्रितसद्वृक्ष शाखापल्लवमण्डिते ॥
तन्मध्ये मञ्जुभवने योगपीठं समुज्ज्वलम्। तदष्टकोणनिर्माणं नाना दीप्तिमनोहरम्
तस्योपरि च माणिक्यरत्नसिंहासनं शुभम्।
तस्मिन्नष्टदलं पद्मं कर्णिकायां सुखाश्रयम् ॥ ८२ ॥
गोविन्दस्य परंस्थानं किमस्य महिमोच्यते।
श्रीमद्गोविन्दमन्त्रस्थवल्लवी वृन्दसेवितम् ॥ ८३ ॥
दिव्यव्रजवयोरूपं कृष्णं वृन्दावनेश्वरम्। व्रजेन्द्रसन्ततैश्वर्यं व्रजबालैकवल्लभम् ॥८४॥
यौवनोद्भिन्नकैशोरं वयसाऽद्भुतविग्रहम्। अनादिमादिं सर्वेषां नन्दगोपप्रियात्मजम् ॥
श्रुतिमृग्यमजं नित्यं गोपीजनमनोहरम्। परंधाम परंरूपं द्विभुजं गोकुलेश्वरम् ॥८६॥
वल्लवीनन्दनं ध्यायेन्निर्गुणस्यैककारणम्। सुश्रीमन्तंनवं स्वच्छं श्यामधाम मनोहरम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नवीननीरदश्रेणीसुस्निग्धंमञ्जुकुण्डलम् ।
फुल्लेन्दीवरसत्कान्ति सुखस्पर्शं सुखावहम् ॥ ८८ ॥
दलिताञ्जनपुञ्जाभचिक्कणं श्याममोहनम् । सुस्निग्धनीलकुटिलाशेषसौरभकुन्तलम् ॥
तदूर्ध्वं दक्षिणे भाले श्यामचूडामनोहरम् ।
नानावर्णोज्ज्वलं राजच्छिखण्डिदलमण्डितम् ॥ ९० ॥
मन्दारमञ्जुगोपुच्छाचूडं चारुविभूषणम् । क्वचिद्बर्हदलश्रेणीमुकुटे नाभिमण्डितम् ॥
अनेकमणिमाणिक्यकिरीटभूषणं क्वचित् । लोलालकवृतं राजत्कोटिचन्द्रसमाननम् ॥
कस्तूरीतिलकं भ्राजन्मञ्जुगोरोचनान्वितम् ।
नीलेन्दीवरसुस्निग्धसुदीर्घदललोचनम् ॥ ९३ ॥
आनृत्यद्भ्रूलताश्लेषस्मितं साचिनिरीक्षणम् । सुचारून्नतसौन्दर्यनासाग्रातिमनोहरम्
नासाग्रगजमुक्तांशुमुग्धीकृतजगत्त्रयम् । सिन्दूरारुणसुस्निग्धाधरौष्ठसुमनोहरम् ॥९५॥
नानावर्णोल्लसत्स्वर्णमकराकृतिकुण्डलम् । तद्रश्मिपुञ्जसद्गण्डमुकुराभसमद्युतिम् ॥
कर्णोत्पलसुमन्दारमकरोत्तंसभूषितम् । श्रीवत्सकौस्तुभोरस्कं मुक्ताहारस्फुरद्गलम्
विलसद्दिव्यमाणिक्यं मञ्जुकाञ्चनमिश्रितम् ।
करकङ्कणकेयूरंकिङ्किणीकटिशोभितम् ॥ ९८ ॥
मञ्जुमञ्जीरसौन्दर्य्यश्रीमदङ्घ्रिविराजितम् । कर्पूरागुरुकस्तूरीविलसच्चन्दनादिकम् ॥
गोरोचनादिसंमिश्रदिव्याङ्गरागचित्रितम् । स्निग्धपीतपटीराजत्प्रपदान्दोलिताञ्जनम् ॥
गम्भीरनाभिकमलरोमराजीनतस्रजम् । सुवृत्तजानुयुगलं पादपद्ममनोहरम् ॥ १०१ ॥
ध्वजवज्राङ्कुशाम्भोजकराङ्घ्रितलशोभितम् । नखेन्दुकिरणश्रेणीपूर्णब्रह्मैककारणम् ॥
केचिद्वदन्ति यस्यांशं ब्रह्मचिद्रूपमद्वयम् । तद्दशांशं महाविष्णुं प्रवदन्ति मनीषिणः ॥
योगीन्द्रैः सनकाद्यैश्च तदेव हृदि चिन्त्यते । त्रिभङ्गं ललिताशेषनिर्माणसारनिर्मितम्
तिर्यग्ग्रीवजितानन्तकोटिकन्दर्पसुन्दरम् । वामांसार्पितसद्गण्डस्फुरत्काञ्चनकुण्डलम्
सहापाङ्गेक्षणस्मेरं कोटिमन्मथसुन्दरम् । कुञ्चिताधरविन्यस्तवंशीमञ्जुकलस्वनैः ॥
जगत्त्रयं मोहयन्तं मग्नं प्रेमसुधार्णवे ॥ १०७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीपार्वत्युवाच ।

परमं कारणं कृष्णं गोविन्दाख्यं महत्पदम् । वृन्दावनेश्वरंनित्यं निर्गुणस्यैककारणम्
तत्तद्रहस्यमाहात्म्यं किमाश्चर्यं च सुन्दरम् । तद्ब्रूहि देवदेवेश श्रोतुमिच्छाम्यहं प्रभो

ईश्वर उवाच ।

यदङ्घ्रिनखचन्द्रांशुमहिमान्तो न गम्यते ( विद्यते ) ।
तन्माहात्म्यं कियद्देवि! प्रोच्यते त्वं मुदा शृणु ॥ ११० ॥
अनन्तकोटिब्रह्माण्डे अनन्तत्रिगुणोच्छ्रये । तत्कलाकोटिकोट्यंशा ब्रह्मविष्णुमहेश्वराः
सृष्टिस्थित्यादिना युक्तास्तिष्ठन्ति तस्य वैभवाः ।
तद्रूपकोटिकोट्यंशाः कलाः कन्दर्पविग्रहाः ॥ ११२ ॥
जगन्मोहं प्रकुर्वन्ति तदण्डान्तरसंस्थिताः । तद्देहविलसत्कान्तिकोटिकोट्यंशको विभुः
तत्प्रकाशस्य कोट्यंशरश्मयो रविविग्रहाः । तस्य स्वदेहकिरणैः परानन्दरसामृतैः ॥
परमामोदचिद्रूपैर्निर्गुणस्यैककारणैः । तदंशकोटिकोट्यंशा जीवन्ति किरणात्मकाः
तदङ्घ्रिपङ्कजद्वन्द्वनखचन्द्रमणिप्रभाः । आहुः पूर्णब्रह्मणोऽपि कारणं वेददुर्गमम् ॥११६
तदंशसौरभानन्तकोट्यंशो विश्वमोहनः । तत्स्पर्शपुष्पगन्धादि नानासौरभसम्भवः ॥
तत्प्रिया प्रकृतिस्त्वाद्या राधिका कृष्णवल्लभा ।
तत्कला कोटिकोट्यंशा दुर्गाद्यास्त्रिगुणात्मिकाः ।
तस्या अङ्घ्रिरजः स्पर्शात्कोटिविष्णुः प्रजायते ॥ ११८ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वृन्दावनमाहात्म्ये कृष्णचरित्रं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सप्ततितमोऽध्यायः

## श्रीकृष्णपार्षद्गणवर्णनम् ।

पार्वत्युवाच ।

यदाकरणमेतस्य ये वा पारिषदाः प्रभोः। तदहं श्रोतुमिच्छामि कथयस्व दयानिधे ! ॥

ईश्वर उवाच ।

राधया सह गोविन्दं स्वर्णसिंहासने स्थितम् । पूर्वोक्तरूपलावण्यं दिव्यभूषाम्बरस्रजम्

त्रिभङ्गमञ्जुसुस्निग्धं गोपीलोचनतारकम् ।

तद्बाह्ये योगपीठे च स्वर्णसिंहासनावृते ॥ ३ ॥

प्रत्यङ्गरभसावेशाः प्रधानाः कृष्णवल्लभाः । ललिताद्याः प्रकृत्यंशा मूलप्रकृतिराधिका ॥

संमुखे ललिता देवी श्यामला वायुकोणके । उत्तरे श्रीमतीधन्या ऐशान्यां श्रीहरिप्रिया

विशाखा च तथा पूर्वे शैव्या चाग्नौ ततः परम् ।

पद्मा च दक्षिणे पश्चान्नैर्ऋते क्रमशः स्थिताः ॥ ६ ॥

योगपीठे केशराग्रे चारु चन्द्रावती प्रिया । अष्टौ प्रकृतयः पुण्याः प्रधानाः कृष्णवल्लभाः

प्रधानप्रकृतिस्त्वाद्या राधाचन्द्रावती समा । चन्द्रावली चित्ररेखा चन्द्रा मदनसुन्दरी

प्रिया च श्रीमधुमती चन्द्ररेखा हरिप्रिया । षोडशाद्याः प्रकृतयः प्रधानाः कृष्णवल्लभाः

वृन्दावनेश्वरी राधा तथा चन्द्रावली प्रिया । अभिन्नगुणलावण्यसौन्दर्याश्चारुलोचनाः

मनोहराः मुग्धवेषाः किशोरीवयसोज्ज्वलाः ।

अग्रेसरास्तथा चान्या गोपकन्याः सहस्रशः ॥ ११ ॥

शुद्धकाञ्चनपुञ्जाभाः सुप्रसन्नाः सुलोचनाः । तद्रूपहृदयारूढास्तदाश्लेषसमुत्सुकाः ॥

श्यामामृतरसे मग्नाः स्फुरत्तद्भावमानसाः । नेत्रोत्पलार्चिते कृष्णपादाब्जेऽर्पितचेतसः

श्रुतिकन्यास्ततो दक्षे सहस्रायुतसंयुताः । जगन्मुग्धीकृताकारा हृद्धृतिकृष्णलालसाः

नानासत्त्वस्वरालापमुग्धीकृतजगत्त्रयाः । तत्र गूढरहस्यानि गायन्त्यः प्रेमविह्वलाः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवकन्यास्ततः सर्व्वे दिव्यवेषा रसोज्ज्वलाः ।
नानावैदग्ध्यनिपुणा दिव्यभावभरान्विताः ॥ १६ ॥
सौन्दर्यातिशयेनाढ्याः कटाक्षातिमनोहराः । निर्लज्जास्तत्र गोविन्दे तदङ्गस्पर्शनोद्यताः
तद्भावमग्नमनसः स्मितसाचिनिरीक्षणाः । मन्दिरस्य ततो बाह्ये प्रियया विशदावृते ॥
समानवेषवयसः समानबलपौरुषाः । समानगुणकर्माणः समानाभरणप्रियाः ॥ १९ ॥
समानस्वरसङ्गीतवेणुवादनतत्पराः । श्रीदामा पश्चिमे द्वारेव सुदामा तथोत्तरे ॥ २० ॥
सुदामा च तथा पूर्वे किङ्किणे चापि दक्षिणे ।
तद्बाह्ये स्वर्णपीठे च सुवर्णमन्दिरा वृते ॥ २१ ॥
स्वर्णवेद्यन्तरस्थे तु स्वर्णाभरणभूषिते ।
स्तोककृष्णं सुभद्राद्यैर्गोपालैरयुतायुतैः ॥ २२ ॥
शृङ्गवीणावेणुवेत्रवयोवेषाकृतिस्वरैः । तद्गुणध्यानसंयुक्तैर्गायद्भिरपिविह्वलैः ॥२३॥
चित्रार्पितैश्चित्ररूपैः सदानन्दाश्रुवर्षिभिः । पुलकाकुलसर्वाङ्गैर्योगीन्द्रैरिव विस्मितैः ॥
क्षरत्पयोभिर्गोवृन्दैरसङ्ख्यातैरुपावृतम् । तद्बाह्ये स्वर्णप्राचीरे कोटिसूर्यसमुज्ज्वले
चतुर्दिक्षुमहोद्यान मञ्जुसौरभमोहिते । पश्चिमे संमुखे श्रीमत्पारिजातद्रुमाश्रये ॥२६॥
तत्राधस्तु स्वर्णपीठे स्वर्णमण्डनमण्डिते । तन्मध्ये मणिमाणिक्यदिव्यसिंहासनोज्ज्वले
तत्रोपरि परानन्दं वासुदेवं जगत्प्रभुम् । त्रिगुणातीतचिद्रूपं सर्वकारणकारणम् ॥२८॥
इन्द्रनीलघनश्यामं नीलकुञ्चितकुन्तलम् । पद्मपत्रविशालाक्षं मकराकृतिकुण्डलम् ॥२९॥
चतुर्भुजं तु चक्रासिगदाशङ्खाम्बुजायुधम् । आद्यन्तरहितं नित्यं प्रधानं पुरुषोत्तमम् ॥
ज्योतीरूपं महद्धाम पुराणं वनमालिनम् । पीताम्बरधरं स्निग्धं दिव्यभूषणभूषितम् ॥
दिव्यानुलेपनं राजच्चित्रिताङ्गमनोहरम् ।
रुक्मिणी सत्यभामा च नाग्नजिती सुलक्षणा ॥ ३२ ॥
मित्रविन्दाऽनुविन्दा सुनन्दा जाम्बवती प्रिया ।
सुशीला चाष्टमहिला वासुदेवप्रियास्ततः ॥ ३३ ॥
उद्भ्राजिताः पारिषदा वृत्तयोर्भक्तितत्पराः । उत्तरे सुमहोद्याने हरिचन्दनसंश्रये ॥३४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्राधस्तु स्वर्णपीठे मणिमण्डपमण्डिते । तन्मध्ये हेमनिर्माणदले सिंहासनोज्ज्वले ॥
तत्रैव सहरेवत्या सङ्कर्षणहलायुधम् । ईश्वरस्य प्रियानन्तमभिन्नगुणरूपिणम् ॥३६॥
शुद्धस्फटिकसङ्काशं रक्ताम्बुजदलेक्षणम् । नीलपट्टधरं स्निग्धं दिव्यभूषास्रगम्बरम् ॥
मधुपाने सदा सक्तं मधुघूर्णितलोचनम् । प्रवीरदक्षिणे भागे मञ्जुनाऽभ्यन्तरस्थिते ॥
सन्तानवृक्षमूले तु मणिमन्दिरमण्डितम् ।
तन्मध्ये मणिमाणिक्यदिव्यसिंहासनोज्ज्वले ॥ ३९ ॥
प्रद्युम्नं च रतीदेवं तत्रोपरि सुखस्थितम् । जगन्मोहनसौन्दर्यसारश्रेणीरसात्मकम् ॥
असिताम्भोजपुञ्जाभमरविन्ददलेक्षणम् । दिव्यालङ्कारभूषाभिर्दिव्यगन्धानुलेपनम् ॥
जगन्मुग्धीकृताशेषसौन्दर्याश्चर्यविग्रहम् । पूर्वोद्याने महारण्ये सुरद्रुमसमाश्रये ॥ ४२ ॥
तत्राधस्तु स्वर्णपीठे हेममण्डपमण्डिते ।
तस्य मध्ये स्थिरे राजद्दिव्यसिंहासनोज्ज्वले ॥ ४३ ॥
दिव्योषया समं श्रीमदनिरुद्धं जगत्पतिम् । सान्द्रानन्दघनश्यामंसुस्निग्धंनीलकुन्तलम्
सुभ्रून्नतलताभङ्गं सुकपोलं सुनासिकम् । सुग्रीवं सुन्दरं वक्षो मनोहरमनोहरम् ॥
किरीटिनं कुण्डलिनं कण्ठभूषाविभूषितम् । मञ्जुमञ्जीरमाधुर्यादतिसौन्दर्यविग्रहम् ॥
प्रियभृत्यगणाराध्यं यत्रसङ्गीतकप्रियम् । पूर्णब्रह्मसदानन्दं शुद्धसत्त्वस्वरूपिणम् ॥
तस्योदूर्ध्वे चान्तरिक्षे च विष्णुं सर्वेश्वरेश्वरम् ।
अनादिमादिचिद्रूपं चिदानन्दपरं विभुम् ॥ ४८ ॥
त्रिगुणातीतमव्यक्तं नित्यमक्षयमव्ययम् । समेघपुञ्जमाधुर्यसौन्दर्यश्यामविग्रहम् ॥४९॥
नीलकुञ्चितसुस्निग्धकेशपाशातिसुन्दरम् । अरविन्ददलस्निग्धसुदीर्घचारुलोचनम् ॥
किरीटकुण्डलोद्दण्डं शुद्धसत्त्वात्मभिर्वृतम् । आत्मारामैश्च चिद्रूपैस्तन्मूर्तिध्यानतत्परैः
हृदयारूढतद्ध्यानैर्नासाग्रन्यस्तलोचनैः । क्रियतेऽहैतुकी भक्तिः कायहृद्वृत्तिभाषितैः
तत्सव्ये यक्षगन्धर्वसिद्धविद्याधरादिभिः । सुकान्तैरप्सरःसङ्घैर्नृत्यसङ्गीततत्परैः ॥
तदङ्गभजनं कामं वाञ्छद्भिः कृष्णलालसैः । तदग्रे वैष्णवैः सर्वैश्चान्तरिक्षे सुखासने ॥
प्रह्लादनारदाद्यैश्च कुमारशुकवैष्णवैः । जनकाद्यैर्लसद्भावैर्द्रवद्धास्फूर्त्तितत्परैः ॥५५॥

१९—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुलकाकुलसर्वाङ्गैः स्फुरत्प्रेम समाकुलैः। रहस्यामृतसंसिक्तैरर्धयुग्माक्षरो मनुः॥
मन्त्रचूडामणिः प्रोक्तः सर्वमन्त्रैककारणम्। सर्वदेवस्य मन्त्राणां कैशोरमन्त्रहैतुकम्
सर्वकैशोरमन्त्राणां हेतुश्चूडामणिर्मनुः। जपं कुर्वन्ति मनसा पूर्णप्रेमसुखाश्रयाः॥
वाञ्छन्ति तत्पदाम्भोजे निश्चलं प्रेमसाधनम्।
तद्बाह्ये स्फटिकाद्युच्चप्राचीरे सुमनोहरे॥ ५६॥
कुङ्कुमैः सितरक्ताद्यैश्चतुर्दिक्षुसमाकुलैः। शुक्लं चतुर्भुजं विष्णुं पश्चिमे द्वारपालकम्
शङ्खचक्रगदापद्मकिरीटादिविभूषितम्। रक्तं चतुर्भुजं पद्मशङ्खचक्रगदायुधम्॥ ६१॥
किरीटकुण्डलोद्दीप्तं द्वारपालकमुत्तरे। गौरं चतुर्भुजं विष्णुं शङ्खचक्रगदायुधम्॥
किरीटकुण्डलाद्यैश्च शोभितं वनमालिनम्। पूर्वद्वारे द्वारपालं गौरं विष्णुं प्रकीर्तितम्
कृष्णवर्णं चतुर्बाहुं शङ्खचक्रादिभूषणम्। दक्षिणद्वारपालं तु श्रीविष्णुं कृष्णवर्णकम्
श्रीकृष्णचरितं ह्येतद्यः पठेत्प्रयतः शुचिः।
श्रृणुयाद्वापि यो भक्त्या गोविन्दे लभते रतिम्॥ ६५॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे श्रीकृष्णचरिते सप्ततितमोऽध्यायः॥

---

## एकसप्ततितमोऽध्यायः

### नारदस्य राधाकृष्णयोर्वृन्दावने दर्शनपूर्वकमाहात्म्यवर्णनम्।

श्रीदेव्युवाच।

भगवन्सर्वभूतेश! सर्वात्मन्सर्वसम्भव!। देवेश्वर! महादेव! सर्वज्ञकरुणाकर!॥१॥
त्वयानुकम्पितैवाहं भूयोप्याहानुकम्पया। त्रैलोक्यमोहनामन्त्रास्त्वयामे कथिताःप्रभो
तेन देवेन गोपीभिर्महामोहनरूपिणा। केन केन विशेषण चिक्रीडे तद्वदस्व मे॥ ३॥

महादेव उवाच।

एकदा वादयन्वीणां नारदो मुनिपुङ्गवः। कृष्णावतारमाज्ञाय प्रययौ नन्दगोकुलम्॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गत्वा तत्र महायोगमयेशं विभुमच्युतम् । बालनाट्यधरं देवमद्राक्षीन्नन्दवेश्मनि ॥
सुकोमलपटास्तीर्णहेमपर्यङ्किकोपरि । शयानं गोपकन्याभिः प्रेक्ष्यमाणं सदा मुदम् ॥
अतीव सुकुमाराङ्गं मुग्धं मुग्धविलोकनम् । विस्रस्तनीलकुटिलकुन्तलावलिमण्डलम्
किञ्चित्स्मिताङ्कुरव्यञ्जदेकद्विरदकुड्मलम् । स्वप्रभाभिर्भासयन्तं समन्ताद्भवनोदरम्
दिग्वाससं समालोक्य सोऽतिहर्षमवापह । सम्भाष्य गोपतिं नन्दमाह सर्वप्रभुप्रियः ॥
नारायणपराणां तु जीवनं ह्यतिदुर्लभम् । अस्य प्रभावमतुलं न जानन्तीह केचन ॥

भवब्रह्मादयोऽप्यस्मिन्रतिं वाञ्छन्ति शाश्वतीम् ।
चरितं चास्य बालस्य सर्वेषामेव हर्षणम् ॥ ११ ॥
मुदा गायन्ति शृण्वन्ति चाभिनन्दन्ति तादृशाः ।
अस्मिंस्तव सुतेऽचिन्त्यप्रभावे स्निग्धमानसाः ॥ १२ ॥

नराः सन्ति न तेषां वै भवबाधा भविष्यति । मुञ्चेह परलोकेच्छाः सर्वा वल्लवसत्तम ॥

एकान्तेनैकभावेन बालेऽस्मिन्प्रीतिमाचर ।
इत्युक्त्वा नन्दभवनान्निष्क्रान्तो मुनिपुङ्गवः ॥ १४ ॥
तेनार्चितो विष्णुबुद्ध्या प्रणम्य च विसर्जितः ।
अथासौ चिन्तयामास महाभागवतो मुनिः ॥ १५ ॥

अस्य कान्ता भगवती लक्ष्मीर्नारायणे हरौ । विधाय गोपिकारूपं क्रीडार्थं शार्ङ्गधन्वन.
अवश्यमवतीर्णा सा भविष्यति न संशयः । तामहं विचिनोम्यद्य गेहे गेहे व्रजौकसाम्

विमृश्यैवं मुनिवरो गेहानि व्रजवासिनाम् ।
प्रविवेशातिथिर्भूत्वा विष्णुबुद्ध्या सुपूजितः ॥ १८ ॥

सर्वेषां वल्लवादीनां रतिं नन्दसुते पराम् । दृष्ट्वा मुनिवरः सर्वान्मनसा प्रणनाम ह ॥
गोपालानां गृहे बालां ददर्शश्वेतरूपिणीम् । स दृष्ट्वा तर्कयामास रमा ह्येषा न संशयः
प्रविवेश ततो धीमान्नन्दसख्युर्महात्मनः । कस्यचिद्गोपवर्यस्य भानुनाम्नो गृहं महत्

अर्चितो विधिवत्तेन सोऽप्यपृच्छन्महामनाः ।
साधो ! त्वमसि विख्यातो धर्मनिष्ठतया भुवि ॥ २२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तवाहं धनधन्यादिसमृद्धिं संविभावये।
कच्चित्ते योग्यः पुत्रोऽस्ति कन्या वा शुभलक्षणा ॥ २३ ॥
यतस्ते कीर्तिरखिलं लोकं व्याप्य भविष्यति। इत्युक्तो मुनिवर्येण भानुरानीयपुत्रकम्
महातेजस्विनं दृप्तं नारदायाभ्यवादयत्। दृष्ट्वा मुनिवरस्तं तु रूपेणाप्रतिमं भुवि ॥
पद्मपत्रविशालाक्षं सुग्रीवं सुन्दरभ्रुवम्। चारुदन्तं चारुकर्णं सर्वावयवसुन्दरम् ॥२६॥
तं समाश्लिष्य बाहुभ्यां स्नेहाश्रूणि विमुच्य च।
ततः सगद्गदं प्राह प्रणयेन महामुनिः ॥ २७ ॥

नारद उवाच।

अयं शिशुस्ते भविता सुसखा रामकृष्णयोः।
विहरिष्यति ताभ्यां च रात्रिन्दिवमतन्द्रितः ॥ २८ ॥
तत आभाष्य तं गोपप्रवरं मुनिपुङ्गवः। यदा गन्तुं मनश्चक्रे तत्रैवं भानुरब्रवीत् ॥२९॥
एकाऽस्ति पुत्रिका देव देवपत्न्युपमा मम। कनीयसी शिशोरस्य जडान्धबधिराकृतिः
उत्साहाद्वृद्धये याचे त्वां वरं भगवत्तम। प्रसन्नदृष्टिमात्रेण सुस्थिरां कुरु बालिकाम्
श्रुत्वैवं नारदो वाक्यं कौतुकाकृष्टमानसः। अथ प्रविश्य भवनं लुठन्तीं भूतले सुताम्
उत्थाप्याङ्के निधायातिस्नेहविह्वलमानसः।
भानुरप्याययौ भक्तिनम्रो मुनिवरान्तिकम् ॥ ३३ ॥
अथ भागवतश्रेष्ठः कृष्णस्यातिप्रियो मुनिः। दृष्ट्वा तस्याः परं रूपमदृष्टाश्रुतमद्भुतम्
अभूत्पूर्वसमंमुग्धो हरिप्रेमा महामुनिः। विगाह्य परमानन्दसिन्धुमेकरसायनम् ॥३५॥
मुहूर्त्तद्वितयं तत्र मुनिरासीच्छिलोपमः। मुनीन्द्रः प्रतिबुद्धस्तु शनैरुन्मील्य लोचने ॥
महाविस्मयमापन्नस्तूष्णीमेव स्थितोऽभवत्।
अन्तर्हृदि महाबुद्धिरेवमेवं व्यचिन्तयत् ॥ ३७ ॥
भ्रान्तं सर्वेषु लोकेषु मया स्वच्छन्दचारिणा।
अस्या रूपेण सदृशी दृष्टा नैव च कुत्रचित् ॥ ३८ ॥
ब्रह्मलोके रुद्रलोक इन्द्रलोके च मे गतिः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न कोऽपि शोभाकोट्यंशः कुत्राप्यस्या विलोकितः ॥ ३९ ॥
महामाया भगवती दृष्टा शैलेन्द्रनन्दिनी । यस्या रूपेण सकलं मुह्यते सचराचरम् ॥
साप्यस्याः सुकुमाराङ्गी लक्ष्मीं नाप्नोति कर्हिचित् ।
लक्ष्मीः सरस्वती कान्तिविद्याद्याश्च वरस्त्रियः ॥ ४१ ॥
छायामपि स्पृशन्त्यस्याः कदाचिन्नैव दृश्यते ।
विष्णोर्यन्मोहिनीरूपं हरो येन विमोहितः ॥ ४२ ॥
मया दृष्टं च तदपि कुतोऽस्याः सदृशं भवेत् ।
ततोऽस्यास्तत्त्वमाज्ञातुं न मे शक्तिः कथञ्चन ॥ ४३ ॥
अन्ये चापि न जानन्ति प्रायेणैनां हरेः प्रियाम् ।
अस्याः सन्दर्शनादेव गोविन्दचरणाम्बुजे ॥ ४४ ॥
या प्रेमर्द्धिरभूत्सा मे भूतपूर्वा न कर्हिचित् । एकान्ते नौमि भवतीं दर्शयित्वातिवैभवम्
कृष्णस्य सम्भवत्यस्या रूपं परमतुष्टये । विमृश्यैवं मुनिर्गोपप्रवरं प्रेष्य कुत्रचित् ॥
निभृते परितुष्टाव वालिकां दिव्यरूपिणीम् । अपि देवि महायोगमायेश्वरि महाप्रभे
महामोहनदिव्याङ्गि महामाधुर्यवर्षिणि । महाद्भुतरसानन्दाशथिलीकृतमानसे ॥ ४८ ॥
महाभाग्येन केनापि गतासि मम दृक्पथम् । नित्यमन्तर्मुखा दृष्टिस्तव देवि विभाव्यते
अन्तरैव महानन्दपरितृप्तैव लक्ष्यसे । प्रसन्नं मधुरं सौम्यमिदं सुमुखमण्डनम् ॥५०॥
व्यनक्ति परमाश्चर्यं कमप्यन्तः सुखोदयम् । रजः सम्बन्धिकलिकाशक्तिस्तत्त्वातिशोभने
सृष्टिस्थितिसमाहाररूपिणी त्वमधिष्ठिता । तत्त्वं विशुद्धसत्त्वाशुशक्तिर्विद्यात्मिकापरा
परमानन्दसन्दोहं दधती वैष्णवं परम् । का त्वयाश्चर्यविभवे ब्रह्मरुद्रादिदुर्गमे ॥५३ ॥
योगीन्द्राणां ध्यानपथं न त्वं स्पृशसि कर्हिचित् ।
इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिस्तवेशितुः ॥ ५४ ॥
तवांशमात्रमित्येवं मनीषा मे प्रवर्त्तते । मायाविभूतयोऽचिन्त्यास्तन्मायार्भकमायिनः
परेशस्य महाविष्णोस्ताः सर्वास्ते कलाकलाः ।
आनन्दरूपिणी शक्तिस्त्वमीश्वरि न संशयः ॥ ५६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वया च क्रीडते कृष्णो नूनं वृन्दावने वने।
कौमारेणैव रूपेण त्वं विश्वस्य च मोहिनी ॥ ५७ ॥
तारुण्यवयसास्पृष्टं कीदृक्ते रूपमद्भुतम्। कीदृशं तव लावण्यं लीलाहासेक्षणान्वितम्
हरिमानुषलोभेन वपुराश्चर्यमण्डितम्। द्रष्टुं तदहमिच्छामि रूपं ते हरिवल्लभे! ॥५९॥
येन नन्दसुतः कृष्णो मोहं समुपयास्यति। इदानीं मम कारुण्यान्निजं रूपं महेश्वरि! ॥
प्रणताय प्रपन्नाय प्रकाशयितुमर्हसि। इत्युक्ता मुनिवर्येण तदनुव्रतचेतसा ॥ ६१ ॥
महामाहेश्वरीं नत्वा महानन्दमयीं पराम्।
महाप्रेमतरोत्कण्ठा व्याकुलाङ्गी शुभेक्षणाम् ॥ ६२ ॥
ईक्षमाणेन गोविन्दमेवं वर्णयतास्थितम्। जय कृष्ण मनोहारिञ्जयवृन्दावनप्रिय ॥६३॥
जय भ्रूभङ्गललित! जय वेणुरवाकुल!। जय बर्हकृतोत्तंस! जय गोपीविमोहन! ॥
जय कुङ्कुमलिप्ताङ्ग! जय रत्नविभूषण!। कदाऽहं त्वत्प्रसादेन अनया दिव्यरूपया॥
सहितं नवतारुण्यमनोहारिवपुः श्रिया। विलोकयिष्ये कैशोरे मोहनं त्वां जगत्पते॥
एवं कीर्त्तयतस्तस्य तत्क्षणादेव सा पुनः। बभूव दधती दिव्यं रूपमत्यन्तमोहनम्॥
चतुर्दशाब्दवयसा संमितं ललितं परम्। समानवयसश्चान्यास्तदैव व्रजबालिकाः॥
आगत्य वेष्टयामासुर्दिव्यभूषाम्बरस्रजः। मुनीन्द्रः स तु निश्चेष्टो बभूवाश्चर्यमोहितः
बालायास्तास्तदा सख्यश्चरणाम्बुकणैर्मुनिम्।
निषिच्य बोधयामासुरूचुश्च कृपयान्विताः॥ ७० ॥
मुनिवर्य महाभाग महायोगेश्वरेश्वर!। त्वयैवपरया भक्त्या भगवान्हरिरीश्वरः ॥७१॥
नूनमाराधितो देवो भक्तानां कामपूरकः। यदियं ब्रह्मरुद्राद्यैर्देवैः सिद्धमुनीश्वरैः ॥७२॥
महाभागवतैश्चान्यैर्दुर्दशा दुर्गमापि च। अत्यद्भुतवयोरूपमोहिनी हरिवल्लभा ॥७३॥
केनाप्यचिन्त्यभाग्येन तव दृष्टिपथं गता। उत्तिष्ठोत्तिष्ठ विप्रर्षे धैर्यमालम्ब्य सत्वरम्
एनां प्रदक्षिणीकृत्य नमस्कुरु पुनः पुनः। किं न पश्यसि चार्वङ्गीमत्यन्तव्याकुलामिव
अस्मिन्नेव क्षणे नूनमन्तर्धानं गमिष्यति। नानया सह संलापः कथञ्चित्ते भविष्यति
दर्शनं च पुनर्नास्याः प्राप्स्यसि ब्रह्मवित्तम!।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं तु वृन्दावने क्वाऽपि भात्यशोकलता शुभा ॥ ७७ ॥

सर्वकालेऽपि पुष्पाढ्या सर्वदिग्व्यापिसौरभा । गोवर्द्धनाददूरेण कुसुमाख्यसरस्तटे ॥
तन्मूले ह्यर्द्धरात्रे च द्रक्ष्यस्यस्मानशेषतः । श्रुत्वैवं वचनं तासां स्नेहविह्वलचेतसाम् ॥
यावत्प्रदक्षिणीकृत्य प्रणमेद्दण्डवन्मुनिः । मुहूर्त्तद्वितयं बालां नानानिर्माणशोभनाम् ॥
आहूय भानुं प्रोवाच नारदःसर्वशोभनाम् । एवं प्रभावा बालेयं न साध्या दैवतैरपि ॥
किं तु यद्गृहमेतस्याः पदचिह्नविभूषितम् । तत्र नारायणो देवः स्वयं वसति माधवः

लक्ष्मीश्च वसते नित्यं सर्वाभिः सर्वसिद्धिभिः ।
अद्य एनां वरारोहां सर्वाभरणभूषणाम् ॥ ८३ ॥

देवीमिव परां गेहे रक्ष यत्नेन सत्तम ! । इत्युक्त्वा मनसैवैनां महाभागवतोत्तमः ॥
तद्रूपमेव संस्मृत्य प्रविष्टो गहनं वनम् । अशोकलतिकामूलमासाद्य मुनिसत्तमः ॥८५॥
प्रतीक्षमाणोदेवीं तां तत्रैवागमनं निशि । स्थितोऽत्र प्रेमविकलश्चिन्तयन्कृष्णवल्लभाम्
अथ मध्यनिशाभागे युवत्यः परमाद्भुताः । पूर्वदृष्टास्तथान्याश्च विचित्राभरणस्रजः

दृष्ट्वा मनसि सम्भ्रान्तो दण्डवत्पतितो भुवि ।
परिवार्य मुनिं सर्वास्तास्ताः प्रविविशुः शुभाः ॥ ८८ ॥
प्रष्टुकामोऽपि स मुनिः किंचित्स्वाभिमतं प्रियम् ।
नाशकत्प्रेमलावण्यप्रियभाषाप्रधर्षितः ॥ ८९ ॥

अथागता मुनिश्रेष्ठं कृताञ्जलिमवस्थितम् । भक्तिभारानतग्रीवं सविस्मयं ससम्भ्रमम् ॥
सुविनीततमं प्राह तत्रैव करुणान्विता । अशोकमालिनी नाम्ना अशोकवनदेवता ॥

अशोकमालिन्युवाच ।

अशोककलिकायां तु वसाम्यस्यां महामुने ! । रक्ताम्बरधरा नित्यं रक्तमालानुलेपना
रक्तसिन्दूरकलिका रक्तोत्पलवतंसिनी । रक्तमाणिक्यकेयूरमुकुटादिविभूषिता ॥९३॥

एकदा प्रियया सार्द्धं विहरन्त्यौ मधूत्सवे ।
तत्रैव मिलिता गोपबालिकाश्चित्रवाससः ॥ ९४ ॥

अहं चाशोकमालाभिर्गोपवेषधरं हरिम् । रमारूपाश्च ताःसर्वा भक्त्या सम्यगपूजयम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततःप्रभृतिचैतासां मध्येतिष्ठामिसर्वदा । भूषाभिर्विविधाभिश्च तोषयित्वा रमापतिम्
परात्परमहं सर्वं विजानामीहसर्वतः । गोगोपगोपिकादीनां रहस्यं चापि वेद्म्यहम् ॥

तव जिज्ञासितं सर्वं हृदि प्रत्यभिभाषितम् ।
तां देवीमद्भुताकारामद्भुतानन्ददायिनीम् ॥ ९८ ॥
हरेः प्रियां हिरण्याभां हीरकोज्ज्वलमुद्रिकाम् ।
कथं पश्यामि लोलाक्षीं कथं वा तत्पदाम्बुजम् ॥ ९९ ॥
आराध्यतेऽतिभक्त्येति त्वया ब्रह्मन्विमर्शितम् ।
तत्र ते कथयिष्यामि वृत्तान्तं सुमहात्मनाम् ॥ १०० ॥
मानसे सरसि स्थित्वा तपस्तीव्रमुपेयुषाम् ।
जपतां सिद्धमन्त्रांश्च ध्यायतां हरिमीश्वरम् ॥ १०१ ॥
मुनीनां काङ्क्षतां नित्यं तस्या एव पदाम्बुजम् ।
एकसप्ततिसाहस्रसङ्ख्यातानां महौजसाम् ॥ १०२ ॥
तत्तेऽहं कथयाम्यद्य तद्रहस्यं परं वने ॥ १०३ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे श्रीराधाकृष्णमाहात्म्ये एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

## द्विसप्ततितमोऽध्यायः

### श्रीकृष्णस्य श्रेष्ठसुन्दरीगणकथनम् ।

ईश्वर उवाच ।

तदेकाग्रमना भूत्वा शृणु देवि! वरानने ! । आसी दुग्रतपा नाम मुनिरेको दृढव्रतः ॥
साग्निको ह्यग्निभक्षश्च चचारात्यद्भुतं तपः । जजाप परमं जाप्यं मन्त्रं पञ्चदशाक्षरम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काममन्त्रेण पुटितं कामं कामवरप्रदात् । कृष्णायेति पदं स्वाहा सहितं सिद्धिदं परम्
दध्यौ च श्यामलं कृष्णं रासोन्मत्तं वरोत्सुकम् । पीतपट्टधरं वेणुं करेणाधरमर्पितम्
नवयौवनसम्पन्नं कर्षन्तं पाणिनाप्रियाम् । एवं ध्यानपरःकल्पशतान्ते देहमुत्सृजन् ॥

सुनन्दनामगोपस्य कन्याऽभूत्स महामुनिः ।
सुनन्देति समाख्याता या वीणां बिभ्रती करे ॥ ६ ॥

मुनिरन्यः सत्यतपा इतिख्यातो महाव्रतः । स शुष्कपत्रं भुङ्क्तेयः प्रजजाप परं मनुम्
रत्यन्तं कामबीजेन पुटितं च दशाक्षरम् । स प्रदध्यौ मुनिवरश्चित्रवेषधरं हरिम् ॥८॥

धृत्वा रमायादोर्वल्लीद्वितयं कङ्कणोज्ज्वलम् ।
नृत्यन्तमुन्मदन्तं च संश्लिष्यन्तं मुहुर्मुहुः ॥ ६ ॥

हसन्तमुच्चैरानन्दतरङ्गं जठराम्बरे । दधतं वेणुमाजानु वैजयन्त्या विराजितम् ॥ १० ॥

स्वेदाम्भः कणसंसिक्तललाटवलिताननम् ।
त्यक्त्वा त्यक्त्वा स वै देहं तपसा च महामुनिः ॥ ११ ॥

दशकल्पान्तरे जातो ह्ययं नन्दवनादिह । सुभद्रनाम्नो गोपस्य कन्या भद्रेति विश्रुता ॥
यस्याः पृष्ठतले दिव्यं व्यजनं परिदृश्यते । हरिधामाभिधानस्तु कश्चिदासीन्महामुनिः

सोऽप्यतप्यत्तपः कृच्छ्रं नित्यं पत्रैकभोजनम् ।
आशु सिद्धिकरं मन्त्रं विंशत्कर्णं प्रजप्तवान् ॥ १४ ॥

अनन्तरं कामबीजादध्यारूढं तदेव तु । माया तत्पुरतो व्योम हंसासृग्द्युतिचन्द्रकम् ॥
ततो दशाक्षरं पञ्चन्नमोयुक्तं स्मरादिकम् । दध्यौ वृन्दावने रम्ये माधवीमण्डपेप्रभुम् ॥
उत्तानशायिनं चारु वल्लवास्तरणोपरि । कयाचिदतिकामार्त्तवल्लव्यारक्तनेत्रया ॥
वक्षोजयुगमाच्छाद्य विपुलोरःस्थलं मुहुः । सञ्चुम्ब्यमानगण्डान्तं तृप्यमानरदच्छदम्

कलयन्तं प्रियां दोर्भ्यां सहासं समुदाद्भुतम् ।
स मुनिश्च बहून्देहांस्त्यक्त्वा कल्पत्रयान्तरे ॥ १६ ॥

सारङ्गनाम्नो गोपस्य कन्याऽभूच्छुभलक्षणा ।
रङ्गवेणीति विख्याता निपुणा चित्रकर्मणि ॥ २० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्या दन्तेषु दृश्यन्ते चित्रिताः शोणबिन्दवः ।
ब्रह्मवादी मुनिः कश्चिज्जाबालिरिति विश्रुतः ॥ २१ ॥
सतपः सुरतो योगी विचरन्पृथिवीमिमाम् । स एकस्मिन्महारण्ये योजनायुतविस्तृते
यदृच्छयाऽऽगतोऽपश्यदेकां वापीं सुशोभनाम् ।
सर्वतः स्फाटिकाबद्धतटां स्वादुजलान्विताम् ॥ २३ ॥
विकासिकमलामोदवायुना परिशीलिताम् । तस्याः पश्चिमदिग्भागे मूले वटमहीरुहः ॥
अपश्यत्तापसीं काञ्चित्कुर्वन्तीं दारुणं तपः । तारुण्यवयसायुक्तं रूपेणातिमनोहराम् ॥
चन्द्रांशुसदृशाभासां सर्वावयवशोभनाम् । कृत्वा कटितटे वामपाणिं दक्षिणतस्तदा ॥
ज्ञानमुद्रां च बिभ्राणामनिमेषविलोचनाम् ।
त्यक्ताहारविहारां च सुनिश्चलतया स्थिताम् ॥ २७ ॥
जिज्ञासुस्तां मुनिवरस्तस्थौ तत्र शतं समाः ।
तदन्ते तां समुत्थाप्य चलितां विनयान्मुनिः ॥ २८ ॥
अपृच्छत्कात्वमाश्चर्यरूपे किंवाऽऽचरिष्यसि । यदि योग्यं भवेत्तर्हि कृपया वक्तुमर्हसि
अथाब्रवीच्छनैर्बाला तपसाऽतीव कर्शिता । ब्रह्मविद्याऽहमतुला योगीन्द्रैर्या विमृग्यते
साऽहं हरिपदाम्भोजकाम्यया सुचिरं तपः । चराम्यस्मिन्वने घोरे ध्यायन्ती पुरुषोत्तमम्
ब्रह्मानन्देन पूर्णाहं तेनानन्देन तृप्तधीः । तथापि शून्यमात्मानं मन्ये कृष्णरतिं विना ॥
इदानीमतिनिर्विण्णा देहस्यास्य विसर्जनम् ।
कर्तुमिच्छामि पुण्यायां वापिकायामिहैव तु ॥ ३३ ॥
तच्छ्रुत्वा वचनं तस्या मुनिरत्यन्तविस्मितः ।
पतित्वा चरणे तस्याः कृष्णोपासाविधिं शुभम् ॥ ३४ ॥
पप्रच्छ परमप्रीतस्त्यक्त्वाऽध्यात्मविरोचनम् ।
तयोक्तं मन्त्रमाज्ञाय जगाम मानसं सरः ॥ ३५ ॥
ततोऽतिदुश्चरं चक्रे तपोविस्मयकारकम् । एकपादस्थितः सूर्यं निर्निमेषं विलोकयन् ॥
मन्त्रं जजाप परमं पञ्चविंशतिवर्णकम् । दध्यौ परमभावेन कृष्णमानन्दरूपिणम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चरन्तं व्रजवीथीषु विचित्रगतिलीलया । ललितैः पादविन्यासैः क्वणयन्तं च नूपुरम्
चित्रकन्दर्पचेष्टाभिः सस्मितापाङ्गवीक्षितैः । संमोहनाख्यया वंश्या पञ्चमारुणचित्रया
बिम्बौष्ठपुटचुम्बिन्या कलालापैर्मनोज्ञया । हरन्तं व्रजरामाणां मनांसि च वपूंषि च ॥

श्लथन्नीवीभिरागत्य सहसाऽऽलिङ्गिताङ्गकम् ।
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ॥ ४१ ॥

श्यामलाङ्गप्रभापूरैर्मोहयन्तं जगत्त्रयम् । स एवं बहुदेवेन समुपास्य जगत्पतिम् ॥४२

नवकल्पान्तरे जाता गोकुले दिव्यरूपिणी ।
कन्याप्रचण्डनाम्नस्तु गोपस्यातियशस्विनः ॥ ४३ ॥

चित्रगन्धेति विख्याता कुमारी च शुभानना । निजाङ्गगन्धैर्विविधैर्मोदयन्ती दिशोदश

तामेनां पश्य कल्याणीवृन्देशो मधुपायिनीम् ।
अङ्केषु स्वपतिं कृत्वा रसावेशसमाकुलाम् ॥ ४५ ॥

अस्याः स्तनपरिष्वङ्गे हारैः सर्वैर्विहन्यते । वक्षःस्थलात्प्रच्यवद्भिश्चित्रगन्धादिसौरभैः
अपरे मुनिवर्यास्तु सततं पूतमानसाः । वायुभक्षास्तपस्तेपुर्जपन्तः परमं मनुम् ॥४७॥
स्मरः कृष्णाय कामार्तिकलादिवृत्तिशालिने । आग्नेयीसहितं कृत्वामन्त्रं पञ्चदशाक्षरम्
दध्युर्मुनिवराः कृष्णमूर्तिं दिव्यविभूषणाम् । दिव्यचित्रदुकूलेन पूर्णपीनकटिस्थलाम्
मयूरपिच्छकैः क्लृप्तचूडामुज्ज्वलकुण्डलाम् । सव्यजङ्घान्त आदायदक्षिणं चरणाम्बुजम्
भ्रमन्ती सम्पुटीकृत्य चारुहस्ताम्बुजद्वयम् । कक्षदेशविनिक्षिप्तवेणुं परिचलत्पुटीम् ॥
आनन्दयन्तीं गोपीनां नयनानि मनांसि च । परमाश्चर्यरूपेण प्रविष्टां रङ्गमण्डपे ॥५२॥
प्रसूनवर्षैर्गोपीभिः पूर्यमाणां च सर्वतः । अथकल्पान्तरे देहं त्यक्त्वा जाता इहाधुना ॥

यासां कर्णेषु दृश्यन्ते ताटङ्का रश्मिदीपिताः ।
रत्नमाल्यानि कण्ठेषु रत्नपुष्पाणि वेणिषु ॥ ५४ ॥

मुनिः शुचिश्रवा नाम सुवर्णो नाम चापरः । कुशध्वजस्य ब्रह्मर्षेः पुत्रौ तौ वेदपारगौ
ऊर्ध्वपादौ तपो घोरं तेपतुस्त्र्यक्षरं मनुम् । ह्रींहंस इतिकृत्वैव जपन्तौ यतमानसौ ॥
ध्यायन्तौ गोकुले कृष्णं बालकं दशवार्षिकम् । कन्दर्पसमरूपेण तारुण्यललितेन च ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पश्यन्तीर्व्रजबिम्बोष्ठीर्मोहयन्तमनारतम्।
तौ कल्पान्ते तनू त्यक्त्वा लब्धवन्तौ जनिं व्रजे ॥ ५८ ॥
सुवीरनामगोपस्य सुते परमशोभने। ययोर्हस्ते प्रदृश्येते सारिके शुभराविणी ॥५९॥
जटिलो जङ्घपूतश्च घृताशीकर्बुरैवच। चत्वारो मुनयो धन्या इहामुत्र च निःस्पृहाः ॥
केवले वकभावेन प्रपन्ना वल्लवीपतिम्। तेपुस्ते सलिले मग्ना जपन्तो मनुमेवच ॥६१॥
रमात्रयेण पुटितं स्मरायन्तं दशाक्षरम्। दध्युश्च गाढभावेन वल्लवीभिर्वने वने ॥६२॥
भ्रमन्तं नृत्यगीताद्यैर्मानयन्तं मनोहरम्। चन्दनालिप्तसर्वाङ्गं जपापुष्पावतंसकम् ॥
कह्लारमालयावीतं नीलपीतपटावृतम्। कल्पत्रयान्ते जातास्ते गोकुले शुभलक्षणाः ॥
इमास्ताः पुरतो रम्या उपविष्टा नतभ्रुवः। यासां भर्मकृतान्येव वलयानि प्रकोष्ठके ॥
विचित्राणि च रत्नाद्यैर्दिव्यमुक्ताफलादिभिः।
मुनिर्दीर्घतपा नाम व्यासोऽभूत्पूर्वकल्पके ॥ ६६ ॥
तत्पुत्रः शुक इत्येव मुनिः ख्यातो वरः सुधीः।
सोऽपि बालो महाप्राज्ञः सदैवानुस्मरन्पदम् ॥ ६७ ॥
विहाय पितृमात्रादि कृष्णं ध्यात्वा वनं गतः। स तत्र मानसैर्दिव्यैरुपचारैरहर्निशम्
अनाहारोऽर्चयद्विष्णुं गोपरूपिणमीश्वरम्। रमया पुटितं मन्त्रं जपन्नष्टादशाक्षरम् ॥
दध्यौ परमभावेन हरिं हैमतरोरधः। हैममण्डपिकायां च हेमसिंहासनोपरि ॥ ७० ॥
आसीनं हेमहस्ताग्रैर्दधानं हेमवंशिकाम्। दक्षिणेन भ्रामयन्तं पाणिना हेमपङ्कजम् ॥
हेमवर्णेष्टप्रियया परिक्लृप्ताङ्गचित्रकम्। हसन्तमतिहर्षेण पश्यन्तं निजमाश्रमम् ॥७२॥
हर्षाश्रुपूर्णः पुलकाचिताङ्गः प्रसीद नाथेति वदन्नथोच्चैः।
दण्डप्रणामाय पपात भूमौ संवेपमानस्त्रिजगद्विधातुः ॥ ७३ ॥
तं भक्तिकामं पतितं धरण्यामायासितोऽस्मीति वदन्तमुच्चैः।
दण्डप्रणामस्य भुजौ गृहीत्वा पस्पर्श हर्षोपचितेक्षणेन ॥ ७४ ॥
उवाच च प्रियारूपं लब्धवन्तं शुकं हरिः। त्वं मे प्रियतमा भद्रे सदा तिष्ठ ममान्तिके
मद्रूपं चिन्तयन्ती च प्रेमास्पदमुपागता। द्वे च मुख्यतमे गोप्यौ समानवयसी शुभे ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकव्रते एकनिष्ठे एकनक्षत्रनामनी । तप्तजाम्बूनदप्रख्या तत्रैवान्या तडित्प्रभा ॥ ७७ ॥

एका निद्रायमाणाक्षी परा सौम्यायतेक्षणा ।

सोऽर्चयत्परया भक्त्या ते हरेः सव्यदक्षिणे ॥ ७८ ॥

सकल्पान्ते तनुं त्यक्त्वा गोकुलेऽभून्महात्मनः । उपनन्दस्यदुहिता नीलोत्पलदलच्छविः
सेयं श्रीकृष्णवनिता पीतशाटीपरिच्छदा । रक्तचोलिकया पूर्णा शातकुम्भघटस्तनी ॥
दधाना रक्तसिन्दूरं सर्वाङ्गस्यावगुण्ठनम् । स्वर्णकुण्डलविभ्राजद्गण्डदेशा सुशोभना

स्वर्णपङ्कजमालाढ्या कुङ्कुमालिप्तसुस्तनी ।

यस्या हस्ते च वर्णीयं दृश्यते हरिणाऽर्पितम् ॥ ८२ ॥

वेणुवाद्यातिनिपुणा केशवस्य निषेवणी । कृष्णेन परितुष्टेन कदाचिद्गीतकर्मणि ॥

विन्यस्ता कम्बुकण्ठेऽस्या भाति गुञ्जावलिः शुभा ।

परोक्षेऽपि च कृष्णस्य कान्तिभिश्च स्मरार्दिता ॥ ८४ ॥

सखीभिर्वादयन्तीभिर्गायन्ती सुस्वरं परम् । नर्त्तयेत्प्रियवेषेण वेषयित्वा वधूमिमाम्

वारं वारं च गोविन्दं भावेनालिङ्ग्य चुम्बति ।

प्रियासौ सर्वगोपीनां कृष्णस्याप्यतिवल्लभा ॥ ८६ ॥

श्वेतकेतोः सुतः कश्चिद्वेदवेदाङ्गपारगः । सर्वमेवपरित्यज्य प्रचण्डं तप आस्थितः ॥
मुरारेः सेवितपदां सुधामधुरनादिनीम् । गोविन्दस्यप्रियां शक्तिं ब्रह्मरुद्रादिदुर्गमाम् ॥
भजन्तीमेकभावेन श्रियमेव मनोहराम् । ध्यायञ्जजाप सततं मन्त्रमेकादशाक्षरम् ॥८९

हसितं सकलं कृत्वा बत मायेषु योजयन् ।

कान्त्यादिभिर्हसन्तीभिर्वासयन्त्यभितो जगत् ॥ ९० ॥

वसन्ते वसतेत्येवं मन्त्रार्थं चिन्तयन्सदा ।

सोऽपि कल्पद्वयेनैव सिद्धोऽत्र जनिमाप्तवान् ॥ ९१ ॥

सेयं बालायते पुत्री कृशाङ्गी कुड्मलस्तनी । मुक्तावलिलसत्कण्ठी शुद्धकौशेयवासिनी
मुक्ताच्छुरितमञ्जीरकङ्कणाङ्गदमुद्रिका । बिभ्रती कुण्डले दिव्ये अमृतस्राविणी शुभे ॥
वृत्तकस्तूरिकावेणीमध्ये सिन्दूरबिन्दुवत् । दधाना चित्रकं भालेसार्द्धं चन्दनचित्रकैः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

या सैव दृश्यते शान्ता जपन्ती परमं पदम् । आसीच्चन्द्रप्रभो नाम राजर्षिः प्रियदर्शनः

तस्य कृष्णप्रसादेन पुत्रोऽभूत्मधुराकृतिः ।
चित्रध्वज इति ख्यातः कौमारावधिवैष्णवः ॥ ९६ ॥
स राजा सुसुतं सौम्यं सुस्थिरं द्वादशाब्दिकम् ।
आदेशयद् द्विजान्मन्त्रं परमष्टादशाक्षरम् ॥ ९७ ॥

अभिषिच्यमानः सशिशुर्मन्त्रामृतमयैर्जलैः । तत्क्षणे भूपतिं प्रेम्णा नत्वोदश्रुप्रकल्पितः
तस्मिन्दिने स वै बालः शुचिवस्त्रधरः शुचिः । हारनूपुरसूत्राद्यैर्ग्रैवेयाङ्गदकङ्कणैः ॥

विभूषितो हरेर्भक्तिमुपस्पृश्यामलाशयः ।
विष्णोरायतनं गत्वा स्थित्वैकाकी व्यचिन्तयत् ॥ १०० ॥

कथं भजामितं भक्तं मोहनं गोपयोषिताम् । विक्रीडन्तं सदाताभिःकालिन्दी पुलिने वने
इत्थमत्याकुलमतिश्चिन्तयन्नेव बालकः । अथाप परमां विद्यां स्वप्नं च समपश्यत ॥
आसीत्कृष्णप्रतिकृतिः पुरतस्तस्य शोभना । शिलामयी स्वर्णपीठे सर्वलक्षणलक्षिता

साऽभूदिन्दीवरश्यामा स्निग्धलावण्यशालिनी ।
त्रिभङ्गललिताकारशिखण्डीपिच्छभूषणा ॥ १०४ ॥
कूजयन्ती मुदा वेणुं काञ्चनीमधरेऽर्पिताम् ।
दक्षसव्यगताभ्यां च सुन्दरीभ्यां निषेविताम् ॥ १०५ ॥
वर्द्धयन्ती तयोः कामं चुम्बनाश्लेषणादिभिः ।
दृष्ट्वा चित्रध्वजः कृष्णं तादृग्वेषविलासिनम् ॥ १०६ ॥

अवनम्य शिरस्तस्मै पुरो लज्जितमानसः । अथोवाच हरिर्दक्षपार्श्वगां प्रेयसीं हसन् ॥
सलज्जं परमं चैनं स्वशरीरासनागतम् । निर्मायात्मसमं दिव्यं युवतीरूपमद्भुतम् ॥
चिन्तयस्व शरीरेण ह्यभेदं मृगलोचने । अथो त्वदङ्गतेजोभिः स्पृष्टस्त्वद्रूपमाप्स्यति ॥

ततः सा पद्मपत्राक्षी गत्वा चित्रध्वजान्तिकम् ।
निजाङ्गकैस्तदङ्गानामभेदं ध्यायती स्थिता ॥ ११० ॥

अथास्यास्त्वङ्गतेजांसि तदङ्गं पर्यपूरयन् । स्तनयोर्ज्योतिषां जातौ पीनौ चारुपयोधरौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नितम्बज्योतिषा जातं श्रोणिबिम्बं मनोहरम् ।
कुन्तलज्योतिषा केशपाशोऽभूत्करयोः करौ ॥ ११२ ॥
सर्वमेवं सुसम्पन्नं भूषावासः स्रगादिकम् । कलासु कुशला जाता सौरभेनान्तरात्मनि
दीपाद्दीपमिवालोक्य सुभगां भुवि कन्यकाम् ।
चित्रध्वजां त्रपाभङ्गि स्मितशोभां मनोहराम् ॥ ११४ ॥
प्रेम्णा गृहीत्वा करयोः सा तामपरहरन्मुदा ।
गोविन्दवामपार्श्वस्थां प्रेयसीं परिरभ्य च ॥ ११५ ॥
उवाच तव दासीयं नाम चास्याश्च कारय ।
सेवां चास्यै वद प्रीत्या यथाभिरुचितां प्रियाम् ॥ ११६ ॥
अथ चित्रकलेत्येतन्नाम चात्ममतेन सा । चकार चाह सेवार्थं धृत्वा चापिविपञ्चिकाम्
सदा त्वं निकटे तिष्ठ गायस्व विविधैः स्वरैः ।
गुणात्मन्प्राणनाथस्य तवायं विहितो विधिः ॥ ११८ ॥
अथ चित्रकला त्वाज्ञां गृहीत्वाऽऽनम्य माधवम् ।
तत्प्रयस्योश्च चरणं गृहीत्वा पादयो रजः ॥ ११९ ॥
जगौ सुमधुरं गीतं तयोरानन्दकारणम् । अथ प्रीत्योपगूढा सा कृष्णेनानन्दमूर्तिना ॥
यावत्सुधाम्बुधौ पूर्णा तावदेवाप्यबुध्यत । चित्रध्वजो महाप्रेमविह्वलः स्मरतत्परः ॥
तमेव परमानन्दं मुक्तकण्ठोरुरोद ह । तदाऽऽरभ्य रुदन्नेवमुक्त्वा हारविहारकम् ॥१२२॥
आभाषितोऽपि पित्राद्यैर्नैवावोचद्वचः क्वचित् ।
मासमात्रं गृहे स्थित्वा निशीथे कृष्णसंश्रयः ॥ १२३ ॥
निर्गत्यारण्यमचरत्तपो वै मुनिदुष्करम् । कल्पान्ते देहमुत्सृज्य तपसैव महामुनिः ॥
वीरगुप्ताभिधानस्य गोपस्य दुहिताशुभा । जाता चित्रकलेत्येव यस्याःस्कन्धेमनोहरा
विपञ्ची दृश्यते नित्यं सप्तस्वरविभूषिता । उपतिष्ठति वै वामे रत्नभृङ्गारमद्भुतम् ॥
दधाना दक्षिणे हस्ते सा वै रत्नपतद्ग्रहम् । अयमासीत्पुरा सर्वतापसैरभिवन्दितः ॥
मुनिःपुण्यश्रवा नाम काश्यपः सर्वधर्मवित् । पिता तस्याभवच्छैवः शतरुद्रीयमन्वहम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रस्तुवन्देवदेवेशं विश्वेशं भक्तवत्सलम् । प्रसन्नो भगवांस्तस्य पार्वत्यासह शङ्करः ॥
चतुर्दश्यामर्द्धरात्रे प्रत्यक्षः प्रददौवरम् । त्वत्पुत्रो भविता कृष्णे भक्तिमान्बाल एव हि
उपनीयाष्टमे वर्षे तस्मै सिद्धमनुस्त्वयम् । उपदिशैकविंशत्या यो मया ते निगद्यते ॥

गोपालविद्या नामायं मन्त्रो वाक्सिद्धिदायकः ।
एतत्साधकजिह्वाग्रे लीलाचरितमद्भुतम् ॥ १३२ ॥

अनन्तमूर्तिरायाति स्वयमेव वरप्रदः । काममायारमाकण्ठसेन्द्रादामोदरोज्ज्वलाः ॥

मध्ये दशाक्षरीं प्रोच्य पुनस्ता एव निर्दिशेत् ।
दशाक्षरोक्त ऋष्यादि ध्यानं चास्य ब्रवीम्यहम् ॥ १३४ ॥
पूर्णामृतनिधेर्मध्यं द्वीपं ज्योतिर्मयं स्मरेत् ।
कालिन्द्या वेष्टितं तत्र ध्यायेद् वृन्दावनं वनम् ॥ १३५ ॥

सर्वर्तुकुसुमस्त्रावि द्रुमवल्लीभिरावृतम् । नटन्मत्तशिखिस्वानं गायत्कोकिलषट्पदम् ॥
तस्य मध्ये वसत्येकः पारिजाततरुर्महान् । शाखोपशाखाविस्तारैःशतयोजनमुच्छ्रितः

तले तस्याथ विमले परितो धनुमण्डलम् ।
तदन्तर्मण्डलं गोपबालानां विष्णुशृङ्गिणाम् ॥ १३८ ॥

तदन्तरे तु रुचिरं मण्डलं व्रजसुभ्रुवाम् । नानोपायनपाणीनां मदविह्वलचेतसाम् ॥
कृताञ्जलिपुटानां च मण्डलं शुक्लवाससाम् । शुक्लाभरणभूषाणां प्रेमविह्वलितात्मनाम्
चिन्तयेच्छ्रुतिकन्यानां गृह्णन्तीनां वचःप्रियम् । रत्नवेद्यां ततोध्यायेद्दुकूलावरणंहरिम्
ऊरौशयानं राधायाः कदलीकाण्डकोपरि । तद्वक्त्रं चन्द्रसुस्मेरवीक्ष्यमाणंमनोहरम्

किञ्चित्कुञ्चितवामाङ्घ्रिवेणुयुक्तेन पाणिना ।
वामेनालिङ्ग्य दयितां दक्षेण चिबुकं स्पृशन् ॥ १४३ ॥

महामारकताभासं मौक्तिकच्छायमेव च । पुण्डरीकविशालाक्षं पीतनिर्मलवाससम् ॥
बर्हभारलसच्छीर्षं मुक्ताहारमनोहरम् । गण्डप्रान्तलसच्चारुमकराकृति कुण्डलम् ॥

आपादतुलसीमालं कङ्कणाङ्गदभूषणम् ।
नूपुरैर्मुद्रिकाभिश्च काञ्च्या च परिमण्डितम् ॥ १४६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुकुमारतरं ध्यायेत्किशोरवयसान्वितम्। पूजा दशाक्षरोक्तैव वेदलक्षं पुरस्क्रिया॥
इत्युक्त्वाऽन्तर्दधे देवो देवी च गिरिजासती। मुनिरागत्य पुत्राय तथैवोपदिदेशह॥
पुण्यश्रवास्तु तन्मन्त्रग्रहणादेव केशवम्।
दर्शयामास विविधैर्जित्वा सर्वान्मुनीन्स्वयम्॥ ४६॥
रूपलावण्यवैदग्ध्यसौन्दर्याश्चर्यलक्षणम्। तदा हृष्टमना बालो निर्गत्य स्वगृहात्ततः॥
वायुभक्षस्तपस्तेपे कल्पानामयुतत्रयम्। तदन्ते गोकुलेजाता नन्दभ्रातुर्गृहे स्वयम्
लवङ्गा इति तन्नाम्ना कृष्णेङ्गितनिरीक्षणा। यस्याहस्ते प्रदृश्येत मुखमार्जनयन्त्रकम्॥
इति ते कथिताः काश्चित्प्रधानाः कृष्णवल्लभाः॥ ५३॥
हरि विविधरसाद्यैर्युक्तमध्यायमेतं व्रजवरतनयाभिश्चारुहासेक्षणाभिः।
पठति य इह भक्त्या पाठयेद्वा मनुष्यो व्रजति भगवतः श्रीवासुदेवस्य धाम॥५४॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे श्रीकृष्णमाहात्म्ये द्विसप्ततिममोऽध्यायः

---

# त्रिसप्ततितमोऽध्यायः

## श्रीकृष्णस्वरूपवर्णनपुरःसरं मथुरामाहात्म्यवर्णनम्।

ईश्वर उवाच।

यत्त्वया पृष्टमाश्चर्यं तन्मयाभाषितं क्रमात्। यत्र मुह्यन्ति ब्रह्माद्यास्तत्र कोवा नमुह्यति
तथापि ते प्रवक्ष्यामि यदुक्तं परमर्षिणा। महाराज्ञेऽम्बरीषाय विष्णुभक्त्यन्विताय च
बदर्याश्रममासाद्य समासीनं जितेन्द्रियम्।
राजा प्रणम्य तुष्टाव विष्णुधर्मविवित्सया॥ ३॥
वेदव्यासं महाभागं सर्वज्ञं पुरुषोत्तमम्। मां त्वं संसारदुष्पारे परित्रातुमिहार्हसि॥
विषयेभ्यो विरक्तोऽस्मि नमस्तेभ्यो नमोऽखिलम्।
यत्तत्पदमनुद्विग्नं सच्चिदानन्दविग्रहम्॥ ५॥

२०—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परंब्रह्म पराकाशमनाकाशमनामयम् । यत्साक्षात्कृत्य मुनयो भवाम्भोधिं तरन्ति हि
तत्राहं मनसो नित्यं कथं गतिमवाप्नुयात् ॥ ७ ॥

व्यास उवाच ।

अतिगोप्यं त्वयापृष्टं यन्मया न शुकम्प्रति । गदितं स्वंसुतं किंतुत्वां वक्ष्यामि हरिप्रिय
आसीदिदं परंविश्वं यद्रूपं यत्प्रतिष्ठितम् । अव्याकृतमव्यथितं तदीश्वरमयं शृणु ॥९॥
मयाकृतं तपःपूर्वं बहुवर्षसहस्रकम् । फलमूलपलाशाम्बुवाय्वाहारनिषेविणा ॥ १० ॥
ततो मामाह भगवान्स्वध्याननिरतं हरिः ।
कस्मिन्नर्थे चिकीर्षा ते विवित्सा वा महामते ! ॥ ११ ॥
प्रसन्नोऽस्मि वृणुष्वत्वं वरं च वरदर्षभात् । मद्दर्शनान्तःसंसार इति सत्यं ब्रवीमि ते
ततोऽहमब्रुवं कृष्णं पुलकोत्फुल्लविग्रहः । त्वामहं द्रष्टुमिच्छामि चक्षुर्भ्यां मधुसूदन !
यत्तत्सत्यं परंब्रह्म जगज्ज्योतिर्जगत्पतिम् । वदन्ति वेदशिरसश्चाक्षुषं नाथमद्भुतम् ॥

श्रीभगवानुवाच ।

ब्रह्मणैवं पुरापृष्टःप्रार्थितश्च यथापुरा । यदवोचमहं तस्मै तत्तुभ्यमपि कथ्यते ॥ १५ ॥
मामेके प्रकृतिं प्राहुःपुरुषं च तथेश्वरम् । धर्ममेके धनञ्चैके मोक्षमेकेऽकुतोभयम् ॥१६॥
शून्यमेके भावमेके शिवमेके सदाशिवम् । अपरे वेदशिरसि स्थितमेकं सनातनम् ॥
सद्भावं विक्रियाहीनं सच्चिदानन्दविग्रहम् । पश्याद्य दर्शयिष्यामि स्वरूपं वेदगोपितम्
ततोऽपश्यं भूपबालमहं कालाम्बुदप्रभम् । गोपकन्यावृतं गोपं हसन्तं गोपबालकैः ॥
कदम्बमूल आसीनं पीतवाससमद्भुतम् । वनं वृन्दावनं नाम नवपल्लवमण्डितम् ॥
कोकिलभ्रमरारावं मनोभवमनोहरम् । नदीमपश्यं कालिन्दीमिन्दीवरदलप्रभाम् ॥२१॥
गोवर्द्धनमथापश्यं कृष्णरामकरोद्धृतम् । महेन्द्रदर्पनाशाय गोगोपालसुखावहम् ॥२२॥
गोपालमबलासङ्गमुदितं वेणुवादिनम् । दृष्ट्वाऽतिहृष्टो ह्यभवं सर्वभूषणभूषणम् ॥२३॥
ततो मामाह भगवान्वृन्दावनचरः स्वयम् । यदिदं मे त्वयादृष्टं रूपंदिव्यं सनातनम् ॥
निष्कलं निष्क्रियं शान्तं सच्चिदानन्दविग्रहम् । पूर्णं पद्मपलाशाक्षं नातःपरतरं मम ॥
इदमेव वदन्त्येते वेदाःकारणकारणम् । सत्यं नित्यं परानन्दं चिद्घनं शाश्वतं शिवम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्यां मे मथुरांविद्धि वनंवृन्दाननं तथा । यमुनां गोपकन्याश्च तथा गोपालबालकाः
ममावतारो नित्योऽयमत्र मा संशयं कृथाः । ममेष्टां हि सदा राधा सर्वज्ञोऽहं परात्परः

सर्वकामश्च सर्वेशः सर्वानन्दः परात्परः ।
मयि सर्वमिदं विश्वं भाति माया विजृम्भितम् ॥ २९ ॥
ततोऽहमब्रुवं देवं जगत्कारणकारणम् ।
काश्च गोप्यस्तु के गोपा वृक्षोऽयं कीदृशो मतः ॥ ३० ॥
वनं किं कोकिलाद्याश्च नदी केयं गिरिश्च कः ।
कोऽसौ वेणुर्महाभागो लोकानन्दैकभाजनम् ॥ ३१ ॥

भगवानाह मां प्रीतःप्रसन्नवदनाम्बुजः । गोप्यस्तु श्रुतयो ज्ञेया ऋचो वै गोपकन्यकाः
देवकन्याश्च राजेन्द्र ! तपोयुक्ता मुमुक्षवः । गोपाला मुनयःसर्वे वैकुण्ठानन्दमूर्त्तयः ॥
कल्पवृक्षःकदम्बोऽयं परानन्दैकभाजनम् । वनमानन्दकाख्यं हि महापातकनाशनम् ॥

सिद्धाश्च साध्या गन्धर्वाः कोकिलाद्या न संशयः ।
केचिदानन्दहृदयं साक्षाद्यमुनया तनुम् ॥ ३५ ॥

अनादिर्हरिदासोऽयं भूधरो नात्र संशयः । वेणुर्यःश्रृणु तं विप्रं तवापि विदितं तथा ॥
द्विज आसीच्छान्तमनास्तपःशान्तिपरायणः । नाम्ना देवव्रतो दान्तःकर्मकाण्डविशारदः
स वैष्णवजनव्रातमध्यवर्ती क्रियापरः । स कदाचन शुश्राव यज्ञेशोऽस्तीति भूपते ! ॥
तस्य गेहमथाभ्यागाद्द्विजो मद्व्रतनिश्चयः । स मद्भक्तःक्वचित्पूजां तुलसीदलवारिणा

कृतवांस्तद्गृहे किञ्चित्फलं मूलं न्यवेदयत् ।
स्नानवारिफलं किञ्चित्तस्मै प्रीत्या ददौ सुधीः ॥ ४० ॥

अश्रद्धयास्मितं कृत्वा सोऽप्यगृह्णाद्द्विजन्मनः । तेन पापेन सञ्जातं वेणुत्वमतिदारुणम्
तेन पुण्येन तस्याथ मदीयप्रियतांगतः । अमुना सोऽपि राजेन्द्र केतुमानिव राजते ॥

युगान्ते तद्विष्णुपरो भूत्वा ब्रह्म समाप्स्यति ॥ ४२ ॥
अहो न जानन्ति नरा दुराशयाः पुरीं मदीयां परमां सनातनीम् ।
सुरेन्द्रनागेन्द्रमुनीन्द्रसंस्तुतां मनोरमां तां मथुरां पुरातनीम् ॥ ४३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काश्यादयो यद्यपि सन्ति पुर्यस्तासां तु मध्ये मथुरैव धन्या ।
यज्जन्ममौञ्जीव्रतमृत्युदाहैर्नृणां चतुर्द्धा विदधाति मुक्तिम् ॥ ४४ ॥
यदा विशुद्धास्तपआदिना जनाः शुभाशया ध्यानधना निरन्तरम् ।
तदैव पश्यन्ति ममोत्तमां पुरीं न चान्यथा कल्पशतैर्द्विजोत्तमाः ॥ ४५ ॥
मथुरावासिनो धन्या मान्याअपि दिवौकसाम् । अगण्यमहिमानस्ते सर्वं एव चतुर्भुजाः
मथुरावासिनो ये तु दोषान्पश्यन्ति मानवाः ।
तेषु दोषं न पश्यन्ति जन्ममृत्युसहस्रजम् ॥ ४७ ॥
अधना अपि ते धन्या मथुरां ये स्मरन्ति ते । यत्र भूतेश्वरो देवो मोक्षदःपापिनामपि
मम प्रियतमो नित्यं देवो भूतेश्वरःपरः । यःकदापि ममप्रीत्यै न सन्त्यजति तां पुरीम्
भूतेश्वरं यो न नमेन्न पूजयेन्न वा स्मरेद् दुश्चरितो मनुष्यः ।
नैनां स पश्येन्मथुरां मदीयां स्वयम्प्रकाशां परदेवताख्याम् ॥ ५० ॥
न कथं मयिभक्तिं स लभते पापपूरुषः । यो मदीयं परंभक्तं शिवं सम्पूजयेन्न हि ॥
मन्मायामोहितधियः प्रायस्ते मानवाधमाः ।
भूतेश्वरं न नमन्ति न स्मरन्ति स्तुवन्ति ये ॥ ५२ ॥
बालकोऽपि ध्रुवो यत्र ममाराधनतत्परः । प्राप स्थानं परंशुद्धं यन्न युक्तं पितामहैः ॥
तां पुरीं प्राप्य मथुरां मदीयां सुरदुर्लभाम् ।
खञ्जो भूत्वाऽन्धको वापि प्राणानेव परित्यजेत् ॥ ५४ ॥
वेदव्यास महाभाग मा कृथाःसंशयं क्वचित् । रहस्यं वेदशिरसां यन्मयाते प्रकाशितम्
इमं भगवता प्रोक्तमध्यायं यः पठेच्छुचिः ।
शृणुयाद्वाऽपि यो भक्त्या मुक्तिस्तस्यापि शाश्वती ॥ ५६ ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वृन्दावनादि मथुरामाहात्म्यकथनं नाम
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# चतुःसप्ततितमोऽध्यायः

## अर्जुनस्य राधास्वरूपदर्शनपूर्वकस्त्रीत्वप्राप्त्या श्रीकृष्णसङ्गवर्णनम् ।

ईश्वर उवाच ।

एकदा रहसि श्रीमानुद्धवो भगवत्प्रियः । सनत्कुमारमेकान्ते ह्यपृच्छत्पार्षदःप्रभोः ॥

यत्र क्रीडति गोविन्दो नित्यं नित्यसुरास्पदे ।

गोपाङ्गनाभिर्यत्स्थानं कुत्र वा कीदृशं परम् ॥ २ ॥

तत्तत्क्रीडनवृत्तान्तमन्यद्यद्यत्तदद्भुतम् । ज्ञातं चेत्तव तत्कथ्यं स्नेहोमे यदि वर्त्तते

सनत्कुमार उवाच ।

कदाचिद्यमुनाकूले कस्यापि च तरोस्तले । सुवृत्तेनोपविष्टेन भगवत्पार्षदेन वै ॥ ४ ॥

यद्रहोऽनुभवस्तस्य पार्थेनापि महात्मना । दृष्टं कृतं च यद्यत्तत्प्रसङ्गात्कथितं मयि ॥

तत्तेऽहं कथयाम्येतच्छृणुष्वावहितःपरम् । किं त्वेतद्यत्र कुत्रापि न प्रकाश्यं कदाचन

अर्जुन उवाच ।

शङ्कराद्यैर्विरिञ्च्याद्यैरदृष्टमश्रुतं च यत् । सर्वमेतत्कृपाम्भोधे ! कृपया कथय प्रभो ! ॥

किं त्वया कथितं पूर्वमाभीर्यस्तव वल्लभाः ।

तास्ताः कतिविधा देव कति वा सङ्ख्यया पुनः ॥ ८ ॥

नामानि कति वा तासां का वा कुत्र व्यवस्थिताः ।

तासां चा कतिकर्माणि वयोवेषश्च कः प्रभो ! ॥ ६ ॥

काभिःसार्द्धं क्व वा देव विहरिष्यसि भोरहः । नित्ये नित्यसुखे नित्यविभवेच वनेवने

तत्स्थानं कीदृशं कुत्र शाश्वतं परमं महत् । कृपाचेत्तादृशी तन्मे सर्वं वक्तुमिहार्हसि ॥

यदपृष्टं मयाऽप्येवमज्ञातं यद्रहस्तव । आर्तार्तिघ्न ! महाभाग ! सर्वं तत्कथयिष्यसि ॥

श्रीभगवानुवाच ।

तत्स्थानं वल्लभास्ता मे विहारस्तादृशो मम ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपि प्राणसमानानां सत्यं पुंसामगोचरः ॥ १३ ॥
कथिते द्रष्टुमुत्कण्ठा तव वत्स भविष्यति । ब्रह्मादीनामदृश्यं यत्किं तदन्यजनस्य वै ॥
तस्माद्विरम वत्सैतत्किं तु तेन विनातव । एवं भगवतस्तस्य श्रुत्वावाक्यं सुदारुणम् ॥
दीनः पादाम्बुजद्वन्द्वे दण्डवत्पतितोऽर्जुनः ।
ततो विहस्य भगवान्दोर्भ्यामुत्थाप्य तं विभुः ॥ १६ ॥
उवाच परमप्रेम्णा भक्ताय भक्तवत्सलः । तत्किं तत्कथनेनात्र द्रष्टव्यं चेत्त्वया हियत् ॥
यस्यां सर्वंसमुत्पन्नं यस्यामद्यापि तिष्ठति । लयमेष्यति तां देवीं श्रीमत्त्रिपुरसुन्दरीम् ॥
आराध्य परया भक्त्या तस्यै स्वं च निवेदय ।
तां विनैतत्पदं दातुं न शक्नोमि कदाचन ॥ १६ ॥
श्रुत्वैतद्भगवद्वाक्यं पार्थो हर्षाकुलेक्षणः ।
श्रीमत्यास्त्रिपुरादेव्या ययौ श्रीपादुकातलम् ॥ २० ॥
तत्र गत्वा ददर्शैनांश्रीचिन्तामणिवेदिकाम् । नानारत्नैर्विरचितैःसोपानैरतिशोभिताम् ॥
तत्र कल्पतरुं नानापुष्पैः फलभवैर्नतम् । सर्वर्त्तुकोमलदलैः स्रवन्माध्वीकशीकरैः ॥
वर्षद्भिर्वायुनालोलैः पल्लवैरुज्ज्वलीकृतम् । शुकैश्च कोकिलगणैः सारिकाभिःकपोतकैः
लीला चकोरकैरन्यैः पक्षिभिश्चनिनादितम् । यत्र गुञ्जद्भृङ्गराजकोलाहलसमाकुलम् ॥
मणिभिर्भास्वरैरुद्यद्भास्कराभं मनोहरम् । श्रीरत्नमन्दिरं दिव्यं तले तस्य महाद्भुतम् ॥
रत्नसिंहासनं तत्र महाहैमाभिमोहनम् । तत्र बालार्कसङ्काशां नानालङ्कारभूषिताम् ॥
नवयौवनसम्पन्नां सृणिपाशधनुःशरैः । राजच्चतुर्भुजलतां सुप्रसन्नां मनोहराम् ॥२७॥
ब्रह्मविष्णुमहेशादिकिरीटमणिरश्मिभिः ।
विराजितपदाम्भोजामणिमादिभिरावृताम् ॥ २८ ॥
प्रसन्नवदनां देवीं वरदां भक्तवत्सलाम् । अर्जुनोऽहमिति ज्ञातःप्रणम्य च पुनः पुनः ॥
विहिताञ्जलिरेकान्ते स्थितो भक्तिभरान्वितः ।
सा तस्योपासितं ज्ञात्वा प्रसादश्च कृपानिधिः ॥
उवाच कृपया देवी तस्य स्मरणविह्वला ॥ ३० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवत्युवाच ।

किं वा दानं त्वया वत्स ! कृतं पात्राय दुर्लभम् ।
इष्टं यज्ञेन केनात्र तपो वा किमनुष्ठितम् ॥ ३१ ॥
भगवत्यमला भक्तिः का वा प्राक्समुपार्ज्जिता ।
किं वाऽस्मिन्दुर्लभं लोके किं वा कर्म शुभं महत् ॥ ३२ ॥

प्रसादस्त्वयि येनायं प्रपन्ने च मुदा किल । गूढातिगूढश्चानन्यलभ्यो भगवताकृतः ॥

नैतादृङ् मर्त्यलोकानां न च भूतलवासिनाम् ।
स्वर्गिणां देवतादीनां तपस्वीश्वरयोगिनाम् ॥ ३४ ॥

भक्तानां नैव सर्वेषां नैवनैव च नैव च । प्रसादस्तु कृतो वत्स ! तव विश्वात्मना यथा
तदेहि भज बुद्ध्वैव कुलकुण्डंसरो मम । सर्वकामप्रदा देवी त्वनयासह गम्यताम् ॥

तत्रैव विधिवत्स्नात्वा द्रुतमागम्यतामिह ।
तदैव तत्र गत्वा स स्नात्वा पार्थस्तथाऽऽगतः ॥ ३७ ॥
आगतं तं कृतस्नानं न्यासमुद्रार्पणादिकम् ।
कारयित्वा ततो देव्या तस्य वै दक्षिणश्रुतौ ॥ ३८ ॥

सद्यःसिद्धिकरी बाला विद्या निगदितापरा । हकारार्द्धपरार्द्धीपा द्वितीया विश्वभूषिता
अनुष्ठानं च पूजां च जपञ्चलक्षसङ्ख्यकम् । कोरकैःकरवीराणां प्रयोगं च यथातथम्
निर्वर्त्य तमुवाचेदं कृपया परमेश्वरी । अनेनैव विधानेन क्रियतां मदुपासनम् ॥ ४१ ॥
ततो मयि प्रसन्नायां तवानुग्रहकारणात् । सद्यस्तु कृष्णलीलायामधिकारो भविष्यति
इत्ययं नियमःपूर्वं स्वयं भगवताकृतः । श्रुत्वैवमर्जुनस्तेन वर्त्मना तां समर्चयत् ॥४३॥
ततः पूजां जपञ्चैव कृत्वा देवीप्रसादिता । कृत्वा ततःशुभंहोमं स्नानञ्च विधिना ततः
कृतकृत्यमिवात्मानं प्राप्तप्रायमनोरथम् । करस्थां सर्वसिद्धिञ्च स पार्थःसममन्यत ॥
अस्मिन्नवसरे देवी तमागत्य स्मितानना । उवाच गच्छ वत्स ! त्वमधुनातद्गृहान्तरे

ततः ससम्भ्रमः पार्थः समुत्थाय मुदान्वितः ।
असङ्ख्यहर्षपूर्णात्मा दण्डवत्तां ननाम ह ॥ ४७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आज्ञप्तस्तु तयासार्द्धं देवी वयस्ययाऽर्जुनः। गतो राधापतिस्थानं यत्सिद्धैरप्यगोचरम्
ततश्च स उपादिष्टो गोलोकादुपरि स्थितम्।
स्थिरं वायुधृतं नित्यं सत्यं सर्वसुखास्पदम् ॥ ४६ ॥
नित्यं वृन्दावनं नाम नित्यं रासमहोत्सवम्। अपश्यत्परमंगुह्यं पूर्णप्रेमरसात्मकम् ॥
तस्याहि वचनादेव लोचनैर्वीक्ष्य तद्रहः। विवशः पतितस्तत्र विवृद्धप्रेमविह्वलः॥५१॥
ततः कृच्छ्राल्लब्धसंज्ञो दोर्भ्यामुत्थापितस्तया।
सान्त्वनावचनैस्तस्याः कथञ्चित्स्थैर्यमागतः ॥ ५२ ॥
ततस्तपः किमन्यन्मे कर्त्तव्यं विद्यते वद। इति तद्दर्शनोत्कण्ठाभरेण तरलोऽभवत् ॥
ततस्तयाकरे तस्य धृत्वा तत्पदद‌क्षिणे। प्रतिपेदे सुदेशेन गत्वा चोक्तमिदं वचः॥५४॥
स्नानायैतच्छुभं पार्थ विशत्वं जलविस्तरम्। सहस्रदलपद्मस्थसंस्थानं मध्यकोरकम्
चतुःसरश्चतुर्धारमाश्चर्यकुलसङ्कुलम् । अस्यान्तरे प्रविश्याथ विशेषमिह पश्यसि ॥
एतस्य दक्षिणेदेशे एषचात्र सरोवरः। मधुमाध्वीकपानं यन्नाम्ना मलयनिर्झरः॥५७॥
एतच्चफुल्लमुद्यानं वसन्ते मदनोत्सवम्। कुरुते यत्र गोविन्दो वसन्तकुसुमोचितम् ॥
यत्रावतारं कृष्णस्य स्तुवन्त्येव दिवानिशम्।
भवेद्यत्स्मरणादेव मुनेः स्वान्ते स्मराङ्कुरः ॥ ५६ ॥
ततोऽस्मिन्सरसि स्नात्वा गत्वा पूर्वसरस्तटम्।
उपस्पृश्य जलं तस्य साधय स्वमनोरथम् ॥ ६० ॥
ततस्तद्वचनं श्रुत्वा तस्मिन्सरसि तज्जले। कह्लारकुमुदाम्भोजरक्तनीलोत्पलच्युतैः ॥
परागैरञ्जिते मञ्जुवासिते मधुबिन्दुभिः। तुन्दिले कलहंसादि नादैरान्दोलिते ततः ॥
रत्नाबद्धचतुस्तीरे मन्दानिलतरङ्गिते। मग्ने जलान्तः पार्थे तु तत्रैवान्तर्दधेऽथ सा ॥
उत्थाय परितो वीक्ष्य सम्भ्रान्ता चारुहासिनी।
सद्यः शुद्धस्वर्णरश्मि गौरकान्ततनूलताम् ॥ ६४ ॥
स्फुरत्किशोरवर्षीयां शारदेन्दुनिभाननाम्।
सुनीलकुटिलस्निग्धविलसद्रत्नकुन्तलाम् ॥ ६५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिन्दूरबिन्दुकिरणप्रोज्ज्वलालकपट्टिकाम् । उन्मीलद्भ्रूलताभङ्गिजितस्मरशरासनाम्
घनश्यामलसल्लोलखेलल्लोचनखञ्जनाम् । मणिकुण्डलतेजोंशुविस्फुरद्गण्डमण्डलाम् ॥
मृणालकोमलभ्राजदाश्चर्यं भुजवल्लरीम् । शरदम्बुरुहां सर्वश्रीचौरपाणिपल्लवाम् ॥
विदग्धरचितस्वर्णकटिसूत्रकृतान्तराम् । कूजत्काञ्चीकलापान्तविभ्राजज्जघनस्थलाम् ॥
भ्राजद्दुकूलसंवीतनितम्बोरुसुमन्दिराम् । शिञ्जानमणिमञ्जीरसुचारुपदपङ्कजाम् ॥७०॥
स्फुरद्विविधकन्दर्पकलाकौशलशालिनीम् । सर्वलक्षणसम्पन्नां सर्वाभरणभूषिताम् ॥
आश्चर्यललनां श्रेष्ठामात्मानं स व्यलोकयत् । विसस्मार च यत्किञ्चित्पौर्वदेहिकमेव च
मायया गोपिकाप्राणनाथस्य तदनन्तरम् । इतिकर्त्तव्यता मूढा तस्थौतत्र सुविस्मिता

अत्रान्तरेऽम्बरे धीरध्वनिराकस्मिकोऽभवत् ।
अनेनैव पथा सुभ्रु ! गच्छ पूर्वसरोवरम् ॥७४॥

उपस्पृश्य जलं तस्यसाधय स्वमनोरथम् । तत्र सन्ति हि सख्यस्ते मासीद वरवर्णिनि

ता हि सम्पादयिष्यन्ति तत्रैव वरमीप्सितम् ।
इति दैवीं गिरं श्रुत्वा गत्वा पूर्वसरोऽथ सा ॥ ७६ ॥

नानापूर्वप्रवाहं च नानापक्षिसमाकुलम् । स्फुरत्कैरवकह्लारकमलेन्दीवरादिभिः ॥७७॥
भ्राजितं पद्मरागैश्च पद्मसोपानसत्तटम् । विविधैःकुसुमोद्दामैर्मञ्जुकुञ्जलताद्रुमैः ॥७८॥

विराजितचतुस्तीरमुपस्पृश्य स्थिता क्षणम् ।
तत्रान्तरे क्वणत्काञ्चीमञ्जुमञ्जीररञ्जितम् ॥ ७९ ॥

किङ्किणीनां झणत्कारं शुश्रावोत्कर्णसम्पुटे । ततश्च प्रमदावृन्दमाश्चर्ययुतयौवनम् ॥
आश्चर्यालङ्कृतिन्यासमाश्चर्याकृति भाषितम् । अद्भुताङ्गमपूर्वं सा पृथगाश्चर्यविभ्रमम् ॥
चित्रसम्भाषणं चित्रहसितालोकनादिकम् । मधुराद्भुतलावण्यं सर्वमाधुर्यसेवितम् ॥
चिल्लावण्यगतानन्तमाश्चर्याकुलसुन्दरम् । आश्चर्यस्निग्धसौन्दर्यमाश्चर्यानुग्रहादिकम् ॥
सर्वाश्चर्यसमुदयमाश्चर्यालोकनादिकम् । दृष्ट्वा तत्परमाश्चर्यं चिन्तयन्ती हृदा कियत्

पादाङ्गुष्ठेनालिखन्ती भुवं नम्रानना स्थिता ।
ततस्तासां सम्भ्रमोऽभूद् दृष्टीनां च परस्परम् ॥ ८५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केयं मदीयजातीया चिरेण न्यस्तकौतुका । इति सर्वाःसमालोक्य ज्ञातव्येयमितिक्षणम्

आमन्त्र्य मन्त्रणाभिज्ञाः कौतुकाद् द्रष्टुमागताः ।

आगत्य तासामेकाथ नाम्ना प्रियमुदा मता ॥ ८७ ॥

गिरा मधुरया प्रीत्या तामुवाच मनस्विनी ॥ ८८ ॥

प्रियमुदोवाच ।

काऽसि त्वं कस्य कन्याऽसि कस्य त्वं प्राणवल्लभा ।

जाता कुत्राऽसि केनास्मिन्नानीता वाऽऽगता स्वयम् ॥ ८९ ॥

एतच्च सर्वमस्माकं कथ्यतां चिन्तया किमु ।

स्नानेऽस्मिन्परमानन्दे कस्यापि दुःखमस्ति किम् ॥ ९० ॥

इति पृष्टा तया सा तु विनयावनतिंगता । उवाच सुस्वरं तासां मोहयन्ती मनांसि च

अर्जुन उवाच ।

का वाऽस्मि कस्य कन्या वा प्रजाता कस्य वल्लभा ।

आनीता केन वा चात्र किं वाऽथ स्वयमागता ॥ ९२ ॥

एतत्किञ्चिन्न जानामि देवी जानातु तत्पुनः ।

कथितं श्रूयतां तन्मे मद्वाक्ये प्रत्ययो यदि ॥ ९३ ॥

अस्यैव दक्षिणेपार्श्वे एकमस्ति सरोवरम् । तत्राहं स्नातुमायाता जाता तत्रैव संस्थिता

विषमोत्कण्ठिता पश्चात्पश्यन्ती परितो दिशम् ।

एकमाकाशसम्भूतं ध्वनिमश्रौषमद्भुतम् ॥ ९५ ॥

अनेनैव पथा सुभ्रु ! गच्छ पूर्वसरोवरम् । उपस्पृश्य जलं तस्य साधयस्वमनोरथम् ॥

तत्र सन्ति हि सख्यस्ते मा सीद वरवर्णिनि ! ।

ता हि सम्पादयिष्यन्ति तत्र ते वरमीप्सितम् ॥ ९७ ॥

इत्याकर्ण्य वचस्तस्य तस्मादत्र समागता । विषादहर्षपूर्णात्मा चिन्ताकुलसमाकुला

आगताऽस्यजलं स्पृष्ट्वा नानाविधशुभध्वनिम् । अश्रौषञ्च ततःपश्चादपश्यं भवतीः पराः

एतन्मात्रं विजानामि कायेन मनसा गिरा । एतदेव मया देव्यः ! कथितं यदि रोचते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

का यूयं तनुजाः केषां क्व जाताः कस्य वल्लभाः ।
तच्छ्रुत्वा वचनं तस्याः सा वै प्रियमुदाऽब्रवीत् ॥ १०१ ॥
अस्त्वेवं प्राणसख्यः स्म तस्यैव च वयं शुभे ! ।
वृन्दावनकलानाथविहारदारिकाः सुखम् ॥ १०२ ॥

ता आत्मप्रमुदितास्तेन व्रजबाला इहागताः । एताःश्रुतिगणाः ख्याता एताश्च मुनयस्तथा वयं वल्लवबाला हि कथितास्ते स्वरूपतः । अत्र राधापतेरङ्गात्पूर्वाया: प्रेयसीतमाः नित्यानित्यविहारिण्यो नित्यकेलिभुवश्चराः । एषा पूर्णरसा देवी एषा च रसमन्थरा एषा रसालया नाम एषा च रसवल्लरी । रसपीयूषधारेयमेषा रसतरङ्गिणी ॥१०६॥ रसकल्लोलिनी चैषा इयं च रसवापिका । अनङ्गसेना एषैव इयं चानङ्गमालिनी ॥१०७॥ मदयन्ती इयं बाला एषा च रसविह्वला । इयं च ललिता नाम इयं ललितयौवना ॥ अनङ्गकुसुमा चैषा इयं मदनमञ्जरी । एषा कलावती नाम इयं रतिकला स्मृता ॥१०९॥ इयं कामकला नाम इयं हि कामदायिनी । रतिलोला इयं बाला इयं बाला रतोत्सुका

एषा चरति सर्वस्वा रतिचिन्तामणिस्त्वसौ ।
नित्यानन्दाः काश्चिदेताः नित्यप्रेमरसप्रदाः ॥ १११ ॥

अतः परं श्रुतिगणास्तासां काश्चिदिमाः शृणु । उद्गीतैषा सुगीतेयं कलगीता त्वियं प्रिया एषा कलसुरा ख्याता बालेयं कलकण्ठिका । विपञ्चीयं क्रमपदा एषा बहुहुता मता ॥ एषा बहुप्रयोगेयं ख्याता बहुकलाऽबला । इयं कलावती ख्याता माता चैषा क्रियावती अतः परंमुनिगणास्तासां कतिपया इह । इयमुग्रतपा नाम एषा बहुगुणा स्मृता ॥११५ एषा प्रियव्रता नाम सुव्रता च इयं मता । सुरेखेयं मता बाला सुपर्वेयं बहुप्रदा ॥११६

रत्नरेखा त्वियं ख्याता मणिग्रीवा त्वसौ मता ।
सुपर्णा चेयमाकल्पा सुकल्पा रत्नमालिका ॥ ११७ ॥

इयं सौदामिनी सुभ्रूरियं च कामदायिनी । एषा च भोगदा ख्याता इयं विश्वमता सती एषा च धारिणी धात्री सुमेधाकान्तिरप्यसौ । अपर्णेयं सुपर्णैषा मतैषा च सुलक्षणा

सुदतीयं गुणवती चैषा सौकलिनी मता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एषा सुलोचना ख्याता इयं च सुमनाः स्मृता ॥ १२० ॥
अश्रुता च सुशीला च रतिसौख्यं प्रदायिनी । अतः परं गोपबाला वयमत्रागतास्तु याः
तासां च परिचीयन्तां काश्चिदम्बुरुहानने । असौ चन्द्रावली चैषा चन्द्रिकेयं शुभामता
एषा चन्द्रावली चन्द्ररेखेयं चन्द्रिकाऽप्यसौ ।
एषा ख्याता चन्द्रमाला मता चन्द्रालिका त्वियम् ॥ १२३ ॥
एषा चन्द्रप्रभा चन्द्रकलेयमबला स्मृता । एषा वर्णावली वर्णमालेयं मणिमालिका
वर्णप्रभा समाख्याता सुप्रभेयं मणिप्रभा । इयं हारावली तारा मालिनीयं शुभा मता ॥
मालतीयमियं यूथी वासन्ती नवमल्लिका । मल्लीयं नवमल्लीयमसौ शेफालिका मता
सौगन्धिकेयं कस्तूरी पद्मिनीयं कुमुद्वती ।
एषैव हि रसोल्लासा चित्रवृन्दासमा त्वियम् ॥ १२७ ॥
रम्भेयमुर्वशी चैषा सुरेखा स्वर्णरेखिका । एषा काञ्चनमालेयं सत्यसन्ततिकापरा ॥
एताः परिकृताः सर्वाः परिचेयाः परा अपि । सहितास्माभिरेताभिर्विहरिष्यसि भामिनि
एहि पूर्वसरस्तीरे तत्र त्वां विधिवत्सखि ! ।
स्नापयित्वाऽथ दास्यामि मन्त्रं सिद्धिप्रदायकम् ॥ १३० ॥
इति तां सहसा नीत्वा स्नापयित्वा विधानतः । वृन्दावनकलानाथप्रेयस्या मन्त्रमुत्तमम्
ग्राहयामास संक्षेपाद्दीक्षाविधिपुरस्सरम् । परं वरुणबीजस्य वह्निबीजपुरस्कृतम् ॥
चतुर्थस्वरसंयुक्तं नादविन्दुविभूषितम् । पुटितं प्रणवाभ्यां च त्रैलोक्ये चातिदुर्लभम्
मन्त्रग्रहणमात्रेण सिद्धिः सर्वा प्रजायते । पुरश्चर्याविधिर्ध्यानं होमसङ्ख्याजपस्य च
तप्तकाञ्चनगौराङ्गीं नानालङ्कारभूषिताम् । आश्चर्यरूपलावण्यां सुप्रन्नां वरप्रदाम् ॥१३५
कल्हारैः करवीराद्यैश्चम्पकैः सरसीरुहैः । सुगन्धकुसुमैरन्यः सौगन्धिकसमन्वितैः ॥
पाद्यार्घ्याचमनीयैश्च धूपदीपैर्मनोहरैः । नैवेद्यैर्विविधैर्दिव्यैः सखीवृन्दाहृतैर्मुदा ॥१३७॥
सम्पूज्य विधिवद्देवीं जप्त्वा लक्षमनुंततः । हुत्वा च विधिनास्तुत्वा प्रणम्य दण्डवद्भुवि
ततः सा संस्तुता देवी निमेषरहितान्तरा । परिकल्प्य निजां छायां माययात्मसमीहया
पार्श्वऽथ प्रेयसीं तत्र स्थापयित्वा बलादिव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सखीभिरावृता दृष्टा शुद्धैः पूजाजपादिभिः ॥ १४० ॥
स्तवैर्भक्त्या प्रणामैश्च कृपयाऽऽविरभूत्तदा । हेमचम्पकवर्णाभा विचित्राभरणोज्ज्वला
अङ्गप्रत्यङ्गलावण्यलालित्यमधुराकृतिः । निष्कलङ्का शरत्पूर्णकलानाथशुभानना ॥१४२
स्निग्धमुग्धस्मितालोकजगत्त्रयमनोहरा । निजया प्रभयाऽत्यन्तंद्योतयन्ती दिशो दश
अब्रवीदथ सा देवी वरदा भक्तवत्सला ॥ १४४ ॥

देव्युवाच ।

मत्सखीनां वचः सत्यं तेन त्वं मे प्रियासखी ।
समुत्तिष्ठ समागच्छ कामं ते साधयाम्यहम् ॥ १४५ ॥
अर्जुनी सा वचो देव्याः श्रुत्वा चात्ममनीषितम् ।
पुलकाङ्कुरमुग्धाङ्गी बाष्पाकुलविलोचना ॥ १४६ ॥
पपात चरणे देव्याः पुनश्च प्रेमविह्वला । ततः प्रियम्वदां देवीं समुवाच सखीमिमाम् ॥
पाणौ गृहीत्वा मत्सङ्गे समाश्वास्य समानय ।
ततः प्रियम्वदादेव्या आज्ञया जातसम्भ्रमा ॥ १४८ ॥
तां तथैव समादाय सङ्गे देव्या जगामह । गत्वोत्तरसरस्तीरे स्नापयित्वा विधानतः ॥
सङ्कल्पादिकपूर्वन्तु पूजयित्वा यथाविधि । श्रीगोकुलकलानाथमन्त्रं तच्च सुसिद्धिदम्
ग्राहयामास तां देवी कृपया हरिवल्लभा । व्रतं गोकुलनाथाख्यं पूर्वं मोहनभूषितम् ॥
सर्वसिद्धिप्रदं मन्त्रं सर्वतन्त्रेषु गोपितम् । गोविन्देरितविज्ञाऽसौ ददौ भक्तिमचञ्चलाम्
ध्यानञ्च कथितं तस्यै मन्त्रराजञ्च मोहनम् ।
उक्तञ्च मोहने तन्त्रे स्मृतिरप्यस्य सिद्धिदा ॥ १५३ ॥
नीलोत्पलदलश्यामं नानालङ्कारभूषितम् ॥ १५४ ॥
कोटिकन्दर्पलावण्यं ध्यायेद्रासरसाकुलम् । प्रियम्वदामुवाचेदं रहस्यं पावनेच्छया ॥

श्रीराधिकोवाच ।

अस्या यावद्भवेत्पूर्णं पुरश्चरणमुत्तमम् । तावद्धि पालयैनांत्वं सावधाना सहालिभिः ॥
इत्युक्त्वा सा ययौ कृष्णपादाम्बुरुहसन्निधिम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

छायामात्मभवामात्मप्रेयसीनां निधाय च ॥ १५७ ॥
तस्थौ तत्र यथापूर्वं राधिका कृष्णवल्लभा । अत्र प्रियम्वदादेशात्पद्ममष्टदलं शुभम् ॥
गोरोचनाभिर्निर्माय कुङ्कुमेनापि चन्दनैः । एभिर्नानाविधैर्द्रव्यैः संमिश्रैः सिद्धिदायकम्
लिखित्वा यन्त्रराजञ्च शुद्धं मन्त्रं तमद्भुतम् ।
कृत्वा न्यासादिकं पाद्यमर्घ्यं चापि यथाविधि ॥ १६० ॥
नानर्तुसम्भवैः पुष्पैः कुङ्कुमैरपि चन्दनैः । धूपदीपैश्च नैवेद्यैस्ताम्बूलैर्मुखवासनैः ॥१६१॥
वासोऽलङ्कारमाल्यैश्च सम्पूज्य नन्दनन्दनम् । परिवारैः समं सर्वैः सायुधं च सवाहनम्
स्तुत्वा प्रणम्य विधिवच्चेतसा स्मरणं ययौ ।
ततो भक्तिवशो देवो यशोदानन्दनः प्रभुः ॥ १६३ ॥
स्मितावलोकितापाङ्गतरङ्गिततरेङ्गितम् । उवाच राधिकां देवीं तामानय इहाशु च ॥
आज्ञप्तावैव सा देवी प्रस्थाप्य शारदां सखीम् । तामानिनाय सहसा पुरोवासुरस्सात्मनः
श्रीकृष्णस्य पुरस्तात्सा समेत्य प्रेमविह्वला ।
पपात काञ्चनी भूमौ पश्यन्ती सर्वमद्भुतम् ॥१६६॥
कृच्छ्रात्कथञ्चिदुत्थाय शनैरुन्मील्यलोचने । स्वेदाम्भःपुलकोत्कम्पभावभाराकुलासती
ददर्श प्रथमं तत्र स्थलं चित्रं मनोरमम् । ततः कल्पतरुस्तत्र लसन्मरकतच्छदः ॥१६८
प्रवालपल्लवैर्युक्तः कोमलो हेमदण्डकः । स्फटिकप्रवालमूलश्च कामदः कामसम्पदाम् ॥
प्रार्थकाभीष्टफलदस्तस्याधो रत्नमन्दिरम् । रत्नसिंहासनं तत्र तत्राष्टदलपद्मकम् ॥
शङ्खपद्मनिधी तत्र सव्यापसव्यसंस्थितौ । चतुर्दिक्षु यथास्थानं सहिताः कामधेनवः
परितो नन्दनोद्यानं मलयानिलसेवितम् । ऋतूनां चैव सर्वेषां कुसुमानां मनोहरैः ॥
आमोदैर्वासितं सर्वं कालागुरुपराजितम् । मकरन्दकणावृष्टिशीतलं सुमनोहरम् ॥
मकरन्दरसास्वादमत्तानां भृङ्गयोषिताम् । वृन्दशो झङ्कृतैः शश्वच्चैव मुखरितान्तरम्
कलकण्ठीकपोतानां सारिकाशुकयोषिताम् ।
अन्यासां पत्रिकान्तानां कलनादैर्निनादितम् ॥ १७५ ॥
नृत्यैर्मत्तमयूराणामाकुलं स्मरवर्द्धनम् । रसाम्बुसेकसंसृष्टतमाञ्जनतनुद्युतिम् ॥१७६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुस्निग्धनीलकुटिलकषायावासिकुन्तलम् । मदमत्तमयूराद्यशिखण्डाबद्धचूडकम् ॥
भृङ्गसेवितसद्योपक्रमपुष्पावतंसकम् । लोलालकालिविलसत्कपोलादर्शकाशितम् ॥
विचित्रतिलकोद्दामभालशोभाविराजितम् । तिलपुष्पपतङ्गेशचञ्चुमञ्जुलनासिकम् ॥
चारुबिम्बाधरं मन्दस्मितदीपितमन्मथम् । वन्यप्रसूनसङ्काशग्रैवेयकमनोहरम् ॥१८०॥
मदोन्मत्तभ्रमद्भृङ्गीसहस्रकृतसेवया । सुरद्रुमस्रजा राजन्मुग्धपीनांशुकद्वयम् ॥१८१॥
मुक्ताहारस्फुरद्वक्षःस्थलकौस्तुभभूषितम् । श्रीवत्सलक्षणं जानुलम्बिबाहुं मनोहरम् ॥
गम्भीरनाभिपद्मास्यमध्यमध्यातिसुन्दरम् । सुजातद्रुमसद्वृत्तमदूरजानुमञ्जुलम् ॥
कङ्कणाङ्गदमञ्जीरैर्भूषितं भूषणैः परैः । पीतांशुकलयाविष्टनितम्बघटनायकम् ॥ १८४ ॥
लावण्यैरपि सौन्दर्यजितकोटिमनोभवम् । वेणुप्रवर्त्तितैर्गीतरागैरपि मनोहरैः ॥१८५॥
मोहयन्तं सुखाम्भोधौ मज्जयन्तं जगत्त्रयम् । प्रत्यङ्गमदनावेशधरं रासरसालसम् ॥
चामरं व्यजनं माल्यं गन्धं चन्दनमेव च । ताम्बूलं दर्पणं मानपात्रं चर्वितपात्रकम् ॥

अन्यत्क्रीडाभवं यद्यत्तत्सर्वं च पृथक्पृथक् ।
रसालं विविधं यन्त्रं कलयन्तीभिरादरात् ॥ १८८ ॥
यथास्थाननियुक्ताभिः पश्यन्तीभिस्तदिङ्गितम् ।
तन्मुखाम्भोजदत्ताक्षि चञ्चलाभिरनुक्रमात् ॥ १८९ ॥
श्रीमत्या राधिकादेव्या वामभागे ससंभ्रमम् ।
आराधयन्त्या ताम्बूलमर्पयन्त्या शुचिस्मितम् ॥ १९० ॥
समालोक्यार्जुनीयाऽसौ मदनावेशविह्वला ।
ततस्तां च तथा ज्ञात्वा हृषीकेशोऽपि सर्ववित् ॥ १९१ ॥

तस्याः पाणिं गृहीत्वैव सर्वक्रीडावनान्तरे । यथाकामं रहो रेमे महायोगेश्वरो विभुः॥
ततस्तस्याः स्कन्धदेशे प्रदत्तभुजपल्लवः । आगत्य शारदां प्राह पश्चिमेऽस्मिन्सरोवरे

शीघ्रं स्नापय तन्वङ्गीं क्रीडाश्रान्तां मृदु स्मिताम् ।
ततस्तां शारदादेवी तस्मिन्क्रीडासरोवरे ॥ १९४ ॥

स्नानं कुर्वित्युवाचैनां साच श्रान्तातथाऽकरोत् । जलाभ्यन्तरमासाऽसौपुनरर्जुनतांगतः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उत्तस्थौ यत्र देवेशः श्रीमद्वैकुण्ठनायकः। दृष्ट्वा तमर्जुनं कृष्णो विषण्णं भग्नमानसम्

मायया पाणिना स्पृष्ट्वा प्रकृतं विदधे पुनः ॥ १९५ ॥

श्रीकृष्ण उवाच।

धनञ्जयत्वामाशंसे भवान्प्रियसखो मम। त्वत्समो नास्तिमेकोऽपिरहो वेत्ता जगत्त्रये

यद्रहस्यं त्वया पृष्टमनुभूतं च तत्पुनः। कथ्यते यदि तत्कस्मै शपसे मां तदाऽर्जुन ! ॥

सनत्कुमार उवाच।

इति प्रसादमासाद्य शपथैर्जातनिर्णयः। ययौ हृष्टमनास्तस्मात्स्वधामाद्भुतसंस्मृतिः

इति ते कथितं सर्वं रहो यद्गोचरं मम। गोविन्दस्य तथा चास्मै कथने शपथस्तव ॥

ईश्वर उवाच।

इति श्रुत्वा वचस्तस्य सिद्धिमौपगविर्गतः। नरनारायणावासं वृन्दारण्यमुपाव्रजत्

तत्रास्तेऽद्यापि कृष्णस्य नित्यलीलाविहारवित्।

नारदेनापि पृष्टोऽहं नाब्रवं तद्रहस्यकम् ॥ २०१ ॥

प्राप्तं तथापि तेनेदं प्रकृतित्वमुपेत्य च। तुभ्यं यत्तु मया प्रोक्तं रहस्यं स्नेहकारणात्

तन्न कस्मैचिदाख्येयं त्वया भद्रे स्वयोनिवत्। इमं श्रीभगवद्भक्तमहिमाध्यायमद्भुतम्

यः पठेच्छृणुयाद्वापि स रतिं विन्दते हरौ ॥ २०४ ॥

इति श्रीपाद्मपुराणे पातालखण्डेऽर्जुन्यनुनयो नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

# पञ्चसप्ततितमोऽध्यायः

## नारदस्य स्त्रीत्वप्राप्तिवर्णनम्।

पार्वत्युवाच।

वृन्दावनरहस्यं च वहुधा कथितं विभो। केन पुण्यविशेषेण नारदः प्रकृतिं गतः ॥

ईश्वर उवाच।

एकदाश्चर्यवृत्तान्तं यया जिज्ञासितं पुरा। ब्रह्मणा कथितं गुह्यं श्रुतं कृष्णमुखाम्बुजात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नारदः पृष्टवान्मह्यं तदाऽहं प्राप्तवानिदम् । अहं वक्तुं न शक्नोमि तन्माहात्म्यं कथञ्चन ॥
किं कुर्वे शपनं तस्य स्मृत्वा सीदामि मानसे ।
इति श्रुत्वा मम वचो दुर्मनाः सोऽभवद्यदा ॥ ४ ॥
तदा ब्रह्माणमाहूय अहमादिष्टवान्प्रिये । त्वया यत्कथितं मह्यं नारदाय वदस्व तत् ॥
ब्रह्मा तदा मम वचो निशम्य सह नारदः । जगाम कृष्णसविधं नत्वा पृच्छत्तदेव ते ॥

ब्रह्मोवाच ।

किमिदं द्वात्रिंशद्वनं वृन्दारण्यं विशांपते ! ।
श्रोतुमिच्छामि भगवन्यदि योग्योऽस्मि मे वद ॥ ७ ॥

श्रीभगवानुवाच ।

इदं वृन्दावनं रम्यं मम धामैव केवलम् । यत्रेमे पशवः साक्षाद्वृक्षाः कीटा नरामराः
ये वसन्ति ममान्त्येते मृता यान्ति ममान्तिकम् ।
अत्र या गोपपत्न्यश्च निवसन्ति ममालये ॥ ९ ॥
योगिन्यस्तास्तु एवं हि मम देवाः परायणाः । पञ्चयोजनमेवं हि वनं मे देवरूपकम्
कालिन्दीयं सुषुम्नाख्या परमामृतवाहिनी । यत्र देवाश्च भूतानि वर्तन्ते सूक्ष्मरूपतः ॥
सर्वतो व्यापकश्चाहं न त्यक्ष्यामि वनं क्वचित् । आविर्भावस्तिरोभावो भवेदत्र युगेयुगे
तेजोमयमिदं स्थानमदृश्यं चर्मचक्षुषाम् । रहस्यं मे प्रभावञ्च पश्य वृन्दावनं युगे ॥
ब्रह्मादीनां देवतानां न दृश्यं तत्कथञ्चन ॥ १३ ॥

ईश्वर उवाच ।

तच्छ्रुत्वा नारदो नत्वा कृष्णं ब्रह्माणमेवच । आजगाम ह भूलोके मिश्रकं नैमिषंवनम्
तत्रासौ सत्कृतश्चापि शौनकाद्यैर्मुनीश्वरैः । पृष्टश्चाप्यागतो ब्रह्मन्कुतस्त्वमधुना वद ॥
तच्छ्रुत्वा नारदः प्राह गोलोकादागतोऽस्म्यहम् ।
श्रुत्वा कृष्णमुखाम्भोजाद् वृन्दावनरहस्यकम् ॥ १६ ॥

नारद उवाच ।

तत्र नानाविधाः प्रश्नाः कृताश्चैव पुनः पुनः । समस्ता मनवस्तत्र योगाश्चैव मयाश्रुताः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तानेव कथयिष्यामि यथाप्रश्नं च तत्त्वतः ॥ १८ ॥

शौनकाद्य ऊचुः ।

वृन्दारण्यरहस्यं हि यदुक्तं ब्रह्मणा त्वयि । तदस्माकं समाचक्ष्व यद्यस्मासु कृपा तव

नारद उवाच ।

कदाचित्सरयूतीरे दृष्टोऽस्माभिश्च गौतमः । मनस्वी च महादुःखी चिन्ताकुलितचेतनः

मां दृष्ट्वा गौतमो देवः पपात धरणीतले । उत्तिष्ठ वत्सवत्सेति तमुवाचाहमेव हि ॥

कथं भवान्मनस्वीति प्रोच्यतां यदि रोचते ॥ २२ ॥

गौतम उवाच ।

श्रुतं तव मुखादेव कृष्णतत्त्वं च तादृशम् । द्वारकाख्यं माथुराख्यं रहस्यं बहुशो मया

वृदावनरहस्यं तु नश्रुतं त्वन्मुखाम्बुजात् । यतो मे मनसः स्थैर्यं भविष्यति चलद्गुरो

नारद उवाच ।

इदं तु परमं गुह्यं रहस्यातिरहस्यकम् । पुरो मे ब्रह्मणा प्रोक्तं तादृग्वृन्दावनोद्भवम् ॥

रहस्यं वद देवेश ! वृण्दारण्यस्य मे पितः ! ।

इति जिज्ञासितं श्रुत्वा क्षणं मौनी स चाभवत् ॥ २६ ॥

ततोमाऽऽह महाविष्णुं गच्छ वत्सप्रभुं मम । मयाऽपि तत्र गन्तव्यं त्वया सह न संशयः

इत्युक्त्वा मां गृहीत्वा च गतो विष्णोश्च धामनि ।

महाविष्णौ च कथितं मयोक्तं यत्तदेव हि ॥ २८ ॥

तच्छ्रुत्वा च महाविष्णुः स्वयम्भुवमथादिशत् ।

त्वमेवादेशतो मह्यं नीत्वा वै नारदं मुनिम् ॥ २९ ॥

स्नानाय विनियुङ्क्ष्वामुं सरस्यमृतसंज्ञके । महाविष्णुसमादिष्टः स्वयम्भूर्मां तथाऽकरोत्

तत्रामृतसरश्चाहं प्रविश्य स्नानमाचरम् । तत्क्षणात्तत्सरः पारे योषितं सविधेऽभवम्

सर्वलक्षणसम्पन्ना योषिद्रूपातिविस्मिता । मां दृष्ट्वा ताः समायान्तीमपृच्छंश्च मुहुर्मुहुः

स्त्रिय ऊचुः ।

का त्वं कुतः समायाता कथमात्मविचेष्टितम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तासां प्रियकथां श्रुत्वा मयोक्तं तन्निशामय ॥ ३३ ॥
कुतः कोऽहं समायातः कथं वा योषिदाकृतिः ।
स्वप्नवद् दृश्यते सर्वं किं वा मुग्धोऽस्मि भूतले ॥ ३४ ॥
तच्छ्रुत्वा मद्वचो देवी प्रोवाच मधुरस्वनैः । वृन्दा नाम्नी पुरी चेयं कृष्णचन्द्रप्रियासदा
अहं च ललितादेवी तुर्यातीता च निष्कला । इत्युवाच महादेवी करुणासान्द्रमानसा
मां प्रत्याह पुनर्देवी समागच्छ मया सह । अन्याश्च योषितः सर्वाः कृष्णपादपरायणाः
ताश्च मां प्रवदन्त्येवं समागच्छानया सह । ततोऽनुकृष्णचन्द्रस्य चतुर्दशाक्षरो मनुः ॥
कृपया कथितस्तस्या देव्याश्चापि महात्मनः । तत्क्षणादेव तत्साम्यमलभं विविधोपमा
ताभिः सह गतास्तत्र यत्र कृष्णः सनातनः ।
केवलं सच्चिदानन्दः स्वयं योषिन्मयः प्रभुः ॥ ४० ॥
योषिदानन्दहृदयो दृष्ट्वा मां प्राब्रवीन्मुहुः ।
समागच्छ प्रिये ! कान्ते ! भक्त्या मां परिरम्भय ॥ ४१ ॥
रेमे वर्षप्रमाणेन तत्र चैव द्विजोत्तम ! । तदोक्तं रमणेशेन तां देवीं राधिकां प्रति ॥४२॥
इयं मे प्रकृतिस्तत्र चासीन्नारदरूपधृत् । नीत्वाऽमृतसरो रम्यं स्नानार्थं सन्नियोजय
तया मे रमणस्यान्ते गदितं प्रियभाषितम् । अहं च ललिता देवी राधिका या चगीयते
अहं च वासुदेवाख्यो नित्यं कामकलात्मकः ।
सत्यं योषित्स्वरूपोऽहं योषिच्चाहं सनातनी ॥ ४५ ॥
अहं च ललिता देवी पुंरूपा कृष्णविग्रहा । आवयोरन्तरं नास्ति सत्यं सत्यं हि नारद
एवं यो वेत्ति मे तत्त्वं समयं च तथा मनुम् । ससमाचारसङ्केतं ललितावत्स मे प्रियः
इदं वृन्दावनं नाम रहस्यं मम वै गृहम् । न प्रकाश्यं कदा कुत्र वक्तव्यं न पशौ क्वचित्
ततोऽनु राधिका देवी मां नीत्वा तत्सरोवरे ।
स्थित्वा सा कृष्णचन्द्रस्य चरणान्ते गता पुनः ॥ ४६ ॥
ततो निमज्जनादेव नारदोऽहमुपागतः । वीणाहस्तो गानपरस्तद्रहस्यं मुहुर्मुदा ॥ ५० ॥
स्वयम्भुवं नमस्कृत्य तत्रागां विष्णुपार्षदम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वयम्भुवा तथा दृष्टं नोक्तं किञ्चित्तदा पुनः ॥ ५१ ॥
इति ते कथितं वत्स ! सुगोप्यं च मया त्वयि ।
त्वयाऽपि कृष्णचन्द्रस्य केवलं धाम चित्कलम् ॥ ५२ ॥

गोपनीयं प्रयत्नेन मातुर्जार इव प्रियम् । यथा प्रोक्तं मया शिष्ये गौतमे सरहस्यकम्
तथा भवत्सु कार्त्स्न्येनकथितं चातिगोपितम् । यत्र कुत्र कदाचित्तु प्रकाश्यं मुनिपुङ्गवाः

तदा शापो भवेद्विप्राः कृष्णचन्द्रस्य निश्चितम् ।
इमं कृष्णस्य लीलाभिर्युतमध्यायमुत्तमम् ॥ ५५ ॥
यः पठेच्छृणुयाद्वापि स याति परमं पदम् ॥ ५६ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वृन्दावनमाहात्म्ये नारदीयानुनयो नाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

## षट्सप्ततितमोऽध्यायः

### श्रीकृष्णस्य संक्षिप्तं गद्यमयं मध्यत एव चरित्रम् ।

ईश्वर उवाच ।

अत्र शिशुपालं निहतं श्रुत्वा दन्तवक्त्रः कृष्णेन योद्धुं मथुरामाजगाम ॥१
कृष्णस्तु तच्छ्रुत्वा रथमारुह्य तेन सह मथुरामाययौ ॥ २ ॥
अथ तं हत्वा यमुनामुत्तीर्य नन्दव्रजंगत्वा पितरावभिवाद्याश्वास्य ताभ्यामालिङ्गितः-
सकलगोपवृद्धान्परिष्वज्य तानाश्वास्य बहुवस्त्राभरणादिभिस्तत्रस्थान्सर्वान्सन्त-
र्पयामास ॥ ३ ॥ कालिन्द्याः पुलिने रम्ये पुण्यवृक्षसमाकीर्णे गोपस्त्रीभि रहर्निशं
क्रीडासुखेन त्रिरात्रं तत्र समुवास ॥४॥ तत्र स्थले नन्दगोपादयः सर्वे जनाः पुत्रदार
सहिताः पशुपक्षिमृगादयोऽपिवासुदेवप्रसादेन दिव्यरूपधरा विमानसमारूढाः परमं
लोकं वैकुण्ठमवापुः ॥ ५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीकृष्णस्तु नन्दगोपव्रजौकसां सर्वेषां निरामयं स्वपदं दत्त्वा देवगणैः स्तूयमानः श्रीमतीं द्वारावतीं विवेश ॥ ६ ॥ तत्र वसुदेवोग्रसेनसङ्कर्षणप्रद्युम्नानिरुद्धाक्रूरादिभिः प्रत्यहं सम्पूजितः षोडशसहस्राष्टाधिकमहिषीभिश्च विश्वरूपधरो दिव्यरत्नमयलता गृहान्तरेषु सुरतरुकुसुमाचितश्लक्ष्णतरपर्यङ्केषु रमयामास ॥७॥

एवं हितार्थाय सर्वदेवानां समस्तभूभारविनशाय यदुवंशेऽवतीर्य सकलराक्षसविनाशं कृत्वा महान्तमुर्वीभारं नाशयित्वा नन्दव्रजद्वारिकावासिनः स्थावरजङ्गमान्भवबन्धनान्मोचयित्वा परमे शाश्वते योगिध्येये रम्ये धाम्नि संस्थाप्य नित्यं दिव्यमहिष्यादिभिःसंसेव्यमानो वासुदेवोऽखिलेषूवाच ॥ ८ ॥

असीदव्याकृतं ब्रह्मकरकाघृतयोरिव । प्रकृतिस्थो गुणान्मुक्तो द्रवीभूत्वा दिवं गतः ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वृन्दावनमाहात्म्ये पार्वतीशिवसंवादे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

# सप्तसप्ततितमोऽध्यायः

## श्रीकृष्णतीर्थवर्णनम् ।

पार्वत्युवाच ।

विस्तरेण समाचक्ष्व नामार्थपदगौरवम् । ईश्वरस्य स्वरूपं च तत्स्थानानां विभूतयः तद्विष्णोः परमं धाम व्यूहभेदास्तथा हरेः । निर्वाणाख्याहि तत्त्वेन मम सर्वं सुरेश्वर

ईश्वर उवाच ।

सारेवृन्दावने कृष्णं गोपीकोटीभिरावृतम् । तत्र गङ्गापराशक्तिस्तत्स्थमानन्दकाननम् नानासुकुसुमामोदसमीरसुरभीकृतम् । कलिन्दतनयादिव्यतरङ्गरागशीतलम् ॥ ४ ॥
सनकाद्यैर्भागवतैः संस्पृष्टं मुनिपुङ्गवैः । आह्लादिमधुरारावैर्गोवृन्दैरभिमण्डितम् ॥ ५ ॥
रम्यस्रग्भूषणोपेतैर्नृत्यद्भिर्बालकैर्वृतम् । तत्र श्रीमान्कल्पतरुर्जाम्बूनदपरिच्छदः ॥ ६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नानारत्नप्रवालाढ्यो नानामणिफलोज्ज्वलः। तस्य मूले रत्नवेदीरत्नदीधितिदीपिता

तत्र त्रयीमयं रत्नसिंहासनमनुत्तमम्।

तत्रासीनं जगन्नाथं त्रिगुणातीतमव्ययम् ॥ ८ ॥

कोटिचन्द्रप्रतीकाशं कोटिभास्करभास्वरम्। कोटिकन्दर्पलावण्यं भासयन्तं दिशोदश

त्रिनेत्रं द्विभुजं गौरंतप्तजाम्बूनदप्रभम्। श्लिष्यमाणमङ्गनाभिः सुदामानं च सर्वशः॥

ब्रह्माद्यैः सनकाद्यैश्च ध्येयं भक्तवशीकृतम्। सदाघूर्णितनेत्राभिर्नृत्यन्तीभिर्महोत्सवैः॥

चुम्बन्तीभिर्हसन्तीभिः श्लिष्यन्तीभिर्मुहुर्मुहुः।

अवाप्तगोपीदेहाभिः श्रुतिभिः कोटिकोटिभिः ॥ १२ ॥

तत्पादाम्बुजमाध्वीकचित्ताभिः परितोवृतम्। तासां तु मध्ये यादेवी तप्तचामीकरप्रभा

द्योतमाना दिशः सर्वाः कुर्वती विद्युदुज्ज्वलाः।

प्रधानं या भगवती यया सर्वमिदं ततम् ।। १४ ॥

सृष्टिस्थित्यन्तरूपा या विद्याऽविद्या त्रयी परा।

स्वरूपा शक्तिरूपा च मायारूपा च चिन्मयी ॥ १५ ॥

ब्रह्मविष्णुशिवादीनां देहकारणकारणम्। चराचरंजगत्सर्वं यन्मायापरिरम्भितम्॥

वृन्दावनेश्वरी नाम्ना राधा धात्राऽनुकारणात्।

तामालिङ्ग्य वसन्तं तं मुदा वृन्दावनेश्वरम् ॥१७॥

अन्योन्यचुम्बनाश्लेषमदावेषविघूर्णितम्। ध्यायेदेवं कृष्णदेवं स च सिद्धिमवाप्नुयात्

मन्त्रराजमिमं गुह्यं तस्य मन्त्रं च मन्त्रवित्। योजपेच्छृणुयाद्वाऽपि स महात्मासुदुर्ल्लभः

राधिका चित्ररेखा च चन्द्रा मदनसुन्दरी। श्रीप्रिया श्रीमधुमती शशिरेखा हरिप्रिया

सुवर्णशोभा संमोहा प्रेमरोमाञ्चराजिता। वैवर्ण्यस्वेदसंयुक्ता भावासक्ता प्रियंवदा

सुवर्णमालिनी शान्ता सुरा सरसिका तथा। सर्वस्त्रीजीवनादीनवत्सला विमलाशया

निपीतनामपीयूषा सा राधा परिकीर्तिता। सुदीर्घस्मितसंयुक्ता तप्तचामीकरप्रभा॥

मूर्च्छत्प्रेमनदी राधा चरणालोचनाञ्जना। मायामात्सर्यसंयुक्ता दानसाम्राज्यजीवना

सुरतोत्सवसङ्ग्रामा चित्ररेखा प्रकीर्तिता। गौराङ्गी नातिदीर्घा च सदावादनतत्परा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दैन्यानुरागनटना मूर्च्छारोमाञ्चविह्वला । हरिदक्षिणपार्श्वस्था सर्वमन्त्रप्रिया तथा ॥
अनङ्गलोभमाधुर्या चन्द्रा सा परिकीर्तिता । सलीलमन्थरगतिर्मञ्जुमुद्रितलोचना ॥२७
प्रेमधारोज्ज्वलाकीर्णा दलिताञ्जनशोभना । कृष्णानुरागरसिका रासध्वनिसमुत्सुका
अहङ्कारसमायुक्ता सुखनिन्दितचन्द्रमाः । मधुरालापचतुरा जितेन्द्रियशिरोमणिः ॥२६
सुन्दरस्मितसंयुक्ता सा वै मदनसुन्दरी । विविक्तरासरसिका श्यामाश्याममनोहरा ॥

प्रेम्णा प्रेमकटाक्षेण हरेश्चित्तविमोहिनी ।
जितेन्द्रिया जितक्रोधा सा प्रिया परिकीर्तिता ॥ ३१ ॥

सुतप्तस्वर्णगौराङ्गी लीलागमनसुन्दरी । स्मरोत्थप्रेमरोमाञ्च वैचित्रमधुराकृतिः ॥३२॥
सुन्दरस्मितसंयुक्तमुखनिन्दितचन्द्रमाः । मधुरालापचतुरा जितेन्द्रियशिरोमणिः ॥३३
कीर्तिता सा मधुमती प्रेमसाधनतत्परा । संमोहज्वररोमाञ्चप्रेमधारासमन्विता ॥३४॥
दानधूलिविनोदा च रासध्वनिमहानटी । शशिरेखा च विज्ञेया गोपालप्रेयसी सदा ॥
कृष्णात्मा सोत्तमा श्यामा मधुपिङ्गललोचना । तत्पादप्रेमसंमोहात्क्वचित्पुलकचुम्बिता
शिवकुण्डे शिवानन्दा नन्दिनी देहिकातटे । रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने

देवकीमथुरायां तु जाता मे परमेश्वरी ।
चन्द्रकूटे तथा सीता विन्ध्ये विन्ध्यनिवासिनी ॥ ३८ ॥

वाराणस्यां विशालाक्षी विमला पुरुषोत्तमे । वृन्दावनाधिपत्यं च दत्तंतस्यै प्रसीदता
कृष्णेनान्यत्र देवी तु राधा वृन्दावने वने । नित्यानन्दतनुः शौरिर्योऽशरीरीति भाष्यते
वाय्वग्निनाकभूमीनामङ्गाधिष्ठितदेवता । निरूप्यते ब्रह्मणोऽपि तथा गोविन्दविग्रहः ॥

सेन्द्रियोऽपि यथा सूर्यस्तेजसा नोपलक्ष्यते ।
तथा कान्तियुतः कृष्णः कालं मोहयति ध्रुवम् ॥ ४२ ॥
न तस्य प्राकृती मूर्तिर्मेदोमांसास्थिसम्भवा ।
योगी चैवेश्वरश्चान्यः सर्वात्मा नित्यविग्रहः ॥ ४३ ॥

काठिन्यं दैवयोगेन करकाघृतयोरिव । कृष्णस्यामिततत्त्वस्य पादपृष्ठं न देवता ॥४४॥
वृन्दावनरजोवृन्दे तत्र स्युर्विष्णुकोटयः । आनन्दकिरणे वृन्दव्याप्तविश्वकलानिधिः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुणात्मताऽऽत्मनि यथा जीवास्तत्किरणाङ्कुकाः ।
भुजद्वयवृतः कृष्णो न कदाचिच्चतुर्भुजः ॥ ४६ ॥
गोप्यैकया वृतस्तत्र परिक्रीडति सर्वदा । गोविन्द एव पुरुषो ब्रह्माद्याः स्त्रिय एव च
तत एव स्वभावोऽयं प्रकृतेर्भावईश्वरः । पुरुषः प्रकृतिश्चाद्यौ राधावृन्दावनेश्वरौ ॥४८॥
प्रकृतेर्विकृतं सर्वं विना वृन्दावनेश्वरम् ॥ ४६ ॥
समुद्भवेनैव समुद्भवेदिदं भेदं गतं तस्य विनाशतो हि ।
स्वर्णस्य नाशो न हि विद्यते तथा मत्स्यादिनाशेऽपि न कृष्णविच्युतिः ॥
त्रिगुणादिप्रपञ्चोऽयं वृन्दावनविहारिणः । ऊर्मीवाब्धेस्तरङ्गस्य यथाब्धिर्नैव जायते ॥
नराधिका समानारी न कृष्णसदृशः पुमान् । वयः परं न कैशोरात्स्वभावःप्रकृतेः परः
ध्येयं कैशोरकं ध्येयं वनं वृन्दावनं वनम् । श्याममेव परं रूपमादिदेवं परो रसः ॥५३
बाल्यं पञ्चमवर्षान्तं पौगण्डं दशमावधि । अष्टपञ्चककैशोरं सीमापञ्चदशावधि ॥५४॥
यौवनोद्भिन्नकैशोरं नवयौवनमुच्यते । तद्वयस्तस्य सर्वस्वं प्रपञ्चमितरद्वयः ॥ ५५ ॥
बाल्यपौगण्डकैशोरं वयो वन्दे मनोहरम् । बालगोपालगोपालं स्मर गोपालरूपिणम्
वन्दे मदनगोपालं कैशोराकारमद्भुतम् । यमाहुर्यौवनोद्भिन्नश्रीमन्मदनमोहनम् ॥५७॥
अखण्डातुलपीयूषरसानन्दमहार्णवम् । जयति श्रीपतेर्गूढं वपुः कैशोररूपिणः ॥ ५८ ॥
एकमप्यव्ययं पूर्वं बल्लवीवृन्दमध्यगम् ।
ध्यानगम्यं प्रपश्यन्ति रुचिभेदात्पृथग्धियः ॥ ५६ ॥
यन्नखेन्दुरुचिर्ब्रह्मध्येयं ब्रह्मादिभिः सुरैः । गुणत्रयमतीतं तं वन्दे वृन्दावनेश्वरम् ॥६०
वृन्दावनपरित्यागो गोविन्दस्य न विद्यते । अन्यत्र यद्वपुस्तत्तु कृत्रिमं तन्न संशयः ॥
सुलभं व्रजनारीणां दुर्लभं तन्मुमुक्षुणाम् । तं भजे नन्दसुनुं यन्नखतेजः परं मनुः ॥

पार्वत्युवाच ।

भुक्तिमुक्तिस्पृहा यावत्पिशाची हृदि वर्त्तते । तावत्प्रेमसुखस्यात्र कथमभ्युदयो भवेत्

ईश्वर उवाच ।

साधुपृष्टं त्वया भद्रे ! यन्मे मनसिवर्त्तते । तत्सर्वं कथयिष्यामि सावधानानिशामय ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्मृत्वा गुणान्स्मरन्नामगानं वा मनरञ्जनम् । बोधयत्यात्मनात्मानंसततंप्रेम्णिलीयते
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वृन्दावनमाहात्म्ये पार्वतीशिवसंवादे
श्रीकृष्णरूपवर्णनं नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

———

## अष्टसप्ततितमोऽध्यायः

### वैष्णवशुद्धिपूर्वकं शालग्रामशिलालक्षणादि कथनम् ।

पार्वत्युवाच ।

वैष्णवानां च यद्धर्मं सर्वं तथ्यं च मे वद ।
यत्कृत्वा मानवाः सर्वे भवाम्भोधिं तरन्ति हि ॥ १ ॥

ईश्वर उवाच ।

अथ द्वादशधा शुद्धिर्वैष्णवानामिहोच्यते । गृहोपलेपनं चैव तथानुगमनं हरेः ॥ २ ॥
भक्त्या प्रदक्षिणा चैव पादयोः शोधनं पुनः । पूजाऽथपत्रपुष्पाणां भक्त्यैवोत्तोलनं हरेः
करयोः सर्वशुद्धीनामियं शुद्धिर्विशिष्यते । तन्नामकीर्तनं चैव गुणानामपि कीर्त्तनम्
भक्त्या श्रीकृष्णदेवस्य वचसःशुद्धिरिष्यते । तत्कथा श्रवणञ्चैव तस्योत्सवनिरीक्षणम्
श्रोत्रयोर्नेत्रयोश्चैव शुद्धिःसम्यगिहोच्यते । पादोदकं च निर्माल्यंमालानामपिधारणम्

उच्यते शिरसः शुद्धिः प्रणतस्य हरेः पुरः ।
आघ्राणं तस्य पुष्पादेर्निर्माल्यस्य तथा प्रिये ॥ ७ ॥
विशुद्धिः स्यादन्तरस्य घ्राणस्यापि विधीयते ।
यत्र पुष्पादिकं यच्च कृष्णपादयुगार्पितम् ॥ ८ ॥

तदेकं पावनंलोके तद्धि सर्वंविशोधयेत् । पूजा च पञ्चधा प्रोक्ता तासां भेदंश्शृणुष्व मे
अभिगमनमुपादानं योगः स्वाध्याय एव च । इज्या पञ्चप्रकारार्चा क्रमेण कथयामि ते
तत्राभिगमनं नाम देवतास्थानमार्जनम् । उपलेपं च निर्माल्यं दूरीकरणमेव च ॥११

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपादानं नाम गन्धपुष्पादिचयनं तथा। योगो नाम स्वदेवस्य स्वात्मनैवात्मभावना
स्वाध्यायो नाम मन्त्रार्थानुसन्धापूर्वको जपः। सूक्तस्तोत्रादिपाठश्च हरेःसङ्कीर्त्तनंतथा

तत्त्वादिशास्त्राभ्यासश्च स्वाध्यायः परिकीर्तितः।
इज्या नाम स्वदेवस्य पूजनं च यथार्थतः॥ १४॥
इति पञ्चप्रकारार्चा कथिता तव सुव्रते!।
सार्ष्टिसामीप्यसालोक्य सायुज्यसारूप्यदा क्रमात्॥ १५॥
प्रसङ्गात्कथयिष्यामि शालग्रामशिलार्चनम्।
केशवादेश्चतुर्बाहोर्दक्षिणोर्ध्वकरक्रमात्॥ १६॥

शङ्खचक्रगदापद्मी केशवाख्यो गदाधरः। नारायणःपद्मगदाचक्रशङ्खायुधैः क्रमात्॥१७॥
माधवश्चक्रशङ्खाभ्यां पद्मेनगदयाभवेत्। गदाब्जशङ्खचक्री च गोविन्दाख्यो गदाधरः
पद्मशङ्खारिगदिने विष्णुरूपाय ते नमः। सशङ्खाब्जगदाचक्रमधुसूदनमूर्तये ॥ १९॥
नमो गदारिशङ्खाब्जयुक्तत्रिविक्रमाय च। सारिकौमोदकीपद्मशङ्ख वामनमूर्त्तये॥२०॥
चक्राब्जशङ्खगदिने नमः श्रीधरमूर्त्तये। हृषीकेशसारिगदाशङ्खपद्मिन्नमोऽस्तु ते ॥२१॥
साब्जशङ्खगदाचक्रपद्मनाभस्वमूर्त्तये। दामोदर! शङ्खगदाचक्रपद्मिन्नमोऽस्तुते ॥२२॥
शङ्खाब्जचक्रगदिने नमः सङ्कर्षणाय च। सारिशङ्खगदाब्जाय वासुदेव! नमोऽस्तुते ॥
शङ्खचक्रगदाब्जाय धृतप्रद्युम्नमूर्त्तये। नमोऽनिरुद्धाय गदाशङ्खाब्जारिविदारिणे॥ २४॥
साब्जशङ्खगदाचक्रपुरुषोत्तममूर्त्तये। नमोऽधोक्षजरूपाय गदाशङ्खारिपद्मिने॥ २५॥
नृसिंहमूर्त्तये पद्मगदाशङ्खारिधारिणे। पद्मारिशङ्खगदिने नमोऽस्त्वच्युतमूर्त्तये॥२६॥
सगदाब्जारिशङ्खाय नमः श्रीकृष्णमूर्त्तये। शालग्रामशिलाद्वारगतलग्नद्विचक्रधृत्॥२७॥
शुक्लाभरेखः शोभाढ्यः सदेवः श्रीगदाधरः। लग्नद्विचक्रोरक्ताभः पूर्वभागस्तु पुष्कलः॥
सङ्कर्षणोऽथ प्रद्युम्नः सूक्ष्मचक्रस्तु पीतकः। सुदीर्घसुपरिच्छिद्रो ह्यनिरुद्धस्तु वर्त्तुलः
नीलोद्वारे त्रिरेखश्च अथ नारायणोऽसितः। मध्ये गदाकृती रेखा नाभिपद्मंमहोन्नतम्
पृथुचक्रो नृसिंहो यः कपिलोयस्त्रिबिन्दुकः। अथवा पञ्चबिन्दोस्तु पूजनंब्रह्मचारिणः
वराहः सत्रिलिङ्गो यो विषमद्वयचक्रकः। नीलस्त्रिरेखः स्थूलोऽथकूर्ममूर्तिःसबिन्दुकः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृष्णः सवर्तुलावर्त्तपाण्डुरो धृतपृष्ठकः । श्रीधरः पञ्चरेखश्च वनमाली गदाङ्कितः ॥३३
वामनोवर्तुलो नाम मध्यश्चक्रः सनीलकः । नानावर्णानेकमूर्तिर्नागभोगी त्वनन्तकः ॥
स्थूलो दामोदरो नीलो मध्ये चक्रः सनीलकः । सङ्कर्षणद्वारकोऽव्यादथब्रह्मासुलोहितः
सुदीर्घरेखासुषिर एकचक्राम्बुजःपृथुः । पृथुचक्रः स्थूलछिद्रः कृष्णोबिन्दुश्च बिन्दुमान्

हयग्रीवोऽङ्कुशाकारः पञ्चरेखः सकौस्तुभः ।
वैकुण्ठोऽमलवद्भाति एकचक्रमयोऽसितः ॥ ३७ ॥

मत्स्यो दीर्घाम्बुजाकारो दीर्घरेखश्चपाण्डुरः। रामचक्रो दक्षरेखो यःश्यामःसत्रिविक्रमः
शालग्रामद्वारकायां(?) स्थिताय गदिने नमः । एकेन लक्षितो योऽव्याद्गदाधारीसुदर्शनः
लक्ष्मीनारायणो द्वाभ्यां त्रिभिश्चैव त्रिविक्रमः। चतुर्भिश्च चतुर्व्यूहो वासुदेवश्चपञ्चभिः
प्रद्युम्नःषड्भिरेवाव्यात्सङ्कर्षणश्च सप्तभिः। पुरुषोत्तमोऽष्टभिश्च स्यान्नवव्यूहोनवोहितः
दशावतारो दशभिरनिरुद्धोऽवतादथ । द्वादशात्मा द्वादशभिरत ऊर्ध्वमनन्तकः ॥४२॥
ब्रह्मा चतुर्मुखोदण्डी कमण्डलुस्रगुन्नतः । महेश्वरः पञ्चवक्त्रो दशबाहुर्वृषध्वजः ॥
यथायुधस्तथा गौरी चण्डिका च सरस्वती । महालक्ष्मीर्मातरश्च पद्महस्तो दिवाकरः

गजास्यश्च गजस्कन्धः षण्मुखोऽनेकधा गणाः ।
एते स्थिताः स्थापिताः स्युः प्रासादे वाऽथपूजिताः ॥ ४५ ॥
धर्मार्थकाममोक्षा हि प्राप्यन्ते पुरुषेण च ॥ ४६ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शालग्रामनिर्णयो नामाष्टसप्ततितमोऽध्यायः

---

# एकोनाशीतितमोऽध्यायः

## वैष्णवानां तिलकधारणाद्यनेकविधिवर्णनम् ।

ईश्वर उवाच ।

शालग्रामे मणौ यन्त्रे मण्डले प्रतिमासु च । नित्यं तु श्रीहरेःपूजा केवले भवनेनतु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गण्डक्यामेकदेशे तु शालग्रामस्थलं महत् । पाषाणं तद्भवं यत्तु शालग्राममिति स्थितम्
शालग्रामशिला स्पर्शात्कोटिजन्माघनाशनम् ।
किं पुनः पूजनं तत्र हरेः सान्निध्यकारणम् ॥ ३ ॥
शालग्रामैकयजनाच्छतलिङ्गीफलं लभेत् । बहुभिर्जन्मभिः पुण्यैर्यदिकृष्णशिलां लभेत्
गोष्पदेन च चिह्नेन जनुस्तेन समाप्यते ।
आदौ शिलां परीक्षेत स्निग्धां श्रेष्ठां च मेचकाम् ॥ ५ ॥
आकृष्णा मध्यमा प्रोक्ता मिश्रामिश्रफलप्रदा । सदा काष्ठे स्थितो वह्निर्मथनेन प्रकाश्यते
यथा तथा हरिर्व्यापी शालग्रामे प्रतीयते ।
प्रत्यहं द्वादश शिलाः शालग्रामस्य योऽर्चयेत् ॥ ७ ॥
द्वारवत्याः शिलायुक्ताः स वैकुण्ठे महीयते । शालग्रामशिलायां तु गह्वरं लक्षते नरः
पितरस्तस्य तिष्ठन्ति तृप्ताः कल्पान्तकं दिवि । वैकुण्ठभवनं तत्र यत्र द्वारावती शिला ॥
मृतो विष्णुपुरं याति तत्तीर्थं योजनत्रयम् । जपः पूजा च होमश्च सर्वं कोटिगुणंभवेत्
मनस्कामसमाभीष्टं क्रोशमात्रं नसंशयः । कीटकोऽपि मृतो याति वैकुण्ठभवनं यतः ॥
शालग्रामशिलायां यो मूल्यमुद्धाटयेन्नरः । विक्रेता चानुमन्ता च यः परीक्षानुमोदकः
सर्वे ते नरकं यान्ति यावत्सूर्य्यश्च सम्प्लवः। अतस्तद्वर्जयेद्देवि चक्रक्रयणविक्रयम् ॥१३॥
शालग्रामोद्भवो देवो यो देवोद्वारकोद्भवः । उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः
द्वारकोद्भवचक्राढ्यो बहुचक्रेण चिह्नितः । चक्रासनशिलाकारचित्स्वरूपो निरञ्जनः ॥
नमोऽस्त्वोङ्काररूपायसदानन्दस्वरूपिणे । शालग्राममहाभाग भक्तस्यानुग्रहं कुरु ॥१६॥
तवानुग्रहकामस्य ऋणग्रस्तस्य मे प्रभो । अतः परं प्रवक्ष्यामि तिलकस्य विधिं मुदा
यच्छ्रुत्वा मानवाः सर्वे विष्णुसारूप्यमाप्नुयुः ।
ललाटे केशवं विद्यात्कंण्ठे श्रीपुरुषोत्तमम् ॥ १८ ॥
नाभौ नारायणं देवं वैकुण्ठं हृदये तथा । दामोदरं वामपार्श्वे दक्षिणे च त्रिविक्रमम्
मूर्ध्नि चैव हृषीकेशं पद्मनाभं च पृष्ठतः । कर्णयोर्यमुनां गङ्गां बाह्वोः कृष्णं हरिं तथा
यथास्थानेषु तुष्यन्ति देवता द्वादश स्मृताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वादशैतानि नामानि कर्तव्ये तिलके पठेत् ॥ २१ ॥
सर्वपापविशुद्धात्मा विष्णुलोकं सगच्छति । ऊद्र्ध्वपुण्ड्रमूद्र्ध्वरेखं ललाटे यस्य दृश्यते
चण्डालोऽपि स शुद्धात्मा पूज्य एव न संशयः ।
यस्योद्र्ध्वपुण्डं दृश्येत न ललाटे नरस्य हि ॥२३॥
तद्दर्शनं न कर्त्तव्यं दृष्ट्वा सूर्यं निरीक्षयेत् । त्रिपुण्ड्रं यस्य विप्रस्य ऊद्र्ध्वपुण्ड्रं नदृश्यते
तं दृष्ट्वाऽप्यथवा स्पृष्ट्वा सचैलं स्नानमाचरेत् ।
सान्तरालं प्रकर्त्तव्यं पुण्ड्रं हरिपदाकृति ॥ २५ ॥
निरन्तरालं यः कुर्यादूद्र्ध्वपुण्ड्रं द्विजाधमः । ललाटे तस्य सततं शुनः पादो न संशयः
नासादिकेशपर्यन्तमूद्र्ध्वपुण्ड्रं सुशोभनम् । मध्ये छिद्रसमायुक्तं तं विद्याद्धरिमन्दिरम्
वामभागे स्थितो ब्रह्मा दक्षिणे तु सदाशिवः ।
मध्ये विष्णुं विजानीयात्तस्मान्मध्यं न लेपयेत् ॥ २८ ॥
वीक्ष्यादर्शे जले वापि यो विदध्यात्प्रयत्नतः ।
ऊद्र्ध्वपुण्ड्रं महाभागः स याति परमां गतिम् ॥ २९ ॥
अग्निरापश्च वेदाश्च चन्द्रादित्यौ तथाऽनिलः ।
विप्राणां नित्यमेते हि कर्णे तिष्ठन्ति दक्षिणे ॥ ३० ॥
गङ्गा च दक्षिणे श्रोत्रे नासिकायां हुताशनः । उभयोरपिसंस्पर्शात्तत्क्षणादेव शुध्यति
कृत्वा चैवोदकं शङ्खे वैष्णवानां महात्मनाम् ।
तुलसीमिश्रितं दद्यात्पिबेन्मूर्ध्नाऽभिवन्दयेत् ॥ ३२ ॥
प्राश्नीयात्प्रोक्षयेद्देहं पुत्रमित्रपरिग्रहम् । विष्णोः पादोदकं पीतं कोटिजन्माघनाशनम्
तदेवाष्टगुणं पापंभूमौ बिन्दुनिपातनात् । जलशङ्खं करे कृत्वास्तुत्वा नत्वा प्रदक्षिणम्
सततं धार्यते वारि तेनाप्तं जन्मनः फलम् ।
शङ्खो यस्य गृहे नास्ति घण्टा वा गरुडान्विता ॥ ३५ ॥
पुरतो वासुदेवस्य न स भागवतः कलौ । यानैर्वा पादुकाभिर्वा यानं भगवतो गृहे ॥
देवोत्सवेषु सेवा च अप्रणामस्तदग्रतः । उच्छिष्टे चैव चाशौचे भगवद्वन्दनादिकम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकहस्तप्रणामश्च तत्पुरस्तात्प्रदक्षिणम् । पादप्रसारणश्चाग्रे तथा पर्यङ्कसेवनम् ॥३८॥
शयनं भक्षणं चापि मिथ्याभाषणमेव च । उच्चैर्भाषामिथो जल्पो रोदनानि च विग्रहः
विग्रहानुग्रहौ चैव स्त्रीषु साकूतभाषणम् । कम्बलावरणं चैव परनिन्दा परस्तुतिः ॥

अश्लीलभाषणश्चैव अधोवायुविमोक्षणम् ।
शक्तौ गौणोपचारश्चाप्यनिवेदितभक्षणम् ॥ ४१ ॥

तत्तत्कालोद्भवानां च फलादीनामनर्पणम् । विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनस्य यत्
स्पष्टीकृत्याशनं चैव परनिन्दा परस्तुतिः । गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा ॥

अपराधास्तथा विष्णोर्द्वात्रिंशत्परिकीर्तिताः ॥ ४४ ॥

"अपराधसहस्राणि क्रियन्तेऽहर्निशं मया । तवाहमिति मां मत्वा क्षमस्व मधुसूदन"
इति मन्त्रं समुच्चार्य प्रणमेद्दण्डवद्भुवि । अपराधसहस्राणि क्षमते सर्वदा हरिः ॥४६॥
सायंप्रातर्द्विजातीनां श्रुत्युक्तमशनं तथा । विष्णुभक्तावशिष्टस्य दिनपापात्प्रमुच्यते ॥

अन्नं ब्रह्मा रसो विष्णुः खादयेन्मां समुच्चरन् ।
एवं ज्ञात्वा तु यो भुङ्क्ते सोऽन्नदोषैर्न लिप्यते ॥ ४८ ॥

अलावुं वर्त्तुलाकारं मसूरं च सवल्कलम् । तालं शुक्लं च वृन्ताकं न खादेद्वैष्णवो नरः
वटाश्वत्थार्कपत्रेषु कुम्भीतिन्दुकपत्रयोः । कोविदारे कदम्बे च न खादेद्वैष्णवो नरः ॥

श्रावणे वर्जयेच्छाकं दधि भाद्रपदे त्यजेत् ।
आश्विने मासि दुग्धं च कार्तिके चामिषं त्यजेत् ॥ ५१ ॥

दग्धमन्नं तु जम्बीरं यद्विष्णोरनिवेदितम् । वीजपूरं च शाकं च प्रत्यक्षलवणं तथा ॥

यदि दैवाच्च भुञ्जीत तदा तन्नाम संस्मरेत् ।
हैमन्तिकं सिता स्विन्नं धान्यं मुद्गास्तिला यवाः ॥५३॥

कलापकङ्गुनीवाराः शाकं च हिलमोचिका । कालशाकं च वास्तूकं मूलकं रक्तेतर ॥
लवणे सिन्धुसामुद्रे गव्ये च दधिसर्पिषी । पयोऽनुद्धृतसारं च पनसाम्रहरीतकी ॥
पिप्पलीजीरकं चैव नागरङ्गकतिन्तिडी । कदली लवली धात्री फलान्यगुडमैक्षवम् ॥
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते । तुलसीपत्रपुष्पाद्यैर्माल्यं वहति यो नरः ॥५७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विष्णुं तमपि जानीयात्सत्यं सत्यं न संशयः ।
धात्रीवृक्षं समारोप्य विष्णुतुल्यो भवेन्नरः ॥ ५८ ॥
कुरुक्षेत्रं विजानीयात्सार्द्धं हस्तशतत्रयम् । तुलसीकाष्ठघटितै रुद्राक्षाकारकारितैः ॥
निर्मितां मालिकां कण्ठे निधायार्चनमारभेत् ।
तथाऽऽमलकमालां च सम्यक्पुष्करमालिकाम् ॥ ६० ॥
कण्ठे मालां च यत्नेन धारयेद्विष्णुपूजकः । निर्माल्यं तुलसीमालां शिरस्यपि च धारयेत्
निर्माल्यचन्दनेनाङ्गमङ्कयेत्तस्य नामभिः । ललाटे च गदा धार्या मूर्ध्नि चापं शरस्तथा
नन्दकं चैव हृन्मध्ये शङ्खं चक्रं भुजद्वये । शङ्खचक्रान्वितो विप्रः श्मशाने म्रियते यदि ॥
प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य निश्चिता ।
यो धृत्वा तुलसीपत्रं शिरसा विष्णुतत्परः ॥ ६४ ॥
करोति सर्वकार्याणि फलमाप्नोति चाक्षयम् ।
तुलसीकाष्ठमालाभिर्भूषितः कर्म आचरन् ॥ ६५ ॥
पितॄणां देवतानां च कृतं कोटिगुणं भवेत् । निवेद्य केशवे मालां तुलसीकाष्ठनिर्मिताम्
वहते यो नरो भक्त्या तस्य नश्यति पातकम् । पाद्यादिभिरथाभ्यर्च्य इमं मन्त्रमुदीरयेत्
या दृष्टा निखिलाघसङ्घशमनी स्पृष्टा वपुः पावनी,
रोगाणामभिवन्दिता निरसनी सिक्तान्तकत्रासिनी ।
प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता,
न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः ॥ ६८ ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वृन्दावनमाहात्म्ये देवीश्वरसंवादे
तिलकादिनिर्णयो नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अशीतितमोऽध्यायः

## कलियुगे हरिनाममाहात्म्यवर्णनम् ।

पार्वत्युवाच ।

घोरे कलियुगे प्राप्ते विषयग्राहसङ्कुले । पुत्रदारधनाद्यार्त्तैस्तत्कथं धार्यते विभो ! ॥
तदुपायं महादेव ! कथयस्व कृपानिधे ! ॥ १ ॥

ईश्वर उवाच ।

हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् । हरे राम हरेकृष्ण कृष्णकृष्णेति मङ्गलम् ॥ २ ॥
एवं वदन्ति ये नित्यं न हि तान्बाधते कलिः ।
अन्तरान्तरकर्माणि कृत्वा नामानि च स्मरेत् ॥ ३ ॥
कृष्णकृष्णेति कृष्णेतिं कृष्णेत्याह पुनः पुनः ।
मन्नाम चैव त्वन्नाम योजयित्वा व्यतिक्रमात् ॥४॥
सोऽपि पापात्प्रमुच्येत तूलराशेरिवानलः । जयाद्येतत्त्वया वाऽप्यथवा श्रीशब्दपूर्वकम्
तच्च मे मङ्गलं नाम जपन्पापात्प्रमुच्यते ।
दिवा निशि च सन्ध्यायां सर्वकालेषु संस्मरेत् ॥ ६ ॥
अहर्निशं स्मरन्नामं कृष्णं पश्यति चक्षुषा । अशुचिर्वा शुचिर्वाऽपि सर्वकालेषु सर्वदा ॥
नामसंस्मरणादेव संसारान्मुच्यते क्षणात् । नानापराधयुक्तस्य नामापि च हरत्यघम्
यज्ञव्रततपोदानं साङ्गं नैव कलौयुगे । गङ्गास्नानं हरेर्नामनिरपायमिदं द्वयम् ॥ ९ ॥
हत्यायुतं पापसहस्रमुग्रं गुर्वङ्गनाकोटिनिषेवणञ्च ।
स्तेयान्यथान्यानि हरेः प्रियेण गोविन्दनाम्ना न च सन्ति भद्रे ! ॥ १० ॥
अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ ११ ॥
नामसंस्मरणादेव तथा तस्यार्थचिन्तनात् । सौवर्णीं राजतींवापि तथा पैष्टींस्रगाकृतिम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पादयोश्चिह्नितां कृत्वा पूजां चैव समारभेत् ।
दक्षिणस्य पदोऽङ्गुष्ठमूले चक्रं बिभर्ति यः ॥ १३ ॥
तत्र नम्रजनस्यापि संसारच्छेदनाय च । मध्यमाङ्गुलिमूले तु धत्ते कमलमच्युतः ॥
ध्यातृचित्तद्विरेफाणां लोभनायातिशोभनम् ।
पद्मस्याधो ध्वजं धत्ते सर्वानर्थजयध्वजम् ॥ १५ ॥
कनिष्ठामूलतो वज्रं भक्तपापौघभेदनम् । पार्श्वमध्येऽङ्कुशं भक्तचित्तेभमदकारणम् ॥
भोगसम्पन्मयं धत्ते यवमङ्गुष्ठपर्वणि । मूले गदां च पापाद्रिभेदनीं सर्वदेहिनाम् ॥१७
सर्वविद्याप्रकाशाय धत्ते स भगवानजः । पद्मादीन्यपि चिह्नानि तत्र दक्षेण यत्पुनः ॥
वामपादे वसेत्सोऽयं बिभर्ति करुणानिधिः । तस्माद्गोविन्दमाहात्म्यमानन्दरससुन्दरम्
शृणुयात्कीर्त्तयेन्नित्यं स निर्मुक्तो न संशयः ।
मासकृत्यं प्रवक्ष्यामि विष्णोः प्रीतिकरं परम् ॥ २० ॥
ज्येष्ठे तु स्नापनं कुर्याच्छ्रीविष्णोर्यत्नतः शुचिः । दैनन्दिनं तु दुरितं पक्षमासर्त्तुवर्षजम्
ब्रह्महत्यासहस्राणि ज्ञाताज्ञातकृतानि च । स्वर्णस्तेयसुरापानगुरुतल्पायुतानि च ॥२२
कोटिकोटिसहस्राणि ह्युपपापानि यानि च ।
सर्वाण्यथ प्रणश्यन्ति पौर्णमास्यां तु वासरे ॥ २३ ॥
आसिञ्चेदच्युतं मूर्ध्नि तदैतत्कलशोदकम् । पुरुषसूक्तमन्त्रेण पावमानीभिरेव च ॥२४
नालिकेरोदकेनाथ तथा तालफलाम्बुना । रत्नोदकेन गन्धेन तथा पुष्पोदकेन च ॥२५
पञ्चोपचारैराराध्य यथा विभवविस्तरैः । घं घण्टायै नम इति घण्टावाद्यं प्रदापयेत् ॥
पतितस्य महाध्वानन्यस्तपातकसञ्चये । पाहि मां पापिनं घोरसंसारार्णवपातिनम् ॥
य एवं कुरुते विद्वान्ब्राह्मणः श्रोत्रियः शुचिः ।
सर्वपापैः प्रमुच्येत विष्णुलोकं स गच्छति ॥ २८ ॥
आषाढशुक्लैकादश्यां कुर्यात्स्वापमहोत्सवम् ।
आषाढे च रथं कुर्याच्छ्रावणे श्रवणाविधिम् ॥ २९ ॥
भाद्रे च जन्मदिवस उपवासपरो भवेत् । प्रसुप्तस्य परीवर्तमाश्विने मासिकारयेत् ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उत्थानं श्रीहरेः कुर्यादन्यथा विष्णुद्रोहकृत् । शुभे चैवाश्विनेमासि महामायां च पूजयेत्

सौवर्णीं राजतीं वाऽपि विष्णुरूपां बलिं विना ।

हिंसाद्वेषौ न कर्तव्यौ धर्मात्मा विष्णुपूजकः ॥ ३२ ॥

कार्त्तिके पुण्यमासे च कामतः पुण्यमाचरेत् । दामोदराय दीपं च प्रांशुस्थाने प्रदापयेत्

सप्तवर्तिप्रमाणेन दीपः स्याच्चतुरङ्गुलः । पक्षान्ते च प्रकर्तव्या दीपमालाबलिः शुभा ॥

मार्गशीर्षे सितेपक्षे षष्ठ्यां च सितवस्त्रकैः । पूजयेज्जगदीशं च ब्रह्माणं च विशेषतः ॥

पौषे पुष्पाभिषेकं च वर्जयेच्चन्दनश्लथम् ।

सङ्क्रान्त्यां माघमासे च साधिवासिततण्डुलान् ॥ ३६ ॥

नैवेद्यं विष्णवे दद्यादिमंमन्त्रमुदीरयेत् । ब्राह्मणान्भोजयेद्भक्त्या देवदेवपुरःस्थितान् ॥

अभ्यर्च्य भगवद्भक्तान्द्विजांश्च भगवद्धिया । एकस्मिन्भोजिते भक्ते कोटिर्भवति भोजिता

विप्रभोजनमात्रेण व्यङ्गं साङ्गं ध्रुवं भवेत् । पञ्चम्यां शुक्लपक्षे तु स्नापयित्वा च केशवम्

पूजयित्वा विधानेन चूतपल्लवसंयुतैः । फलचूर्णैश्च विविधैर्वासितैः पटसाधितैः ॥४०

काननं रमणीयं च प्रदीप्तं दीपदीपितम् । द्राक्षेक्षुरम्भाजम्बीरनागरङ्गं च पूगकम् ॥

नालिकेरं च धात्रीं च पनसं च हरीतकीम् । अन्यैश्च वृक्षखण्डैश्च सर्वर्तुकुसुमान्वितैः

अन्यैश्च विविधैश्चैव फलपुष्पसमन्वितैः । वितानैः कुसुमोद्दामैर्वारिपूर्णघटैस्तथा ॥

चूतशाखोपशाखाभिः शोभितंछत्रचामरैः । जयकृष्णेतिसंस्मृत्यप्रदक्षिणपुरस्सरम् ॥

विशेषतःकालयुगेदोलोत्सवोविधीयते । फाल्गुने च चतुर्दश्यामष्टमे यामसंज्ञके ॥४५॥

अथवा पौर्णमास्यां तु प्रतिपत्सन्धिसञ्ज्ञके । पूजयेद्विधिवद्भक्त्या फलगुचूर्णैश्चतुर्विधैः

सितरक्तैर्गौरपीतैः कर्पूरादिविमिश्रितैः । हरिद्रारागयोगाच्च रङ्गरूपैर्मनोहरैः ॥ ४७ ॥

अन्यैर्वारङ्गरूपैश्च प्रीणयेत्परमेश्वरम् । एकादश्यां समारभ्य पञ्चम्यां तं समापयेत् ॥

पञ्चाहानित्र्यहानि वा दोलोत्सवो विधीयते ।

दक्षिणाभिमुखं कृष्णं दोलमानं सकृन्नराः ॥ ४९ ॥

दृष्ट्वाऽपराधनिचयैर्मुक्तास्तेनात्र संशयः । निक्षिप्य जलपात्रे च मासि माधवसंज्ञके ॥

सौवर्णपात्रे रौप्ये वा ताम्रे वाप्यथ मृन्मये । तोयस्थंयोऽर्चयेद्देवंशालग्रामसमुद्भवम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रतिमां वा महाभागे तस्य पुण्यं न गण्यते । दमनारोपणंकृत्वा श्रीविष्णौ च समर्पयेत्
वैशाखे श्रावणे भाद्रे कर्तव्यं वा तदर्पणम् । पूर्वे पूर्वे तु वातस्थे दमनादिषु कर्मसु ॥
प्रकर्तव्यं विधानेन अन्यथा निष्फलं भवेत् । वैशाखे च तृतीयायां जलमध्ये विशेषतः
अथवा मण्डले कुर्यान्मण्डपे वा वृहद्वने । सुगन्धचन्दने नाङ्गं सुपुष्टं च दिनेदिने ॥५५॥
यथा प्रयत्नतः कुर्यात्कृशाङ्गस्येव पुष्टिदम् । चन्दनागुरुह्रीवेरकृष्णकुङ्कुमरोचना ॥५६॥

जटामांसीमुरा चैव विष्णोर्गन्धाष्टकं विदुः ।
तैस्तैर्गन्धयुतैश्चापि विष्णोरङ्गानि लेपयेत् ॥ ५७ ॥

घृष्टं च तुलसीकाष्ठं कर्पूरागुरुयोगतः । अथवा केसरैर्योज्यं हरिचन्दनमुच्यते ॥ ५८ ॥

यात्राकाले च ये कृष्णं भक्त्या पश्यन्ति मानवाः ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥ ५९ ॥

सुगन्धमिश्रितैस्तोयैर्देवदेवं गलन्ति ये । अथवा पुष्पमध्ये तु स्थापयेज्जगदीश्वरम् ॥
वृन्दावनं तत्र गत्वा उपस्कृत्य फलानि च । विष्णुभक्तेन योग्येन भोजयेत्तदशेषतः ॥

नालिकेरफलं बीजकोशं चोद्धृत्य दापयेत् ।
घोण्टाफलं च पनसं कोशमुद्धृत्य दापयेत् ॥ ६२ ॥

दध्ना विमिश्रितं चान्नं घृतेनाप्लुत्य दापयेत् । पाचितं पिष्टकं पूपमष्टादशघृतेन च ॥
तैलैश्च तिलसंमिश्रैः फलं पक्वं प्रदापयेत् । यद्यदेवात्मनः प्रीतं तत्तदीशाय दापयेत् ॥
दत्त्वा नैवेद्य वस्त्रादिनाददीतकथञ्चन । त्यक्तं च विष्णुमुद्दिश्य तद्भक्तेभ्यो विशेषतः ॥
इति ते कथितं किञ्चित्समासेन महेश्वरि । गोपनीयं प्रयत्नेन स्वयोनिरिव पार्वति ॥

श्रीकृष्णरूपगुणवर्णनशास्त्रवर्गबोधाधिकार इह चेदलमन्यपाठैः ।
तत्प्रेमभावरसभक्तिविलासनामहारेषु चेत्खलु मनः किमु कामिनीभिः ॥
तच्चेतसा प्रभजतां व्रजबालकेन्द्रं वृन्दावनक्षितितलं यमुनाजलं च ।
तल्लोकनाथपदपङ्कजधूलिमिश्रलिप्तं वपुः किल वृथाऽगरुचन्दनाद्यैः ॥६८॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे उमामहेश्वरसंवादे
वृन्दावनमाहात्म्येऽशीतितमोऽध्यायः ॥ ८० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# एकाशीतितमोऽध्यायः

## श्रीकृष्णमन्त्रार्थवर्णनम् ।

ऋषय ऊचुः ।

सूत जीवचिरंसाधो श्रीकृष्णरितामृतम् । त्वया प्रकाशितं सर्वं भक्तानां भवतारणम्

श्रीकृष्णलीलां निखिलां ब्रूहि दैनन्दिनीं प्रभो ।

ययाऽऽकर्णितया साधो कृष्णे भक्तिर्विवर्द्धते ॥२॥

गुरोः शिष्यस्य मन्त्रस्य विधानं लक्षणं पृथक् ।

वदास्माकं महाभाग त्वं हि नः परमः सुहृत् ॥ ३ ॥

सूत उवाच ।

एकदा यमुनातीरे समासीनं जगद्गुरुम् । नारदः प्रणिपत्याह देवदेवं सदाशिवम् ॥

नारद उवाच ।

देवदेव ! महादेव ! सर्वज्ञ ! जगदीश्वर! । भगवन्धर्मतत्त्वज्ञ ! कृष्णमन्त्रविदांवर ! ॥५

कृष्णमन्त्रा मया लब्धास्त्वत्तो ये च पितुः परे ।

ते सर्वे साधिता यत्नान्मन्त्रराजादयो मया ॥ ६ ॥

वहुवर्षसहस्रैस्तु शाकमूलफलाशिना । शुष्कपर्णाम्बुवाय्वादिभोजिना च निराशिना ॥

स्त्रीणां सन्दर्शनालापवर्जिना भूमिशायिना ।

कामादिषड्गुणं जित्वा बाह्येन्द्रियनियम्यता ॥ ८ ॥

एवं कृतेऽपि नैवात्मा सन्तुष्टो मम शङ्कर । तद् ब्रूहि यत्प्रसिध्येत संस्काराद्यैर्विनाप्रभो

सकृदुच्चारणादेव ददाति फलमुत्तमम् । यदि योग्योऽस्मि देवेश ! तदा मे कृपया वद

शिव उवाच ।

साधु पृष्टं महाभाग त्वया लोकहितैषिणा ।

सुगोप्यमपि वक्ष्यामि मन्त्रचिन्तामणिं तव ॥ ११ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रहस्यानां रहस्यं यद्गुह्यानां गुह्यमुत्तमम् । न मया कथितं देव्यै नाग्रजेभ्यः पुरा तव ।
वक्ष्यामि युगलं तुभ्यं कृष्णमन्त्रमनुत्तमम् । मन्त्रचिन्तामणिर्नाम युगलं द्वयमेव च ॥
पर्याया अस्य मन्त्रस्य तथा पञ्चपदीति च । गोपीजनपदं वल्लभान्तं तु चरणानिति ॥
शरणं च प्रपद्ये च एष पञ्चपदात्मकः । मन्त्रचिन्तामणिः प्रोक्तः षोडशार्णो महामनुः

नमो गोपीजनेत्युक्त्वा वल्लभाभ्यां वदेत्ततः ।
पदद्वयात्मको मन्त्रो दशार्णः खलु कथ्यते ॥ १६ ॥
एतां पञ्चपदीं जप्त्वा श्रद्धयाऽश्रद्धया सकृत् ।
कृष्णप्रियाणां सान्निध्यं गच्छत्येव न संशयः ॥ १७ ॥

न पुरश्चरणप्रेक्षा नास्यन्यासविधिक्रमः । न देशकालनियमो नारिमित्रादिशोधनम् ॥
सर्वेऽधिकारिणश्चात्र चाण्डालान्ता मुनीश्वर । स्त्रियः शूद्रादयश्चापि जडमूकादिपङ्गवः

अन्ये हूणाः किराताश्च पुलिन्दाः पुष्कसास्तथा ।
आभीरा यवनाः कङ्काः खसाद्याः पापयोनयः ॥ २० ॥

दम्भाहङ्कारपरमाः पापाः पैशून्यतत्पराः । गोब्राह्मणादिहन्तारो महोपपातकान्विताः ॥
ज्ञानवैराग्यरहिताः श्रवणादिविवर्जिताः । एते चान्ये च सर्वे स्युर्मनोरस्याधिकारिणः
यदि भक्तिर्भवेदेषां कृष्णे सर्वेश्वरेश्वरे । तदाधिकारिणः सर्वे नान्यथा मुनिसत्तम ! ॥
याज्ञिको दाननिरतः सर्वतन्त्रोपसेवकः । सत्यवादी यतिर्वापि वेदवेदाङ्गपारगः ॥२४॥
ब्रह्मनिष्ठः कुलीनो वा तपस्वी व्रततत्परः । अत्राधिकारी न भवेत्कृष्णभक्तिविवर्जितः ॥
तस्मादकृष्णभक्ताय कृतघ्नाय न मानिने । न च श्रद्धाविहीनाय वक्तव्यं नास्तिकाय च
नचाशुश्रूषवे वाच्यं नासंवत्सरसेविने । श्रीकृष्णेऽनन्यभक्ताय दम्भलोभविवर्जिने ॥
कामक्रोधविमुक्ताय देयमेतत्प्रयत्नतः । ऋषिश्चैवाहमेतस्य गायत्री च्छन्द उच्यते ॥२८॥
देवतावल्लवीकान्तो मन्त्रस्य परिकीर्तितः । सप्रियस्य हरेर्दास्ये विनियोग उदाहृतः ॥

अचक्राद्यैस्तथा मन्त्रैः पञ्चाङ्गानि प्रकल्पयेत् ।
अथवाऽपि स्वबीजेन कराङ्गन्यासकौ चरेत् ॥ ३० ॥

मन्त्रस्य प्रथमो वर्णो बिन्दुना मूर्ध्नि भूषितः । गमित्येवं भवेद्बीजंनमः शक्तिरिहोदिता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्तिमार्णैर्दशाङ्गानि तैरेव च तथाऽर्चनम् । गन्धपुष्पादिभिस्तच्च जलैर्वाप्यसम्भवे
न्यासपूर्वविधानेन कर्तव्यं हरितुष्टये । अत एवास्य मन्त्रस्य न्यासाद्यन्ये वदन्ति च ॥
सकृदुच्चारणादेव कृतकृत्यत्वदायिनः । तथाऽपि दशधा नित्यं जपाद्यर्थं प्रविन्यसेत् ॥

अथ ध्यानं प्रवक्ष्यामि मन्त्रस्यास्य द्विजोत्तम ! ।
पीताम्बरं घनश्यामं द्विभुजं वनमालिनम् ॥ ३५ ॥

बर्हिबर्हकृतोत्तंसं शशिकोटिनिभाननम् । घूर्णायमाननयनं कर्णिकारावतंसिनम् ॥३६॥
अभितश्चन्दनेनाथ मध्ये कुङ्कुमबिन्दुना । रचितं तिलकं भाले बिभ्रतं मण्डलाकृतिम् ॥
तरुणादित्यसङ्काशकुण्डलाभ्यां विराजितम् । घर्माम्बुकणिकाराजद्दर्पणाभकपोलकम्

प्रियास्यन्यस्तनयनं लीलापाङ्गोन्नतभ्रुवम् ।
अग्रभागन्यस्तमुक्ताविस्फुरत्प्रोच्चनासिकम् ॥ ३९ ॥

दशनज्योत्स्नया राजत्पक्वबिम्बफलाधरम् । केयूराङ्गदसद्रत्नमुद्रिकाभिर्लसत्करम् ॥
बिभ्रतं मुरलीं वामेपाणौपद्मन्तथैव च । काञ्चीदामस्फुरन्मध्यं नूपुराभ्यां लसत्पदम् ॥
रतिकेलिरसावेशचपलं चपलेक्षणम् । हसन्तं प्रियया सार्द्धं हासयन्तं च तां मुहुः ॥
इत्थं कल्पतरोर्मूले रत्नसिंहासनोपरि । वृन्दारण्ये स्मरेत्कृष्णं संस्थितं प्रियया सह ॥

वामपार्श्वे स्थितां तस्य राधिकां च स्मरेत्ततः ।
नीलचैलकसंवीतां तप्तहेमसमप्रभाम् ॥ ४४ ॥

पट्टाञ्चलेनावृतार्द्धसुस्मेराननपङ्कजाम् । कान्तवक्त्रे न्यस्तनेत्रां चकोरीचञ्चलेक्षणाम् ॥
अङ्गुष्ठतर्जनीभ्यां च निजकान्तमुखाम्बुजे । अर्पयन्तीं पूगफलं पर्णचूर्णसमन्वितम् ॥

मुक्ताहारस्फुरच्चारुपीनोन्नतपयोधराम् ।
क्षीणमध्यां पृथुश्रोणीं किङ्किणीजालमण्डिताम् ॥ ४७ ॥

रत्नताटङ्ककेयूरमुद्रावलयधारिणीम् । रणत्कटकमञ्जीररत्नपादाङ्गुलीयकाम् ॥ ४८ ॥
लावण्यसारमुग्धाङ्गीं सर्वावयवसुन्दरीम् । आनन्दरससंमग्नां प्रसन्नां नवयौवनाम् ॥

सख्यश्च तस्य विप्रेन्द्र ! तत्समा न वयोगुणाः ।
तत्सेवनपरा भाव्याश्चामरव्यजनादिभिः ॥ ५० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ तुभ्यं प्रवक्ष्यामि मन्त्रार्थं शृणु नारद। बहिरङ्गैः प्रपञ्चस्य स्वांशैर्मायादिशक्तिभिः
अन्तरङ्गैस्तथानित्यविभूतेस्तैश्चिदादिभिः। गोपनादुच्यते गोपी राधिका कृष्णवल्लभा

देवी कृष्णमयी प्रोक्ता राधिका परदेवता।
सर्वलक्ष्मी स्वरूपा सा कृष्णाह्लादस्वरूपिणी ॥ ५३ ॥
ततः सा प्रोच्यते विप्र ह्लादिनीति मनीषिभिः।
तत्कलाकोटिकोट्यंशदुर्गाद्यास्त्रिगुणात्मिकाः ॥ ५४ ॥
सा तु साक्षान्महालक्ष्मीः कृष्णो नारायणः प्रभुः।
नैतयोर्विद्यते भेदः स्वल्पोऽपि मुनिसत्तम ! ॥५५॥

इयं दुर्गा हरी रुद्रः कृष्णः शक्र इयं शची। सावित्रीयं हरिर्ब्रह्मा धूमोर्णाऽसौ यमोहरिः
बहुना किं मुनिश्रेष्ठ विना ताभ्यां न किञ्चन। चिदचिल्लक्षणं सर्वं राधाकृष्णमयं जगत्
इत्थं सर्वं तयोरेव विभूतिं विद्धि नारद। न शक्यते मया वक्तुं वर्षकोटिशतैरपि ॥
त्रैलोक्ये पृथिवी मान्या जम्बूद्वीपं ततो वरम्। तत्रापि भारतं वर्षं तत्रापि मथुरा पुरी
तत्र वृन्दावनं नाम तत्र गोपीकदम्बकम्। तत्र राधासखीवर्गस्तत्रापि राधिकावरा ॥

सान्निध्याधिक्यतस्तस्या आधिक्यं स्याद्यथोत्तरम्।
पृथिवी प्रभृतीनान्तु नान्यत्किञ्चिदिहोदितम् ॥ ६१ ॥
सैषा हि राधिका गोपी जनस्तस्याः सखीगणः।
तस्याः सखीसमूहस्य वल्लभौ प्राणनायकौ ॥ ६२ ॥

राधाकृष्णौ तयोःपादाः शरणं स्यादिहाश्रये। प्रपद्येगतवानस्मि जीवोऽहं भृशदुःखितः
सोऽहं यः शरणं प्राप्तो मम तस्य यदस्ति च। सर्वं ताभ्यां तदर्थं हि तद्भोग्यं न ह्यहंमम

इत्यसौ कथितो विप्र ! मन्त्रस्यार्थः समासतः।
युगलार्थस्तथा न्यासः प्रपत्तिः शरणागतिः ॥ ६५ ॥

आत्मार्पणमिमे पञ्च पर्यायास्ते मयोदिताः। अयमेव चिन्तनीयो दिवानक्तमतन्द्रितैः ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वृन्दावनमाहात्म्य एकाशीतितमोऽध्यायः

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# द्व्यशीतितमोऽध्यायः

## मन्त्रदीक्षाविधिवर्णनम्

शिव उवाच ।

अथ दीक्षाविधिं वक्ष्ये शृणुनारद तत्त्वतः । श्रवणादेव मुच्येत विना तस्य विधानतः
आविरिञ्चिजगत्सर्वं विज्ञाय नश्वरं बुधः । आध्यात्मिकादित्रिविधदुःखमेवानुभूय च
अनित्यत्वाच्च सर्वेषां सुखानां मुनिसत्तम ! ।
दुःखपक्षे विनिक्षिप्य तानि तेभ्यो विवर्जितः ॥ ३ ॥
विरज्य संसृतेर्हानौ साधनानिविचिन्तयेत् । अनुत्तमसुखस्यापि सम्प्राप्तौ भृशनिर्वृतः
नराणां दुष्करत्वं हि विज्ञाय च महामतिः । भृशमार्त्तस्ततो विप्रः श्रीगुरुं शरणं व्रजेत्
शान्तो विमत्सरः कृष्णे भक्तोऽनन्यप्रयोजनः ।
अनन्यसाधनः श्रीमान्कामलोभविवर्जितः ॥ ६ ॥
श्रीकृष्णरसतत्त्वज्ञः कृष्णमन्त्रविदांवरः । कृष्णमन्त्राश्रयो नित्यमन्त्रभक्तः सदा शुचिः
सद्धर्मशासको नित्यं सदाचारनियोजकः । सम्प्रदायी कृपापूर्णो विरागी गुरुरुच्यते ॥
एवमादिगुणप्रायः शुश्रूषुर्गुरुपादयोः । गुरौ नितान्तभक्तश्च मुमुक्षुः शिष्य उच्यते ॥
यत्साक्षात्सेवनं तस्य प्रेम्णा भगवतो भवेत् ।
स मोक्षः प्रोच्यते प्राज्ञैर्वेदवेदाङ्गवादिभिः ॥ १० ॥
आश्रित्य स्वगुरोः पादौ निजवृत्तं निवेदयेत् ।
स सन्देहानपाकृत्य बोधयित्वा पुनः पुनः ॥ ११ ॥
स्वपादप्रणतं शान्तंशुश्रूषुं निजपादयोः । अतिहृष्टमनाःशिष्यं मनुमध्यापरेत्परम् ॥१२॥
चन्दनेन मृदा वाऽपि विलिखेद्वाहुमूलयोः । वामदक्षिणयोर्विप्र शङ्खचक्रयथाक्रमम् ॥
ऊर्द्ध्वपुण्ड्रं ततः कुर्यात्फालादिषु विधानतः ।
ततो मन्त्रद्वयं तस्य दक्षकर्णे विनिर्दिशेत् ॥ १४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मन्त्रार्थं च वदेत्तस्मै यथावदनुपूर्वशः । दासशब्दयुतं नाम धार्यं तस्य प्रयत्नतः ॥१५

ततोऽतिभक्त्या सस्नेहं वैष्णवान्भोजयेद् बुधः ।

श्रीगुरुं पूजयेच्चापि वस्त्रालङ्करणादिभिः ॥ १६ ॥

सर्वस्वं गुरवे दद्यात्तदर्द्धं वा महामुने । स्वदेहमपि निक्षिप्य गुरौ स्थेयमकिञ्चनैः ॥

य एतैः पञ्चभिर्विद्वान्संस्कारैः संस्कृतो भवेत् ।

दास्यभागी स कृष्णस्य नान्यथा कल्पकोटिभिः ॥ १८ ॥

अङ्कनं चोद्ध्र्वपुण्ड्रश्च मन्त्रो नामविधारणम् ।

पञ्चमो याग इत्युक्ताः संस्काराः पूर्वसूरिभिः ॥ १९ ॥

अङ्कनं शङ्खचक्राद्यैः सच्छिद्रं पुण्ड्रमुच्यते । दासशब्दयुतं नाममन्त्रो युगलसंज्ञकः ॥२०

गुरुवैष्णवयोः पूजा याग इत्यभिधीयते । एते परमसंस्कारा मया ते परिकीर्तिताः ॥

अथ तुभ्यं प्रपन्नानां धर्मान्वक्ष्यामि नारद ! ।

यानास्थाय गमिष्यन्ति हरिधामनराः कलौ ॥ २२ ॥

इत्थं गुरोर्लब्धमन्त्रो गुरुभक्तिपरायणः । सेवमानो गुरुं नित्यं तत्कृपां भावयेत्सुधीः

सतां धर्मांस्ततः शिक्षेत्प्रपन्नानां विशेषतः । स्वेष्टदेवधिया नित्यं वैष्णवान्परितोषयेत्

ताडनं भर्त्सनं कामी भोग्यत्वेन यथास्त्रियः ।

गृह्णाति वैष्णवानां च तत्तद्ग्राह्यं तथा बुधैः ॥ २५ ॥

ऐहिक्यामुष्मिकी चिन्ता नैव कार्या कदाचन ।

ऐहिकं तु सदा भाव्यं पूर्वाचरितकर्मणा ॥ २६ ॥

आमुष्मिकं तथा कृष्णः स्वयमेव करिष्यति ।

अतो हि तत्कृते त्याज्यः प्रयत्नः सर्वथा नरैः ॥ २७ ॥

सर्वापायपरित्यागः कृष्णीयात्मतयार्चनम् ।

सुचिरं प्रोषिते कान्ते यथा पतिपरायणा ॥ २८ ॥

प्रियानुरागिणी दीना तस्य सङ्गैककाङ्क्षिणी ।

तद्गुणान्भावयेन्नित्यं गायत्यपि श्रृणोति च ॥ २९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीकृष्णगुणलीलादि स्मरणादि तथा चरेत् । न पुनः साधनत्वेन कार्यं तत्तु कदाचन

चिरं प्रोष्यागतं कान्तं प्राप्य कान्तधिया यथा ।
चुम्बन्तीवाश्लिष्यन्तीव नेत्रान्तेन पिबन्त्यपि ॥ ३१ ॥

ब्रह्मानन्दगते वाऽऽशुसेवते परया मुदा । श्रीमदर्चावतारेण तथा परिचरेद्धरिम् ॥३२॥

अनन्यशरणो नित्यं तथैवानन्यसाधनः । अनन्यसाधनार्थत्वात्स्यादनन्यप्रयोजनः ॥

नान्यं च पूजयेद्देवं न नमेत्तं स्मरेन्न च । न च पश्यन्न गायेच्च न च निन्देत्कदाचन ॥

नान्योच्छिष्टं च भुञ्जीत नान्यशेषं च धारयेत् ।
अवैष्णवानां सम्भाषावन्दनादि विवर्जयेत् ॥ ३५ ॥

ईशवैष्णवयोर्निन्दां शृणुयान्न कदाचन । कर्णौ पिधाय गन्तव्यं शक्तौ दण्डं समाचरेत्

आश्रित्य चातकीं वृत्तिं देहपातावधि द्विज ! ।
द्वयस्यार्थं भावयित्वा स्थेयमित्येव मे मतिः ॥ ३७ ॥

सरः समुद्रनद्यादीन्विहाय चातको यथा । तृषितो म्रियते वापि याचते वा पयोधरम्

एवमेव प्रयत्नेन साधनानि विचिन्तयेत् ।
स्वेष्टदेवः सदा याच्यो गतिस्त्वं मे भवेरिति ॥ ३९ ॥

स्वेष्टदेवतदीयानां गुरोरपि विशेषतः । आनुकूल्ये सदास्थेयं प्रातिकूल्यं विवर्जयेत् ॥

सकृत्प्रपन्नो वक्ष्यामि कल्याणगुणतां तयोः ।
विचिन्त्य विश्वसेदेतौ मामिमावुद्धरिष्यतः ॥ ४१ ॥

संसारसागरान्नाथौ मित्रपुत्रगृहाकुलात् । गोप्तारौ मे युवामेव प्रपन्नभयभञ्जनौ ॥

योऽहं ममास्ति यत्किञ्चिदिह लोके परत्र च । तत्सर्वं भवतोरद्य चरणेषु समर्पितम्

अहमस्म्यपराधानामालयस्त्यक्तसाधनः । अगतिश्च ततो नाथौ भवन्तावेव मे गतिः

तवास्मि राधिका कान्तकर्मणा मनसा गिरा । कृष्णकान्ते तवैवास्मि युवामेव गतिर्मम

शरणं वां प्रपन्नोऽस्मि करुणानिकराकरौ । प्रसादं कुरुतं दास्यं मयि दुष्टेऽपराधिनि

इत्येवं जपता नित्यं स्थातव्यं पद्यपञ्चकम् । अचिरादेव तद्दास्यमिच्छता मुनिसत्तम !

बाह्यधर्मा मया ह्येते संक्षेपेणोपवर्णिताः । आन्तरः परमो धर्मः प्रपन्नानामथोच्यते ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृष्णप्रियासखीभावं समाश्रित्य प्रयत्नतः । तयोः सेवां प्रकुर्वीत दिवानक्तमतन्द्रितः ॥

उक्तो मन्त्रस्तदङ्गानि तथा तस्याधिकारिणः ।
तद्धर्माश्च तथा तेभ्यः फलं मन्त्रस्य नारद ! ॥ ५० ॥

अनुतिष्ठत्वमप्येतत्तयोर्दास्यमवाप्स्यसि । स्वाधिकारक्षयेविप्र सन्देहो नात्र कश्चन ॥
सकृन्मात्रप्रपन्नाय तवास्मीति च याचते । निजदास्यं हरिर्दद्यान्न मेऽत्रास्ति विचारणा
अत्र ते वर्णयिष्यामि रहस्यं परमाद्भुतम् । श्रुतपूर्वं मया कृष्णात्साक्षाद्भगवतः परम् ॥
एष ते कथितो धर्म आन्तरो मुनिसत्तम । गुह्याद्गुह्यतमो गोपनीयः प्रयत्नतः ॥
मन्त्ररत्नमहं पूर्वं जपन्कैलासमूर्धनि । ध्यायन्नारायणं देवमवसं गहने वने ॥ ५५ ॥
ततस्तु भगवांस्तुष्टः प्रादुरास ममाग्रतः । व्रियतां वर इत्युक्ते मयाप्युद्घाट्य लोचने ॥
दृष्टोदेवः प्रियायुक्तः संस्थितो गरुडोपरि । प्रणिपत्यावोचमहं वरदं कमलापतिम् ॥
यद्रूपं ते कृपासिन्धो परमानन्ददायकम् । सर्वानन्दाश्रयं नित्यं मूर्तिमत्सर्वतोऽधिकम्

निर्गुणं निष्क्रियं शान्तं यद्ब्रह्मेति विदुर्बुधाः ।
तदहं द्रष्टुमिच्छामि चक्षुर्भ्यां परमेश्वर ! ॥ ५६ ॥

ततो मामाह भगवान्प्रपन्नं कमलापतिः । तदद्य द्रक्ष्यसे रूपं यत्तेमनसि काङ्क्षितम् ॥
यमुनापश्चिमे तीरे गच्छवृन्दावनं मम । इत्युक्त्वाऽन्तर्दधे देवः प्रियायुक्तो जगत्पतिः
अहमप्यागतस्तर्हि यमुनायास्तटं शुभम् । तत्र कृष्णमपश्यं च सर्वदेवेश्वरेश्वरम् ॥
गोपवेषधरं कान्तं किशोरवयसान्वितम् । प्रियास्कन्धे सुविन्यस्तवामहस्तं मनोहरम्
हसन्तं हासयन्तं तां मध्येगोपीकदम्बके । स्निग्धमेघसमाभासं कल्याणगुणमन्दिरम् ॥
प्रहस्य च ततः कृष्णो मामाहामृतभाषणः । अहं ते दर्शनं यातो ज्ञात्वा रुद्र तवेप्सितम्
यदद्य मे त्वया दृष्टमिदं रूपमलौकिकम् । घनीभूतामलप्रेमसच्चिदानन्दविग्रहम् ॥६६॥
नीरूपं निर्गुणं व्यापि क्रियाहीनं परात्परम् । वदन्त्युपनिषत्सङ्घा इदमेवममानघम् ॥

प्रकृत्युत्थगुणा भावादनन्तत्वात्तथेश्वरम् ।
असिद्धत्वान्मद्गुणानां निर्गुणं मां वदन्ति हि ॥ ६८ ॥

अदृश्यत्वान्ममैतस्य रूपस्य चर्मचक्षुषा । अरूपं मां वदन्त्येते वेदाः सर्वे महेश्वर ! ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यापकत्वाच्चिदंशेन ब्रह्मेति च विदुर्बुधाः ।
अकर्तृत्वात्प्रपञ्चस्य निष्क्रियं मां वदन्ति हि ॥ ७० ॥
मायागुणैर्यतो मेंऽशाः कुर्वन्ति सर्जनादिकम् ।
न करोमि स्वयं किञ्चित्सृष्ट्यादिकमहं शिव ! ॥ ७१ ॥

अहमासां महादेव गोपीनां प्रेमविह्वलः । क्रियान्तरं न जानामि नात्मानमपि नारद ! ॥
विहराम्यनया नित्यमस्याः प्रेमवशीकृतः । इमां तु मत्प्रियां विद्धि राधिकां परदेवताम्

अस्याश्च परितः पश्य सख्यः शतसहस्रशः ।
नित्याः सर्वा इमा रुद्र ! यथाहं नित्यविग्रहः ॥ ७४ ॥

गोपा गावो गोपिकाश्च सदावृन्दावनं मम । सर्वमेतन्नित्यमेव चिदानन्दरसात्मकम्
इदमानन्दकन्दाख्यं विद्धि वृन्दावनं मम । यस्मिन्प्रवेशमात्रेण न पुनः संसृतिं विशेत्
मद्वनं प्राप्य यो मूढः पुनरन्यत्र गच्छति । स आत्महा भवेदेव सत्यं सत्यं मयोदितम्
वृन्दावनं परित्यज्य नैव गच्छाम्यहं क्वचित् । निवसाम्यनया सार्द्धमहमत्रैव सर्वदा ॥

इत्येवं सर्वमाख्यातं यत्ते रुद्र ! हृदि स्थितम् ।
कथयस्व ममेदानीं किमन्यच्छ्रोतुमिच्छसि ॥ ७९ ॥

ततस्तमब्रवं देवमहं च मुनिसत्तम ! । ईदृशस्त्वं कथं लभ्यस्तमुपायं वदस्व मे ॥८०॥
ततो मामाह भगवान्साधु रुद्र ! तवोदितम् । अति गुह्यतमं ह्येतद्गोपनीयं प्रयत्नतः॥८१॥
सकृदावां प्रपन्नो य उपास्ते त्यक्तसाधनः । गोपीभावेन देवेश स मामेति न चेतरः ॥
सकृदावां प्रपन्नो वा मत्प्रियामेकिकामुत । सेवतेऽनन्यभावेन स मामेति न संशयः ॥
योमामेवप्रपन्नश्च मत्प्रियां न महेश्वर । न कदापि स चाप्नोति मामेवं ते मयोदितम्॥
सकृदेव प्रपन्नो यस्तवास्मीति वदेदपि । साधनेन विनाऽप्येवमामाप्नोति न संशयः ॥

तस्मात्सर्वप्रयत्नेन मत्प्रियां शरणं व्रजेत् ।
आश्रित्य मत्प्रियां रुद्र मां वशीकर्त्तुमर्हसि ॥ ८६ ॥

इदं रहस्यं परमं मया ते परिकीर्तितम् । त्वयाऽप्येतन्महादेव गोपनीयं प्रयत्नतः ॥८७॥
त्वमप्येनां समाश्रित्य राधिकां मम वल्लभाम् । जपन्मे युगलं मन्त्रं सदा तिष्ठ मदालये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिव उवाच ।

इत्युक्त्वा दक्षिणे कर्णे मम कृष्णो दयानिधिः ।
उपदिश्य परं मन्त्रं संस्कारांश्च विधाय हि ॥ ८६ ॥

सगणोऽन्तर्दधे विप्र तत्रैव मम पश्यतः । अहमप्यत्र तिष्ठामि तदारभ्य निरन्तरम् ॥

सर्वमेतन्मया तुभ्य साङ्गमेव प्रकीर्तितम् ।
अधुना वद विप्रेन्द्र ! किं भूयः श्रोतुमिच्छसि ॥ ६१ ॥

इति श्रीपाद्मे महापुराणे पञ्चमें पातालखण्डे वृन्दावनमाहात्म्ये द्व्यशीतितमोऽध्यायः ॥

---

# त्र्यशीतितमोऽध्यायः

## वृन्दावने श्रीकृष्णस्य दैनन्दिनीयलीलावर्णनम् ।

नारद उवाच ।

भगवन्सर्वमाख्यातं यद्यत्पृष्टं मया गुरो ! । अधुना श्रोतुमिच्छामि भावमार्गमनुत्तमम् ॥

शिव उवाच ।

साधु विप्र त्वया दृष्टं सर्वलोकहितैषिणा । रहस्यमपि वक्ष्यामि तन्मे निगदतः शृणु ॥

दास्यः सखायः पितरौ प्रेयस्यश्च हरेरिह । सर्वे नित्या मुनिश्रेष्ठ वसन्ति गुणशालिनः

यथा प्रकटलीलायां पुराणेषु प्रकीर्तिताः । तथा ते नीत्यलीलायां सन्तिवृन्दावने भुवि

गमनागमने नित्यं करोति वनगोष्ठयोः । गोचारणं वयस्यैश्च विनाऽसुरविघातनम् ॥

परकीयाभिमानिन्यस्तथा तस्य प्रिया जनाः । प्रच्छन्नेनैव भावेन रमयन्ति निजप्रियम्

आत्मानं चिन्तयेत्तत्र तासां मध्ये मनोरमाम् ।
रूपयौवनसम्पन्नां किशोरीं प्रमदाकृतिम् ॥ ७ ॥

नानाशिल्पकलाभिज्ञां कृष्णभोगानुरूपिणीम् ।
प्रार्थितामपि कृष्णेन तत्र भोगपराङ्मुखीम् ॥ ८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राधिकानुचरीं तत्र तत्सेवनपरायणाम् । कृष्णादप्यधिकं प्रेम राधिकायां प्रकुर्वतीम्
प्रीत्याऽनुदिवसं यत्नात्तयोःसङ्गमकारिणीम्। तत्सेवनसुखाह्लादभावेनातिसुनिर्वृताम्
इत्यात्मानं विचिन्त्यैव तत्र सेवांसमाचरेत् । ब्राह्मं मुहूर्त्तमारभ्य यावत्स्यात्तु महानिशा

नारद उवाच ।

हरेर्दैनन्दिनीं लीलां श्रोतुमिच्छामि तत्त्वतः ।
लीलामजानता सेव्यो मनसा तु कथं हरिः ॥ १२ ॥

शिव उवाच ।

नाहं जानामि तां लीलां हरेर्नारद ! तत्त्वतः ।
वृन्दादेवीमितो गच्छ सा ते लीलां प्रवक्ष्यति ॥ १३ ॥

अविदूर इतः स्थानात्केशीतीर्थसमीपतः । सखीसङ्घवृता :साऽस्तेगोविन्दपरिचारिका

सूत उवाच ।

इत्युक्तस्तं परिक्रम्य हृष्टो नत्वा पुनः पुनः । वृन्दाश्रमं जगामाथ नारदो मुनिसत्तमः
वृन्दाऽपि नारदं दृष्ट्वा प्रणम्य च पुनः पुनः । उवाच च मुनिश्रेष्ठकथमत्रागतिस्तव

नारद उवाच ।

त्वत्तो वेदितुमिच्छामि नैत्यकं चरितं हरेः ।
तदादितो मम ब्रूहि यदि योग्योऽस्मि शोभने ! ॥ १७ ॥

वृन्दोवाच ।

रहस्यमपि वक्ष्यामिकृष्णभक्तोऽसि नारद । न प्रकाश्यं त्वयाप्येतद्गुह्याद्गुह्यतरम्महत्
मध्ये वृन्दावने रम्ये पञ्चाशत्कुञ्जमण्डिते । कल्पवृक्षनिकुञ्जे तु दिव्यरत्नमये गृहे ॥

निद्रितो तिष्ठतस्तल्पे निविडालिङ्गितौ मिथः ।
मदाज्ञाकारिभिः पश्चात्पक्षिभिर्बोधितावपि ॥ २० ॥

गाढालिङ्गनजानन्दमाप्तौ तद्भङ्गकातरौ । न मनः कुरुत स्तल्पात्समुत्थातुं मनागपि ॥

ततश्च सारिकासङ्घैः शुकाद्यैः परितो मुहुः ।
बोधितौ विविधैर्वाक्यैः स्वतल्पादुदतिष्ठताम् ॥ २२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपविष्टौ ततो दृष्ट्वा सख्यस्तल्पे मुदान्वितौ ।
प्रविश्य सेवां कुर्वन्ति तत्काले ह्युचितां तयोः ॥ २३ ॥
पुनश्च सारिका वाक्यैस्तावुत्थाय स्वतल्पतः ।
गच्छतः स्वस्वभवनं भीत्युत्कण्ठाकुलौ ततः ॥ २४ ॥
प्रातश्च बोधितो मात्रातल्पादुत्थाय सत्वरः । कृत्वा कृष्णोदन्तकाष्ठं वलदेवसमन्वितः
मात्रानुमोदितो याति गोशालां सखिभिर्वृतः ।
राधाऽपि बोधिता विप्र वयस्याभिः स्वतल्पतः ॥ २६ ॥
उत्थाय दन्तकाष्ठादि कृत्वाऽभ्यङ्गं समाचरेत् ।
स्नानवेदीं ततो गत्वा स्नापिता सा निजालिभिः ॥ २७ ॥
भूषागृहे व्रजेत्तत्र वयस्या भूषयन्त्यपि । भूषणैर्विविधैर्दिव्यैर्गन्धमाल्यानुलेपनैः ॥२८॥
ततः सखीजनैस्तस्याः श्वश्रूं सम्प्रार्थ्य यत्नतः ।
पक्तुमाहूयते स्वन्नं ससखी सा यशोदया ॥ २९ ॥

नारद उवाच ।

कथमाहूयते देवी पाकार्थं तु यशोदया । सतीषु पाककर्त्रीषु राहिणीप्रमुखास्वपि ॥

वृन्दोवाच ।

पूर्वं दुर्वाससा दत्तो वरस्तस्यै महामुने ! । इति कात्यायनीवक्त्राच्छ्रुतमासीन्मया पुरा
त्वयायत्पच्यते देवि तदन्नं मदनुग्रहात् । मिष्टं स्यादमृतस्पर्द्धि भोक्तुरायुष्करं तथा ॥
इत्याह्वयति तां नित्यं यशोदा पुत्रवत्सला ।
आयुष्मान् मे भवेत्पुत्रः स्वादुलोभात्तथा सती ॥ ३३ ॥
श्रुत्वाऽनुमोदिता हृष्टा साऽपि नन्दालयं व्रजेत् ।
स सखीप्रकरा तत्र गत्वा पाकं करोति च ॥ ३४ ॥
कृष्णोऽपि दुग्ध्वा गाः काश्चिद्दोहयित्वा जनैः पराः ।
आगच्छति पितुर्वाक्यात्स्वगृहं सखिभिर्वृतः ॥ ३५ ॥
अभ्यङ्गमर्दनं कृत्वा दासैः संस्नापितो मुदा । धौतवस्त्रधरः स्रग्वी चन्दनाक्तकलेवरः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्विफालबद्धचिकुरैर्ग्रीवाभालोपरि स्फुरन् । चन्द्राकारस्फुरद्भालतिलकालकरञ्जितः ॥
कङ्कणाङ्गदकेयूररत्नमुद्रालसत्करः । मुक्ताहारस्फुरद्वक्षामकराकृतिकुण्डलः ॥ ३८ ॥
मुहुराकारितो मात्रा प्रविशेद्भोजनालयम् । अवलम्ब्य करं सख्युर्बलदेवमनुव्रतः ॥३९॥

भुङ्क्तेऽथ विविधान्नानि भ्रात्रा च सखिभिर्वृतः ।
हासयन्विविधैर्हास्यैः सखींस्तैर्हसति स्वयम् ॥ ४० ॥
इत्थं भुक्त्वा तथाऽऽचम्य दिव्यखट्वोपरिक्षणम् ।
विश्रम्य सेवकैर्दत्तताम्बूलं विभजन्नदन् ॥ ४१ ॥

गोपवेषधरः कृष्णो धेनुवृन्दपुरस्सरः । व्रजवासिजनैः प्रीत्या सर्वैरनुगतः पथि ॥४२॥

पितरं मातरं नत्वा नेत्रान्तेनापि तं गणम् ।
यथायोग्यं तथा चान्यान्विनिवर्त्य वनं व्रजेत् ॥ ४३ ॥

वनं प्रविश्य सखिभिः क्रीडयित्वा क्षणं ततः । विहारैर्विविधैस्तत्र वनेविक्रीडतेमुदा
वञ्चयित्वाततःसर्वान्द्वित्रैःप्रियसखैर्वृतः । सङ्केतकंव्रजेद्धर्षात्प्रियासन्दर्शनोत्सुकः ॥
सापिकृष्णंवनंयातं दृष्ट्वा स्वंगृहमागता । सूर्यादिपूजाव्याजेन कुसुमाहृतये तथा ॥
वञ्चयित्वा गुरून्याति प्रियसङ्गेच्छया वनम् । इत्थं तौ बहुयत्नेन मिलित्वा काननेततः

विहारैर्विविधैस्तत्र दिनं विक्रीडतो मुदा ।
दोलायां च समारूढौ सखिभिर्दोलितौ क्वचित् ॥ ४८ ॥

क्वापि वेणुं करभ्रस्तं प्रिययापहृतं हरिः । अन्वेषयन्नुपालब्धो विप्रलब्धप्रियागणैः ॥
हसितैर्बहुधा ताभिर्हासितस्तत्र तिष्ठति । वसन्तवायुना जुष्टं वनखण्डं मुदा क्वचित्
प्रविश्य चन्दनाम्भोभिः कुङ्कुमादिजलैरपि । निषिञ्चतो यंत्रमुक्तैस्तत्पङ्कैर्लिम्पतो मिथः

सख्योऽप्येवं निषिञ्चन्ति ताश्च तौ सिञ्चतः पुनः ।
वसन्तवायुजुष्टेषु वनषण्डेषु सर्वतः ॥ ५२ ॥

तत्तत्कालोचितैर्नानाविहारैः सगणौ द्विज । श्रान्तौ क्वचिद्वृक्षमूलमासाद्य मुनिसत्तम
उपविश्यासने दिव्ये मधुपानं प्रचक्रतुः । ततो मधुमदोन्मत्तौ निद्रया मीलितेक्षणौ

मिथः पाणी समालम्ब्य कामबाणवशं गतौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रिरंसू विशतः कुञ्जं स्खलद्वाङ्मनसौ पथि ॥ ५५ ॥
क्रीडतश्च ततस्तत्र करिणी यूथपौ यथा । सख्योऽपि मधुभिर्मत्ता निद्रयापीडितेक्षणाः
अभितोमञ्जुकुञ्जेषु सर्वा एवापि शिश्यिरे । पृथगेकेन वपुषा कृष्णोऽपि युगपद्विभुः
सर्वासां संनिधिं गच्छेत्प्रियया प्रेरितोमुहुः । रमयित्वा च ताः सर्वाःकरिणीर्गजराडिव
प्रियया च तथा ताभिः क्रीडार्थं च सरो व्रजेत् ।
जलसेकैर्मिथस्तत्र क्रीडतः सगणौ ततः ॥ ५९ ॥
वासः स्रक्चन्दनैर्दिव्यैर्भूषणैरपि भूषितौ । तत्रैव सरसस्तीरेदिव्यरत्नमये गृहे ॥ ६० ॥
प्रागेव फलमूलानि कल्पितानि मया मुने । हरिस्तु प्रथमं भुक्त्वा कान्तया परिवेष्टितः
द्विन्नाभिः सेवितो गच्छेच्छय्यां पुष्पविनिर्मिताम् ।
ताम्बूलैर्व्यजनैस्तत्र पादसंवाहनादिभिः ॥ ६२ ॥
सेव्यमानो हसंस्ताभिर्मोदते प्रेयसीं स्मरन् । राधिकापिहरौ सुप्ते सगणा मुदितान्तरा
अपि तत्र गतप्राणा तदुच्छिष्टं भुनक्ति च ।
किञ्चिदेव ततो भुक्त्वा व्रजेच्छय्यानिकेतनम् ॥ ६४ ॥
द्रष्टुं कान्तमुखाम्भोजं चकोरीव निशाकरम् । ताम्बूलचर्वितं तस्य तत्रत्याभिर्निवेदितम्
ताम्बूलान्यपि चाश्नाति विभजन्ती प्रियालिषु ।
कृष्णोऽपि तासां शुश्रूषुः स्वच्छन्दभाषितं मिथः ॥ ६६ ॥
प्राप्तनिद्र इवाभाति विनिद्रोऽपि पटावृतः । ताश्च क्ष्वेलीक्षणं कृत्वा कुतश्चिदनुमानतः
विदश्य रसनां दद्भिः पश्यन्त्योऽन्योन्यमाननम् ।
विलीना इव लज्जाब्धौ क्षणमूचुर्न किञ्चन ॥ ६८ ॥
क्षणादेव ततो वस्त्रं दूरीकृत्य तदङ्गतः । साधुनिद्रां गतोऽसीति हासयन्त्यो हसन्तिच
एवं तैर्विविधैर्हास्यै रममाणौ गणैः सह । अनुभूय क्षणं निद्रा सुखं च मुनिसत्तम ॥
उपविश्यासने दिव्ये सगणौ विस्तृते मुदा । पणीकृत्य मिथोहारचुम्बाश्लेषपरिच्छदान्
अक्षैर्विक्रीडतः प्रेम्णा नर्मालापपुरस्सरम् ।
पराजितोऽपि प्रियया जितोऽहमिति वै ब्रुवन् ॥ ७२ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हारादिग्रहणे तस्याः प्रवृत्तस्ताड्यते तया। तयैवं ताडितः कृष्णः करेणास्य सरोरुहे॥
विषण्णमानसो भूत्वा गन्तुं प्रकुरुते मतिम्।
जितोऽस्मि चेत्त्वया देवि गृह्यतां यत्पणीकृतम्॥ ७४॥
चुम्बनादि मया दत्तमित्युक्त्वा सा तथाचरेत्।
कौटिल्यं तद्भ्रुवोर्द्रष्टुं श्रोतुं तद्भर्त्सनं वचः॥ ७५॥
ततः सारीशुकानां च श्रुत्वा वागाहवं मिथः।
निर्गच्छतस्ततः स्थानाद्गन्तुकामौ गृहं प्रति॥ ७६॥
कृष्णः कान्तामनुज्ञाप्य गवामभिमुखं व्रजेत्। सा तु सूर्यगृहं गच्छेत्सखीमण्डलसंयुता॥
कियद्दूरं ततो गत्वा परावृत्य हरिं पुनः। विप्रवेषं समास्थाय याति सूर्यगृहं प्रति॥
सूर्यं प्रपूजयेत्तत्र प्रार्थितस्तत्सखीजनैः। तदैवकल्पितैर्वेदैः परिहासविगर्भितैः॥ ७९॥
ततस्ता ज्ञापितं कान्तं परिज्ञाय विचक्षणाः।
आनन्दसागरे मग्ना न विदुः स्वं न चापरम्॥ ८०॥
विहारैर्विविधैरेवं सार्द्धयामद्वयं मुने। नीत्वा गृहं व्रजेयुस्ताः स च कृष्णो गवांव्रजेत्॥
सङ्गम्य स्वसखीन्कृष्णो गृहीत्वा गाः समन्ततः।
आगच्छति व्रजं हर्षान्नादयन्मुरलीं मुने!॥ ८२॥
ततो नन्दादयः सर्वे श्रुत्वा वेणुरवं हरेः। गोधूलिपटलव्याप्तं दृष्ट्वा चापि नभस्तलम्॥
विसृज्य सर्वकर्माणि स्त्रियो बालादयोऽपि च।
कृष्णस्याभिमुखं यान्ति तद्दर्शनसमुत्सुकाः॥ ८४॥
राजमार्गे व्रजद्वारि यत्र सर्वे व्रजौकसः। कृष्णोऽपि तान्समागम्य यथावदनुपूर्वशः॥
दर्शनस्पर्शनैर्वाचास्मितपूर्वावलोकनैः। गोपवृद्धान्नमस्कारैः कायिकैर्वाचिकैरपि॥
अष्टाङ्गपातैः पितरौ रोहिणीमपि नारद!। नेत्रान्तसूचितेनैव विनयेन प्रियां तथा॥
एवं तैस्तद्यथायोग्यं व्रजौकोभिः प्रपूजितः। गवालये तथा गाश्च सम्प्रवेश्य समन्ततः॥
पितृभ्यामर्थितो याति भ्रात्रा सह निजालयम्।
स्नात्वा पीत्वा तत्र किञ्चिद्भुक्त्वा मात्रानुमोदितः॥ ८६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गवालयं पुनर्याति दोग्धुकामो गवां पयः ।
ताश्च दुग्ध्वा दोहयित्वा पाययित्वा च काश्चन ॥ ९० ॥

पित्रा सार्द्धं गृहं याति तत्र भावशतानुगः । तत्र पित्रा पितृव्यैश्च तत्पुत्रैश्च बलेन च ॥

भुनक्ति विविधान्नानि चर्व्यचोष्यादिकानि च ।
तन्मतिः प्रार्थनात्पूर्वं राधिका च तदैव हि ॥ ९२ ॥
प्रस्थापयेत्सखीद्वारा पक्वान्नानि तदालयम् ।
श्लाघयंश्च हरिस्तानि भुक्त्वा पित्रादिभिः सह ॥ ९३ ॥

सभागृहं व्रजेत्तैश्च जुष्टं वन्दिजनादिभिः । पक्वान्नानि गृहीत्वा याः सख्यस्तत्रपुरागताः
बहूनि च पुनस्तानि प्रदत्तानि यशोदया । सख्यस्तत्र तया दत्तं कृष्णोच्छिष्टं नयन्ति च
सर्वं ताभिः समानीय राधिकायै निवेद्यते । सापि भुक्त्वा सखीवर्गयुता तदनुपूर्वशः ॥
सखीभिर्मण्डिता तिष्ठेदभिसर्तुं समुद्यता । प्रस्थाप्यते मया काचिदित एव ततः सखी
तयाभिसारिता साथ यमुनायाः समीपतः । कल्पवृक्षनिकुञ्जेऽस्मिन्दिव्यरत्नमयेगृहे ॥
सितकृष्णनिशायोग्यवेषा याति सखीवृता । कृष्णोऽपि विविधं तत्र दृष्ट्वा कौतूहलं ततः

कात्यायन्या मनोज्ञानि श्रुत्वा सङ्गीतकान्यपि ।
धनधान्यादिभिस्ताश्च प्रीणयित्वा विधानतः ॥ १०० ॥
जनैराराधितो मात्रा याति सख्या निकेतनम् ।
मातरि प्रस्थितायां च भोजयित्वा ततो गृहम् ॥ १०१ ॥

सङ्केतकं कान्तयात्राऽसमागच्छेदलक्षितः । मिलित्वा तावुभावत्र क्रीडतो वनराजिषु ॥
विहारैर्विविधैरासलास्यहासपुरस्सरैः । सार्द्धयामद्वयं नीत्वा रात्रेरेवं विहारतः ॥
सुषुप्सू विशतः कुञ्जपक्षिणीभिरलक्षितौ । एकान्ते कुसुमैः क्लृप्ते केलितल्पे मनोहरे ॥

सुप्तावातिष्ठतस्तत्र सेव्यमानौ निजालिभिः ।

इति ते सर्वमाख्यातं नैत्यकं चरितं हरेः । पापिनोऽपि विमुच्यन्ते श्रवणादस्य नारद !

नारद उवाच ।

धन्योऽस्म्यनुगृहीतोऽस्मि त्वया देवि ! न संशयः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हरेर्वृन्दावनलीला यतो मेऽद्य प्रकाशिता ॥ १०६ ॥

सूत उवाच ।

इत्युक्त्वा तां परिक्रम्य तया चापि प्रपूजितः । अन्तर्धानं गतो ब्रह्मन्नारदो मुनिसत्तमः
मयाप्येतच्चानुपूर्व्यात्सर्वमेव प्रकीर्तितम् । जपेन्नित्यं प्रयत्नेन मन्त्रयुग्ममनुत्तमम् ॥
कृष्णवक्त्रादिदं लब्धं पुरारुद्रेण यत्नतः । तेनोक्तं नारदायापि नारदेन ममोदितम् ॥
संस्कारांश्च विधायैव मयाप्येतत्तवोदितम् । त्वयाप्येतद्गोपनीयं रहस्यं परमाद्भुतम् ॥

शौनक उवाच ।

कृतकृत्योऽभवं साक्षात्त्वत्प्रसादादहं गुरो । रहस्यानां रहस्यं यत्त्वया मह्यं प्रकाशितम्

सूत उवाच ।

धर्मानेतानुपातिष्ठञ्जल्पन्मन्त्रमहर्निशम् । अचिरादेवतद्दास्यमवाप्स्यसि न संशयः॥११२
मयापि गम्यते ब्रह्मन्नित्यमायतनं विभोः । गुरोर्गुरोर्भानुजायाः कूले गोपीश्वरस्य च

इदं चरित्रं परमं पवित्रं प्रोक्तं महेशेन महानुभावम् ।
शृण्वन्ति ये भक्तियुता मनुष्यास्ते यान्ति नित्यं पदमच्युतस्य ॥ ११४ ॥

धन्यं यशस्यमायुष्यमारोग्याभीष्टसिद्धिदम् । स्वर्गापवर्गसम्पत्तिकारणं पापनाशनम्

भक्त्या पठन्ति ये नित्यं मानवा विष्णुतत्पराः ।
न तेषां पुनरावृत्तिर्विष्णुलोकात्कथञ्चन ॥ ११६ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे श्रीवृन्दावनमाहात्म्ये त्र्यशीतितमोऽध्यायः

समाप्तं वृन्दावनमाहात्म्यम् ।

———

## चतुरशीतितमोऽध्यायः

### वैशाखमाहात्म्य प्रारम्भः ।

ऋषय ऊचुः ।

सूत सूत महाभाग ! रोमहर्षणनन्दन ! । कथा रम्या त्वया प्रोक्ता लोकस्यानन्ददायिनी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीकृष्णस्य महाभाग! चरितं महद्भुतम् । श्रुतं सर्वं त्वया प्रोक्तं निर्वृतिस्तेन चाभवत्
अहो श्रीकृष्णमाहात्म्यं भक्तानां गतिदायकम् ।
यतस्तेन महाभाग! निर्वृतिं को न चाप्नुयात् ॥ ३ ॥
अतः पुनरपि श्रीमत्कृष्णस्य चरितं महत् । श्रोतुमिच्छामहे चान्यद्व्रतदानार्हणादिकम्
स्नानं चापि महाभाग! यथा येन कृतं पुरा ।
तत्सर्वं विस्तराद् ब्रूहि यथा नो निर्वृतिर्भवेत् ॥ ५ ॥

सूत उवाच ।

साधु पृष्टं द्विजश्रेष्ठा! लोकानां तारणं परम् ।
यूयं कृतार्थाः कृष्णस्य भक्त्या सम्पूर्णमानसाः ॥ ६ ॥
श्रीकृष्णचरितं पुण्यं साधूनां हर्षदं परम् । प्रवक्ष्यामि द्विजश्रेष्ठा महदाख्यानमुत्तमम् ॥
एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः । मथुरायामम्बरीषं कृष्णाराधनतत्परम् ॥८॥
महाभागं व्रतपरं ददर्श मुनिसत्तमः । स आगतं मुनिवरं सत्कृत्य मुनिसत्तमः ॥ ९ ॥
भवन्त इव पप्रच्छ श्रद्धया हृष्टमानसः ॥ ९ ॥

अम्बरीष उवाच ।

यन्मुने परमं ब्रह्म वेदवादिभिरुच्यते । सदेवः पुण्डरीकाक्षः स्वयं नारायणः परः ॥१०
योऽमूर्तो मूर्तिमानीशो व्यक्तोऽव्यक्तःसनातनः ।
सर्वभूतमयोऽचिन्त्यो ध्यातव्यः स कथंहरिः ॥ ११ ॥
यस्मिन्सर्वमिदंविश्वमोतं प्रोतं प्रतिष्ठितम् । अव्यक्तमेकं परमं परमात्मेति विश्रुतम् ॥
यतो जन्मादि जगतो योनिर्मायस्वयम्भुवम् ।
ददौ तस्मै च निगमानात्मन्येव व्यवस्थितान् ॥ १३ ॥
कथमाराध्यते सोऽयं समग्रपुरुषार्थदः । योगिनामपि दुर्गम्यस्तदेतत्कृपया वद ॥ १४॥
अनाराधितगोविन्दो न विदन्ति हितोदयम् । न तपो यज्ञदानानां लभते फलमुत्तमम् ॥
अनास्वादितगोविन्दपदाम्बुजरसश्च यः । मनोरथपथातीतं स्फीतं नाकलयेत्फलम् ॥
हरेराराधनं हित्वा दुरितौघनिवारणम् । नान्यत्पश्यामिजन्तूनां प्रायश्चित्तं परं मुने ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्भ्रूनर्तनवर्तिन्यः श्रूयन्ते सिद्धयोऽखिलाः ।
कथमाराध्यते सोऽयं केशवः क्लेशनाशनः ॥ १८ ॥
उपास्यते स भगवान्कथं नारायणोनरैः । प्रीतश्च सर्वमेतन्मे हिताय जगतो वद ॥१९॥
भक्तिप्रियोऽसौ भगवान्कया भक्त्या प्रसीदति ।
कथं तस्मिन्भवेद्भक्तिः सर्वैराराध्यते कथम् ॥ २० ॥
वैष्णवोऽसि हरेस्तस्य प्रियोऽसि परमार्थसित् ।
तेन त्वामेवपृच्छामि ब्रह्मन्ब्रह्मविदुत्तम ! ॥ २१ ॥
श्रोतारमथ वक्तारं पृष्टारं पुरुषं हरेः ।
प्रश्नः पुनाति कृष्णस्य तदङ्घ्रिसलिलं यथा ॥ २२ ॥
दुर्ल्लभो मानुषो देहो देहिनां क्षणभङ्गुरः । तत्रापि दुर्ल्लभं मन्ये वैकुण्ठप्रियदर्शनम्
संसारेऽस्मिन् क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ।
यस्मादवाप्यते सर्वं पुरुषार्थचतुष्टयम् ॥ २४ ॥
भगवन्भवतो यात्रास्वस्तये सर्वदेहिनाम् । बालानां तु यथा पित्रोरुत्तमश्लोकवर्त्मनाम्
भूतानां देवचरितं दुःखाय च सुखाय च । सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम्
भजन्ति ये यथा देवान्देवा अपि तथैव तान् ।
छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ २७ ॥
तस्मात्त्वं भगवन्मह्यं वैष्णवं धर्ममादिश । यस्योपदेशदानेन लभते वेदजं फलम् ॥२८

नारद उवाच ।

साधु पृष्टं महीपाल विष्णुभक्तिमता त्वया । जानतापरमंधर्ममेकं माधवसेवनम् ॥२९॥
यस्मिन्नाराधिते विष्णौ विश्वमाराधितं भवेत् । तुष्टे चराचरं तुष्टं सर्वदेवमये हरौ ॥
यस्य स्मरणमात्रेण महापातकसंहतिः । तत्क्षणान्नाशमायाति स सेव्यो हरिरेवहि ॥
कोनु राजन्निन्द्रियवान्मुकुन्दचरणाम्बुजम् । न भजेत्सर्वतो मृत्युरुपास्यमृषिदैवतैः ॥
श्रुतोऽनुपठितोध्यात आदृतश्चानुमोदितः । सद्यः पुनाति सद्धर्मोवीरो विश्वद्रुहोऽपिहि
योऽयं कारणकार्यादि कारणस्यापि कारणम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनन्यकारणं योगी जगज्जीवो जगन्मयः ॥ ३४ ॥
अणुर्बृहत्कृशः स्थूलो निर्गुणो गुणभृन्महान् ।
अजो जन्मलयातीतो ध्यातव्यः स हरिः सदा ॥ ३५ ॥

सम्यगेतद्व्यवसितं भवता पुरुषर्षभ । यत्पृच्छसे भागवतान्धर्मांस्त्वं विश्वभावनान् ॥
प्रसङ्गेन सतामात्ममनः श्रुतिरसायनाः ।भवन्ति कीर्तनीयस्य कथाः कृष्णस्य निर्मलाः

भावसाध्यो ह्ययं देवः स्वयं जानातितद्भवान् ।
तथापि वक्ष्ये जगतो हिताय तव गौरवात् ॥ ३८ ॥

यदाहुः परमं ब्रह्म प्रधानपुरुषात्परम् । यन्मायया ततं सर्वं सर्वं यच्छति सोऽच्युतः ॥

पुत्रान्कलत्रं दीर्घायू राज्यं स्वर्गापवर्गकम् ।
स दद्यादीप्सितं सर्वं भक्त्या सम्पूजितोऽजितः ॥ ४० ॥

कर्मणा मनसा वाचा तत्पराये हि मानवाः । तेषां व्रतानि वक्ष्यामि प्रीतये भूपसत्तम
अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्पता । एतानि मानसान्याहुर्व्रतानि हरितुष्टये ॥४२॥
एकभक्तं तथा नक्तमुपवासमयाचितम् । इत्येवं कायिकं पुंसां व्रतमुक्तं नरेश्वर ॥ ४३॥
वेदस्याध्ययनं विष्णोः कीर्तनं सत्यभाषणम् । अपैशुन्यमिदं राजन्वाचिकं व्रतमुत्तमम्
चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् । नाशौचं कीर्तने तस्य सपवित्रकरो यतः
वर्णाश्रमाचारवतापुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यः सन्तोषकारणम्
पतिप्रियहिताभिश्च मनोवाक्कायसंयमैः । व्रतैराराध्यते स्त्रीभिर्वासुदेवो दयानिधिः ॥
आगमोक्तेन मार्गेण स्त्रीशूद्रैरपि पूजनम् । कर्तव्यं कृष्णचन्द्रस्य द्विजातिवररूपिणः
त्रयोवर्णास्तु वेदोक्तमार्गाराधनतत्पराः । स्त्रीशूद्रादय एव स्युर्नाम्नाऽऽराधनतत्पराः ॥
न पूजनैर्न यजनैर्न व्रतैरपि माधवः । तुष्यते केवलं भक्तिप्रियोऽसौ समुदाहृतः ॥५०॥
स्त्रीणां पतिव्रतानां तु पतिरेवहि दैवतम् । स तु पूज्योविष्णुभक्त्यामनोवाक्कायकर्मभिः

कर्तव्यं श्रद्धया विष्णोश्चिन्तयित्वा पतिं हृदि ।
शूद्राणां चैव भवति नाम्ना वै देवतार्चनम् ॥ ५२ ॥

सवप्यागममार्गेण कुर्युर्वेदानुकारिणा । स्त्रीणामप्यधिकारोस्ति विष्णोराराधनादिषु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पतिप्रियरतानां च श्रुतिरेषा सनातनी । स्वकुलोचितधर्मेण यद्यस्य विहितं व्रतम् ॥
तत्तदेवाचरेद्यस्तु तेन तुष्यति केशवः । हविषाग्नौ जले पुष्पैर्ध्यानेन हृदये हरिम् ॥५५॥
यजन्ति सूरयौ नित्यं जपेन रविमण्डले । अहिंसा प्रथमंपुष्पं द्वितीयं करणग्रहः ॥५६॥
तृतीयकं भूतदया चतुर्थं क्षान्तिरेव च । शमस्तु पञ्चमं पुष्पं दमः षष्ठं च सप्तमम् ॥५७

ध्यानं सत्यं चाष्टञ्च ह्येतैस्तुष्यति केशवः ।
एतैरेवाष्टभिः पुष्पैस्तुष्यत्येवार्चितो हरिः ॥ ५८ ॥
पुष्पान्तराणिसन्त्येव बाह्यानि मनुजोत्तम ।
भक्त्याकृतानि यैर्विष्णुः पूजितः परितुष्यति ॥ ५९ ॥

वारुणं सलिलं पुष्पं सौम्यं घृतपयोदधि । प्राजापत्यं तथान्नादि आग्नेयं धूपदीपकम्
फलपुष्पादिकं चैव वानस्पत्यं तु पञ्चमम् । पार्थिवं कुशमूलाद्यं वायव्यं गन्धचन्दनम्

श्रद्धाख्यं विष्णुपुष्पं च वाद्यं विष्णुपदं स्मृतम् ।
एभिस्तु पूजितः पुष्पैरपि विष्णुः प्रसीदति ॥ ६२ ॥
सूर्योऽग्निर्ब्राह्मणोगावो वैष्णवः खंमरुज्जलम् ।
भूरात्मा सर्वभूतानि पूजास्थानानि वा हरेः ॥६३॥

सूर्यं तु मन्त्रजाप्येन हविषाग्नौ यजेत्ततः । आतिथ्येन तु विप्राग्र्ये गोषु ग्रासरसादिना
वैष्णवे बन्धुसत्कृत्या हृदये ध्याननिष्ठया । वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः
स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि । क्षेत्रज्ञं सर्वभूतेषु समत्वेनार्चयेद्विभुम् ॥६६
धिष्ण्येष्वेतेषु तद्रूपं शङ्खचक्रगदाम्बुजैः । युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत्समाहितः
ब्राह्मणैः पूजितैरेव पूजितोऽयं न संशयः । निर्भर्त्सितैश्चतैर्भूप भवेन्निर्भर्त्सितो विभुः
निगमो धर्मशास्त्रं च यदाधारे प्रवर्तते । विप्रास्ते वैष्णवीमूर्तिः पावनी परमामता ॥

सत्रं शुभं जगति धर्मत एव लभ्यं धर्मो गतिर्निगमतो नृप ! धर्मशास्त्रात् ।
नूनं तयोरपि गतिर्भुविभूमिदेवास्तैरर्चितैरिह जगत्पतिरर्चितः स्यात् ॥७०॥
न यज्ञयोगैर्नतपोभिरन्यैर्न योगयुक्त्या न समर्चनेन ।
तथा विभुस्तुष्यति देवदेवो यथा मही दैवततोषणेन ॥ ७१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मण्यो ब्रह्मविद्ब्रह्मा ब्रह्मवेद प्रवर्तकः। ब्राह्मणैरेव तुष्येत तोषितैर्ब्रह्मदैवतैः ॥ ७२ ॥

नरकेऽपि चिरंमग्नाः पूर्वजा ये कुलद्वये।
तदैव यान्ति ते स्वर्गं यदाऽर्च्चति सुतो हरिम् ॥ ७३ ॥

किं तेषां जीवितेनेह पशुवच्चेष्टितेन किम्। येषां न प्रवणं चित्तं वासुदेवे जगन्मये ॥
ध्यानं तस्य प्रवक्ष्यामि यन्नदृष्टं तु केनचित्। श्रूयतां भूप कैवल्यं केवलं मलवर्जितम्
यथा दीपो निवातस्थो निश्चलो वायुवर्जितः। प्रप्रज्वलन्नाशयेत्सर्वमन्धकारं महामते
तद्वद्दोषविहीनात्मा भवत्येव निरामयः। निराशो निश्चलो वीरो न मित्रं न रिपुस्तथा
शोकहर्षौ विषादश्च नलोभो मत्सरोभ्रमः। सम्भ्रमालापमोहैश्च सुखदुःखैर्विमुच्यते ॥
विषयैश्चापि सर्वैश्च इन्द्रियाणां प्रमुच्यते। तदा सकेवलज्ञानी कैवल्यत्वं प्रजायते ॥
ज्वालाकर्मप्रसङ्गेन दीपस्तैलं प्रशोषयेत्। वर्त्याधारेण राजेन्द्र ! निर्द्वन्द्वो वायुवर्जितः
कज्जलं वमते पश्चात्तैलस्यापि महामते। कृष्णासन्दृश्यते रेखा दीपस्याग्रे महामते ॥८१

स्वयमाकृष्य तत्तैलं तेजसा निर्मलो भवेत्।
काये चान्तःस्थितस्तद्वत्कर्मतैलं प्रशोषयेत् ॥ ८२ ॥
विषयान्कज्जलं कृत्वा प्रत्यक्षान्सम्प्रदर्शयेत्।
ज्वालावन्निर्मलो भूत्वा स्वयमेव प्रकाशयेत् ॥ ८३ ॥
क्रोधलोभादिभिः संज्ञैर्वायुभिः परिवर्जितः।
निःस्पृहो निश्चलो भूत्वा तेजश्च स्वयमुज्ज्वलेत् ॥ ८४ ॥

त्रैलोक्यं पश्यते सर्वं स्वस्थामस्थं स्वतेजसा। केवलज्ञानरूपोऽयं मया ते परिकीर्तितः
ध्यानं चैव प्रवक्ष्यामि द्विविधं तस्य चक्रिणः। केवलज्ञानरूपेण दृश्यते परचक्षुषा ॥
योगयुक्ता महात्मानः परमार्थपरायणाः। यं न पश्यन्ति मुग्धास्तु सर्वज्ञं सर्वदर्शकम्
हस्तपादविहीनश्च सर्वत्र परिगच्छति। सर्वं गृह्णाति त्रैलोक्यं स्थावरं जङ्गमं पुनः ॥
नासामुखविहीनस्तु घ्राति भक्षति भूपते !। अकर्णः शृणुते सर्वं सर्व साक्षी जगत्पतिः
अरूपो रूपसम्बद्धः पञ्चवर्गवशं गतः। सर्वलोकस्य यः प्राणः पूज्यते स चराचरैः ॥९०
अजिह्वो वदते सर्वं वेदशास्त्रानुगं तथा। अत्वचः स्पर्शमेवापि सर्वेषामेव विन्दति ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सदानन्दो विविक्ताक्ष एकरूपो निराश्रयः ।
निर्गुणो निर्ममो व्यापी सगुणो निर्मलोऽनघः ॥ ९२ ॥
अवश्यःसर्ववश्यात्मा सर्वदः सर्ववित्तमः । तस्य माता न चैवास्ति सर्वे सर्वमयो विभुः
एवं सर्वमयं ध्यानं यश्च पश्यत्यनन्यधीः । स याति परमं स्थानममूर्त्तममृतोपमम् ॥ ९४
द्वितीयं तु प्रवक्ष्यामि तच्छृणुष्व महामते । मूर्त्ताकारं तु साकारं निराकारंनिरामयम् ॥
ब्राह्माण्डं सर्वमतुलं वासितं यस्य वासनात् । स तस्माद्वासुदेवस्तु प्रोच्यते नृपनन्दन !
वर्षमाणस्य मेघस्य यद्भासा तस्य तद्भवेत् । सूर्यतेजःप्रतीकाशं चतुर्बाहुंसुरेश्वरम् ॥
दक्षिणे शोभते शङ्खो हेमरत्नविभूषितः । कौमोदकी गदा तस्य महासुरविनाशिनी
वामेच शोभते वीर हस्तेतस्य महात्मनः । महापद्मंसुगन्धाढ्यं तस्त दक्षिणहस्तगम् ॥
शोभमानं सदैवास्ते सायुधं कमलश्रियम् । कम्बुग्रीवं सुवृत्तास्यं पद्मपत्रनिभेक्षणम् ॥
राजमानं हृषीकेशं दशनैः कुन्दसन्निभैः । गुडाकेशस्य यस्यास्ते अधरो विद्रुमाकृतिः
शोभते पुण्डरीकाक्षः किरीटेनापि भास्वता । विशालेनापि रूपेण केशवस्तु सुवक्षसा
कौस्तुभेनाङ्कितेनैव राजमानो जनार्दनः । सूर्यतेजःप्रतीकाशकुण्डलाभ्यां प्रभाति च ॥
श्रीवत्साङ्केन पुण्येन सर्वदा राजते हरिः । केयूरकङ्कणैर्हारैर्मौक्तिकैर्ऋक्षसन्निभैः ॥
वपुषा भ्राजमानस्तु विजयो जयतां वरः । भ्राजते सोऽपि गोविन्दो हेमवर्णेन वाससा
मुद्रिकाभिस्तु युक्ताभिरङ्गुलीषु विराजते । सर्वायुधैः सुसम्पूर्णैर्दिव्यैराभरणैर्हरिः ॥
वैनतेयसमारूढो लोककर्त्ता जगत्पतिः । एवं यो ध्यायते नित्यमनन्यमनसा नरः ॥
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति । एतत्त सर्वं माख्यातं ध्यानभेदं जगत्पतेः

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्ये नारदाम्बरीषसंवादे भगवद्ध्यानवर्णनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# पञ्चाशीतितमोऽध्यायः

## भक्तिलक्षणभेदवर्णनम्।

अम्बरीष उवाच।

साधु साधु मुनिश्रेष्ठ! लोकानुग्रहकारक!।
विष्णोर्ध्यानं त्वया प्रोक्तं सगुणं निर्गुणं च यत्॥ १॥

अधुना लक्षणं ब्रूहि भक्तेः साधु कृपाकर। यादृशी क्रियतेयेन यथा यत्रयदा तथा॥

सूत उवाच।

इत्युक्तमाकर्ण्य नृपोत्तमस्य मुनिः प्रहृष्टो निजगाद भूपम्।
शृणुष्व राजन्निखिलाघहारिणीं भक्तिं हरेस्ते प्रददामि सम्यक्॥ ३॥

अथ भक्तिं प्रवक्ष्यामि त्रिविधां पापनाशिनीम्।
त्रिविधा भक्तिरुद्दिष्टा मनोवाक्कायसम्भवा॥ ४॥

लौकिकी वैदिकी चापि भवेदाध्यात्मिकी तथा।
ध्यानधारणया बुद्ध्या वेदानां स्मरणं हि यत्॥ ५॥

विष्णुप्रीतिकरी चैषा मानसी भक्तिरुच्यते। मन्त्रवेदसमुच्चारैरविश्रान्तविचिन्तनैः॥
जाप्यैश्चारण्यकैश्चैव वाचिकी भक्तिरुच्यते। व्रतोपवासनियमैः पञ्चेन्द्रियजयेन च॥

कायिकी सैव निर्दिष्टा भक्तिः सर्वार्थसाधिनी।
भूषणैर्हेमरत्नाढ्यै श्चित्राभिर्वाग्भिरेव च॥ ८॥

वासः प्रतिसरैः सूत्रैः पावकव्यजनोच्छ्रितैः। नृत्यवादित्रगीतैश्च सर्वबल्युपहारकैः॥

भक्ष्यभोज्यान्नपानैश्च या पूजा क्रियते नरैः।
नारायणं समुद्दिश्य भक्तिः सा लौकिकी मता॥ १०॥

कायिकी सैव निर्दिष्टा भक्तिः सर्वार्थसाधिका।
ऋग्यजुःसामजात्यानि संहिताध्ययनानि च॥ ११॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रियन्ते विष्णुमुद्दिश्य वैदिकी भक्तिरुच्यते। वेदमन्त्रहविर्योगैःक्रियाया वैदिकीमता
दर्शे च पौर्णमास्यां च कर्त्तव्यं चाग्निहोत्रकम्। प्राशनं दक्षिणादानंपुरोडाशंचरुक्रिया
इष्टिर्धृतिः सोमपानं याज्ञियं कर्मसर्वशः। अग्निभूम्य निलाकाशद्युतिशङ्करभास्करम्॥
तमुद्दिश्य कृतं कर्म तत्सर्वंविष्णुदैवतम्। आध्यात्मिकीतिविविधाब्रह्मभक्तिस्थितानृप

साङ्ख्याख्यां योगसञ्ज्ञातां श्रृणु भूप! यथोदिताम्।
चतुर्विंशतितत्त्वानि प्रधानादीनि सङ्ख्यया॥ १६॥

अचेतनानि भोग्यानि पुरुषः पञ्चविंशकः। चेतनःससमुद्दिष्टो कर्ताभोक्ता च कर्मणाम्

आत्मा नित्योऽव्ययश्चैव अधिष्ठाता प्रयोजकः।
पुरुषोऽव्यक्तनित्यः स्यात्कारणं च महेश्वरः॥ १८॥
तत्त्वसर्गो भावसर्गो भूतसर्गश्च तत्त्वतः।
सङ्ख्यांयाः परिसङ्ख्यायाः प्रधानं च गुणात्मकम्॥ १६॥

ज्ञात्वा साधर्म्यवैधर्म्यं प्रधानं च विधर्मि च। कारणं ब्रह्मणश्चैव कामित्वमिदमुच्यते
प्रयोज्यत्वं प्रधानस्य वैधर्म्यमिदमुच्यते। सर्वत्र कर्तृता ब्रह्मपुरुषस्याप्यकर्तृता॥
अचेतनप्रधानेन समत्वमिदमुच्यते। तत्त्वान्तरं च तत्त्वानां कार्यकारणमेव च॥२२॥

प्रयोजनं प्रयोज्यत्वं ज्ञात्वा तत्त्वप्रसङ्ख्यया।
सङ्ख्यातमुच्यते प्राज्ञैर्विजयाथ विचिन्तकैः॥ २३॥

इति मत्वास्यसद्भावंतत्त्रंसङ्ख्यां च तत्त्वतः। ब्रह्मतत्त्वाधिकंचापि भूततत्त्वंविदुर्बुधाः

साङ्ख्यैः कृता भक्तिरेखा भक्तिराध्यात्मिकी स्मृता।
योगजामपि ते भूप! श्रृणुभक्तिं वदाम्यहम्॥ २५॥

प्राणायामपरो नित्यं ध्यानवान्नियतेन्द्रियः। भैक्ष्यभक्षव्रती चापि सर्वप्रत्याहृतेन्द्रियः
धारणं हृदये कृत्वा ध्यायमानो महेश्वरम्। हृत्पद्मकर्णिकासीनं पीतवस्त्रं सुलोचनम्
पश्यन्नुद्द्योतितमुखं ब्रह्मसूत्रकटीतटम्। श्वेतवर्णं चतुर्बाहुं वरदाभयहस्तकम्॥ २८॥

योगजा मानसी सिद्धिर्विष्णुभक्तिः परा स्मृता।
य एवं भक्तिमान्देवं विष्णुभक्तिः स उच्यते॥ २६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं भक्तिः समुद्दिष्टा त्रिविधा नृपनन्दन । सात्त्विकीराजसीचैवतामसीभेदतस्त्विमाः

नानाप्रकारा विज्ञेया विष्णोरमिततेजसः ।

यथाग्निः सुसमृद्धार्च्चिः करोत्येधांसि भस्मसात् ॥ ३१ ॥

पापानि भगवद्भक्तिस्तथा दहति तत्क्षणात् ॥ ३२ ॥

यावज्जनो न शृणुते भुवि विष्णुभक्तिं साक्षात्सुधारसमशेषरसैकसारम् ।

तावज्जरामरणजन्मशताभिघातदुःखानितानि लभते बहुदेहजानि ॥ ३३ ॥

सञ्चिन्तितः कीर्तित एव नित्यं श्रुतानुभावो भगवाननन्तः ।

समन्ततोऽघं विनिहन्ति मेघं वायुर्यथा भानुरिवान्धकारम् ॥ ३४ ॥

न दानदेवार्चनयागतीर्थस्नानश्रुताचारतपःक्रियाभिः ।

तथा विशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥ ३५ ॥

कथा विशुद्धा नरनाथ ! तथ्यास्ता एव पथ्या हरिनाथ पथ्याः ।

सङ्कीर्तिता यत्र पवित्रमूर्तेः संश्रूयते च श्रुतसाधुकीर्तिः ॥ ३६ ॥

धन्योऽसि धीर ! धरणीधर ! धर्मधुर्य ! ध्यानैकतानहृदयः पुरुषोत्तमस्य ।

यन्नैष्ठिकी मतिरसौ तव सौभगश्रीः श्रीकृष्णनाथसुकृतश्रवणे प्रवृत्ता ॥ ३७ ॥

अनाराध्य हरिंभक्त्या वरदं विष्णुमव्ययम् । कुतः श्रेयोभवेद्भूप पुरुषस्यात्ममानिनः

मायाजनिरमायोऽसौ भक्त्या राजन्नमाख्या ।

साध्यते साधुपुरुषः स्वयं जानाति तद्भवान् ॥ ३८ ॥

न विद्यते ते नृपधर्मतत्त्वमज्ञातमेतद्विमलं पुनर्माम् ।

त्वं पृच्छसे तीर्थपदं प्रसङ्गात्कथारसं वैष्णवगौरवेण ॥ ४० ॥

नातः परं परमतोषविशेषपोषं पश्यामि पुण्यमुचितं च परस्परेण ।

सन्तः प्रसह्य यदनन्तगुणाननन्तश्रेयोनिधीनधिकभावभुजो वदन्ति ॥ ४१ ॥

ब्राह्मणाः सुरभी सत्यं श्रद्धा यागतपांसि च ।

श्रुतिस्मृति दया दीक्षा शान्तयस्तनवो हरेः ॥ ४२ ॥

आदित्यश्चन्द्रमा वायुर्भूमिरापोऽम्बरंदिशः । ब्रह्माविष्णुश्च रुद्रश्च सर्वभूतमयो विभुः॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विश्वरूपः स्वयं चक्रे जगदेतच्चराचरम् । स्वयं ब्राह्मणमाविश्य सदान्नमुपभुञ्जते ॥

ततस्तु तीर्थास्पदपादरेणून्धराधरात्मालयभूमिदेवान् ।
परात्मनः पूजय पुण्यलक्ष्मीसर्वस्वभूतानखिलात्मभूतान् ॥ ४५ ॥

ब्राह्मणं विष्णुबुद्ध्या यो विद्वांसं साधु पश्यति ।
स एव वैष्णवो यश्च स्वस्वकर्मैकनिष्ठितः ॥ ४६ ॥

किञ्चिदेतन्मयाप्रोक्तं रहस्यंसमयो हि मे । स्नातुंगन्तुंच गङ्गायां न कथावसरोऽधिकः

प्राप्तोऽयं माधवोमासः पुण्योमाधववल्लभः ।
तस्यापि सप्तमी शुक्ला गङ्गायामतिदुर्ल्लभा ॥ ४८ ॥

वैशाखशुक्लसप्तम्यां जाह्नवीजह्नुनापुरा । क्रोधात्पीत्वापुनस्त्यक्ता कर्णरन्ध्रात्तुदक्षिणात्
तस्यां समर्चयेद्देवीं गङ्गां गगनमेखलाम् । स्नात्वा सम्यग्विधानेन सधन्यः सुकृती नरः
तस्यां यस्तर्पयेद्देवान्पितॄन्मर्त्यो यथाविधि ।साक्षात्पश्यति तं गङ्गा स्नातकंगतपापकम्
न माधवसमो मासो न गङ्गा सदृशीनदी ।दुर्ल्लभः खलुयोगोऽयं हरिभक्त्यैव लभ्यते

विष्णुपादोदकोद्भूता ब्रह्मलोकादुपागता ।
त्रिभिः स्रोतोभिरश्रान्ता या पुनाति जगत्त्रयम् ॥ ५३ ॥

स्वर्गारोहणनिःश्रेणी सततानन्दकारिणी । अनेकदुरितोद्गारहारिणी दुर्गतारिणी ॥
श्रीमहेशजटाजूटवासिनी दुःखनाशिनी । भजमानजनस्वान्तकान्तकेलिविनाशिनी ॥

सगरान्वयनिर्वाणकारिणी धर्मधारिणी ।
त्रिमार्गचारिणी देवी लोकालङ्कृतिकारिणी ॥ ५६ ॥

दर्शनस्पर्शनस्नानकीर्त्तनध्यानसेवनैः । पुण्यानपुण्यान्पुरुषान्पावयन्ती सहस्रशः ॥५७॥
गङ्गागङ्गेति गङ्गेति यैस्त्रिसन्ध्यमितीरितम् । सुदूरस्थैश्च तत्पापं हन्ति जन्मत्रयार्जितम्
योजनानां सहस्रेषु गङ्गां यः स्मरतेनरः । अपिदुष्कृतकर्मासौ लभते परमां गतिम् ॥
वैशाखे शुक्लसप्तम्यां दुर्ल्लभा सा विशेषतः । प्राप्यते जगतीपाल ! हरिविप्रप्रसादतः ॥
न माधवसमो मासो न माधवसमो विभुः । पोतोहिदुरिताम्भोधौमज्जमानजनस्य यः ॥
दत्तं जप्तं हुतं स्नातं यद्भक्त्या मासि माधवे । तदक्षयं भवेद्भूप पुण्यं कोटिशताधिकम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथादेवेषु विश्वात्मा देवोनारायणो हरिः। यथा जपेषु गायत्री सरितां जाह्नवी तथा
यथोमा सर्वनारीणां तपतां भास्करो यथा।
आरोग्यलाभो लाभानां द्विपदां ब्राह्मणो यथा ॥ ६४ ॥
परोपकारः पुण्यानां विद्यानां निगमो यथा।
मन्त्राणां प्रणवो यद्वद्ध्यानानामात्मचिन्तनम् ॥ ६५ ॥
सत्यं स्वधर्मवर्तित्वं तपसां च यथावरम्। शौचानामर्थशौचं च दानानामभयं यथा ॥
गुणानां च यथा लोभक्षयो मुख्योगुणः स्मृतः।
मासानां प्रवरो मासस्तथाऽसौ माधवो मतः ॥ ६७ ॥
तत्र यत्क्रियते श्राद्धं यज्ञदानमुपोषणम्। तपोऽध्ययनपूजादि तदक्षयफलं स्मृतम् ॥
वैशाखान्तानि पापानि सूर्यान्तानि तमांसि च। परापकारपैशून्यप्रान्तानि सुकृतानिच
कार्त्तिके मासि यत्किञ्चित्तुलासंस्थे दिवाकरे।
स्नानदानादिकं राजंस्तत्पराधंगुणं भवेत् ॥ ७० ॥
तस्मात्सहस्रगुणितं माघे मकरगे रवौ। ततोऽपि शतसङ्ख्यातं वैशाखे मेषगे रवौ ॥
ते धन्यास्ते सुकृतिनो नरा वैशाखमासि ये।
प्रातः स्नात्वा विधानेन पूजयन्ति मधुद्विषम् ॥ ७२ ॥
प्रातः स्नानं च वैशाखे यज्ञदानमुपोषणम्। हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ॥
पुनः कलियुगे राजन्नेतद्गोप्यं भविष्यति।
अश्वमेधादिकं यस्मान्माहात्म्यं माधवस्य यत् ॥ ७४ ॥
अश्वमेधमखः पुण्यः कलौनैव प्रवर्तते। एष माधव मासस्य हयमेधसमो विधिः ॥७५
अश्वमेधस्य यत्पुण्यं स्वर्गमोक्षफलप्रदम्। न वेत्स्यन्ति कलौ पापा जनादुरितबुद्धयः
तस्मिन्भवैर्नरैः पापैर्गन्तव्यं नरकार्णवे। अतस्तु विरलस्तस्य प्रचारो येन निर्मितः ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्ये पञ्चाशीतितमोऽध्यायः ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# षडशीतितमोऽध्यायः

## वैशाखमासव्रतविधानवर्णनम् ।

सूत उवाच ।

इतितस्य वचः श्रुत्वानारदस्य महात्मनः । अम्बरीषश्च राजर्षिर्विस्मितो वाक्यमब्रवीत्

अम्बरीष उवाच ।

मार्गशीर्षादिकान्मासान्हित्वा पुण्यान्महामुने ! ।
सर्वमासाधिकं मासं वैशाखं किं प्रशंससि ॥ २ ॥
सर्वेभ्योऽप्यधिकः कस्मान्माधवो माधवप्रियः ।
को विधिस्तत्र किं दानं किंतपः का च देवता ॥ ३ ॥

त्वत्पादाम्भोजरजसा पावितस्य च मे मुने ! । उपदेशप्रसादेन प्रसादं कर्तुमर्हसि ॥४॥
धर्मज्ञो धर्ममार्गाणामुद्धर्ताऽसि महामुने ! । त्वमेकोऽखिलतत्त्वार्थवेत्ता धर्मोपदेशकः ॥
कर्तोपदेष्टा मन्ता वाऽनुमन्ताऽपिप्रयोजकः । शास्त्रविद्भिर्मुनिवरस्मर्यन्ते समभागिनः
व्रतसत्रतपोदानैर्यत्फलं समवाप्यते । धर्मोपदेशनेनैव तत्सर्वमुपलभ्यते ॥ ७ ॥
तीर्थस्नानं तपोयज्ञकर्मयत्कुरुते मुने । अपि तत्फलभागीस्याद्यः प्रवर्तयिताभवेत् ॥८॥
यद्यदा चरति श्रेष्ठस्तत्तदेवेतरो जनः । सयत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ६ ॥
तदर्हति भवान्धर्ममुपदेष्टुं तदद्भुतम् । दुर्लभो गुरुसम्बोधो देशकालोपपत्तयः ॥१०॥
न केचन तथा भावाश्चेतः शीतलयन्तिनः । राज्यलाभाद्योऽप्येते यथा तव समागमः

सूत उवाच ।

अथ मन्दमृदुस्मेरस्फुरद्दन्तप्रभानुगः । अम्बरीषं प्रत्युवाच नारदो मुनिसत्तमः ॥१२॥

नारद उवाच ।

शृणु राजन्प्रवक्ष्यामि हिताय जगतस्तव । विधिर्माधवमासस्य यच्छ्रुतो ब्रह्मणः पुरा ॥
दुर्लभं भारते वर्षे जन्म तस्मान्मनुष्यता । मानुष्ये दुर्लभे लोके स्वस्वधर्मप्रवर्त्तनम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततोऽपि भक्तिर्भूपाल वासुदेवेऽति दुर्ल्लभा।
तत्रापि दुर्ल्लभो मासो माधवो माधवप्रियः॥ १५॥
तमवाप्य ततो मासं स्नानदानजपादिकम्।
कुर्वन्ति विधिना ये तु धन्यास्ते कृतिनो नराः॥ १६॥
तेषां दर्शनमात्रेण पापिनोऽपि विकिल्विषाः।
भवन्ति भगवद्भावभाविता धर्मकाङ्क्षिणः॥ १७॥
माधवे मासि यैः स्नातं प्रातर्नियमसंयुतैः। ते कोटिवर्षपर्यन्तं क्रीडन्ते नन्दने वने॥
यथा न वारिधिसमो लोके कोऽपि जलाशयः।
तथा मासो न वैशाखसदृशो माधवप्रियः॥ १९॥
तावत्पापानि तिष्ठन्ति मनुष्याणां कलेवरे।
यावत्कलिमलध्वंसी मासो नायाति माधवः॥ २०॥
अवशिष्टदिनान्येव पञ्च मासस्य तस्य वै। एकादशीं समारभ्य सर्वमाससमानि वै॥
वैशाखे पूजितो देवो माधवो मधुहा तु यैः।
नानोपचारै राजेन्द्र तै प्राप्तं जन्मनः फलम्॥२२॥
किं किं न दुर्ल्लभतरं प्राप्यते मासि माधवे। स्नानेन परमेशस्य पूजनेन यथाविधि॥
न दत्तं न हुतं जप्तं न तीर्थे मरणं कृतम्। यैर्हि नारायणो नैव ध्यातो निखिलपापहा
तेषां जन्मनृणां लोके ज्ञातव्यं निष्फलं नृप। द्रव्येषु विद्यमानेषु कृपणो यो भवेन्नरः
अदत्त्वा म्रियते यो हि तस्य द्रव्यं निरर्थकम्।
तीर्थ स्नानादि तपसा सत्कुले जन्म लभ्यते॥ २६॥
न दानेन विना भूप किञ्चिदप्युपतिष्ठति। वैशाखस्नानमाहात्म्यादपि पञ्चदिनात्मकात्
सत्कुले प्राप्यते जन्म वैभवं विविधं तथा। सुपुत्रः सुकुलं भूप धनं धान्यं वरस्त्रियः
सुजन्ममरणंचापि सुभोगाः सुखमेव च। सदा दानेऽधिका प्रीतिरौदार्यं धैर्यमुत्तमम्
प्रसादात्तस्य देवस्य विष्णोश्चैव महात्मनः।
नारायणस्य जायन्ते सिद्धयो भूपवाञ्छिता॥ ३०॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऊर्जे मासि तपोमासि माधवे माधवप्रिये । स्नात्वा दामोदरं भक्त्या माधवं मधुसूदनम्
विशेषेण समभ्यर्च्य दत्त्वा दानानि शक्तितः ।
ऐहिकं सुखमासाद्य नरो हरिपदं व्रजेत् ॥ ३२ ॥
अनेकजन्मार्जितपातकावली विलीयते माधवमज्जनेन ।
सूर्योदये भूप यथा तमिस्रं वचः स्वयम्भुरिदमादिशन्मे ॥ ३३ ॥
चकार विष्णुर्विपुलप्रचारं मासस्य वै माधवसंज्ञकस्य ।
यमस्य गुप्तं वचसा विचिन्त्य मनुष्यलोकं गमितं चकार ॥ ३४ ॥
तस्मादस्मिन्समायाते माधवेमासि वैष्णवैः ।
स्नात्वा पुण्यजले तीर्थे गङ्गायाः पावने नृणाम् ॥ ३५ ॥
रेवाया वा महाराज यामुने शारदेऽथवा । प्रातस्त्वनुदिते भानौ विधानेन नृपोत्तम! ॥
पूजयित्वा च देवशं मुकुन्दं मधुसूदनम् । पुत्रपौत्रधनैःश्रेयो वाञ्छितानि सुखानि च
अनुभूय तपस्त्वन्ते स्वर्गमक्षयमाप्नुयात् । एवं ज्ञात्वा महाभाग मधुसूदनमर्चय ॥३८॥
स्नात्वा सम्यग्विधानेन वैशाखे तु विशेषतः ।
देवमाराध्य गोविन्दं नारायणमनामयम् ॥ ३९ ॥
प्राप्स्यसित्वं सुखं पुत्रं धनानि च हरेःपदम् । देवदेवं नमस्कृत्य माधवं पापनाशनम्
प्रारभेतःव्रतमिदं पौर्णमास्यां मधौर्नृप । यमैश्च नियमैर्युक्तःशक्त्या किञ्चित्प्रदाय च
हविष्यभुग्भूमिशायी ब्रह्मचर्यव्रते स्थितः ।
कृच्छ्रादि तपसा क्षामो ध्यायन्नारायणं हृदि ॥ ४२ ॥
एवं प्राप्य च वैशाखीं दद्यान्मधु तिलादिकम् ।
भोजनं द्विजमुख्येभ्यो भक्त्या धेनुं सदक्षिणाम् ॥ ४३ ॥
अच्छिद्रं प्रार्थयेच्चापि तस्य स्नानस्य भूसुरान् ।
यथा लक्ष्मीःप्रिया भूप ! माधवस्य जगत्पतेः ॥ ४४ ॥
तथैव माधमोमासो मधुसूदनवल्लभः । एवं विधियुतो मर्त्यःस्नात्वा द्वादशवत्सरम्
उद्यापनं चरेच्छक्त्या मधुसूदनतुष्टये । इदं माधवमासस्य माहात्म्यं कथितं तव ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्पुरा ब्रह्मणो वक्त्राच्छ्रुतमासीन्मया नृप ! ॥ ४७ ॥

इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे वैशाखमासमाहात्म्ये षडशीतितमोऽध्यायः

---

## सप्ताशीतितमोऽध्यायः

### वैशाखस्नानमाहात्म्ये देवशर्मब्राह्मणवृत्तान्तवर्णनम् ।

सूत उवाच ।

इति तस्य वचःश्रुत्वा नारदस्यस भूपतिः । प्रणम्य विस्मितःप्राहचिन्तयन्मनसा हरिम्

अम्बरीष उवाच ।

कथमेतद्विमुह्यामःस्वल्पायासेन वै मुने ! । प्राप्यते स्नानमात्रेण फलंचैवातिदुर्ल्लभम्

नारद उवाच ।

सत्यमुक्तं त्वया राजन्नल्पायासेन यन्महत् ।
फलं सम्प्राप्यते तत्र श्रद्धत्स्व विधिभावितम् ॥ ३ ॥

धर्मस्य गतयःसूक्ष्माः दुर्ज्ञेयाहीश्वरैरपि । मुह्यन्तेचात्र विद्वांसोऽचिन्त्यशक्तिः हरेःकृतौ

विश्वामित्रादयो राजन्धर्माधिक्येन बाहुजाः ।
ब्राह्मण्यं समुपायाताः सूक्ष्मा धर्मगतिस्त्वतः ॥ ५ ॥

अजामिलोऽपि भूपाल ! दासीपतिरिति श्रुतः ।
धर्मपत्नीपरित्यागी नित्यं पापपथि स्थितः ॥ ६ ॥

म्रियमाणःसुतस्नेहात्प्रोच्य नारायणेति च । तद्ध्याननामग्रहणात्पदंलेभे सुदुर्ल्लभम् ॥

अनिच्छयापि दहति स्पृष्टो हुतवहो यथा । तथा दहति गोविन्द नाम व्याजादपीरितम्

कानीनस्य मुनेः पौत्रा भ्रातृजायाभिगामिनः ।
गोलकस्य च वै पाण्डोः पुण्डाः कुण्डाः स्वयं तथा ॥ ९ ॥

ते पञ्चापि च भूपाल पाण्डवा द्रौपदीरताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेषां च पुण्यश्लोकत्वं सूक्ष्मा धर्मगतिस्ततः ॥ १० ॥
विचित्राणि च कर्माणि विचित्रा भूतभावनाः ।
विचित्राणि च भूतानि विचित्राः कर्मशक्तयः ॥ ११ ॥
कदाचित्सुकृतं कर्म कूटस्थं यदवस्थितम् । केनचित्कर्मणा भूप! शुभेन परिवर्धते ॥१२
फलं ददाति सुमहत्कस्मिन्नपि च जन्मनि । सूक्ष्मो धर्मोऽतिगहनो मीयते न यथातथा
नैतस्य फलदानस्य श्रूयते भूपनिश्चयः । यत्किञ्चित्सुकृतंकर्म च्छन्नं पापान्तरैरपि ॥
तदागत्य कुतः क्वापि स्वं फलं च प्रयच्छति ।
कृतस्य नेह नाशोऽस्ति पुण्यस्य दुरितस्य च ॥ १५ ॥
तथापि बहुभिःपुण्यैर्दुरितं याति दारुणम् । यदुक्तं भवता राजन्नायासाधिक्यतो भवेत्
महत्पुण्यं च तत्रापि कारणं मे निशामय ।
स्वल्पायासमहायासौ यद्यल्पत्वमहत्त्वयोः ॥ १७ ॥
महापुण्यास्ततस्तेस्युःसन्ततं कर्षकादयः । मन्त्रोच्चारं च सिंहादेरायासं बहुलं त्वतः
पञ्चगव्यं प्रशस्तं हि व्रताङ्गत्वेन नो भवेत् । इति कर्तव्यबाहुल्यं महत्त्वं च तदल्पता ॥
जलाग्न्यादि प्रवेशस्य प्रसज्येत व्रतान्तरात् । इदमल्पं महच्चैतदिति नैव नियामकम् ॥
फलं यच्चोदितं शास्त्रे तदेवस्यान्महन्नृप । यथाल्पनाशो महता महन्नाशस्तथाल्पतः
किं त्वल्पविस्फुलिङ्गेन तृणराशिःप्रदह्यते ॥ २२ ॥
हत्यायुतं पापसहस्रमुग्रं गुर्वङ्गना कोटिनिषेवणं च ।
स्तेयादि पापानि च कृष्णभक्तैरज्ञानजातानिलयं ह्रियन्ते ॥ २३ ॥
विष्णुभक्तिमता वीर यत्किञ्चित्क्रियतेऽल्पकम् । सुकृतं साधुविदुषा तदक्षयफलं लभेत्
सन्देहो नात्र कर्त्तव्यो माधवे मासि माधवम् ।
समाराध्य नरो भक्त्या तत्तद्वाञ्छितमाप्नुयात् ॥ २५ ॥
अपत्यद्रविणं रत्नं दाराहर्म्यं हयागजाः । सुखानि स्वर्गमोक्षौ च न दूरे हरिभक्तितः
एवं शास्त्रोक्त विधिना स्वल्पेनापि न संशयः ।
पापस्य महतोऽपिस्यात्क्षयो वृद्धिः सुकर्मणः ॥ २७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

फलाधिक्यंभवेद्भूपत्वाधिक्याद्भावकर्मणोः। सूक्ष्माधर्मस्यविज्ञेयागतिस्तुविविधैरपि

प्रियो माधवमासोऽयं माधवस्यमहात्मनः ।
एकोऽप्यनुष्ठितो लोकैः समग्रेप्सितदायकः ॥ २६ ॥
पुण्येन गाङ्गेन जलेन काले देशेऽपि यः स्नानपरोऽपि भूप ! ।
आजन्मतो भावहतोऽपि दाता न शुद्धिमेतीति मतं ममैतत् ॥ ३० ॥
गङ्गादितीर्थेषु वसन्ति जीवा देवालये पक्षिगणाश्च नित्यम् ।
विनाशमायान्ति कृतोपवासा भावोज्झिता नैव गतिं लभन्ते ॥ ३१ ॥
भावं ततो हृत्कमले निधाय श्रीमाधवं माधवमासि भक्त्या ।
यजेत यः स्नानपरो विशुद्धः पुण्यं न भक्ता वयमस्य वक्तुम् ॥ ३२ ॥
प्रज्वाल्य वह्निं घृततैलसिक्तं प्रदक्षिणावर्तशिखं स्वकाले ।
प्रविश्य दग्धः किल भावदुष्टो न स्वर्गमाप्नोति फलं न चान्यत् ॥ ३३ ॥

श्रद्धत्स्व भूप तस्मात्त्वं माधवस्य फलंप्रति । स्वल्पंचापि शुभंकर्म विकर्मशत नाशनम्

यथा हरेर्नाम भयेन भूप ! नश्यन्ति सर्वे दुरितस्य वृन्दाः ।
नूनं रवौ मेषगते विभाते स्नानेन तीर्थे च हरिस्तवेन ॥ ३५ ॥

तेजसा वैनतेयस्य पाप्मानःपन्नगा इव । विद्रवन्ति च वैशाखस्नानेनोषसि निश्चितम्
गङ्गायां नर्मदायां वा स्नात्वा मेषगते रवौ । पापप्रशमनस्तोत्रं यःपठेद्भक्तिभावतः ॥३७
एककालं द्विकालं वा त्रिसन्ध्यमपि भूपते ! । स याति परमंस्थानं सर्वपापविवर्जितः
अम्बरीष ! महापुण्यप्राप्तये कुरु वीक्षणम् । माधवेमासि वै स्नानं प्रातर्नियमसंस्थितः

यदानर्त्तपुरे प्रोक्तं वसतां वर्षकोटिभिः ।
तत्प्रातर्माधवे मासि स्नाने नैकेन लभ्यते ॥ ४० ॥

इहार्थे यत्पुरावृत्तं तदाकर्णय भूपते । भार्ययासह संवादं देवशर्मद्विजन्मनः ॥ ४१ ॥
रैवातीरे सुपुण्ये च तीर्थे चामरकण्टके । कौशिकस्य सुतो जातो देवशर्मा द्विजोत्तमः
धनपुत्रविहीनस्तु बहुदुःखसमन्वितः । दारिद्र्येण सुदुःखेन सर्वदैव प्रपीडितः ॥४३॥

पुत्रोपायं धनस्यापि दिवारात्रौ प्रचिन्तयेत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकदा तु प्रिया तस्य सुमना नाम सुव्रता ॥ ४४ ॥
भर्तारं चिन्तयोपेतमधोमुखमलक्षयत् । समालोक्य तदाकान्तं तमुवाच यशस्विनी ॥
दुःखजालैरसङ्ख्यैस्तु तवचित्तं प्रकर्शितम् । व्यामोहेन प्रमूढोऽसि त्यजचिन्तां महामते
मम दुःखं समाचक्ष्व स्वस्थो भव सुखं व्रज ।
नास्ति चिन्तासमं दुःखं कायशोषणमेव हि ॥ ४७ ॥
तां सन्त्यज्य प्रवर्तेत स सुखेन प्रमोदते । चिन्तायाःकारणं विप्र कथयस्व ममप्रभो

नारद उवाच ।

प्रिया वाक्यं स संश्रुत्य देवशर्मा महामतिः ।
उवाच वचनं प्रीतो दुःखितोऽपि सतीसखः ॥ ४९ ॥

देवशर्मोवाच ।

यत्त्वया चिन्तितं भद्रे ! किञ्चिद्दुखःस्य कारणम् ।
तत्सर्वं तु प्रवक्ष्यामि श्रुत्वा चैवावधार्यताम् ॥ ५० ॥
न जाने केन पापेन धनहीनोऽस्मि सुव्रते ! ।
तथा पुत्रविहीनोऽस्मि एतद्दुःखस्यकारणम् ॥ ५१ ॥

सुमनोवाच ।

श्रूयतामभिधास्यामि सर्वसन्देहनाशनम् । स्वरूपमुपदेशस्य सर्वविज्ञानदर्शनम् ॥५२॥
सन्तोष एव परमं पुण्यंसौख्यादि कारणम् । असन्तोषःपरंपापमित्याह भगवान्हरिः
लोभः पापस्य बीजोऽयं मोहो मूलं च तस्य वै ।
असत्यं तस्य हि स्कन्धो महाशाखा सुविस्तरात् ॥ ५४ ॥
मदकौटिल्यपत्राणि कुबुद्धया पुष्पितःसदा । अनृतं तस्य सौगन्ध्यमज्ञानं फलमेव च
कुड्यं पाषण्डचौराश्च क्रूराः कूटाश्च पापिनः ।
पक्षिणो मोहवृक्षस्य महाशाखासमाश्रिताः ॥ ५६ ॥
अज्ञानं सुफलं तस्य रसोधर्मं फलस्य हि । भावोदकेन संवृद्धिस्तस्य श्रद्धा ऋतुप्रिया
अधर्मेषु रसस्तस्य उत्क्लेदैर्मधुरायते । तादृशैश्च फलैश्चैव सफलो लोभपादपः ॥५८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्य च्छायां समाश्रित्य यो नरः परिवर्तते ।
फलानि तस्य सोऽश्नाति स्वपकानि दिनेदिने ॥ ५९ ॥
फलानां च रसेनापि अधर्मेण तु पोषितः । स सम्पुष्टो भवेन्मर्त्यःपतनाय प्रयच्छति
तस्माच्चिन्तां परिश्रित्य स्वामिलोमं न कारयेत् ।
धनपुत्रकलत्राणां चिन्तामेतां न कारयेत् ॥ ६१ ॥
यो हि विद्वान्न चेत्कान्त ! मूर्खाणां पथमेव हि ।
मृषा चिन्तयते नित्यं दिवारात्रौ विमोहितः ॥ ६२ ॥
शुभार्थं च प्रविन्दामि कथं पुत्रानहं लभे । एवं चिन्तयते नित्यं दिवारात्रौ विमोहितः
क्षणमेकं प्रपश्येत्स चिन्तामध्ये महत्सुखम् । पुनश्चैतन्यमायाति महादुःखेन पीड्यते
चिन्तामोहौ परित्यज्य अनुवर्तस्व तं द्विज । संसारेनास्ति सम्बन्धः केनसार्धं महामते
मित्राणि बान्धवाः पुत्राः पिता माता सुतास्तथा ।
स्वसम्बन्धा भवन्त्येते कलत्रादि तथैव च ॥ ६६ ॥

देवशर्मोवाच ।

सम्बन्धःकीदृशो भद्रे तं मे विस्तरतो वद । ये न जायन्ति ते सर्वे धनपुत्रादि बान्धवाः

सुमनोवाच ।

भर्तःपञ्चविधाःपुत्रा जायन्ते तान्वदाम्यहम् । न्यासापहारकं चैकमृणसम्बन्धिनंपरम्
रिपुं लभ्यमुदासीनमिति कान्त ! भवन्ति ते ।
लक्षणानि प्रवक्ष्यामि तेषामीश ! पृथक्पृथक् ॥ ६९ ॥
पुत्रा मित्रं प्रिया भार्या पिता माता च बान्धवाः ।
स्वेन स्वेन हि जायन्ते सम्बन्धेन महीतले ॥ ७० ॥
न्यासापहारभावेन यस्य येनहृतंभुवि । न्यासस्वामीभवेत्पुत्रो गुणवान्रूपवान्भुवि ॥
येनह्यपहृतंन्यासं तस्य गेहे न संशयः । न्यासापहरणं दुःखं स दत्त्वा दारुणंगतः ॥७२
न्यासस्वामी सुपुत्रोऽभून्न्यासापहारकस्य च । गुणवान्रूपवांश्चैव सर्वलक्षणसंयुतः ॥
भक्तिं च दर्शयेत्तस्य पुत्रोभूत्वा दिनेदिने । प्रियवाङ् मधुरोवाग्मी बहुस्नेहं विदर्शयेत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वीयं द्रव्यं समुद्ग्राह्य प्रीतिमुत्पाद्य चातुलाम् ।
यथा तेन प्रदत्तं तन्न्यासापहरणात्परम् ॥ ७५ ॥
दुःखमेवं महाभाग दारुणं प्राणनाशनम् । तादृशं तस्य सो दद्यात्पुत्रोभूत्वामहागुणः ॥
अल्पायुष्कस्तथा भूत्वा मरणं चोपगच्छति । दुःखंदत्त्वा प्रयात्येवं प्रहृत्यैवं पुनःपुनः
यदाह पुत्रपुत्रेति प्रलापं हि करोति यः । तदाहास्यं करोत्येष कस्तुपुत्रो हि कस्य च
अनेनापहृतं न्यासं मदीयं पापचारिणा । द्रव्यापहरणेनापि ममप्राणा गताःकिल ॥७६
दुःखेन महताचैव असह्येन च वै पुरा । तदादुःखं मयादत्त्वा द्रव्यमुद्ग्राह्यमुत्तमम् ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्ये सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

## अष्टाशीतितमोऽध्यायः

### ऋणसम्बन्ध्यादिपुत्रकथनपूर्वकं संसारनिःसारतावर्णनम्

सुमनोवाच ।

ऋणसम्बन्धिनं पुत्रं प्रवक्ष्यामि तवाग्रतः । ऋणं यस्य गृहीत्वा यः प्रयाति मरणंकिल
अर्थदाता सुतोभूत्वा भ्रातावाथ पिताप्रिया । मित्ररूपेण वर्तेत अन्तर्दुष्टःसदैव सः ॥
गुणंनैव प्रपश्येत सक्रूरो निष्ठुराकृतिः । जल्पते निष्ठुरं वाक्यं सदैव स्वजनेषु च ॥
मिष्टंमिष्टं समश्नाति भोगान्भुङ्क्ते च नित्यशः । द्यूतकर्मरतोनित्यं चौरकर्मणिसस्पृहः
गृहाद्द्रव्यं चोरयति वार्यमाणःस कुप्यति । पितरंमातरंचैव कुत्सते च दिनेदिने ॥५॥
द्रावकस्त्रासकश्चैव बहुनिष्ठुरजल्पकः । एवमुद्ग्राह्य तद्द्रव्यं सुखेन परितिष्ठति ॥६॥
जातकर्मादिभिर्बाल्ये द्रव्यं गृह्णाति दारुणम् । पुनर्विवाहसंयोगान्नानाभेदैरनेकदा ॥७
एवं संक्षीयते द्रव्यमेवमेतद्वदत्यपि । गृहंक्षेत्रादिकं सर्वं ममैव हि न संशयः ॥ ८ ॥
पितरंमातरंचैव हिनस्त्येव दिनेदिने । सुदण्डैर्मुसलैश्चैव केशोत्पाटैश्च दारुणैः ॥ ९ ॥
मृते तु तस्मिन्पितरि मातरि चातिनिष्ठुरः । निःस्नेहो निष्ठुरश्चैव जायते नात्र संशयः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्राद्धकार्याणि दानानि न करोति सदैव सः ।
एवंविधाः प्रियाः पुत्रा भवन्ति च महीपते ॥ ११ ॥
रिपुं पुत्रं प्रवक्ष्यामि करोति द्विजसत्तम ! ।
बाल्ये वयसि सम्प्राप्ते पुत्रत्वे वर्तते सदा ॥ १२ ॥

पितरंमातरंचैव क्रीडमानो हि ताडयेत् । ताडयित्वा प्रयात्येवं प्रहस्यैवं पुनःपुनः ॥१३
पुनरायाति तं तत्र पितरंमातरं पुनः । सक्रोधोवर्तते नित्यं कुत्सते च दिनेदिने ॥१४॥
एवं संवर्तते नित्यं वैरकर्मणि सम्पदा ।-पितरं ताडयित्वा च भ्रातरं च ततःपुनः ॥१५॥
प्रयात्येवं स दुष्टात्मा पूर्ववैरानुभावतः । अथातःसम्प्रवक्ष्यामि यथालभ्यो भवेत्प्रियः
जातमात्रःप्रियं कुर्याद्बाल्ये क्रीडनताडनैः । वयःप्राप्य प्रियं कुर्यान्मातापित्रोरनन्तरम्
भक्त्या सन्तोषयेन्नित्यं तावुभौ परितोषयेत् । स्नेहेन वचसाचैव प्रियसम्भाषणेन च ॥
मृतौ गुरूसमाज्ञाय स्नेहेन रुदते पुनः । श्राद्धकर्माणि सर्वाणि पिण्डदानादिकां क्रियाम्

करोत्येव सुदुःखार्तस्तेभ्यो यात्रां प्रयच्छति ।
ऋणत्रयान्वितः स्नेहान्मोचयेद्यस्तु निश्चितः ॥ २० ॥

यस्माल्लभ्यं भवेत्कान्त प्रयच्छति न संशयः । पुत्रोभूत्वा महाप्राज्ञ अनेनविधिना किल
उदासीनं प्रवक्ष्यामि तवाग्रे प्रियसाम्प्रतम् । उदासीनेन भावेन सदैव परिवर्तते ॥२२॥

ददाति नैव गृह्णाति न च कुप्यति तुष्यति ।
नो वा प्रयाति सन्त्यज्य उदासीनो द्विजोत्तम ! ॥ २३ ॥
भृत्याश्चापि समाख्याताः पशवस्तुरगास्तथा ।
गजामहिष्यो दास्यश्च ऋणसम्बन्धिनस्त्वमी ॥ २४ ॥

गृहीतं मायया किञ्चिदावाभ्यां तु न कस्यहि । न्यासमेवं न कस्यापि कृतंवै पूर्वजन्मनि
राधयामि नकस्यापि क्षणं कान्त शृणुष्व हि । न वैरमस्ति केनापि पूर्वजन्मनि वै कृतम्

आबल्येन तु विप्रेन्द्र ! न च त्यक्तो मया पतिः ।
एवं ज्ञात्वा शमं गच्छ त्यज चिन्तामनर्थिकाम् ॥ २७ ॥

हृतंनैव च कस्यापि नैवदत्तं त्वया पुनः । कथं ते धनमायाति विस्मयं व्रज मा विभो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप्तमेवहि यत्रैव रक्षितुश्च न तिष्ठति। एवं ज्ञात्वा शमं गच्छत्यज चिन्तामनर्थिकाम्

कस्य पुत्राः प्रिया भार्या कस्य स्वजनबान्धवाः।

कः कस्य नास्ति संसारे न सम्बन्धो द्विजोत्तम ! ॥ ३० ॥

मायामोहेन संमूढा मानवाःपापचेतनाः। इदं गृहमयं पुत्रं इयं भार्या ममैव हि ॥ ३१ ॥

अनृतं दृश्यते कान्त संसारस्य हि बन्धनम् ॥ ३२ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्येऽष्टाशीतितमोऽध्यायः

---

# एकोननवतितमोऽध्यायः

## पुत्रप्राप्तये सुमनया देवशर्माणम्प्रति वशिष्ठसन्निधौ प्रेरणम्।

नारद उवाच।

एवं सम्बोधितो विप्रो देवशर्मा द्विजोत्तमः।

पुनः प्राह प्रियांभार्यां सहितां ज्ञानवादिनीम् ॥ १ ॥

सत्यमुक्तं त्वया भद्रे ! सर्वसन्देहनाशनम्।

तथा हि वंशमिच्छन्ति साधवःसत्यपण्डिताः ॥ २ ॥

यथा पुत्रस्य चिन्ता मे न धनस्य तथा प्रिये। येनकेनाप्युपायेन पुत्रमुत्पादयाम्यहम् ॥

सुमनोवाच।

पुत्रेण लोकाञ्जयति पुत्रस्तारयते कुलम्। सुपुत्रेण महाभाग ! पितामाता प्रजीवतः ॥४

एकःपुत्रोवरः कान्त बहुभिर्निर्गुणैस्तु किम्। एकस्तारयते वंशमन्ये सन्तापकारकाः॥

पूर्वमेव मया प्रोक्तमन्ये सम्बन्धभागिनः। पुण्येन प्राप्यते पुत्रःपुण्येन प्राप्यते कुलम् ॥

सुगर्भःप्राप्यते पुण्यैर्दुर्मृत्युःपातकैस्तथा। सुखानां निचयं कान्त ! सत्यमेव वदाम्यहम्

ब्रह्मचर्येण सत्येन तपसा नित्यवर्तनैः। दानेन नियमैश्चापि क्षमाशौचेन वल्लभ ! ॥८॥

अहिंसया च शक्त्या चाऽस्तेयेनापि प्रवर्तते। एतैर्दशभिरङ्गैश्च धर्ममेवं प्रसूयते ॥ ९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सम्पूर्णो जायते धर्मो ह्यङ्गैर्गर्भो यथोदरे । धर्मं सृजति धर्मात्मा त्रिविधेनैव कर्मणा ॥
तस्य धर्मः प्रसन्नात्मा पुण्यसौख्यं प्रयच्छति ।
यं यं चिन्तयते प्राज्ञस्तं तं प्राप्नोति दुर्लभम् ॥ ११ ॥

देवशर्मोवाच ।

सर्वं देवि समाख्यातं धर्माख्यं ज्ञानमुत्तमम् । कथं पुत्रमहं विद्यां वैष्णवं गुणसंयुतम्
वदत्वं मे महाभागे! यदि जानासि सुव्रते! । धर्ममार्गस्त्वया सर्वः पितुःप्राप्तः पुराऽनघे! ॥
ममैतद्विदितं कान्ते ! भवती ब्रह्मवादिनी । च्यवनस्य प्रसादेन विष्णोस्तुष्टस्य ते पुरा

सुमनोवाच ।

वसिष्ठं गच्छधर्मज्ञ तं प्रार्थय महामुनिम् । तस्मात्प्राप्स्यसि तं पुत्रं धर्मज्ञं धर्मवत्सलम्
एवमुक्ते तयावाक्ये देवशर्मा द्विजोत्तमः । करिष्ये तव कल्याणि मतमेवं न संशयः ॥
एवमुक्त्वाजगामासौ देवशर्मा द्विजोत्तमः । वसिष्ठं सर्ववेत्तारं दीप्यन्तं तपतांवरम् ॥
गङ्गा तीरेस्थितं पुण्यमासनस्थं द्विजोत्तमम् ।
तेजोज्वालासमाकीर्णं द्वितीयमिव भास्करम् ॥ १८ ॥
राजमानं महात्मानं ब्रह्मसिंहं द्विजोत्तमम् । भक्त्या प्रणम्य स मुनिदण्डवत्तं पुनः पुनः
तमुवाच महातेजा ब्रह्मसूनुरकल्मषम् । उपविशासने पुण्ये सुखेन सुमहामते ! ॥ २० ॥

नारद उवाच ।

उपविष्टःस योगीन्द्रःपुनःप्राह तपोधनम् । गृहे पुरुष ते वत्स दारभृत्येषु सर्वदा ॥२१॥
क्षेममस्ति महाभाग पुण्यकर्मषु चाग्निषु । निरामयोऽसि चाङ्गेषु धर्मंपालयसे सदा ॥
एवमुक्त्वा महाप्राज्ञः पुनः प्राहमहीसुरम् । किंकरोमि प्रियंकाम सुप्रियन्ते द्विजोत्तम

नारद उवाच ।

एवं सम्भाष्य तं विप्रं विरराम शुभंवचः । ततो विप्रो महाभागो वसिष्ठंमुनिपुङ्गवम्
सहोवाच महात्मानं वसिष्ठं तपतांवरम् । भगवञ्छ्रूयतां वाक्यं यतःप्राप्तोद्विजोत्तम !
दारिद्र्यं केनभावेन पुत्रसौख्यं कथं न हि । एष मे संशयस्तात कस्मात्पापाद्वदस्व मे
महामोहेन संमुग्धः प्रियया बोधितो द्विज ! । तयाऽहं प्रेषितस्तात तवपार्श्वं समागतः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्सर्वं हि समाचक्ष्व सर्वसन्देहनाशकम्। मुक्तिदाताभवस्व त्वं मम संसारबन्धनात्

वसिष्ठ उवाच।

पुत्रोमित्रं तथा भ्राता अन्येस्वजनबान्धवाः। पञ्चभेदास्तु सम्बन्धाः पुरुषस्य भवन्ति ते
तेते सुमनसा प्रोक्ताः पूर्वमेव तवाग्रतः। ऋणसम्बन्धिनः सर्वे ते कुपुत्रा द्विजोत्तम!॥
पुत्रस्य लक्षणं पुण्यं तवाग्रे प्रवदाम्यहम्। पुण्यप्रसक्तो यस्यात्मा सत्यधर्मरतःसदा॥
शुद्धिमाञ्ज्ञानसम्पन्नस्तपस्वीवाग्विदांवरः। सर्वकर्मसु संवीतो वेदाध्ययनतत्परः॥
सर्वशास्त्रप्रवेदी च देवब्राह्मणपूजकः। याज्ञिकः सर्वयज्ञानां दाता त्यागी प्रियंवदः॥

विष्णुध्यानपरो नित्यं शान्तो दान्तः सुहृत्सदा
पितृमातृपरो नित्यं सर्वस्वजनवत्सलः॥ ३४॥

कुलस्य तारकोविद्वान्स्वकुलस्य च पोषकः। एवं गुणैस्तु संयुक्तःसुपुत्रः सुखदायकः
अन्ये सम्बन्धयुक्ताश्च शोकसन्तापकारकाः। उदासीनेन किं कार्यं फलहीनेन तेऽनघ॥
आयान्ति यान्ति ते सर्वे दुःखंदत्त्वा सुदारुणम्। पुत्ररूपेण ते सर्वे संसारे द्विजसत्तम
पूर्वजन्मकृतंकर्म यत्त्वया परिपालितम्। तत्सर्वं हि प्रवक्ष्यामि श्रूयतामद्भुतं पुनः॥३८
भवाञ्छूद्रो महाप्राज्ञ! पूर्वजन्मनि नान्यथा। कृषिकर्त्ता ज्ञानहीनो महालोभेनसंयुतः॥
एकभार्यःसदाद्वेषी बहुपुत्रो ह्यदत्तवान्। धर्मं नैव विजानासि सत्यं च परिनिष्ठितम्॥
दानंनैव त्वयादत्तं शास्त्रंनैव परिश्रुतम्। कृतंनैव त्वयातीर्थं न च यात्रा महामते!॥
एवं कृतस्त्वया विप्र कृषिमार्गःपुनःपुनः। पशूनांपालनं पूर्वं गच्छंश्चैव द्विजोत्तम!॥
महिषीणां तथाश्वीनां पालनं च पुनःपुनः। एवं पूर्वं कृतंकर्म त्वयैव च द्विजोत्तम!॥
विपुलं तु धनं तद्धल्लोभेन परिसञ्चितम्। तस्य व्ययस्तु पुण्येन न कृतस्तु त्वया कदा
पात्रेदानं न दत्तं हि दृष्ट्वा वा दुर्बलं च तत्। कृषिंकृत्वा न दत्तं तु भवता धनमेव हि
गोमयं हि त्विदं सर्वं पशूनांसञ्चयं च वै। विक्रीय च धनं विप्र सञ्चितं विपुलं त्वया

तक्रं घृतं तथा क्षीरं विक्रीतं सततं दधि।
दुष्कालश्चिन्तितो विप्र! मोहितो विष्णुमायया॥ ४७॥

कृत्वा महार्घमेवैतद्धनं ब्राह्मणसत्तम। निर्दयेन त्वया दानं न दत्तं तु तदा किल॥४८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवानां पूजनं विप्र! भवता न कृतं सदा। पर्वाणि प्राप्य विप्रेभ्यो द्रव्यंनैव समर्पितम्
श्राद्धकालं च सम्प्राप्य श्रद्धया न कृतं त्वया।
भार्या वदति ते साध्वी दिनमध्ये समागते॥ ५०॥
श्वशुरश्राद्धकालश्च श्वश्र्वाश्चैव महामते। तच्छ्रुत्वा तद्वचस्तेषां गृहंत्यक्त्वा पलायसे॥
धर्ममार्गो न दृष्टो हि श्रुतो नैव कदा त्वया।
लोभो माता पिता भ्राता लोभः स्वजनबान्धवाः॥ ५२॥
पालितो लोभ एवैकस्त्यक्त्वा धर्मं सदैव हि।
तस्माद्दुःखी भवाञ्जातो दारिद्र्येणातिपीडितः॥ ५३॥
दिनेदिने महातृष्णा हृदये ते प्रवर्त्तते। यदा यदा गृहे द्रव्यं वृद्धिमायाति ते सदा॥५४
तृष्णया दह्यमानस्तु तदा त्वं वह्निरूपया।
रात्रौ वा त्वं प्रसुप्तस्तु लोभं चिन्तयसेऽधिकम्॥ ५५॥
दिनं प्राप्य महामोहैर्व्यापितो हि सदैव हि। सहस्रंलक्षतःकोटिःकदावार्बुदमेव च॥
भविष्यति कदा खर्वो निखर्वश्चाथ मे गृहे। एवं सहस्रंलक्षं च कोटिरर्बुदमेव च॥५७॥
खर्वो निखर्वःसञ्जातस्तृष्णानैव प्रगच्छति। एवं कालं परित्यज्य वृद्धिमायाति सर्वदा
नैवदत्तंहुतं विप्र भुक्तंनैव कदा त्वया। निश्चितं भूमिमध्ये तत्क्षिप्तं पुत्रा न जानते॥
अन्यमेवमुपायं तु द्रव्यागमनकारणात्। कुरुषे सर्वदा विप्र लोकान्पृच्छसि बुद्धिमान्
खनित्रमञ्जनंवादं धातुवादमतःपरम्। पृच्छमानो भ्रमस्येकतृष्णया परिमोहितः॥६१
सर्वांश्चिन्तयसे नित्यं कल्पान्सिद्धिप्रदायकान्।
प्रवेशं चित्रवर्णानां चिन्तामणिं च पृच्छसि॥ ६२॥
तृष्णानलेन दग्धोऽसि सुखंनैव प्रगच्छसि। तृष्णानलप्रदीप्तोऽसि हाहाभूतोऽप्रचेतनः
एवंभूतोऽसि विप्रेन्द्र गतस्त्वं कालवश्यताम्। दारपुत्रेषु तद्द्रव्यं पृच्छमानेषु वै त्वया
कथितं नैव तद्दत्तं प्राणांस्त्यक्त्वा गतोयमम्। एवं सर्वं मयाख्यातं वृत्तान्तं तव पूर्वकम्
अनेन कर्मणा विप्र दरिद्रोऽपि च निर्धनः। संसारे यस्य सत्पुत्रा भक्तिवन्तःसदैव हि
सुशीला ज्ञानसम्पन्नाःसत्यधर्मरताःसदा। सम्भवन्ति गृहे तस्य यस्य विष्णुः प्रसीदति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धनं धान्यं कलत्रं तु पुत्रपौत्रमनन्तकम् ।
स भुङ्क्ते मर्त्यलोके वै यस्य विष्णुः प्रसन्नवान् ॥ ६८ ॥
विना विष्णोःप्रसादेन दाराःपुत्रा भवन्ति न । सुजन्म च कुले विप्र तद्विष्णोःपरमंपदम्

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्ये देवशर्मोपाख्याने एकोननवतितमोऽध्यायः ॥ ८९ ॥

---

## नवतितमोऽध्यायः

### देवशर्मणो विप्रत्वप्राप्तिकारणवर्णनम् ।

देवशर्मोवाच ।

पूर्वजन्मकृतंपापं त्वयाऽऽख्यातं ममैवतत् । शूद्रत्वेन हि विप्रेन्द्र मयैवंधनमर्जितम् ॥१॥
विप्रत्वं हि मयाप्राप्तं तत्कथं द्विजसत्तम । तत्सर्वं कारणं ब्रूहि ज्ञानविज्ञानपण्डित ?॥
दुर्ल्लभं भारतेवर्षे जन्म तस्मान्मनुष्यता । मानुष्ये ब्राह्मणत्वं च सुतरां सत्कुलोदितम्
तत्रापीदृग्विधा भार्या सर्वज्ञा प्रियवादिनी ।
सती सर्वगुणोपेता दुर्लभा सा कुतोऽभवत् ॥ ४ ॥

वशिष्ठ उवाच ।

यत्त्वया चेष्टितं पूर्वं धर्मकर्मकृतं द्विज । तदहं सम्प्रवक्ष्यामि श्रूयतां यदि मन्यसे ॥५॥
ब्राह्मणोऽभूत्सुधर्मात्मा सदाचारः सुपण्डितः ।
विष्णुभक्तस्तु धर्मात्मा नित्यं विष्णुपरायणः ॥ ६ ॥
स्नानार्थमपि तीर्थानां भ्रमत्येकःस मेदिनीम् । अटमानःसमायातस्तवगेहे महामतिः ॥
तस्य दर्शनमात्रेण समुत्पन्ना सुधीस्तव । यतो धर्मगतेगेहे सतामागमनं भवेत् ॥ ८॥
किंकिं न लभ्यते विप्र ! विप्रवैष्णवसेवया ।
दुर्ल्लभं यच्च लोके स्यान्मोक्षस्थानमपि स्थिरम् ॥ ९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

याचितं स्थानमेकं वै वासार्थं तेनसत्तमं । तवैव भार्यया दत्तं त्वया च सहपुत्रकैः ॥
एयतामेयतां ब्रह्मन्सुखेन च गृहे मनः । वैष्णवं ब्राह्मणं पुण्यमित्युवाच पुनःपुनः ॥११॥
सुखेन स्थीयतामत्र वेश्मेदं तव सुव्रत । अद्यधन्योऽस्म्यहं पुण्योऽस्म्यद्य तीर्थमहं गतः
अद्य तीर्थफलं प्राप्तं मया ते विप्रदर्शनात् । गवांस्थानं परंपुण्यं वासस्थानं प्रदर्शितम्
अङ्गसंवाहनं सम्यक्पादौचैव प्रमर्दितौ । क्षालितौ च पुनस्तोयैः स्नातःपादोदकेन हि
सद्यो घृतं दधिक्षीरमन्यमन्यं प्रदत्तवान् । ब्राह्मणाय तदा तस्मै त्वं तथाऽद्भुष्टनोदितः ॥
एवं सन्तोषितो विप्रस्त्वयैव सहभार्यया । पुत्रैःसार्धं महाभागो वैष्णवो ज्ञानपण्डितः
अथ प्रभाते विमले स्नानार्थं मासिमाधवे । गङ्गां तु गच्छता तेन तुष्टेन दयया किल
वैशाखस्नानमाहात्म्यमुपदिष्टं तवाग्रतः । कारितस्तु यथान्यायं सभार्यातनयोभवान्

यथा न वारिधिसमो लोके कोऽपि जलाशयः ।
तथा मासो न वैशाखसदृशो माधवप्रियः ॥ १६ ॥

तावत्पापानि तिष्ठन्ति निष्प्रत्यूहं कलेवरे । यावत्कलिमलध्वंसी मासोनैति समाधवः
तस्य वाक्यं समाकर्ण्य वैशाखे सेवनं कृतम् । तुष्टेन मनसा विप्र पूजितो मधुसूदनः ॥
अवशिष्टदिनान्येव पञ्चमासस्य तस्य वै । एकादशीं समारभ्य स्नानं च विधिवत्कृतम्
ब्राह्मणस्य प्रसङ्गेन रैवायां तु दिने त्वया । प्रातःस्नानं कृतं विप्र ! वैशाखेमासितावता
पूजितो देवदेवेशो मधुहा परमेश्वरः। नैवाप्तः सकलोमासः स्नानार्थं तव पूर्वतः ॥२४॥
एवं स्नानं त्वया चीर्णमपि पञ्चदिनात्मकम् । तेन पुण्येन सङ्गत्या ब्राह्मणस्यविशेषतः
गोविन्दस्य प्रसादेन त्वं तु ब्राह्मणतांगतः । त्वयातन्मासयोगेन प्राप्तमेतन्महत्कुलम् ॥

दुर्ल्लभं भूमिदेवानां सत्यधर्म समन्वितम् ।
भार्याऽपि सुमती प्राप्ता साध्वी सर्वगुणान्विता ॥ २७ ॥

च्यवनस्य गृहोत्पन्ना सर्वज्ञा ब्रह्मवादिनी । रूपमेव परस्त्रीणां भूषणं च महामुने ॥
शीलमेवं द्वितीयं च तृतीयं सत्यमेव च । सदार्यत्वं चतुर्थं तु पञ्चमं पुण्यमुत्तमम् ॥
मधुरत्वं तथा षष्ठं शुद्धत्वं सप्तमं महत् । बाह्यान्तः सततं स्त्रीणां सर्वाभरणसत्तमम्
अष्टमं तु पतौ भावः शुश्रूषा नवमंकिल । सहिष्णुता च दशमं रतिरैकादशं तथा ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पतिव्रतत्वं विप्रेन्द्र ! द्वादशं योषितं स्मृतम् ।
एतैःसम्भूषिता भार्या साध्वी ते ब्रह्मवादिनी ॥ ३२ ॥
वैशाखस्नानयोगेन लब्धापुण्येन सादरम् । किं किं न दुर्ल्लभतरं प्राप्यतेऽमासिमाधवे
स्नानेन परमेशस्य पूजनेन यथाविधि । अथ मोहप्रमुग्धोऽसि तृष्णया व्यापितंमनः॥
पूर्वं जन्मनि ते विप्र द्रव्यमेव प्रसञ्चितम् । न दत्तं ब्राह्मणेभ्योहि दीनेष्वन्येषुवै त्वया
न बन्धुवर्गेनोपुत्रदारेषु च कथञ्चन । म्रियमाणेन भवता लोभएवहि चिन्तितः ॥३६॥
न दत्तं न हुतं जप्तं न तीर्थे मरणंकृतम् । न हि नारायणोदेवो ध्यातोवाखिलपापहा
द्रव्येषु विद्यमानेषु कृपणोजायते नरः । अदत्त्वा म्रियते यस्तु ततो दुःखतरंनुकिम् ॥
तीर्थस्नानादि तपसा कुले जन्मैवलभ्यते । नोदाने न विना विप्र किञ्चिदेवोपतिष्ठति
तस्य पापस्य भावेन दरिद्रत्वमुपागतम् । अपुत्रवान्भवाञ्जातः सततं दुःखपीडितः ॥
वैशाखस्नानमाहात्म्यादपि पञ्चदिनात्मकात् ।
तदैव हरिपूजायाः सङ्गत्या ब्राह्मणस्य च ॥ ४१ ॥
लब्धं जन्म कुलेविप्र ! विप्रत्वमपि दुर्ल्लभम् । सुपुत्रश्च कुलंविप्र धनंधान्यंवरस्त्रियः
सुजन्ममरणञ्चैव सुभोगः सुखमेव च । सदा दानेऽधिकाबुद्धिरौदार्यं धैर्यमुत्तमम्॥४३॥
प्रसादात्तस्य देवस्य विष्णोश्चैव महात्मनः ।
नारायणस्य जायन्ते सिद्धयो विप्रवाञ्छिताः ॥ ४४ ॥
ऊर्जेमासि तपोमासि माधवे माधवप्रिये । स्नात्वादामोदरं भक्त्या माधवं मधुसूदनम्
विशेषेण समभ्यर्च्य दत्त्वादानानि भक्तितः। ऐहिकं सुखमासाद्यजनोयाति ततो हरिम्
अनेकजन्मार्जित पातकावली विलीयते माधवमज्जनेन ।
सूर्योदये विप्र यथातमिस्रा वचःस्वयम्भूरिदमादिदेश ॥ ४७ ॥
चकारविष्णुर्विमलं विचारं मासं विधिं माधवमेकमादौ ।
यमस्य गुप्तं मनसाविचिन्त्य मनुष्यलोकैर्गमितुं च नाके ॥ ४८ ॥
तस्मादस्मिन्समायाते माधवेमासि माधवे । स्नात्वा पुण्यजले तीर्थे रवावनुदितेऽधुना
पूजयित्वा विधानेन मुकुन्दं मधुसूदनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुत्रपौत्रधनं श्रेयो वाञ्छितानि सुखानि च ॥ ५० ॥
अनुभूय ततस्त्वन्ते स्वर्गमक्षयमाप्स्यसि । पूर्वजन्मकृतं सर्वं यत्त्वया परिचेष्टितम् ॥
तन्मया कथितं विप्र ! तवाग्रे परिचेष्टितम् । एवं ज्ञात्वा महाभाग ! वैशाखे च विशेषतः
स्नात्वा सम्यग्विधानेन मधुसूदनमर्चय । देवमाराध्य गोविन्दं नारायणमनामयम् ॥
प्राप्स्यसि त्वं सुखं पुत्रंधनानि हरिमव्ययम् ॥ ५४ ॥

नारद उवाच

ब्रह्मात्मजेनापि महानुभावः स विप्रवर्यः परिबोधितो हि ।
हर्षेण युक्तः स महानुभावो भक्त्या वसिष्ठं प्रणिपत्य तत्र ॥ ५५ ॥
आमन्त्र्य विप्रं स जगाम गेहं तां प्राह भार्यां सुमनां महर्षिः ।
सर्वं हि वृत्तं मम पूर्वचेष्टितं तेनैव विप्रेण तव प्रसादात् ॥ ५६ ॥
भद्रे ! वसिष्ठेन विकाशनीतमद्यैव मोहः परिनाशितो मे ।
आराधयिष्ये मधुसूदनं ते श्रीमाधवे मासि निमज्ज्य भक्त्या ॥ ५७ ॥

नारद उवाच ।

आकर्ण्य वाक्यं परमं पवित्रं सुमङ्गलं मङ्गलहेतुमुच्चैः ।
हर्षेण युक्ता तमुवाच कान्तं धन्योऽसि विप्रेण विबोधितस्त्वम् ॥ ५८ ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्ये देवशर्मोपाख्याने
नवतितमोऽध्यायः ।

---

## एकनवतितमोऽध्यायः

### सुमनया सह देवशर्मणः गङ्गावर्त्तितीर्थसेवनतो विष्णुप्रीत्या सुतप्राप्तिः ।

नारद उवाच ।

देवशर्मामहाप्राज्ञः समं सुमनया तया । तीर्थे कनखले पुण्ये गङ्गायामतिविश्रुते ॥ १ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैशाखे विधिना स्नानं चक्रे मेषस्थिते रवौ। पूजयामास विधिवन्मधुसूदनमच्युतम्
यमैः सनियमैर्युक्तःशक्त्या किञ्चिद्ददौ ततः। हविष्यभुग्भूमिशायी ब्रह्मचर्यव्रतस्थितः॥

कृच्छ्रादितपसा क्षामो ध्यायन्नारायणं हृदि।
तत्र प्राप्य सवैशाखीं दत्त्वा मधु तिलादिकम्॥ ४॥
विप्रेभ्यो भोजनं दत्त्वा भक्त्या धेनुं सदक्षिणाम्।
अच्छिद्रं प्रार्थयामास तत्र स्नानस्य भूसुरान्॥ ५॥
साऽपि साध्वी च सुश्रोणी पतिभक्तिपरायणा।
पतिं शुश्रूषते नित्यं स्नात्वा सम्पूज्य केशवम्॥ ६॥

तौ दम्पती ततो यातौ स्वगेहं साधुहर्षितम्। कृतकृत्यावथात्मानौ मन्यमानावसंशयम्
तेन पुण्यप्रभावेण कालेन कियता किल। बभूवुरमितास्तस्य धनधान्यानि सम्पदः॥
तनया विनयोपेताश्चत्वारःश्रुतिकोविदाः। धर्मज्ञा वैष्णवा नित्यं पितृमातृपरायणाः
बभूवुरमितप्रज्ञाःपुरुषार्थायबोधिताः। विख्याता विधितत्त्वज्ञा ब्रह्मज्ञा ब्रह्मतत्पराः॥

समग्रगुणसम्पन्नाः सम्प्रतिष्ठन्ति कीर्तयः॥ ११॥
तौ दम्पती सुतसमग्रसमृद्धसौख्यं पुण्योदयं समुपयुज्य ततश्चिरेण।
स्नानं परं परममीयतुरस्य भक्त्या श्रीमाधवे च सुकृतस्य नृप! प्रसादात्॥

यथैव माधवःसाक्षाद्विद्यालक्ष्मीधवःस्मृतः। तथैव माधवोमासो मधुसूदनवल्लभः॥
इदंमाधवमाहात्म्यं किञ्चित्संक्षेपतोऽनघ। मया ते कथितं वीर! यत्पुरा च पितुःश्रुतम्

इति श्रीपाद्मेमहापुराणे पातालखण्डे नारदाम्बरीषसंवादे वैशाखमाहात्म्ये
एकनवतितमोऽध्यायः॥ ९१॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# द्विनवतितमोऽध्यायः

## वैशाखसेवनफलवर्णनम् ।

सूत उवाच ।

इति तस्य वचःश्रुत्वा नारदस्य स भूपतिः ।
प्रणम्य विस्मितः प्राह चिन्तयन्मनसा हरिम् ॥ १ ॥

अम्बरीष उवाच ।

कथमेतद्विमुह्यामः स्वल्पायासेन यन्मुने ! । शूद्रःपापसमाचारो लेभे ब्राह्मण्यमुत्तमम्
ब्राह्मण्यं दुर्ल्लभं तात ! सुकृतैर्विविधैरपि । कथं माधवमासस्य स्नानेनैवाप सोऽधमः

न यज्ञदानैर्न तपोभिरुग्रैर्न पुण्यसंज्ञैरपरैरपीश ।
अस्माद्दृशो भूपतयोऽर्थवन्तो न ते लभन्तेऽवनिदैवतत्वम् ॥ ४ ॥
स गाधिसूनुर्विविधं तपोऽपि चिरं विधायानिशमेव घोरम् ।
कृच्छ्रेण लेभे शतवर्षपूर्णैरहो कथञ्चिद्‌बहुभिः प्रयत्नैः ॥ ५ ॥
कथं सवर्णाधम एष पापः स्वधर्महीनो धनवानदाता ।
पुण्यादनायासकृतादमुष्मादल्पादिहावाप स रामतत्त्वम् ॥ ६ ॥

नारद उवाच ।

सत्यमुक्तं त्वया राजन्ब्राह्मण्यमतिदुर्ल्लभम् । तथापि गतयः सूक्ष्मादुर्ज्ञेया धर्मतत्त्वतः

विचित्राणि च कर्माणि विचित्रा भूतभावना ।
विचित्राणि च भूतानि विचित्राः कर्मशक्तयः ॥ ८ ॥

कदाचित्सुकृतं कर्मकूटस्थं यदवापि तम् । केनचित्कर्मणा भूप ! शुभेन परिवर्धते ॥९॥
फलं ददाति सुमहत्तस्मिन्नपि च जन्मनि । धर्मो गहनसूक्ष्मोऽयं नीयते न यथा तथा
न तस्य फलदानस्य श्रूयते कालनिश्चयः । यत्किञ्चित्सुकृतं कर्मच्छन्नं पापान्तरैरपि
तदागत्य कुतः क्वापि सुफलं च प्रयच्छति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृतस्य नेह नाशोऽस्ति पुण्यस्य दुरितस्य च ॥ १२ ॥
तथापि बहुभिः पुण्यैर्दुरितं याति दारुणम् ।
यदुक्तं भवता राजन्नायासाधिक्यतो भवेत् ॥ १३ ॥
तत्फलं तत्र तत्रापि शृणु सत्यं मयोदितम् । अनायासमहायासौ यद्यल्पत्वमहत्त्वयोः
महाव्रतास्ततस्ते स्युः सततं कर्मकादयः । सिंहव्याघ्रादिमूत्रादौ प्रयासा बहुलास्ततः
पञ्चगव्यप्रशस्तत्वं व्रतमध्ये ततो भवेत् । इति कर्तव्यबाहुल्यं महत्त्वं चेत्तदल्पता ॥१६॥
जलाग्न्यादिप्रवेशस्य प्रसज्येत व्रतान्तरात् । इदमल्पं महत्त्वं तदिति नैव नियामकः ॥
फलं यथोदितं शास्त्रे यदेव स्यान्महोदयम् । यथाऽल्पनाशो महतामहन्नाशस्तथाल्पतः
किं त्वल्पविस्फुलिङ्गेन तृणनाशः प्रदृश्यते ।
अजामिलोऽपि भूपाल ! दास्याः पतिरिति स्मृतः ॥ १६ ॥
धर्मपत्नी परित्यागी नित्यं पापपथि स्थितः ।
म्रियमाणः सुताह्वानं चक्रे नारायणेति च ॥ २० ॥
तथा यन्नामग्रहणात्पदं लेभे सुदुर्लभम् । अनिच्छयाऽपि दहति स्पृष्टो हुतवहो यथा
तथा दहति गोविन्दनामव्याजादपीरितम् ॥ २२ ॥
हत्यायुतं पापसहस्रमुग्रं गुर्वङ्गनाकोटिनिषेवणं च ।
स्तेयान्यशेषाणि हरेः प्रियेण गोविन्द नाम्ना निहतानि सद्यः ॥ २३ ॥
विष्णुभक्तिमयं वीर यत्किञ्चित्क्रियतेऽल्पकम् । सुकृतं साधु विदुषा तदक्षयफलं भवेत्
सन्देहो न च कर्तव्यो माधवे मासि माधवम् ।
समाराध्य जनो भक्त्या तत्तद्वाञ्छितमाप्नुयात् ॥ २५ ॥
अपत्यं द्रविणं दारा धराहर्म्यं हया गजाः । सुखानि स्वर्गमोक्षौ च न दूरे हरिभक्तितः
एवं शास्त्रोक्तविधिना स्वल्पेनापि न संशयः ।
पापस्य महतोऽपि स्यात्क्षयः सम्यग्विधानतः ॥ २७ ॥
फलाधिक्यं भवेद्विद्वन्नाधिक्याद्भावकर्मणोः। सूक्ष्मा धर्मस्य गतयो दुर्ज्ञेया विबुधैरपि
प्रियो माधवमासोऽयं माधवस्य महात्मनः । एकोऽपि त्रिषु लोकेषु समग्रेप्सितदायकः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुण्येन गाङ्गेन जलेन काले देशे बुधः स्नानपरः कथञ्चित् ।
आजन्मनो भावहतोऽपि दाता न शुध्यतीत्येवमतं ममैतत् ॥ ३० ॥
प्रज्वाल्य वह्निं घृततैलसिक्तं प्रदक्षिणावर्तशिखं स्वकाले ।
प्रविश्य दग्धः किल भावदुष्टो न स्वर्गमाप्नोति फलं न चान्यत् ॥ ३१ ॥
गङ्गादि तीर्थेषु वसन्ति देवा देवालये यक्षगणाश्च नित्यम् ।
विनाशनं यान्ति कृतोपवासा भावोज्झितास्ते न फलं लभन्ते ॥ ३२ ॥
भावं ततो हृत्कमले निधाय श्रीमाधवे माधवमासि भक्त्या ।
यजेत यः स्नानपरो विशुद्धः पुण्यं न शक्ता वयमस्य वक्तुम् ॥ ३३ ॥

इहार्थेऽपि पुरा वृत्तमाकर्णय महीपते ! । विचित्रं कथयिष्यामि फलंकिमपि कर्मणाम्

तस्य माधवमासस्य प्रसादान्माधवस्य च ।
यथा हि ब्राह्मणी काचित्स्वैरिण्याप शुभं फलम् ॥ ३५ ॥
दिवोदासेति विख्यातः पुरा कान्तीश्वरोऽभवत् ।
तस्यापत्यं महारत्नं नारीणामुत्तमं सदा ॥ ३६ ॥

गुणरूपसमायुक्ता सुशीला चारुमङ्गला । दिव्या देवीति विख्याता रूपेणाप्रतिभा भवि

पित्रा त्वालोकिता सा तु रूपलावण्यसंयुता ।
स तां दृष्ट्वा दिवोदासो दिव्यां देवीं सुतां तदा ॥ ३८ ॥
कस्मै च दीयते कन्या सुवराय महात्मने ।
इति चिन्तापरो भूत्वा समालोक्य नरोत्तमः ॥ ३६ ॥

रूपदेशस्य राजानं सम्यग्ज्ञात्वा महीपतिः । चित्रसेनं महात्मानं समाहूय ततो नृपः ॥

कन्यां ददौ दिवोदासश्चित्रसेनायधीमते । तस्या विवाहकालस्य सम्प्राप्ते समये नृप ॥

मृतोऽसौ चित्रसेनस्तु कालधर्मेण वै किल ।
दिवोदासश्च धर्मात्मा चिन्तयामास भूपतिः ॥ ४२ ॥

ब्राह्मणांश्च समाहूय पप्रच्छ नृपनन्दन । अस्या विवाहकाले तु चित्रसेनो दिवं गतः ॥

अस्यास्तु कीदृशं कर्म भविष्यति ब्रुवन्तु मे ॥ ४३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्राह्मणा ऊचुः ।

विवाहो जायते राजन्कन्यायास्तु विधानतः । पतिर्मृत्युं प्रयात्येव यो वात्यागं करोति च

महाधिव्याधिना भीतस्त्यागं कृत्वा प्रयाति च ।

प्रव्राजितो भवेद्राजन्धर्मशास्त्रेषु दृश्यते ॥ ४५ ॥

तस्यां रजस्वलायां च अन्यः पतिर्विधीयते । विवाहं तु प्रधानेन पिता कुर्यान्न संशयः

एवं राजन्समादिष्टं धर्मशास्त्रे शुभैर्जनैः । विवाहः क्रियतामस्या इत्यूचुस्ते द्विजोत्तमाः

दिवोदासश्च धर्मात्मा ब्राह्मणैस्तु प्रणोदितः । विवाहार्थं महाराज मानसं कृतवान्नृप

पुनर्दत्ता प्रदानेन दिव्या देवी नृपोत्तम । पुष्पसेनाय पुण्याय तस्मै राज्ञे महात्मने ॥

मृत्युधर्मं गतो राजा विवाहसमयेऽपि सः ।

यदा यदा महाभागो दिव्या देव्याश्च भूपतिः ॥ ५० ॥

करोति स पितोद्योगं विवाहस्यातिदुःखितः ।

भर्ताऽपि म्रियते काले प्राप्तलग्नस्तदा तदा ॥ ५१ ॥

एकविंशतिभर्तारः काले काले मृतास्ततः ।

ततो राजा महादुःखी सञ्जातः ख्यातविक्रमः ॥ ५२ ॥

समालोक्य तमाहूय मन्त्रिभिः सह निश्चलः । स्वयंवरे महाबुद्धिं चकार पृथिवीपतिः ॥

अथतेन समाहूता राजानो विविधा नृपाः । स्वयंवरार्थंवै तस्या बहवो धर्मतत्पराः ॥

तस्यास्तु रूपसंक्षुब्धा मृत्युना प्रेषिता नृपाः ।

संग्रामं चक्रिरे मूढा मृतास्तेऽथ परस्परम् ॥ ५५ ॥

एवं तेषां क्षयोजातःक्षत्त्रियाणां नरेश्वर ! । दिव्यादेवी च दुःखार्ता रुरोद करुणं ततः

बालामालोक्य तां राजा रुदन्तीं चातिदुःखिताम् ।

पुरोधसं च धर्मज्ञं ज्ञानवन्तं तपस्विनम् ॥ ५७ ॥

जातूकर्णं प्रणम्यादौ विनयान्वितकन्धरः ॥ ५८ ॥

दिवोदास उवाच ।

कथयस्व प्रसादेन किमेतस्या हि पातकम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिव्या देव्यास्तु मे पुत्र्या यदेतच्चेष्टितं कृतम् ॥ ५९ ॥

जातूकर्ण उवाच ।

तस्यास्तु चेष्टितं वीर ! दिव्या देव्या वदाम्यहम् ।
पूर्वजन्मकृतं सर्वं तन्मे निगदतः शृणु ॥ ६० ॥
अस्ते वाराणसी पुण्या नगरी पापनाशिनी ।
तस्यामास्ते महाप्राज्ञः सुवीरो नाम नामतः ॥ ६१ ॥
वैश्यजात्यां समुत्पन्नो धनधान्यसमाकुलः ।
तस्य भार्या महाप्राज्ञ ! चित्रा नाम सुविस्मृता ॥ ६२ ॥

कुलाचारं परित्यज्य दुराचारेण वर्तते । न मन्यते हि भर्तारं रौद्रकृत्ये च वर्तते ॥६३
पुण्यकार्यविहीना तु पापं चरति दुर्मतिः । भर्तारं भर्त्सते नित्यं स्वैरिणी कलहप्रिया
नित्यं परगृहे वासनिरता भ्रमतेऽधिकम् । परच्छिद्रं समा पश्येद्दुष्टाभूतेषु सर्वदा ॥
साधुनिन्दारता पापा बहुहास्यकरी सदा । कुसङ्गतिरता वाचा दुराचारजनप्रिया ॥६६
धूर्ता धर्मजनद्वेषकरी चानृतभाषिणी । विज्ञायैवं सुवीरस्तामुपयेमे ततोऽपराम् ॥६७

तया नवीनया वीरो भार्यया सहितोऽनिशम् ।
यथासुखं स बुभुजे विषयान्मनसःप्रियान् ॥ ६८ ॥

धर्माचारेणपुण्यात्मासत्यपुण्यमतिःसदा । सत्ययामितयासत्यासुमत्याराधितोवभौ ॥
निरस्तातेनसाचित्राविचित्रावरवर्णिनी । स्वैरिणी गुणसंसर्गधर्मविद्वेषिणी ततः ॥
भ्रमते जारसंयुक्ता मुक्ताचारा गतत्रपा । सा पापरतसंयुक्ता रक्ता दूतीविकर्मणि ॥
कुशला कुट्टिनी कर्मकलासु त्वन्ययोषिताम् । गृहभङ्गमसौ चक्रे वक्रेण मनसा हिता
साध्वीं नारीं समाहूय पापवाक्यैश्च नोदयेत् । नर्मलोभकथाकेलिप्रत्ययोत्पत्तिहेतुभिः

मनांसि चालयेत्पापा पुरुषाणां च योषिताम् ।
साधूनां सा स्त्रियो भव्याः परेभ्यः प्रतिपादयेत् ॥ ७४ ॥

कारयत्येव कपटं धर्मग्रामविवर्जनम् । एवं वर्षशतं भुक्त्वा पश्चाद्वेश्या विधिस्थिता ॥
कालेन निधनं प्राप्ता सततं पापनिश्चया । जाता तवगृहे पुत्री दिव्या देवीति सा सुता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुन्दरीरूपसम्पन्ना पुरा दुष्टेन नोदिता ॥ ७६ ॥

नारद उवाच ।

इति तस्य वचः श्रुत्वा दिवोदासोऽति विस्मितः ।
उवाच राजा मधुरं जातूकर्णं मुनिं वचः ॥ ७७ ॥

दिवोदास उवाच ।

यदीदृशी सा दुरितप्रचारा सदा दुराचाररता प्रयाता ।
कथं मम श्रीपतिदैवतस्य महाकुलीनस्य सुतानुरूपा ॥ ७८ ॥
सुदुर्लभं राजकुले विशाले लेभे च सा श्रीमतिजन्मधन्यम् ।
पुण्येन केनापि मुने ! पवित्रे चित्रा विचित्रेण च कर्मकर्त्री ॥ ७९ ॥

नारद उवाच ।

इति तस्य वचः श्रुत्वा भूमिपस्य मुनिस्ततः ।
किञ्चिद्विहस्य तु प्राज्ञो वचः सूनृतमब्रवीत् ॥ ८० ॥

जातूकर्ण उवाच ।

चित्राविचित्रसुरतैरथ वञ्चयन्ती प्रच्छन्नकामुकविटान्धनधीविहीनान् ।
वेश्या बभूव विषपानमितश्चरित्वा कालेन नागनगरे महति प्रसिद्धे ॥ ८१॥
कोऽपि तत्र समायातः सायंविप्रः श्रमार्दितः । अर्दमानो विशुद्धात्मा नगरे नागसंज्ञके
अपश्यन्नपरं स्थानं मूढश्चित्रागृहं ययौ । तया संमोहितोऽत्यर्थं वेश्यया दुष्टियोगतः
पादसंवाहनस्नानताम्बूलासनभोजनैः । विलासैस्तोषितः सोऽपि खेदहीनोऽभवत्तदा
ततो विचित्रैः सुरतोपचारैरदुष्टबुद्ध्यैव तया स विप्रः ।
संसेवितोऽयं रजनीमशेषामवाहयद्भावविशेषलुब्धः ॥ ८५ ॥
प्रातः प्रयाणाभिमुखः कथञ्चिदुवाच चित्रामनुरक्तचित्तः ।
सन्तोषितः स्वैश्चरितैः स्वकृत्यैर्वचस्तया चैकधिया तदानीम् ॥८६॥

ब्राह्मण उवाच ।

कार्यः प्रत्युपकारस्ते तोषितेन मया प्रिये । स्वदृढं च निजं दुःखं कथयाम्यविशेषतः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरा कथां हि वदतां विप्राणां नर्मदातटे । शुभं यत्सर्वपापघ्नं तदाकर्णय सादरम् ॥
यो दिनत्रयमपि प्रयत्नतः स्नाति मेष उपयाति भास्करे ।
भास्करेऽनुदित एव माधवे मासि सोऽघनिचयैर्विमुच्यते ॥ ८९ ॥
सम्पूर्णमपि वैशाखे यो बहिः स्नानमाचरेत् । विधिना माधवं देवमर्चयेत्सोऽपि पापहा
पुण्यतीर्थे विशेषेण स्नानदानक्रियादिभिः । महापापैर्विमुच्येत मानवो मासि माधवे
तावन्महापापचयः शरीरे शरीरिणस्तिष्ठति निर्विशङ्कः ।
यावन्मुदा चोषसि मेषराशिमुपागते मज्जति नो दिनेशे ॥ ९२ ॥
एवमाकर्णितस्तेषां विप्राणां वदतां मया । अनेकदुरिताम्भोधितरणे पोत उत्तमः ॥९३
अदूरे शिवदेहा च वर्ततेऽसौ सरिद्वरा । तत्र स्नातुं गमिष्येऽहं तदाघौघवधाय च ॥९४
यदि ते रोचते कान्ते विरक्तं वा मनो भवेत् । तन्मया त्वं समागच्छ वैशाखस्नानहेतवे
अनित्यं जीवितमिदं यौवनं चातिसुन्दरम् । हेतुर्नरकवासस्य दुर्वारश्च स नो भवेत् ॥
आराधितस्त्वयाऽहं च पातितो दुरितार्णवे । महतामपि यत्सत्यं दुष्टस्थितशरीरिणाम्
किमत्र बहुनोक्तेन न विलम्बोचितःक्षणः । उद्धरिष्येऽपि भवतीं विरक्तिर्यदि ते हृदि ॥

चित्रोवाच ।

स्वामिन्नदृष्टयोगेन तव सङ्गतिधर्मतः । ध्रुवं विरक्तं मच्चेतो निन्द्यमेतद्भवं प्रति ॥९९॥
नूनमेवं मयाशास्त्रे श्रुतं यत्साधुसङ्गमः । अचिन्त्यायै नमस्तस्यै नियतायै ततः पुनः ॥

जातूकर्ण उवाच ।

इत्याभाष्य ततस्तेन समं चित्रा ययौ तदा । विद्यमानं धनं किञ्चिदादाय मुनिनोदिता
ततः परं सोऽपि पुनर्द्विजन्मा वैशाखमासे शिवदेहदेहम् ।
अवाप सस्नौ च दिनेशमस्यै स्नानाय सद्योऽथ ददौ दयालुः ॥ १०२ ॥
हृदयालुरयं विप्रः स्नापयामास तां तदा । यथोचितविधानेन चित्रामुच्चित्रभाषिणीम्
वैशाखस्नानमाहात्म्यं तत्र शुश्राव सा मुदा । पठमानेषु विप्रेषु पुराणानि पृथक्पृथक्
यस्य श्रवणमात्रेण क्षीयते दुरितान्धकः । यथा सूर्योदयेनैव तिमिरौघः प्रणश्यति ॥
सा शिवे शिवजनूजले पुनः स्नानतोऽजनिकरे विधानतः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्नानतो विमलमानसोदया सूर्यकान्तिरिव निर्मला बभौ ॥ १०६ ॥
तत्र मज्जन्ति रेवायां सेवायां निरता हरेः ।
वैशाखे विविधालोका लोकानन्त्यमभीप्सवः ॥ १०७ ॥
ये नर्मदायामिह शर्मदायामशुद्धकायानपि शोधयन्ति ।
विशेषतो माधवमासि मर्त्या भवन्ति मर्त्याधिपलोकलीलाः ॥ १०८ ॥
आजन्मनमोऽघं स्मरणेन रेवा निहन्ति दृष्टा दशजन्मजं पुनः ।
स्नाता कथञ्चिच्छतयोनिजातं संसेविता यच्छति रुद्रलोकम् ॥ १०९ ॥
सकलं माधवं मासं सा चित्रा नर्मदा जले ।
सस्नौ किञ्चिद्ददौ दानं शक्त्या विप्रेषु नित्यशः ॥ ११० ॥
सर्वपापहरं स्तोत्रं शृणोति श्रद्धया हरेः । विप्राणां तत्र पठतां सङ्गादस्य द्विजन्मनः ॥
निमज्ज्य सा माधवमासि पूर्णे रेवाजले तत्र महीसुरेभ्यः ।
अच्छिद्रमासाद्य यथा विधानं तत्रापि चित्राऽपि चकार मासम् ॥ ११२ ॥
कुटीरकं तं तु नवं विधाय सुदेवनामापि स भूमिदेवः ।
उवास रेवासलिले निमज्जंश्चित्रोपरोधाद्दनिशं दयातः ॥११३॥
अथ कालेन कियता कालधर्ममुपेयिवान् । विप्रस्तदनु सा चित्रा चिरेणैव मृता नृप ॥
तेन माधवमासस्य सुकृतेन तदैव सा । पुत्री तवाभवन्नूनमदृष्ट्वा यमयातनाम् ॥११५॰
तस्यकर्मविपाकोऽयं यदाप्तं भूरतेः कुलम् । वैष्णवं विशदं वीर! दुष्प्राप्यं पापकर्मभिः
दिव्या देवी वरं नाम जातं चास्यां नरोत्तम! ।
यच्च दत्तवती चान्नं भोग्यसौख्यसुखानि च ॥ ११७ ॥
ब्राह्मणाय पुरा तस्मै गणिकात्वेऽपि सङ्गता ।
स्नात्वा च माधवे मासि किञ्चित्तत्रापि यद्ददौ ॥ ११८ ॥
तस्य दानस्य सा भुङ्क्ते स्नानस्य च फलोदयम् ।
पिबते शीतलं तोयं मिष्टान्नं च तथाऽनिशम् ॥ ११९ ॥
दिव्यान्भोगान्प्रभुञ्जानावर्ततेचप्रभोर्गृहे । भुङ्क्तेच विधिदत्तं च दुःखशोकादिपीडिता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्पुरा नरनारीणां गृहभङ्गरताऽभवत् ।
तस्य कर्मविपाकोऽयमस्याः किञ्चिदुपस्थितः ॥१२१॥
माधवस्नानमाहात्म्याद्विनैव यमयातनाम् ।
महापापाऽपि ते वीर ! सुन्दरी सा सुताऽभवत् ॥१२२॥
एतत्ते सर्वमाख्यातं तव पुत्र्या विचेष्टितम् । सर्वजन्मभवं वीर ! कर्म दुष्कर्मसम्भवम्

इति श्रीपाद्मे महापुराणे पञ्चमें पातालखण्डे वैशाखमाहात्म्ये चित्रोपाख्याने
द्विनवतितमोऽध्यायः ॥ ९२ ॥

---

# त्रिनवतितमोऽध्यायः

## वैशाखमासे रेवास्नानोपदेशवर्णनम्

नारद उवाच ।

जातूकर्णवचश्चित्रमेवमाकर्ण्य भूपतिः । तमुवाच नमस्कृत्य ज्ञानिनं मुनिमादरात् ॥१॥

दिवोदास उवाच ।

कथमेषा विमुच्येत दुःखादस्मान्मुनेऽधुना ॥ २ ॥

जातूकर्ण उवाच ।

कथयामि महत्पुण्यं येनेयं सुखिता भवेत् । अप्रकाश्यमपि प्रायः प्रवक्ष्यामि तवाग्रतः
स्वल्पमप्यद्भुतं कर्म विकर्मशतनाशनम् ॥ ३ ॥
यथा हरेर्ध्यानबलेन पापं विनाशमायाति महत्समग्रम् ।
प्रातस्तदा माधवमासदानस्नानेन घोरं विलयं प्रयाति ॥ ४ ॥
यथा हरेर्भीतिभयेन नागा नश्यन्ति सर्वे निचयास्तथैव ।
नूनं रवौ मेषगते विभाति स्नानेन तीर्थे च हरिस्तवेन ॥ ५ ॥
तेजसावैनतेयस्य पन्नगा इव पातकाः । विद्रवन्ति च वैशाखस्नानेनोषसि निश्चितम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्माद्देयाऽपि भूपाल दिव्या देवी पुनः स्वयम् ।
कृत्वा वैशाखश्रवणं श्रुत्वा पापहरं स्तवम् ॥ ७ ॥
भवित्री भर्तुः संयोगसुखसम्भोगभागिनी ।
सुदेवोऽपि स जातोऽस्ति पाण्ड्यदेशाधिपो वली ॥ ८ ॥
वैशाखमासि रेवायां स्नानपुण्येन भूपते । तस्मा एव सुतां देहि विशुद्धां स्नानतस्तथा
माधवस्य पुनः स्तोत्रं श्रवणान्माधवस्य च । सन्देहो नात्र कर्त्तव्यो विचित्रं पश्य भूपते
इहामुत्र फलं तस्या समाख्यं पुण्यकर्मणः ॥ ११ ॥

नारद उवाच ।

इत्याकर्ण्यैव मुदितो राजा तमखिलं ततः ।
कारयामास तां पुत्रीं जातूकर्णोदितं विधिम् ॥ १२ ॥
वीरसेनेन तेनैव पाण्डयदेशाधिपेन सा । पुरा जन्मैकसुहृदा दिव्या देवी विवाहिता ॥
बुभुजे भूरिविषयांश्चिरं सुचरितव्रता । वीरसेनेन सुहृदा पूर्वजन्मकृतेन च ॥ १४ ॥
एतत्ते किञ्चिदाख्यातमम्बरीष ! समासतः । वैशाखस्नानमाहात्म्यं किमन्यच्छ्रोतुमर्हसि

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमहात्म्ये चित्रोपाख्याने
त्रिनवतितमोऽध्यायः ।

---

# चतुर्नवतितमोऽध्यायः

## पापप्रशमनस्तोत्रमाहात्म्यवर्णने मुनिशर्मविप्रकथानकम्

अम्बरीष उवाच ।

पापप्रशमनं स्तोत्रं श्रोतुमिच्छामि तद्विभो ! । यस्य श्रवणमात्रेण पापराशिर्विलीयते
धन्योऽस्म्यनुगृहीतोऽस्मि श्राविवोऽस्मि शुभं विधिम् ।
विकर्मोपार्जितं यस्य श्रवणादेव हीयते ॥ २ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चित्रं किमत्र मधुसूदनदैवतस्य मासस्य पुण्यसवनैरिह माधवस्य ।
स्नानैरवश्यविहितैरघराशिनाशः स्याद्यस्य नाम पठनादपि तस्य लोकः ॥
तदेव पुण्यं परमं पवित्रं हृद्यं च लोके सुकृतैकलभ्यम् ।
यदुच्यते केशवनामधेयं मन्ये मुने ! माधवमासि भव्यम् ॥ ४ ॥
धन्यास्तुते माधवमासि नाम स्मरन्ति येऽहो मधुसूदनस्य ।
तस्यैव मे किञ्चिदहो चरित्रं पुनः पवित्रं वद विश्वजन्यम् ॥ ५ ॥

सूत उवाच ।

वचः समाकर्ण्य हरिप्रियस्य प्रीतो मुनिस्तस्य नृपोत्तमस्य ।
स माधवस्नानसमुत्सुकोऽपि कथारसेनाह स माधवस्य ॥६॥

नारद उवाच ।

सत्यं महीपाल ! मिथो मुकुन्दकथारसालापविधिर्विशुद्धः ।
त्वया समं माधवमासधर्मस्नानाधिकोऽयं हरिदैवतेन ॥ ७ ॥
जीवितं यस्य धर्मार्थं धर्मो हर्यर्थमेव च । अहोरात्राणि पुण्यार्थं तं मन्ये वैष्णवं भुवि
किञ्चिद्वक्ष्यामि ते राजन्वैशाखस्नानजं फलम् ।
अस्मत्पिताऽपि नो वक्तुमलं विस्तरतोऽखिलम् ॥ ६ ॥
यत्र मज्जनमात्रेण पापा मुक्तिमुपागताः । माधवे मासि ते पापा नर्मदासलिले परे ॥
पुरा तीर्थप्रसङ्गेन भ्रमन्कोऽपि महीसुरः । मुनिशर्मेति विख्यातो धर्मात्मा सत्यवाञ्छुचिः
युक्तः शमदमाभ्यां च क्षान्तिसन्तोषसंयुतः ।
युक्तः स पितृकार्येषु श्रुतिस्मृतिविधानवान् ॥ १२ ॥
युक्तो मधुरवाक्येषु संयुक्तो हरिपूजने । युक्तो वैष्णवसंसर्गे त्रिकालज्ञानवान्मुनिः ॥
स्वकर्मणि रतो धीरो हृदयालुः प्रियाप्रियः । दमालुरतिमेधावी तत्त्वविद्ब्राह्मणप्रियः
माधवे मासि रेवायां स्नानार्थं प्रतिसञ्चरन् । अग्रतः पञ्चपुरुषान्ददर्शातीव दुःखितान्
परस्परमसंसर्गकारिणः कृष्णविग्रहान् । वटच्छायामुपाश्रित्य समासीनानवस्थितान्
पश्यतो दिक्षु सर्वासु दुरितोद्विग्नचेतसः । तानालोक्य द्विजश्रेष्ठश्चिन्तयामासविस्मितः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्रैते के नरा भीता विपिनेदीनचेष्टिताः । चौरा वा विकृताकारा दृश्यन्ते पापभागिनः
परस्परं च भाषन्तः कृशाः कृष्णवपुः श्रियः ।
यावदेवं स विप्राग्र्यो विचारयति धीरधीः ॥ १६ ॥
तावदागम्यते सर्वे दूरस्था मुनिमादरात् । बद्धाञ्जलिपुटा भूत्वा प्रणम्योचुरिति स्फुटम्

पञ्चपुरुषा ऊचुः ।

भव्यं भवन्तं पुरुषोत्तमं वै विभ्राजमानं चरितेन मान्यम् ।
मन्यामहे विप्र! दयालुमुख्यं वाचं समाकर्णय नोऽसि मैत्रः ॥ २१ ॥
सन्तः प्रतिष्ठा दीनानां दैवादुद्भूतपाप्मनाम् । आर्तानामार्तिहन्तारो दर्शनाद्देवसाधवः ॥
अहं पाञ्चालदेशीयः क्षत्त्रियो वीरवाहनः । ब्राह्मणं हतवान्मोहाच्छरेण शब्दवेधिना ॥
शिखासूत्रविहीनस्तु तिलकेन विवर्जितः । अटामि जगतीमेनां ब्रह्मघ्नोऽहमिति ब्रुवन् ॥
ब्रह्मघ्नायातिपापाय भिक्षामह्यं प्रदीयताम् । एवं सर्वेषु तीर्थेषु भ्रमन्नत्रास्मि चागतः
ब्रह्महत्या न मेऽद्यापि प्रयाति मुनिसत्तम! ।
एवं मे वर्षमेकं हि यतीतं कुर्वतो विभो ॥ २६ ॥
दह्यमानस्य पापेन शोकाकुलितचेतसः । चन्द्रशर्माऽपरो विप्रो योऽयं संलक्ष्यते द्विज! ॥
गुरुघाती स तु ब्रह्मन्मोहाकुलितमानसः । मोहाकुलितचित्तत्वाद्गुरुघातक उच्यते ॥
निवसन्मागधे देशे सन्त्यक्तः स्वजनैस्ततः । दैवादसावपि मुने! भ्रमन्निह समागतः ॥
शिखासूत्रविहीनस्तु विप्रलिङ्गविवर्जितः । मया पृष्टस्तु वृत्तान्तं सत्यमेवावदद्द्विजः ॥
वसता यद्गुरोर्गेहे क्रोधाकुलितचेतसा । महामोहगतेनापि यथा वै घातितो गुरुः ॥
तेन पापेन दग्धोऽसौ वर्त्तते शोकपीडितः ।
तृतीयोऽयं पुनः स्वामिन्वेदशर्मा समाहितः ॥ ३२ ॥
सुरापो ब्राह्मणो जातो मोहाद्वेश्याप्रसङ्गतः । पृष्टोमया यमपि मे यथावृत्तं तथाऽब्रवीत्
आत्मनश्चेष्टितं सर्वं मनस्तापेन पीडितः । निरस्तः सर्वलोकैश्च भार्याबन्धुजनैरपि ॥
तेन पापेन संलिप्तो भ्रमन्नत्रायमागतः । चतुर्थो विधुरो नाम वैश्योऽयं गुरुतल्पगः ॥
मोहान्मासत्रयं यावद्वेश्याभूतां च मातरम् । बुभुजे स विदेहस्थां ज्ञाततत्त्वस्ततश्चरन्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुःखितोऽभ्यागमद्भूमिं भ्रमन्निह मुने पुनः । पञ्चमोऽयं महापापी पापिसंसर्गकारकः

प्रत्यहं धनलोभेन स्तेयादिकृतवानघम् ।

वैश्योऽतिपातकैः क्रान्तस्ततस्त्यक्तो जनैः स्वयम् ॥३८॥

निर्विण्णमानसो दैवान्नन्दनामेह सङ्गतः । एवं पञ्चापि पापिष्ठाः स्थानमेकमुपागताः

कः कस्यापि न सम्पर्कं भोजनाच्छादनादिभिः ।

करोति च महाभाग ! विना वार्तां द्विजोत्तम ! ॥ ४० ॥

विशन्त्येकासनेनैव न स्वपन्त्येकसंस्तरे । एवं दुःखसमाक्रान्ता नानातीर्थेषु वै गताः

नास्माकं पातकं घोरं प्रयाति मुनिसत्तम ! ।

दृष्ट्वा भवन्तं दीप्यन्तं प्रसन्नानि मनांसि नः ॥ ४२ ॥

वदन्ति दुरितप्रान्तं साधोस्ते पुण्यदर्शनात् ।

उपायं वद नः स्वामिन्यथा पापक्षयो हि नः ॥ ४३ ॥

ज्ञायते करुणोऽस्माभिर्विप्रवेदार्थवित्प्रभो । आर्तानां मार्गमाणानां पश्चात्तापमुपेयुषाम्

मोहादवाप्तपापानां त्वमुद्धर्ताऽसि निश्चितम् ॥ ४४ ॥

नारद उवाच ।

तेषामिति वचः श्रुत्वा मुनिशर्मा मुनिस्ततः । इदमाह विचार्येति करुणावरुणालयः ॥

मुनिशर्मोवाच ।

यूयमज्ञानतः प्राप्तपातकाः सत्यभाषिणः । अनुतापयुतास्तस्मादनुग्राह्या मयाऽधुना ॥

शृणुध्वं मे वचः सत्यमूर्ध्वबाहुर्वदाम्यहम् । यन्मयाऽङ्गिरसः पूर्वं श्रुतं मुनिसमागमे ॥

दृष्टं वेदेषु शास्त्रेषु श्रुतं गुरुमुखात्तथा । विष्णुनाराधितेनादौ स्वयमुक्तं च तत्त्वतः ॥

न तृप्तिरशनादन्या न गुरुर्जनकादपि । न पात्रमन्यद्विप्रेभ्यो न देवः केशवात्परः ॥

न गङ्गया समं तीर्थं न दानं सुरभीसमम् ।

न गायत्र्या समं जाप्यं न द्वादश्या समं व्रतम् ॥ ५० ॥

न भार्यया समं मित्रं न धर्मो दयया समः ।

न स्वातन्त्र्यसमं सौख्यं गार्हस्थ्यान्नाश्रमो परः ॥ ५१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न सत्यात्पर आचारो न सन्तोषात्परं सुखम् । न माधवसमो मासो महापापहरः परः
विधिनाऽनुष्ठितो भक्त्या मधुसूदनवल्लभः । गङ्गादिषु च तीर्थेषु विशेषेण सुदुर्लभः ॥
प्रायश्चित्तानि सर्वाणि द्वादशाब्दमुखानि च ।
तावद्गर्जन्ति पापानि यावन्नायाति माधवः ॥ ५४ ॥
वैशाखमखिलं मासं यः स्नाति हरितत्परः । हरिपादसमुद्भूते सलिले विमलाशयः ॥
स एव सर्वपापैस्तु मुक्तो यायात्परां गतिम् ।
निजपापौघनिष्कृत्यै वक्तव्यं तस्य किन्नरैः ॥ ५६ ॥
मासे तु वै माधवसंज्ञकेऽस्मिन्यः स्नाति पापैः स विमुच्यते हि ।
मेषस्थिते सम्प्रति नर्मदायाः शर्मप्रदेवारिणि वारिताघे ॥ ५७ ॥
दुर्लभा हि महानद्यो माधवे मासि सर्वशः ।
ततोऽपि दुर्लभा गङ्गा रेवा च यमुना तथा ॥ ५८ ॥
एतासु तिसृषु प्रायः प्राप्यैकामपि सादरम् ।
यः स्नाति माधवे मासि विपापः स हरिं व्रजेत् ॥ ५९ ॥
तस्मादहो सह मया सुकृतैकसारे वैशाखमासि च भवन्त उपेत्य रेवाम् ।
मज्जन्तु पातककृतो मुनिवृन्दजुष्टे रेवाजले निखिलपापभयापहत्यै ॥ ६० ॥
एवं मुक्तास्ततः सर्वे मुदिता मुनिना सह ।
जग्मुस्ते पापिनो रेवां शंसन्तोऽद्भुतकारिणीम् ॥ ६१ ॥
मुनिशर्मा ततोगच्छंस्तैस्तथानुगतो नरैः । ददर्श पथिसन्त्रास्तान्पिशाचानष्टभीषणान्
कुर्वतो विविधाञ्छब्दान्भ्रमतोऽपि ततस्ततः ।
ऊर्द्ध्वकेशोर्द्ध्वरक्तांश्च कृष्णदन्तकृशोदरान् ॥ ६३ ॥
अरण्ये कण्टकाक्रान्ते वृक्षपानीयवर्जिते । सम्मुखं धावतो दृष्ट्वा भयसंविग्नमानसः
नमोनारायणायेति रक्षरक्षेति चाब्रवीत् ॥ ६५ ॥
नारायणायेति नमोऽभिधानमाकर्ण्य धर्मैकनिधानमुच्चैः ।
भवान्तरे ते मनसा पिशाचा ययुर्निजादृष्टवशेन लब्धाः ॥ ६६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विनयान्वितमनसो मुनिशर्मा विलोक्य तान् । उवाच मधुराभाषी के यूयं विकृता नराः
किं वा केन कृतं कर्म येन प्राप्ता च वै कृतिः ।
कथमेवं विधाः सर्वे दुःखिनोऽतीव भीषणाः ॥ ६८ ॥
प्रेता ऊचुः ।
क्षुत्पिपासार्दिता नित्यं नानादुःखचया कुलाः । कृतबुद्धे हृदि क्रूरा नष्टसंज्ञा विचेतसः
न जानीमो दिश क्वापि मूढा मानवघातिनः । तदेतद्दुःखमाख्यातमेतदेवासुखं पुनः ॥
प्रभातमिव सम्भाति भास्करोदयदर्शनात् ।
श्रुत्वा नारायणेत्युच्चैर्भाषितं तव कोमलम् ॥ ७१ ॥
दृष्ट्वा च दर्शनं विप्र शुद्धभावं गता वयम् । दर्शनेनैव ते विप्र ! नामश्रवणतो हरेः ॥
भवान्तरमनुप्राप्ता वयं प्राप्तदयालवः । विनाशयत्यपयशो बुद्धिं विशदयत्यपि ॥ ७३ ॥
प्रतिष्ठापयति प्रायो नृणां वैष्णवदर्शनम् । अहं पर्युषितो नाम सूचकोऽयं द्वितीयकः ॥
शीघ्रगो रोधकश्चान्यः पञ्चमोऽयं च लेखकः ।
षष्ठोऽयमिति वाग्दुष्टः सप्तमोऽयं विदैवतः । नित्यं याचनकश्चायमष्टमः कष्टदायकः ॥
मुनिशर्मोवाच ।
प्रेतानां कर्म जातानां नामानि भवतां कुतः । किं तत्कारणमुद्दिश्य ये न यूयं सनामकाः
प्रेता ऊचुः ।
मया स्वादु सदा भुक्तं दत्तं पर्युषितं द्विजे ।
आज्ये सति निराज्यं च तेन पर्युषितोऽस्म्यहम् ॥ ७८ ॥
मिथ्यामिथ्यापरच्छिद्रमर्मान्वेषी स्वभावतः । सूचयामास तेनाऽसौ सूचकोऽशुचिरातुरः
शीघ्रं नश्यति विप्रेण याचितः क्षुभितेन वै । एतत्कारणमुद्दिश्य शीघ्रगो द्विजसत्तम !
गृहोपरि सदा स्वादु भुक्तमेतेन पापिना । एकाकिना कुमनसा तेनासौ रोधकः स्मृतः
मौनेनापि स्थितो नित्यं पादेन लिखते महीम् ।
अस्माकमपि पापिष्ठो लेखको लोकसङ्गतः ॥ ८२ ॥
गुणिनोऽयं गुणान्द्वेष्टि निर्गुणे च गुणज्ञताम् ।

२६—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

असंज्ञे ज्ञानयोगी च वाग्दुष्टोऽसौ ततःस्मृतः ॥ ८३ ॥
नास्तिक्यभावादनिशं पितृदैवतमानवान् । न मन्यते च सत्कर्मपापस्तेन विदैवतः ॥
सदा याचनको मिथ्या मिथ्यादौर्गत्यदर्शकः ।
स भूतोद्वेजको लुब्धस्तेन याचनकस्त्वयम् ॥ ८५ ॥
एभिः पूर्वकृतैः पापैर्भुक्त्वा नरकयातनाम् ।
प्रेतास्ते दर्शनादद्य पुनर्जाताः स्म सुस्थिताः ॥ ८६ ॥
एतत्ते सर्वमाख्यातमात्मवृत्तान्तसम्भवम् ।
प्रष्टुं च यदि ते श्रद्धा पृच्छाऽन्यत्कथयामि ते ॥ ८७ ॥

ब्राह्मण उवाच ।

ये जीवा भुवि तिष्ठन्ति सर्वे आहारमूलकाः ।
युष्माकमपि आहारं श्रोतुमिच्छामि तत्त्वतः ॥ ८८ ॥

प्रेता ऊचुः ।

शृणुष्वाहारमस्माकं सर्वसत्त्वविगर्हितम् । यं श्रुत्वा निन्दसे ब्रह्मन्भूयो भूयश्च नित्यशः
श्लेष्ममूत्रपुरीषेण योषिदङ्गमलेन च । गृहाणि त्यक्तशौचानि तानि भुञ्जन्ति तत्र वै ॥
स्त्रीदग्धानि प्रकीर्णानि प्रकीर्णायस्कराणि च ।
कुत्सितानि मलेनापि प्रेता वै तत्र भुञ्जते ॥ ९१ ॥
माधवं यत्र नार्चन्ति स्त्रीजीतानि गृहाणि च । दयाक्षान्तिविहीनानि प्रेतास्तत्रैव भुञ्जते
यत्राभद्रागृहे वाचः शौचहीनाश्च योषितः । कलहो यत्र सततं प्रेतास्ते तत्र भुञ्जते ॥
न यत्र जामयो गेहे पूज्यन्ते न वराः स्त्रियः । यत्र दुर्जनसंसर्गस्तत्र भोक्ष्यामहे वयम्
न यत्र हरिसेवा वा न कथा यत्र वैष्णवी । न यत्र वैष्णवी प्रीतिः प्रेता वै तत्र भुञ्जते
येषामेवं गृहे प्रीता भुञ्जते तेऽपि सत्वरम् । प्रेता भवन्ति पापेन निजवंशविनाशकाः ॥
तस्य मे जायते ब्रह्मन्वदतो भोजनं निजम् ।
अस्मात्पापतरं चान्यत्किञ्चिद्वक्तुं न शक्यते ॥ ९७ ॥
निर्विण्णः प्रेतभावेन पृच्छामि त्वां दृढव्रतम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथा न जायते प्रेतो मुक्तिः प्रेतत्वतो यथा ॥ ९८ ॥

ब्राह्मण उवाच ।

एकादश्यादिभिः पुण्यैर्व्रतैरच्युतकीर्तनैः । देवतातिथिपूजाभिर्गुरुपूजादिभिस्तथा ॥९९
आचारैः साधुचरितैः श्रुतिस्मृत्युदितैर्दिनैः । एवं श्राद्धक्रियादानैर्यथा विधिविनिर्मितैः
दयादानदमक्षान्तिशीलशिष्टाभिवादनैः । इत्येवमादिभिर्धर्मैः प्रेता नस्युः कुलेऽपि वै ॥

गोविप्रतीर्थामरपर्वताग्न्यनदीनदाश्वत्थतरूननेकशः ।
यो वन्दते बन्धुजने विनीतः प्रेतो न लोके भवतीह नूनम् ॥१०२॥

क्रमादर्च्चयते युक्तो विशेषादपि मानवः । गङ्गादिपुण्यतीर्थेषु तस्य पुण्यमनन्तकम् ॥
नाहं वर्षसहस्रेषु वक्तुं शक्तः स्वयं विभुः । दर्शनादेव तस्यापि मुक्तः प्रेतत्वतो भवेत्
ऊर्जमूर्जस्वलं मासमथ दामोदरप्रियम् । तपसामुत्तमं मासं तपोमाधववल्लभम् ॥१०५॥
वैशाखं माधवं मासं मधुसूदनदैवतम् । उत्तमं सर्वमासानां यमेकं मुनयो विदुः ॥१०६

येनैव साधनेन स्यात्सर्वं कृत्यं हि साधितम् ।
ब्रह्मविद्यामताभ्येति सा लक्ष्मीर्विश्वकारिणी ॥१०७॥
तस्या वासो यतो मासो माधवोऽसौ ततः स्मृतः ।
न माधवसमो देवो यथा देवेषु निश्चितम् ॥१०८॥

तथा मासेषु सर्वेषु न मासो माधवप्रियः । तस्य माधवमासस्य माहात्म्यमपि भक्तितः

श्रुत्वा विमुच्यते प्रेतयोनितः किं विधानतः ।
सतां सम्भाषणादेव पुण्यतीर्थनिषेवणात् ॥ ११० ॥

नारायणेति पठनात्तन्नामश्रवणादपि । मुच्यते पातकैः सर्वैर्जनो भक्तिपरायणः ॥११॥
यतिष्ये तदहं प्रेता भवतामपि मुक्तये । परोपकारजं पुण्यं यतो नस्यान्मखैरपि ॥१२॥
प्रेता यामि ततः स्नातुं रेवावारिणि माधवे । मासि मेषस्थिते भानावेतैरनुगतो नरैः
पञ्चैव ते पुनर्मोहाज्ज्ञातपातकसञ्चयाः । स्नातुमायान्ति वचसा ममैव करुणावतः ॥१४

तावद्भवन्तस्तु निदेशतो मे तिष्ठन्तु तत्रैव वने विशोकाः ।
श्रीनर्मदावारिणि यावदेव गत्वा निजस्नानविधिं विहाय ॥ ११५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निर्माय पुरुषानपि नाम तस्मात्कुशस्वरूपानिह नर्मदाके ।
विधानतो माधवमासि दीनान्निमज्जयामीति दयानिबद्धः ॥ ११६ ॥
एवं दिनत्रयेणैव मुक्तिर्वः प्रेतयोनितः । नदर्भबटुकस्नानमात्रेणैव न संशयः ॥ ११७ ॥

नारद उवाच ।

एवमुक्तस्ततस्तैस्तु प्रतीतैरपि पूजितः । मुनिशर्मा ययावेतैरनुयातस्तु पञ्चभिः ॥११८॥
तत्र गत्वा ततः प्रातः स्नात्वा कृत्वा तथा विधिम् ।
स्नापयामास तान्प्रेतान्नामतो दर्भनिर्मितान् ॥ ११९ ॥
स्मृताश्च मुनिना तीर्थे स्नापिता नामतस्तथा ।
प्रेताः पुण्यवता तेन सद्यो मुक्ता दिवं ययुः ॥ १२० ॥
ते पापिनः पञ्च यदैव रेवाजले निमग्ना वचसैव तस्य ।
श्रीमाधवे मासि विवर्णदेहाः सद्यः सुवर्णैकरुचो बभूवुः ॥ १२१ ॥
पापप्रशमनं स्तोत्रं श्राविता मुनिशर्मणा । समक्षं सर्वलोकानां जातास्ते वरकान्तयः ॥
तत्रस्था मानवास्तांस्तु विरजान्स्नानमात्रतः ।
न स्पृशन्ति च राजेन्द्रपापि संसर्गशङ्कया ॥ १२३ ॥
मुनिशर्मानुरोधेन ततो धर्मप्रमाणतः । सद्यो दिव्याऽभवद्वाणी यदेते विगतैनसः ॥२४
स्नातानां माधवे मासि मुकुन्दहृदयात्मनाम् । पापप्रशमनं स्तोत्रं शृण्वतामिह सादरम्
चित्रं किमत्र या शुद्धिर्जायते पापसञ्चयात् । सर्वेषामेव पापानां प्रायश्चित्तमिदंपरम्
यत्प्रातर्माधवे मासि भक्त्या तीर्थेऽवगाहनम् ।
यतः प्रेतास्तु ते पापाः स्नापिता नाममात्रतः ॥ १२७ ॥
स्मृताः पुण्यवता तेन मोचिता मुनिशर्मणा ॥ १२८ ॥
इत्येवमाकर्ण्य गिरं नभःस्थामत्यद्भुतामाशु ततो मनुष्याः ।
शशंसुरेता नपि पञ्च पुण्यान्वैशाखमासं च मुनिं च रेवाम् ॥ १२९ ॥
अथ चाकर्ण्य भूपालः स्तवं दुरितनाशनम् । यदाकर्ण्य नरो भक्त्यामुच्यतेपापराशिभिः
यस्य श्रवणमात्रेण पापिनः शुद्धिमागताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्येऽपि बहवो मुक्ताः पापादज्ञानसम्भवात् ॥ १३१ ॥

परदारपरद्रव्यजीवहिंसादिके यदा । प्रवर्तते नृणां चित्तं प्रायश्चित्तं स्तुतिस्तदा ॥१३२

विष्णवे विष्णवे नित्यं विष्णवे विष्णवे नमः ।

नमामि विष्णुं चित्तस्थमहंकारगतं हरिम् ॥ १३३ ॥

चित्तस्थमीशमव्यक्तमनन्तमपराजितम् । विष्णुमीड्यमशेषाणामनादिनिधनं विभुम् ॥

विष्णुश्चित्तगतो यन्मे विष्णुर्बुद्धिगतश्च यत् ।

योऽहंकारगतो विष्णुर्यो विष्णुर्मयि संस्थितः ॥ १३५ ॥

करोति कर्तृभूतोऽसौ स्थावरस्य चरस्य च । तत्पापं नाशमायातितस्मिन्नेवहिचिन्तिते

ध्यातो हरति यत्पापं स्वप्ने दृष्टस्तु पापिनाम् ।

तमुपेन्द्रमहं विष्णुं प्रणमामि नतिप्रियम् ॥ १३७ ॥

जगत्यस्मिन्निरालम्बे मधुसूदनमच्युतम् । हस्तावलम्बनं स्तोत्रं विष्णुं वन्दे परात्परम्

सर्वेश्वरेश्वर विभो परमात्मन्नधोक्षज ! । हृषीकेश हृषीकेश हृषीकेश नमोऽस्तुते ॥

नृसिंहानन्त गोविन्द भूतभावन केशव । दुरुक्तं दुष्कृतं ध्यातं शमयाशु जनार्दन ! ॥

यन्मया चिन्तितं दुष्टं स्वचित्तवशवर्तिना । अकार्यमघमत्युग्रं तच्छमं नय केशव ! ॥

ब्रह्मण्यदेव गोविन्द परमार्थपरायण ! । जगन्नाथ जगद्धातः पापं शमय मेऽच्युतः ॥

यच्चापराह्ने सायाह्ने मध्याह्ने च तथा निशि । कायेन मनसा वाचा कृतं पापमजानता

जानता च हृषीकेश पुण्डरीकाक्ष माधव । नामत्रयोच्चारणतः सर्वं यातु मम क्षयम्

शारीरं मे हृषीकेश पुण्डरीकाक्ष मानसम् । पापं प्रशममायातु वाक्कृतं मम माधव ॥

यद्भुञ्जानः पिबंस्तिष्ठन्स्वपञ्जाग्रद्यदास्थितः । अकार्षं पापमर्थार्थं कायेन मनसा गिरा ॥

महदल्पं च यत्पापं दुर्योनिनरकावहम् । तत्पापं प्रशमं यातु वासुदेवस्य कीर्तनात् ॥

परम्ब्रह्म परन्धाम पवित्रं परमञ्च यत् । तस्मिन्प्रकीर्तिते विष्णौ यत्पापं तत्प्रणश्यतु

यत्प्राप्य न निवर्त्तन्ते गन्धस्पर्शादिवर्जिताः ।

सूरयस्तत्पदं विष्णोस्तत्सर्वं शमयत्वयम् ॥ १४६ ॥

पापप्रशमनं स्तोत्रं यः पठेच्छृणुयान्नरः । शारीरैर्मानसैर्वाग्जैः कृतैः पापैः स मुच्यते ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुक्तः पापग्रहाक्लिष्यो याति विष्णोः परं पदम् ।
तस्मात्पापे कृतं जप्यं स्तोत्रं सर्वाघमर्दनम् ॥ १५१ ॥

प्रायश्चित्तमघौघानां पठितव्यं नरोत्तमैः । प्रायश्चित्तैः स्तोत्रवरैर्व्रतैर्नश्यति पातकम् ॥
ततः कार्याणि संसिद्ध्यै तानि वै भुक्तिमुक्तये । पूर्वजन्मार्जितं पापमैहिकं च नरेश्वर
स्तवस्य श्रवणादस्य सद्य एव विलीयते । पापद्रुमकुठारोऽयं पापेन्धनदवानलः ॥
पापराशितमः स्तोमभानुरेषस्तवो नृप ! । मया प्रकाशितस्तुभ्यं तथा लोकानुकम्पया

स्तवो योऽयं मया प्राप्तो रहस्यं पितुरादरात् ।
इतिहासमिमं पुण्यं यः शृणोति नराधिप ! ॥ १५६ ॥
तस्यापि पुण्यमाहात्म्यं वक्तुं शक्तः स्वयं हरिः ।
स्वस्ति तेऽस्तु महाराज ! गङ्गायामथ सत्वरम् ॥ १५७ ॥
स्नातुं यामि समायातो मासोऽयं माधवो महान् ॥ १५८ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे नारदाम्बरीषसंवादे वैशाखमाहात्म्ये प्रेतोपाख्याने पापप्रशमनं नाम चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

———

## पञ्चनवतितमोऽध्यायः

### वैशाखमासीयसंक्षिप्तविधिवर्णनम् ।

सूत उवाच ।

यातुं तमुद्यतं नत्वा मुनिं राजा ततो मुदा ।
विधिं पप्रच्छ संक्षिप्तं स्नानदानक्रियोचितम् ॥ १ ॥

अम्बरीष उवाच ।

मुने ! वैशाखमासेऽस्मिन्को विधिः किं तपोऽधिकम् ।
किं च दानं कथं स्नानं कथं केशवपूजनम् ॥ २ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृपया वद विप्रर्षे सर्वज्ञस्त्वं हरिप्रियः। विशेषतोऽपि पूजाया विधिं तीर्थपदे वद ॥
नारद उवाच।
मेषसङ्क्रमणे भानोर्माधवे मासि सत्तम!। महानद्यां नदीतीरे नदे सरसि निर्झरे ॥४
देवखातेऽथ वा स्नायाद्यथाप्राप्ते जलाशये।
दीर्घिकाकूपवापीषु नियतात्मा हरिं स्मरन् ॥ ५ ॥
मधुमासस्य शुक्लायामेकादश्यामुपोषितः। पञ्चदश्यां च वा वीर! मेषसङ्क्रमणेऽपि वा
वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया। मधुसूदनमभ्यर्च्य कुर्यात्सुस्नानपूर्वकम् ॥ ७॥
वैशाखं सकलं मासं मेषसङ्क्रमणे रवेः। प्रातः सनियमः स्नास्ये प्रीयतां मधुसूदनः
मधुहन्तुः प्रसादेन ब्राह्मणानामनुग्रहात्। निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहम् ॥
माधवे मेषगे भानौ मुरारे मधुसूदन!। प्रातःस्नानेन मे नाथ यथोक्तफलदो भव ॥१०
यथा ते माधवो मासो वल्लभो मधुसूदन!। प्रातःस्नानेन मे तस्मिन्फलदः पापहा भव
एवमुच्चार्य तत्तीर्थे पादौ प्रक्षाल्य वाग्यतः। स्मरन्नारायणं देवं स्नानं कुर्याद्विधानतः ॥
तीर्थं प्रकल्पयेद्धीमान्मूलमन्त्रमिमं पठन्। ॐनमो नारायणाय मूलमन्त्र उदाहृतः ॥१३
दर्भपाणिस्तु विधिवदाचान्तःप्रणतो भुवि। चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः ॥१४
प्रकल्प्यावाहयेद्गङ्गां मन्त्रेणानेन मानवः। विष्णुपादप्रसूताऽसि वैष्णवी विष्णुदेवता
त्राहि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात्।
तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत् ॥ १६ ॥
दिवि भुव्यन्तरिक्षे च तानि ते सन्ति जाह्नवि!। नन्दिनीत्येव ते नाम वेदेषु नलिनीति च
दक्षा पृथ्वी च विहगा विश्वगाथा शिवप्रिया। विद्याधरी महादेवी तथा लोकप्रसादनी
क्षेमङ्करी जाह्नवी च शान्ता शान्तिप्रदायिनी।
एतानि पुण्यनामानि स्नानकाले प्रकीर्तयेत् ॥ १९ ॥
भवेत्सन्निहिता तत्र गङ्गा त्रिपथगामिनी। सप्तवाराभिजप्तेन करसम्पुटयोजिते ॥२०
मूर्ध्नि कृत्वा जलं भूपश्चतुर्वा पञ्च सप्त वा। स्नानं कृत्वा मृदा तद्वदामन्त्र्य तु विधानतः
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे। मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उद्धृताऽसि वराहेण विष्णुना शतबाहुना । नमस्ते सर्वलोकानां प्रभवारणि सुव्रते ॥

एवं स्नात्वा ततः पश्चादाचम्य तु विधानतः ।

उत्थाय वाससी शुक्ले शुद्धे तु परिधापयेत् ॥ २४ ॥

ततस्तु तर्पणं कुर्य्यात्त्रैलोक्याप्यायनाय वै । ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिम्

देवान्यक्षांस्तथा नागान्गन्धर्वाप्सरसोऽसुरान् ।

क्रूरान्सर्पान्सुपर्णांश्च तरून्वै जन्तुकान्खगान् ॥ २६ ॥

विद्याधराञ्जलधरांस्तथैवाकाशगामिनः । निराधाराश्च ये जीवाः पापकर्मरताश्च ये ॥

तेषामाप्यायनार्थाय दीयते सलिलं मया । कृतोपवीती देवेषु निवीती च भवेन्नरः ॥

मनुष्यांस्तर्पयेद्भक्त्या ब्रह्मपुत्रानृषींस्तथा । सनकः सनन्दनश्चैव तृतीयश्च सनातनः ॥

कपिलश्चासुरिश्चैव वोढुःपञ्चशिखस्तथा । ते सर्वे तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा ॥

मरिचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् । प्रचेतसं वसिष्ठं च भृगुं नारदमेवच ॥३१॥

देवब्रह्मऋषीन्सर्वांस्तर्पयेदक्षतोदकैः । अपसव्यं ततःकुर्यात्सव्यं जान्वाच्य भूतले ॥३२

अग्निष्वात्तास्तथा सौम्या हविष्मन्तस्तथोष्मपाः ।

कव्यवाडनलान्वर्हिषदश्च वाज्यपाः पुनः ॥ ३३ ॥

सन्तर्पयेत्पितॄन्भक्त्या सतिलोदकचन्दनैः । यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥

वैवस्वताय कालाय सर्वभूतक्षयाय च । औदुम्बराय दध्नाय नीलाय परमेष्ठिने ॥३५॥

वृकोदराय चित्राय चित्रगुप्ताय वै नमः । दर्भपाणिस्तु विधिवत्पितॄन्सन्तर्पयेत्ततः ॥

पित्रादीन्नामगोत्रेण तथा मातामहानपि । सन्तर्प्य विधिना सर्वानिमंमन्त्रमुदीरयेत् ॥

येऽबान्धवा बान्धवा वा ये येऽन्यजन्मनि बान्धवाः ।

ते तृप्तिमखिला यान्तु येऽस्मत्तस्तोयकाङ्क्षिणः ॥ ३८ ॥

आचम्य विधिवत्सम्यगालिखेत्पद्ममग्रतः । साक्षतैश्च सपुष्पैश्च सलिलारुणचन्दनैः ॥

अर्घं दद्यात्प्रयत्नेन सूर्यनामानुकीर्तनैः । नमस्ते विष्णुरूपाय नमस्ते ब्रह्मरूपिणे ॥४०॥

सहस्ररश्मये सूर्य नमस्ते सर्वतेजसे । नमस्ते रुद्रवपुषे नमस्ते भक्तवत्सल ॥ ४१ ॥

पद्मनाभ नमस्तेऽस्तु कुण्डलाङ्गदभूषिते । नमस्ते सर्वलोकेश सुप्तानामुपबोधन ॥४२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुकृतं दुष्कृतं चैव सर्वं पश्यसि सर्वदा। सत्यदेव! नमस्तेऽस्तु! प्रसीद मम भास्कर!
दिवाकर नमस्तेऽस्तु! प्रभाकर नमऽस्तुते!। एवं सूर्यं नमस्कृत्य सप्तकृत्वा प्रदक्षिणम्

द्विजं गां काञ्चनं स्पृष्ट्वा पश्चाच्च स्वगृहं व्रजेत्।
आश्रमस्थांस्ततः पूज्य प्रतिमां चापि पूजयेत्॥ ४५॥
पूर्वं भक्त्यैव गोविन्दं गृही च नियतात्मवान्।
पूजयेद्‌ भक्तितो राजन्नुभयत्र यथाविधि॥ ४६॥

विशेषादपि वैशाखे योऽर्चयेन्मधुसूदनम्। सर्वं संवत्सरं यावदर्चितस्तेन माधवः॥
माधवे मासि सम्प्राप्ते मेषस्थे कर्मसाक्षिणि। केशवप्रीतये कुर्यात्केशवव्रतसञ्चयम्॥
दद्यादनेकदानानि तिलाज्यप्रभृतीन्यपि। जन्मकोटि समुद्भूतपातकान्तकराणि च॥
जलान्नशर्कराधेनु तिलधेनुमुखानि च। वित्तमानेन देयानि दानानीप्सितसिद्धये॥
वैशाखं सकलं मासं नित्यस्नायी जितेन्द्रियः। जपन्हविष्यं भुञ्जानः सर्वपापैः प्रमुच्यते
एकभुक्तमथो नक्तमयाचितमतन्द्रितः। माधवे मासि यः कुर्याल्लभते सर्वमीप्सितम्॥
वैशाखे विधिना स्नानद्वयं नद्यादिके बहिः। हविष्यं ब्रह्मचर्यं च भूशय्यानियमस्थितिः
व्रतं दानं जपो होमो मधुसूदनपूजनम्। अपि जन्मसहस्रोत्थं पापंदहति दारुणम्॥

यथैव माधवो ध्यातो विनाशयति किल्विषम्।
तथैव माधवे स्नानं नियमेन विनिर्मितम्॥ ५५॥

तीर्थे चानुदिनं स्नानं तिलैश्च पितृतर्पणम्। दानं धर्मघटादीनां मधुसूदनपूजनम्॥५६॥
माधवे मासि कुर्वीत मधुसूदनतुष्टिदम्। तिलोदकसुवर्णान्नशर्कराम्बरभूषणम्॥
पादत्राणातपत्राम्बुकुम्भान्दद्याद्‌द्विजातिषु। त्रिसन्ध्यं पूजयेदीश भक्तितो मधुसूदनम्
साक्षाद्विमलया लक्ष्म्या समुपेतं समाहितः। सुवर्णतिलपात्रैश्च ब्राह्मणाञ्छक्तितो बहून्
तर्पयेदुदपात्रैर्यो ब्रह्महत्यां व्यपोहति। वैशाखे मासि यः स्नात्वा प्रातर्नद्यां समाहितः

पूजयित्वा हरिं भक्त्या पुष्पैः कालोद्भवैः फलैः।
पूजयेद्‌ ब्राह्मणं शक्त्या पाखण्डालापवर्जितः॥ ६१॥

तर्पयेद्वस्त्रगोदानै रत्नाद्यैर्धनसञ्चयैः। अन्यद्वित्तं यथाशक्ति स्तोकं स्तोकं समाचरेत्॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पश्चाद्विनिःस्वः पुरुषो माधवे मासि माधवम् ।
पुष्पार्चनविधानेन पूजयेन्मधुसूदनम् ॥ ६३ ॥
सर्वपापविनिर्मुक्तः पितॄणां तारयेच्छतम् । स जन्मशतसाहस्रं न शोकफलभाग्भवेत् ॥
न च व्याधिभयं तस्य न दारिद्र्यं न बन्धनम् ।
स विष्णुभक्तो जायेत धन्यो जन्मनि जन्मनि ॥ ६५ ॥
यावद्युगसहस्राणि शतमष्टोत्तरं भवेत् । तावत्स्वर्गे वसेद्वीर ! भूपतिश्च पुनर्भवेत् ॥६६
भूपते विविधान्भोगान्भुक्त्वा चैव यथासुखम् ।
माधवस्य प्रसादेन माधवे लीयते ततः ॥ ६७ ॥
शृणु राजन्प्रवक्ष्यामि समासान्माधवार्चनम् ।
वैदिकं तान्त्रिकं वाऽपि मिश्रकं पापनाशनम् ॥ ६८ ॥
न ह्यन्तोऽनन्तपारस्य नान्तः पूजाविधेर्नृप ! । अथ संक्षिप्य चोच्येत यथावदनुपूर्वशः
वैदिकस्तान्त्रिको मिश्रः श्रीविष्णोस्त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना हरिमर्चयेत् ॥ ७० ॥
वैदिको मिश्रको वाऽपि विप्रादीनां विधीयते ।
तान्त्रिको विष्णुभक्तस्य शूद्रस्यापि प्रकीर्तितः ॥ ७१ ॥
यथा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः । यजेच्च विधिवद्विष्णुं ब्रह्मचारी समाहितः
अर्चयेत्स्थण्डिलेऽग्नौ वा सूर्येऽप्सु हृदि वा द्विजे ।
द्रव्येण भक्तियुक्तेन स्वगुरुं तदनुज्ञया ॥ ७३ ॥
पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये । उभयोरपि च स्नानं मन्त्रैर्मृद्ग्रहणादिना ॥
सन्ध्योपास्त्यादिकर्माणि वेदतन्त्रोदितानि वै ।
पूजान्ते कल्पयेत्सम्यक्सङ्कल्पं कर्मपावनम् ॥ ७५ ॥
शैली दारुमयी लौही लेप्या लेख्या च सैकती ।
मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥ ७६ ॥
चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उद्वासावाहने न स्तः स्थिरायां माधवार्चने ॥ ७७ ॥
अस्थिरायां विकल्पः स्यात्स्थण्डिले तु भवेद्द्वयम् ।
स्नापनं त्वविलेप्यायामन्यत्र परिमार्जनम् ॥ ७८ ॥

द्रव्यैः प्रसिद्धैर्देवेज्या प्रतिमादिष्वमायिनः । भक्तस्य च यथालब्धैर्भक्तिभावेन चैव हि
स्नानालङ्करणं श्रेष्ठमर्चायामेव भूपते । स्थण्डिलेष्वपि विन्यासो वह्नावाज्यहुतं हविः
सूर्ये चाभ्यर्हणं श्रेष्ठं स्थण्डिले सलिलादिभिः । श्रद्धयोपहृतं श्रेष्ठं हरौ भक्तेन वार्यपि ;

गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः ।
शुचिः सम्भृतसम्भारः प्राग्दर्भैः कल्पितासनः ॥ ८२ ॥
आसीनः प्रागुदग्वक्त्रो ह्यर्चायामथ सम्मुखः ।
कृतन्यासः कृतन्यासां हर्यर्चां पाणिना स्पृशेत् ॥ ८३ ॥

कलशं प्रोक्षणीयं च यथावदुपसाधयेत् । तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च ॥८४॥

प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैस्तु सादयेत् ।
पाद्यार्घ्याचमनीयार्थं त्रीणि पात्राणि दापयेत् ॥ ८५ ॥
हृतशीर्ष्णा च शिखया गायत्र्या चाभिमन्त्रयेत् ।
पिण्डे वाय्वग्निसंसिद्धे हृत्पद्मस्थां परां विभोः ॥ ८६ ॥
अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धिभाविताम् ।
तयात्मभूतया पिण्डे व्याप्ते सम्पूज्य तन्मयः ॥ ८७ ॥
आवाह्यार्चादिषु स्थाप्य न्यस्तां गां तां प्रपूजयेत् ।
पाद्यार्घ्यस्नानार्हणादीनुपचारान्प्रकल्पयेत् ॥ ८८ ॥

धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं हरेः । पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम्
उभाभ्यां वेदतन्त्राभ्यां हरेरुभयसिद्धये । सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलम् ॥९०॥
मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् । नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेवच
महाबलं बलं चैव कुमुदं कुमुदेक्षणम् । दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून्सुरान्
स्वस्वस्थानेष्वभिमुखान्पूजयेत्प्रोक्षणादिभिः । चन्दनोशीरकर्पूरकुङ्कुमागुरुवासितैः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सलिलैः स्नापयेत्मन्त्रैर्नित्यं वा विभवे सति । स्वर्णघर्मानुवाकेन महापुरुषविद्यया ॥
पौरुषेणापि सूक्तेन सामनीराजनाजिभिः । वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैः ॥९५॥
अलङ्कुर्वीत सप्रेम विष्णुभक्तो यथोचितम् । पाद्यमाचमनीयं च गन्धं सुमनसोऽक्षतान्
गन्धधूपोपहार्याणि दद्याद्वै श्रद्धयार्चकः । गुडपायससर्पींषि शष्कुल्यापूपमोदकान् ॥
पायसं दधि सर्पिश्च नैवेद्यं सविकल्पयेत् । अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् ॥

अन्नाद्यं नृत्यगीतानि सर्वाणि स्युरथान्वहम् ।
विधिना विहिते कुण्डे मेखलावर्तवेदिभिः ॥ ९९ ॥
अग्निमाधाय परितः समूहेत्पाणिनोदकम् ।
परिस्तीर्याथ पर्युक्ष्य दत्त्वा चेध्मं यथाविधि ॥ १०० ॥
प्रोक्षण्यासाद्य द्रव्याणि प्रोक्षण्यैवाज्यसेचनम् ।
तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाम्बुजः ॥ १०१ ॥

लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् । स्फुरत्किरीटकटककटिसूत्रवराङ्गदम् ॥

श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ।
ध्यायन्नभ्यर्च्य दारूणि हविषा सघृतानि च ॥ १०३ ॥
प्रास्याज्यभागावाघारौ दत्त्वा चाज्यप्लुतं हविः ।
अभ्यर्च्याऽथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत् ॥ १०४ ॥

मूलमन्त्रं जपेद्ब्रह्मन्स्मरन्नारायणात्मकम् । दत्त्वाचमनमुच्छिष्टं विष्वक्सेनाय कल्पयेत्
मुखवासं तु सुरभिं ताम्बूलाद्यमुपाहरेत् । उपगायन्गृणन्नित्यं कर्माण्यभिनवाक्षरैः ॥

सत्कथां श्रावयञ्छृण्वन्मुहूर्तं क्षणिको भवेत् ।
स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि ॥ १०७ ॥
स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ।
शिरस्तत्पादयोः कृत्वा बाहुभ्यां च परस्परम् ॥ १०८ ॥

प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् । इति शेषान्हरैर्दत्ताञ्छिरस्याधाय सादरम्

उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि चात्मनः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अर्चादिषु पदं यत्र श्रद्धावांस्तत्र चार्चयेत् ॥ ११० ॥

सर्वभूतेष्वात्मनि च सर्वात्मानमवस्थितम् । एवं क्रियायोगपथैः पुमान्वैदिकतान्त्रिकैः

अर्चयेच्च यतः सिद्धिं हरेर्विन्दत्यभीप्सिताम् ।

तामर्चां सम्प्रतिष्ठाप्य मन्दिरं कारयेद्दृढम् ॥ १२ ॥

पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवादिकम् ।

पूजादिनां प्रवाहार्थं महापर्वस्वथान्वहम् ॥ १३ ॥

क्षेत्रापणपुरग्रामान्दत्त्वा सायुज्यतामियात् । प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम्

पूजादिना ब्रह्मलोकं त्रिभिस्तत्साम्यतामियात् । तमेव नैरपेक्षेण भक्तियोगेन विन्दते

भक्तियोगं स लभते एवं यः पूजयेद्धरिम् ॥ १६ ॥

यत्कृष्णप्रणिपातधूलिधवलं तद्वर्ष्म तद्वच्छुभं

ते नेत्रे तपसार्जिते सुरुचिरे याभ्यां हरिर्दृश्यते ।

सा बुद्धिर्विमलेन्दुशङ्खधवला या माधवव्यापिनी

सा जिह्वा मृदुभाषिणी नृप ! मुहुर्या स्तौति नारायणम् ॥१७॥

मूलमन्त्रेण कर्तव्यं स्त्रीशूद्रैरपि पूजनम् । श्रद्धया स्वगुरूद्दिष्टमार्गेणान्यैश्च वैष्णवः ॥

इदं ते सर्वमाख्यातं पावनं माधवार्चनम् । विशेषान्माधवे मासि त्वमेतत्कुरु भूपते ॥

सूत उवाच

इत्येवमाकर्ण्य वचो विचित्रं पुण्यं पवित्रं विधिनन्दनस्य ।

प्रणम्यबद्धाञ्जलिराह राजा सकौतुकी भागवतप्रधानः ॥ १२० ॥

अम्बरीष उवाच ।

समस्तभूमीवलयेश्वरोऽहमव्याहताज्ञो विबुधप्रसेवी ।

गोविन्दपादाम्बुजदत्तचित्तः स्वचित्तसन्तोषितभूमिदेवः ॥ १२१ ॥

विख्यातराजोचितवंशरत्नं निरन्तरं धर्मरुचिर्यशस्वी ।

सौन्दर्यशौर्यौदयदानशीलः सुपुत्रवानस्मि जितारिवर्गः ॥ १२२ ॥

केनापि पुण्येन पवित्रबुद्धिर्जातोऽहमीदृग्गुणसङ्गतश्रीः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इयं पुनः श्रीरिव पुण्यमूर्तिर्लब्धा कुतः कान्तिमती च कान्ता ॥१२३॥
इदं मे सुकृतं सर्वं पुरा जन्मनि चेष्टितम् । समादिश मुने सम्यक्सर्वज्ञोऽसि दयानिधे

नारद उवाच ।

इयं रूपवती नाम वेश्याऽसीदन्यजन्मनि । साम्प्रतं तव भार्या या सत्याचारातिसुन्दरी
वेश्याधर्मेण वर्तेत यथोद्दिष्टेन भाविनी । कुर्वती किल कर्माणि शुभानि द्विजशासनात्
देवदास इति ख्यातो हेमकारो भवानभूत् । पूर्वजन्मनि वै तस्या रुचेर्भर्ता भुजङ्गमः ॥
इयं भवन्तं भजते रुची रूपवती पुनः । व्यथार्थमयनं धर्मं स्थिता विज्ञानमुत्तमम् ॥२८
आकर्ण्य चैकदा धर्मं वैशाखस्नानसम्भवम् । चक्रे धर्मवती तोये स्नानं मेषगते रवौ
दानं दत्तवती दक्षा वेश्या रूपवती सदा । ब्राह्मणाय नमस्कारं भक्त्याऽऽदरपुरःसरम् ॥
स तया देवदासस्त्वं बोधितःस्नेहयन्त्रितः । कृतवान्बुद्धितःस्नानं माधवे मासि सादरम्
तत्र त्रेतायुगस्यादौ तृतीयामाप्य निर्मलाम् । सुवर्णकारं सोवाच देवदासं तमादरात्

वेश्योवाच

उत्तमं कुरु सौवर्णं मधुसूदनमच्युतम् । पूजयित्वा यवैर्देवमेतैःसन्तर्प्य चानलम् ॥३३॥
ब्राह्मणाय च दास्यामि ब्राह्मणानामनुज्ञया । दानमेतत्पुराणेषु कथ्यते तत्र चाक्षयम् ॥
अक्षयेति तृतीयासौ ब्राह्मणेभ्यःश्रुतं मया । शुक्ला वैशाखमासस्य तदक्षयफलप्रदम् ॥
अस्यां दास्यामि तं हैमं मधुसूदनमव्ययम् ॥१३६॥

नारद उवाच ।

इति तस्या वचःश्रुत्वा मधुरं हेमकारकः । चक्रे सुवर्णप्रतिमामच्युतस्यापि सुन्दरीम् ॥
सत्यभावेन धर्मार्थमिति चौर्यविवर्जितः ।
यथोद्दिष्टस्य चन्द्रस्य प्रतिमां लक्षणान्विताम् ॥ १३८ ॥
ददौ सा च विधानेन स्नात्वा विप्राय सुन्दरीम् ।
पूजयित्वा ततस्तस्यामक्षयायां तिथौ नृप ! ॥ १३९ ॥
कालेन कियता वेश्या सा मृता धर्मनिष्ठिता ।
देवदासोऽपि सततो मृतः स्वीयायुषः क्षये ॥ १४० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन पुण्येन भूपाल ! हेमकारोऽन्यजन्मनि । स त्वं प्राप्तो महीं राजन्नशेषगुणसंयुतः ॥
सापि रूपवती वेश्या तेन धर्मेण तेऽभवत् । नाम्ना कान्तिमती कान्ताप्रणयेनपरिप्लुता
विविधा वासना वीर कर्मणां पूर्वसम्भवाः । विचित्रागतयस्तात ज्ञायन्ते न बुधैरपि
तमेनं माधवं मासं प्रतिकार्यं न संशयः । गोपितं तेन देवेन ब्रह्मणा माधवेन च ॥१४४॥

असाधुसङ्गैरनवाप्तविद्यैरसंयतैराश्रमधर्महीनैः ।
अभूततीर्थैरकृतव्रतैस्तैर्न लभ्यते माधवमासधर्मः ॥ १४५ ॥
गोविन्द केशव मुकुन्द हरे मुरारे लक्ष्मीनिवास मधुसूदन कृष्णविष्णो ।
वाणी वरा न वदने वसतीति येषां वैशाखमासनियमो भवते न तेषाम् ॥
ये साधुसाधु वचनानि हिताधिकानि नाकर्णयन्ति च हरेश्चरितामृतानि ।
पश्यन्ति ये न कमलारतिकेतनानि वैशाखमासनियमं न हि ते लभन्ते ॥
शुश्रूषिता न गुरवो न वराय कन्या दत्ता समायसमये समलङ्कृता यैः ।
अध्यापिता न तनया विनयादिधर्मं वैशाखमासनियमं न हि ते लभन्ते ॥

सूत उवाच ।

इत्येवमादिश्य मुनिर्नरेशमामन्त्र्य तं मन्त्रविदग्रगण्यः ।
स्नातुं ययौ माधवमासि गङ्गामभ्यर्चितस्तेन तदा स विप्रः ॥ ४६ ॥
विधिं स राजाऽपि ततश्चकार वैशाखमासस्य मुनिप्रणीतम् ।
पत्न्या समं पुण्यधिया तमेव संचिन्तयँल्लोकपवित्रकीर्तिः ॥ १५० ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्ये नारदाम्बरीषसंवादे
पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# षण्णवतितमोऽध्यायः

## वैशाखे माधवार्चनमाहात्म्यवर्णनम् ।

ऋषय ऊचुः ।

सूतसूत महाप्राज्ञ जीव जीव शतं समाः । यद्वयं पुण्यसमयं श्राविता जगतो हितम् ॥
वद भूयोऽपि भूयिष्ठं पिबामस्तावकं वचः । पायम्पायं न तृप्यामो वयं सूत तदुत्तमम्

सूत उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् । संवादमादिलोकस्य जगतां जगदीशितुः ॥३

षट्सहस्राणि चोच्छ्रायो विस्तारेण पुनस्त्रयम् ।
एवं नवसहस्राणि योजनानां विधाय च ॥ ४ ॥

वामया दंष्ट्रया गृह्य उद्धृतादौ वसुन्धरा । दिव्यवर्षसहस्रं वै दंष्ट्रयाधारिता मही ॥

धर्माख्यानप्रसङ्गेन सोवाच विनयाद्विभुम् ॥ ६ ॥

पृथिव्युवाच ।

एते द्वादशमासा वै षष्टिर्दिनशतत्रयम् । एषां किमुत्तमं पुण्यं प्रियं च तव केशव ! ॥
पवित्रःकार्त्तिकोमासस्तुलासंस्थे दिवाकरे । मकरस्थे रवौमासः पुराणे पवनःस्मृतः ॥

मेषस्थे माधवोमासो भास्करे पठ्यते बुधैः ।
मार्गशीर्षोऽपि मासानां पावनःपरिकीर्तितः ॥ ९ ॥
एवं मासाः पवित्रास्ते वासराः केऽपि कीर्तिताः ।
युगादयो युगान्ताश्च तथा कल्पादयोऽपि च ॥ १० ॥

सर्वेभ्योऽप्यधिकं मासमेतेभ्यो वद पावनम् । सर्वयज्ञमयः श्रीमन्नेकं निश्चित्य मे वद

वराह उवाच ।

विधिनाऽविधिना चैव ये यजन्ति नरा धरे ! ।
माधवे मासि मां भक्त्या तैश्च पूज्योऽस्म्यहं सदा ॥ १२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हिरण्याक्षो वरारोहे ! माधवे तु मधुर्हतः। आदिदैत्यावुभावेतौहत्वा त्वं तु समुद्धृता
त्रेतायुगे त्रयीधर्मो ज्ञानवर्णव्यवस्थितिः। माधवेमासि सम्भूता तेन मे माधवः प्रियः
त्रेतायुगं तृतीयायां शुक्लायां मासि माधवे। प्रवृत्तश्च त्रयीधर्माःप्रवृत्तास्ते प्रवर्द्धिताः॥
अक्षया सोच्यते लोके तृतीया हरिवल्लभा। स्नाने दानार्चने श्राद्धे जपे पूर्वजतर्पणे॥
येऽर्चयन्ति यवैर्विष्णुं श्राद्धं कुर्वन्ति यत्नतः। तेषां ददाम्यहं सर्वं यन्मनोऽभीष्टमुत्तमम्
ये ददत्यपि दानानि धन्यास्ते धार्मिकानराः। ये यजन्ति हरिं नित्यमध्वरैर्विविधैरपि
माधवे यजते यो मां तेभ्यस्तदधिकं फलम्। स्नानं दानंजपोहोमस्तपो यज्ञव्रतादिकम्
वैशाखे यत्कृतं देवि तस्य पुण्यफलं शृणु। मन्वन्तराणां कोट [illegible] दशपञ्च च सप्तच

मत्सान्निध्यं गतास्तेऽपि तिष्ठन्ति भयवर्जिताः।
यद्यपि स्युर्ग्रहाःसर्वे क्रूरा जन्मव्ययाष्टकाः॥ २१॥
प्रातः स्नानेन वैशाखे सर्वे सौम्या भवन्ति ते।
वैशाखे मासि यो विप्रान्भोजयेद्भक्तितत्परः।
सिक्थेसिक्थे भवेत्तृप्तिःपितॄणां युगसङ्ख्यया॥ २२॥
यच्छन्ति तत्र मधुराधिकभोजनानि ये वा यवाशनतिलोदकभोजनानि।
छत्राम्बराणि चरणोचितरक्षणानि धन्यास्त एव परितोषकरा हि विष्णोः

विशेषादिह दातव्यास्तिला मधुसमन्विताः। धर्माय वृहते दीर्घदुरितक्षयहेतवे॥ २४॥
एवंकृते तु यत्पुण्यं प्राप्यते मनुजैश्च तैः। तत्कैर्गणयितुं शक्यं वर्षकोटिशतैरपि॥२५॥
पुत्रपौत्रादि सम्पत्ति दीर्घायूंषि यथेप्सितम्। इहाप्नोति परत्रापि मामेव प्रतिपद्यते॥

अनेकजन्मार्जितपातकावली विलीयते माधवमज्जनेन।
जनस्य तत्रोषसि पुण्यतीर्थे यथाविधानं श्रयते तथा वा॥ २७॥

यः परित्यज्य वैशाखं व्रतमन्यदुपाचरेत्। स करस्थं महारत्नं हित्वा लोष्टं हि याचते

सूत उवाच।

एवं स भगवान्पूर्वमादिदेवोऽवदद्विभुः। माधवं मासमुद्दिश्य जगत्यां जगतीधरः॥
किमत्र वहुनोक्तेन न तदस्ति महीसुराः। यदप्राप्यं भवेन्मासि माधवे माधवार्चनात्॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शृणुध्वं च पुरा वृत्तमिहार्थे परमाद्भुतम् । ब्राह्मणस्य च संवादं यमस्य च महात्मनः
मध्यदेशे महाग्रामो ब्राह्मणानां बभूव ह । गङ्गायमुनयोर्मध्ये यामुनस्य गिरेरधः ॥३२॥
विद्वांसस्तत्र भूयिष्ठा ब्राह्मणाश्चावसंस्तदा । अथ प्राह यमः कंचित्पुरुषं कृष्णपिङ्गलम्

रक्ताक्षमूर्द्ध्वरोमाणं काकजङ्घाक्षिनासिकम् ।
गच्छ त्वं भो महाग्रामं गत्वा ब्राह्मणमानय ॥ ३४ ॥

वसिष्ठगोत्रसम्भूतं नामतो यज्ञदत्तकम् । शमे निविष्टं विद्वांसं यज्ञकर्मविशारदम् ॥

न चान्यमानयेथास्त्वं सगोत्रं तस्य पार्श्वतः ।
स हि तादृग्गुणस्तेन तुल्योऽध्ययनजन्मना ॥ ३६ ॥

आकृत्या च तथा चिह्नैः समस्तैनैव सत्तमः । तमानय यथोद्दिष्टापूजाकार्या हि तत्यमे
स गत्वा प्रतिकूलं तु चकार यमशासनम् । तमेवमानयामास प्रतिषिद्धो यमेन यः ॥

तस्मै यमः समुत्थाय पूजां कृत्वा च धर्मवित् ।
प्रोवाच नीयतामेष सोऽन्य आनीयतामिति ॥ ३९ ॥

सूत उवाच ।

एवमुक्ते तु वचने धर्मराजेन स द्विजः । उवाच धर्मराजं तं निर्विण्णो गमनाय वै ॥४०

ब्राह्मण उवाच ।

कस्मादहमिहानीतः कस्मात्प्रेरयसे पुनः । गन्तुं नैवोत्सहे तत्र मर्त्यलोकं पुनः प्रभो !

यम उवाच ।

इह क्षीणायुषां पुंसां वासःपुण्यवतां भवेत् । अयं वै धर्मराजस्य लोके धर्मः प्रकीर्तितः
सौख्यभूमिरियं सर्वा धर्मराजोऽहमीश्वरः । पुण्यापुण्यानुसारेण जन्तूनां सुखदुःखदः

पापिनां यमरूपोऽस्मि नृणां निरयदायकः ।
तथा पुण्यवतां सौख्यस्वर्गदो धर्ममूर्तिमान् ॥ ४४ ॥

गच्छ विप्रत्वमद्यैव निलयं स्वं यथागतः । अद्यापि दशवर्षाणामायुस्ते परिवर्तते ॥

क्षयेत वायुषः प्राप्तिर्लोकस्यास्य भविष्यति ।
प्रष्टव्यं चेत्त्वया ह्यन्यत्पृच्छस्व प्रब्रवीमि ते ॥ ४६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्राह्मण उवाच ।

यत्कृत्वा सुमहत्पुण्यंस्वर्गः स्याद्ब्रूहि तन्मम । सर्वस्य हिप्रमाणंत्वं धर्माधर्मविनिश्चये
यदि देव मया सम्यग्गन्तव्यं निजमन्दिरे । तद्ब्रूहि कर्मणा केन पतन्ति नरके नराः ॥
व्रजन्ति केन वै स्वर्गं तत्सर्वं कृपया वद ॥ ४९ ॥

यम उवाच ।

कर्मणा मनसा वाचा ये धर्मविमुखा नराः । विष्णुभक्तिविहीना ये ते वैनिरयगामिनः
पश्यन्ति भेदबुद्ध्या ये ब्राह्मणं शङ्करंहरिम् । विरक्ता विष्णुविद्यासु नरा निरयगामिनः
कुलदेशोचितं कर्म यस्त्यक्त्वाऽन्यत्समाचरेत् ।
कामाद्वा यदि वा मोहात्स याति नरकं नरः ॥ ५२ ॥

अयाज्ययाजकश्चैवयाज्यानां च विवर्जकः । विरतोविष्णुविद्यासुसभुङ्क्ते नरकान्बहून्
अदत्त्वा पितृदेवेभ्यो विप्रेभ्यो मर्त्यबन्धुषु । सधनो म्रियतेपापः सयाति नरकान्बहून्
सर्वाण्यन्नानि सिद्धानि पाकभेदं करोति यः । अवैश्वदेवं भुञ्जीत सयाति नरकं चिरम्
बहुद्रोहेण भूतानां येऽर्जयन्ति धनं द्विज ॥ धनवन्तो निरयगा दाम्भिका दुःखभागिनः
नास्तिक्यादथवा लोभान्मोहात्थकाले यथोदिते ।
भक्त्या न श्राद्धदा ये स्युः पच्यन्ते नरकेषु ते ॥ ५७ ॥

दीयमानस्य वित्तस्य ब्राह्मणेभ्यस्तु पापकृत् । विघ्नमाचरते योऽसौनरोनिरयगोभवेत्
सामान्यदक्षिणां लब्ध्वा गृह्णात्येको विमोहितः ।
नास्तिक्यभावनितो नरः स्यान्नरकालये ॥ ५९ ॥

असहिष्णुतया तस्य गुणानां कारणं भवेत् । महत्पापं समुत्पन्नं कारणं नरकस्य तत्
निर्दोषां सुहृदं भार्यां त्यजन्कालेन याति यः । न वहेत यशस्तेषां स नरो नरके पतेत्
अधर्मं धर्ममिति यो वदेन्मोहवशं गतः । हैतुको नास्तिकोयस्तु स नरो निरयालयः ॥
मनसा योऽन्यभावेन वचसा चान्यथा वदेत् । हृदयं कलुषं कुर्यात्स नरो नरके वसेत्
अवमन्य च ये यान्ति भगवत्कीर्तनं नराः । ते यान्ति नरकं घोरं तेन पापेन कर्मणा ॥
पश्यन्तो भगवद्द्वारं नामशास्त्रपरिच्छदम् । अकृत्वा तत्प्रणामादि ते यान्तिनरकौकसः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विनाऽपराधेन नराःकृत्वा पत्न्यधिवेदनम् । त्यजन्ति सुकलत्रं ये ते यान्ति नरके नराः
न श्रृणोति गुरोर्वाक्यं धर्मशास्त्रं च योनरः । परेषां चेतसःक्लेशकारी निरयगो भवेत्
पश्यतां बन्धुबालानां प्रकर्षीमिष्टमश्नुते । स याति नरकं घोरं केवलोदरपूरकः ॥६८॥
तुलामकरमेषेषु प्रातः स्नानं न यश्चरेत् । नद्यादिषु च नास्तिक्यात्तस्य स्यान्नरकालयः
वैष्णवं जनमालोक्य नाभ्युत्थानं करोति यः । प्रणयादरतो विप्र ! स नरो नरकातिथिः
काष्ठैर्वा शङ्कुभिर्वापि शूलैरश्मभिरेव च । ये मार्गांश्चैव रुन्धन्ति ते वै निरयगामिनः ॥
आद्यं पुरुषमीशानं सर्वलोकमहेश्वरम् । न चिन्तयन्ति ये विष्णुं ते वै निरयगामिनः ॥
क्षेत्रवृत्ति गृहच्छेदं प्रीतिच्छेदं च ये नराः । आशाच्छेदं च कुर्वन्ति ते नरा नरकौकसः
आगतान्भोजनार्थं च ब्राह्मणान्वृत्तिकर्शितान् । यःपरीक्षेत मूढात्मासज्ञेयो नरकातिथिः
अनाथं वैष्णवं दीनं रोगार्तं वृद्धमेव च । नानुकम्पन्ति ये मूढास्ते वै निरयगामिनः ॥
नियमांस्तु समादाय ये पश्चादजितेन्द्रियाः । विलोपयन्ति तान्भूयस्ते वै निरयगामिनः

श्रृणु विप्र यथा यान्ति नराः स्वर्गं दयालवः ।
समासेनैव वक्ष्यामि किञ्चित्ते गौरवादहम् ॥ ७७ ॥

येऽर्चयन्ति हरिं देवं जिष्णुं विष्णुं सनातनम् । नारायणमजं कृष्णं विष्वक्सेनं चतुर्भुजम्
ध्यायन्ति पुरुषं दिव्यमच्युतंयेस्मरन्तिच । लभन्ते तेऽच्युतस्थानं श्रुतिरेषा पुरातनी ॥
इदमेव हि माङ्गल्यमिदमेव धनार्जनम् । जीवितस्य फलं चैतद्यद्दामोदरकीर्तनम् ॥८०॥
कीर्तनाद्देवदेवस्य विष्णोरमिततेजसः । दुरितानि विलीयन्ते तमांसीव दिनोदये ॥

गाथां गायन्ति ये नित्यं वैष्णवीं श्रद्धयान्विताः ।
स्वाध्यायनिरता नित्यं ते नराः स्वर्गगामिनः ॥ ८२ ॥
सर्वान्क्लेशान्परित्यज्य विष्णुमेव स्तुवन्ति ये ।
स्वधर्मनिरता धीरास्ते नराः स्वर्गगामिनः ॥ ८३ ॥

वासुदेवजपासक्तानपि पापकृतो जनान् । नोपसर्पन्ति तान्विप्र ! यमदूताश्च दारुणाः ॥
नान्यत्पश्यन्ति जन्तूनां विहाय हरिकीर्तनम् । सर्वपापप्रशमनं प्रायश्चित्तं द्विजोत्तम ! ॥

ये याचिताः प्रहृष्यन्ति प्रियं दत्त्वा वदन्ति च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यक्तदानफला ये च ते नराः स्वर्गगामिनः ॥ ८६ ॥

वर्जयन्ति दिवास्वापं नराः सर्वसहाश्च ये । पर्वण्याश्रयभूता ये ते मर्त्याः स्वर्गगामिनः

द्विषतामपि ये दोषान्न वदन्ति कदाचन । कीर्तयन्ति गुणांश्चैव ते नराः स्वर्गगामिनः

ये परेषां श्रियं दृष्ट्वा न वितप्यन्ति मत्सरात् ।

प्रहृष्टाश्चाभिनन्दन्ति ते नराः स्वर्गगामिनः ॥ ८६ ॥

प्रवृत्तौ च निवृत्तौ च श्रुतिशास्त्रोक्तमेव च । आदरन्ति प्रतीता ये ते नराः स्वर्गगामिनः

यस्मिन्कस्मिन्कुले जाता दयावन्तो यशस्विनः ।

सानुक्रोशाः सदाचारास्ते नराः स्वर्गगामिनः ॥ ६१ ॥

ये पूताः परदारांश्च कर्मणा मनसा गिरा । रमयन्ति न सत्त्वस्थास्ते नराःस्वर्गगामिनः

सदा कर्मयथोक्तेन कुर्वन्ति विधिना च ये । आत्मशक्तिञ्च विज्ञाय ते नराःस्वर्गगामिनः

मनोवाक्कायिके धर्मे श्रद्धां यः कुरुते सदा । साधूनां सम्मतो यश्च स भवेद्देवतातिथिः

वचोवेगं मनोवेगं यो वेगमुदरोद्भवम् । उपस्थवेगं सहते स स्वर्गी जायते नरः ॥६५॥

येषां गुणेषु सन्तोषो वाणी येषां श्रुतम्प्रति । परमार्थे मतिर्येषां ते शिष्टाः स्वर्गगामिनः

व्रतं रक्षन्ति ये कोपाच्छ्रियं रक्षन्ति मत्सरात् ।

विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः ॥ ६७ ॥

मतिंरक्षन्ति ये लोभान्मनो रक्षन्ति कामतः । धर्मं रक्षन्तिदुःसङ्गात्ते नराःस्वर्गगामिनः ॥

एकादश्यां च विधिवदुपवासपरायणाः । शुक्लेऽसिते च ये विप्र ते नराः स्वर्गगामिनः

मातेव सर्वबालानामौषधं रोगिणामिव । रक्षार्थं सर्वलोकानां निर्मितैकादशी तिथिः

एकादशीसमं किञ्चित्पापत्राणं न विद्यते । तामुपोष्य विधानेन पुरुषाः स्वर्गगामिनः

एकादशेन्द्रियैः पापं यत्कृतं भवति द्विज । नरो निर्धूयतत्तूर्णम्प्रीतः स्वर्गतिमान्भवेत्

अश्वमेधसहस्राणि राजसूयशतानि च । एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥

एकतः क्रतवः सर्वे सर्वतीर्थतपांसि च । महादानादिदानानि व्रतं वैष्णवमेकतः ॥१०४

वैष्णवव्रतजपो धर्मो धर्मोयज्ञादि सम्भवः । एकत्र तुलितौ धात्रा तत्र पूर्वो भवेद्गुरुः

हरिवासरभक्तानामच्युतानन्तभाषिणाम् । नाहंशास्ताविशेषेण तेभ्यो विप्र! बिभेम्यहम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येषां पुत्रश्च पौत्रश्च एकादश्यामुपोषितः । सहात्मना स पुरुषाञ्छतमुद्धरते बलात् ॥
उपोषणन्ततः कुर्यात्पक्षयोरुभयोरपि । एकादश्यां स पुरुषो भुक्तिमुक्त्येकभाजनम् ॥
जया च विजया चैव जयन्ती पापनाशिनी । त्रिस्पृशा वञ्जुला चैव पक्षसम्वर्धिनी वरा
तिलदुग्धा पराज्ञेयाअखण्डद्वादशीतथा । मनोरथाख्या च परा भीमद्वादशिका तथा ॥

इत्येवमादयो भेदा द्वादश्याः सन्त्यनेकशः ।
व्रतेष्वेतेषु ये शक्ता ज्ञेयास्ते ब्रह्मणि स्थिताः ॥ १११ ॥

श्रोतारो धर्मशास्त्राणां धर्मप्रत्ययसङ्गताः । प्रियङ्कराश्च बालानां स्वर्गलोकं व्रजन्ति ते

मासि मास्येकदिवसे दर्शे श्राद्धव्रता नराः ।
तृप्यन्ति पितरो येषां ते धन्याः स्वर्गगामिनः ॥ ११३ ॥

भोजनेषूपपन्नेषु भोज्यं यच्छन्ति सादरात् । अभिन्नमुखरागेण शिष्टास्ते स्वर्गगामिनः

ये भक्तिमन्तो मधुसूदनस्य नारायणस्याखिलनायकस्य ।
सत्येन हीना रजसाऽपि युक्ता गच्छन्ति ते नाकमनन्तपुण्याः ॥११५॥

वितस्तां यमुनां सीतां पुण्यांगोदावरींनदीम् । सेवन्ते ये शुभाचाराःस्नानदानपरायणाः

न ते पश्यन्ति पन्थानं नरकस्य कदाचन ॥ ११७ ॥

ये नर्मदायामिह शर्मदायां मज्जन्ति तुष्यन्त्यपि दर्शनेन ।
विधूय पापानि महेशलोकं गच्छन्ति ते तत्र चिरं रमन्ते ॥ ११८ ॥

स्नाताश्चर्मण्वतीतीरे त्रिरात्रं नियता नराः । व्यासाश्रमेविशेषेण ते नरानाकिनःस्मृताः
गङ्गाजले प्रयागे च केदारे पुष्करे तथा । व्यासाश्रमे प्रभासे च मृतास्ते विष्णुगामिनः
द्वारवत्यां कुरुक्षेत्रे योगाभ्यासेन वा मृताः । हरिरित्यक्षरं वक्त्रे येषां ते न पुनर्भवाः
त्रिरात्रमपि ये विप्र ! द्वारवत्यां पुरि स्थिताःमज्जन्ति गोमतीतीरे धन्यास्ते केशवप्रियाः
नरनारायणावासे त्रिरात्रं ये समाश्रिताः। मर्त्यलोके च नन्दायां धन्यास्ते केशवप्रियाः
षण्मासमुषिता विप्र पुरुषोत्तमसन्निधौ । ते नूनमच्युतात्मानो दृष्टाः स्युरघहारिणः

अनेकजन्मार्जितपुण्यतोये मज्जन्ति तोये मणिकर्णिकायाः ।
नमन्ति विश्वेशमवाप्य काशीं ते वै मयाऽपीह भवन्ति वन्द्याः ॥ १२५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूजयित्वा हरिं ये तु भूमौ दर्भतिलैः सह ।
तिलान्विकीर्य लोहञ्च दत्त्वा धेनुं पयस्विनीम् ॥ १२६ ॥
ये मृता विधिवद्विप्र ! ते नरा स्वर्गगामिनः ॥ १२७ ॥
उत्पाद्य पुत्रान्संस्थाप्य पितृपैतामहे पदे । निर्ममा निरहङ्कारा ये मृतास्तेऽपि नाकिनः
स्तैन्यान्निवृत्ताः सततं संतुष्टाः स्वधनेन च ।
स्वभाग्येनोपजीवन्ति ते नराः स्वर्गगामिनः ॥ १२९ ॥
श्लक्ष्णां वाणीं निराबाधां मधुरां पापवर्जिताम् ।
स्वागतेनाभिभाषन्ते ते नराः स्वर्गगामिनः ॥ १३० ॥
शुभानामशुभानाञ्च कर्मणां फलसञ्चये । विपाकज्ञाश्च ये विप्र ! ते नराः स्वर्गगामिनः
धनधर्मप्रवृत्तानां धर्ममार्गानुयायिनाम् । प्रोत्साहं वर्धयन्ते ये मोदन्ते दिवि ते नराः
हेमन्ते वह्निदो यश्च तथा ग्रीष्मे जलप्रदः । वर्षास्वाश्रमदाता च स स्वर्गे मोदते चिरम्
पुण्यकालेषु सर्वेषु नित्यनैमित्तिकादिषु । भक्त्यायः कुरुते श्राद्धं सनूनं सुरलोकभाक्
दानं दरिद्रस्य विभो ! क्षमित्वं यूनां तपोज्ञानवताञ्च मौनम् ।
इच्छानिवृत्तिश्च सुखोचितानां दया च भूतेषु दिवं नयन्ति ॥ १३५ ॥
द्विविधः कर्मसम्बन्धः पापपुण्यसमुद्भवः । सत्यमेव समाश्रित्य क्रियते ह्यत्र निर्णयः ॥
तपोध्यानसमायुक्तं तारणाय भवाम्बुधेः । पापन्तु पतनायोक्तं सत्यमेव न संशयः ॥
बलेन परिवारेण शौर्येणाभियुतस्यच । पुण्यहीनस्य वै पुंसस्तद्बलादि विलीयते ॥
उन्नता गिरिदुर्गेषु वृक्षाः सन्ति सुपुष्टकाः । पतन्ति वातवेगेन समूलास्तु घना अपि ॥
सत्यधर्मविहीनास्ते तथा यान्ति यमालयम् । सामान्यं सर्वजन्तूनां बलंधर्मस्तुकेवलः
येन सन्तरते जन्तुरिह लोके परत्र च । मया सर्वमिदं सम्यक्स्वर्गमार्गप्रदायकम् ॥
समासेन समाख्यातं किं भूयः श्रोतुमिच्छसि ॥ १४२ ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्ये षण्णवतितमोऽध्यायः॥ ९६

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सप्तनवतितमोऽध्यायः

## विविधव्रतनियमस्नानादिवर्णनम् ।

ब्राह्मण उवाच ।

एतन्मूर्खोऽपि जानाति शुभकर्मकरः पुमान् । न याति नरकं स्वर्गं तथा पापक्रियारतः
क्रतुभिर्विविधैरिष्टैर्व्रतदानजपादिभिः । सत्येनाचारकुशलैः स्वर्गसौख्यमवाप्यते ॥२॥
विद्याचारधनोपेतैर्ऋषिभिर्वेदपारगैः । प्राप्यते पुण्ययोगेन यज्ञैर्नाकस्ततः क्वचित् ॥३॥
वित्तेन च विना दानं बहुदातुं न शक्यते । विद्यमानधनेनाऽपि कुटुम्बासक्तचेतसा ॥
अग्निहोत्रादयो धर्मा विशेषेण कलौयुगे । दुष्करा दानधर्मोऽपि दुष्करो भगवन्मतः ॥
अल्पायासेन धर्मेण लभ्यते धर्मसञ्चयः । तन्मे विशेषतो ब्रूहि धर्माधर्मप्रदर्शक ! ॥६॥
तदेकं कथ्यतां धर्मं सर्वधर्मोत्तमोत्तमम् । कृतेनैकेन येनेह सर्वपापक्षयो भवेत् ॥७॥

धनं धान्यं यशो धर्ममायुर्येनाभिवर्धते ।
मर्त्यलोकेऽपि सौख्यं स्यात्स्वर्गो येनाक्षयो भवेत् ॥ ८ ॥

साक्षान्नारायणो येन भक्तानामभयप्रदः । तुष्येदस्य प्रसादेन कामः करतले स्थितः ॥
सर्वयज्ञतपोदानतीर्थसेवाधिकं फलम् । लभ्यते येन यद्यस्ति वैवस्वत ! तदादिश ॥१०
अनुग्राह्यो ह्यहं देव ! यदि धर्मोपदेशतः । सर्वधर्मक्रियासारं तदेकं कृपया वद ॥११॥

पापानामनुरूपाणि प्रायश्चित्तानि यद्यथा ।
तथा तथैव संस्मृत्य कथितानि मनीषिभिः ॥ १४ ॥

कर्तुं तानि न शक्यन्ते देव ! प्रत्येकशो नरैः । सर्वपापहरं पुण्यमेकं चेदस्ति तद्वद ॥

सूत उवाच ।

इत्युक्त्वा ब्राह्मणश्रेष्ठो यमं धर्मस्वरूपिणम् । तुष्टाव प्रयतोभूत्वा सूक्ष्मधर्माभिकामुकः

ब्राह्मण उवाच ।

नमस्ते सर्वशमन ! नमस्ते जगताम्पते ! । नमोऽस्तु देवरूपाय स्वर्गमार्गप्रदायिने ॥१५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मशास्त्रस्वरूपाय धर्मराज ! नमोऽस्तु ते । त्वया भूः पाल्यते देवाप्यन्तरिक्षञ्च द्यौर्महः
जनस्तपस्तथा सत्यं सर्वस्वं पाल्यते त्वया । न त्वया रहितं किञ्चिज्जगत्स्थावरजङ्गमम्

विद्यते त्वद्गृहीतं तु सद्यो नश्यति वै जगत् ।
त्वमात्मा सर्वभूतानां सतां सत्त्वस्वरूपवान् ॥ १८ ॥

राजसानां रजस्त्वञ्च तामसानां तमस्तथा । चतुष्पदां भवान्देव चतुःशृङ्गस्त्रिलोचनः
सप्तहस्तस्त्रिधा बद्धो वृषरूप ! नमोऽस्तु ते । सर्वयज्ञमयो धर्मस्त्वयि विग्रहविग्रहः ॥

साक्षाद् दृष्टोऽसि लोकेश ! देव ! तुभ्यं नमोनमः ।
हृदिस्थः सर्वभूतानां पुण्यपापेक्षिता भवान् ॥ २१ ॥

तेन शास्ता च भूतानां दाता देवप्रशासिता । प्रवर्त्तको हि धर्मस्य देवदण्डधरो भुवि

सर्वधर्ममयं सारमेकं वद सुनिश्चितम् ॥ २३ ॥

यम उवाच ।

परितुष्टोऽस्मि ते विप्र ! स्तोत्रेण च विशेषतः ।
तथाप्यागमधर्मेण मान्योऽसि मम सत्तम ! ॥२४॥

यन्नकस्यचिदाख्यातं तद्गोप्यं परमं मम । सारमुद्धृत्य सर्वेषां यदेकं निश्चितं मया ॥
महानिरयसङ्घाता न्निर्वासनकरं परम् । अनाख्येयमपि ब्रह्मन्वक्ष्ये विनयतोषितः ॥

स्युर्मोहाय चराचरस्य जगतस्ते ते पुराणागमा-
स्तां तामेवहि देवतां परमिकां जल्पन्तु कल्पे विधौ ।
सिद्धान्ते पुनरेक एव भगवान्विष्णुः समस्तागम-
व्यापारेषु विवेकिनां व्यतिकरं नीतेषु निश्चीयते ॥ २७ ॥

भवोब्रह्मा च विष्णुश्च त्रयमेव त्रयीमता । दीपोऽग्निवर्तिस्नेहैस्तु यथा विप्र तथा हरिः

समाराध्य हरिम्भक्त्या गोलोकान्प्राप्नुयाच्छुभान् ।
आराधिते हरौ कामाः सर्वे करतले स्थिताः ॥ २९ ॥

दानमेव परं श्रेष्ठं सर्वपुण्येषु वै द्विज ! । दानेन नश्यते पापं सर्वं दानेन लभ्यते ॥३०॥
नित्यं नैमित्तिकं काम्यमन्यदभ्युदयात्मकम् । अन्यच्चपरमं दानमितिपञ्चविधंस्मृतम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रातर्मध्यपराह्णेषु त्रिषुकालेषु यत्नतः । यत्किञ्चिदपि दातव्यं नित्यमेव प्रकीर्तितम् ॥
शून्यं दिनं न कर्तव्यमात्मार्थं हितमिच्छताम् । यस्मिन्कुले तु दत्तं यत्तत्र तत्रोपतिष्ठति
यः स्वः भक्षयेन्मोहाददत्त्वा बुद्धिवर्जितः । उत्पादयाम्यहं रोगं तस्य भोगनिवारणम्
तेषु कार्येषु सन्तुष्टं बहुपीडाप्रदायकम् । मन्दानलेन संयुक्तं द्वारं सन्तापकारकम् ॥
त्रिषु कालेषु नो दत्तं ब्राह्मणेषु सुरेषु यैः । स्वयं तु भुञ्जते मिष्टं पापं तैस्तु महत्कृतम्
प्रायश्चित्तेन रौद्रेण तानहं परिशोधये । उपवासैर्महीदेव ! कायशोषकरादिकैः ॥३७॥
चर्मकारो यथा चर्मकुण्डस्योपरि निर्घृणे । शोधयेच्च कशाद्यैश्च कुट्टयंस्फोटयेद्यथा
तथाऽहं पापकर्तारं शोधयामि न संशयः । औषधानां सुयोगैश्च कषायैः कटुकैर्भृशम्
उष्णोदकैश्च सन्तापैर्वैद्यरूपेण नान्यथा । अन्ये भुञ्जन्तितस्याग्रे भोगानन्यान्मनोगतान्
किं करोमि समर्थश्च न दत्तं दानमुत्तमम् । महता रोगरूपेण तमेनं परिवारयेत् ॥४१॥
नित्यकालस्य यद्दानमात्मानं पापिभिर्यथा । न दत्तञ्च महीदेव ! श्रद्धया निजशक्तितः
तथा यातान्प्रधक्ष्येतानुपायैर्दारुणैः किल । नैमित्तिकं प्रवक्ष्यामि दानकालं तवाग्रतः
महापर्वणि सम्प्राप्ते तीर्थप्राप्तौ तथैव च । पितुः क्षयाहदिवसे वैशाखादिषुयत्नतः ॥

मासेषु पुण्यकालेषु दानं नैमित्तिकं स्मृतम् ।
काम्यकालं प्रवक्ष्यामि यद्दानं फलदायकम् ॥ ४५ ॥

व्रतादिकं समुद्दिश्य कामानाफलकल्पितम् । यत्कामं कथितं सम्यक्सर्वाङ्गैरेव सङ्गतम्
तस्य दानप्रभावेण भावना परिभावितः । तादृक्फलं समश्नाति मानुषस्तत्प्रसादनात्

आभ्युदयं प्रवक्ष्यामि यच्च यज्ञादिषु स्मृतम् ।
जातकर्मादिकार्येषु मौञ्ज्याद्युद्वाहकर्मसु ॥ ४८ ॥

प्रासादध्वजदेवानां प्रतिष्ठासु प्रयत्नतः । इत्यादिकं महीदेव ! दानमभ्युदयात्मकम् ॥
प्रजावृद्धिकरं भोगयशःस्वर्गसुखप्रदम् । अन्त्यञ्चैव प्रवक्ष्यामि शृणु दानं द्विजोत्तम !

कामस्य संक्षयं ज्ञात्वा जरया परिपीडितः ।
दद्याद्दानानि यत्नेन कुर्यादाशां न कस्यचित् ॥ ५१ ॥

मृते च मयि मे पुत्रा जायाबान्धवसोदराः । कथमेते भविष्यन्ति मांविनासुहृदो मम

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहं वित्तविहीनो वा कथं जीवन्पुनस्तथा। भविष्यामीतिविज्ञाय न ददाति हि किञ्चन

आशापाशशतैर्बद्धो भाग्यादेव कुमायया।

मृत्युम्प्रयाति मूढात्मा रुदन्ति च ततः सुताः ॥ ५४ ॥

दुःखेन पीडिताः किञ्चिन्मोहेनाकुलचेतसः। स्वल्पमल्पञ्चवादानंकथञ्चित्कल्पयन्तिते

न तत्रास्मिन्गते काले महादुःखगते सति। विस्मरन्ति तदा दानं लोभाद्वा नददत्यपि

मृतोऽयं च पिता ज्ञात्वा स्नेहपाशोनिवर्त्तते।

योऽसौ मृतो महीदेव मम पाशैर्नियन्त्रितः ॥ ५७ ॥

तृष्णाक्षुधासमाक्रान्तो बहुदुःखैः प्रपीडितः। पच्यते नरके घोरे चिरकालं न संशयः

तस्माद्दानं प्रदातव्यं स्वयमेव न संशयः। कस्य पुत्राश्च पौत्राश्चकस्यभार्या धनञ्च वा

संसारे नास्ति कः कस्य स्वयंतस्मात्प्रदीयते। पानमन्नं च ताम्बूलमुदकं काञ्चनन्तथा

वसनं गाञ्च भूमिञ्च च्छत्रपात्राण्यनेकधा।

फलानि भूमिदानानि विविधानिस्वशक्तितः ॥ ६१ ॥

दातव्यानि महीदेव नात्रकार्या विचारणा। तीर्थानांलक्षणं विप्र ! प्रवक्ष्यामि तवाग्रतः

सुतीर्थानि इयं गङ्गा भाति पुण्या सरस्वती। रेवा च यमुना तापी नदीचर्मण्वतीतथा

सरयूश्च वरावेणी पूर्णा पापप्रणाशिनी।

कावेरी कपिला चान्या विशल्या विश्वतारिणी ॥ ६४ ॥

गोदावरी समाख्याता तुङ्गभद्रा च गण्डकी।

पापानां भीतिदा नित्यं नदी भीमरथी स्मृता ॥ ६५ ॥

देविका कृष्णगङ्गा च अन्या याः सरितां वराः। एतास्तु पुण्यकालेषुसन्तितीर्थान्यनेकशः

ग्रामे वा यदि वाऽरण्ये नद्यःसर्वत्रपावनाः। तत्र तत्रैवकर्त्तव्याःस्नानदानादिकाःक्रियाः

यदा न ज्ञायते नाम तस्य तीर्थस्य भो द्विज। तत्रेत्युच्चारणं कार्यं विष्णुतीर्थमिदं महत्

तीर्थस्य देवता विष्णुः सर्वत्रापि न संशयः।

नारायणेति यन्नाम स्मरेत्तीर्थेषु साधकः ॥ ६६ ॥

तस्य तीर्थफलं सम्यग्विष्णुनानैव जायते। अज्ञातानां च तीर्थानांदेवतानां न संशयः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विष्णुनाम्नैव नामानि मानवः परिकीर्तयेत् ।
सर्वास्तु सिद्धयः पुण्यास्तीर्थभूतास्तु सागरः ॥ ७१ ॥
सरांसि मानसादीनि निर्झराः पल्वलादयः ।
स्वल्पा नद्योऽपि सर्वास्तास्तीर्थानि हरिनामतः ॥ ७२ ॥

पर्वतास्तीर्थरूपाश्च यज्ञो यज्ञमही तथा । ब्राह्मणा यत्र विद्वांसः कौतुकेनाप्यवस्थिताः
तदेव तीर्थं सुमहत्सर्वपापहरं स्मृतम् । श्राद्धञ्च श्राद्धभूमिश्च देवशाला च होमभूः ॥
यत्र वेदध्वनिः सम्यग्यत्र विष्णुकथाः शुभाः । स्वगृहं पुण्यसंयुक्तंगोस्थानमपिपावनम्
यत्राश्वत्थतरुवनं यत्रागारोऽपि पावनः । एवमादीनि तीर्थानि पिता माता तथैव च

पच्यते यत्र धर्मार्थं स्वयं तत्र गुरुः स्थितः ।
साध्वी यत्रास्ति वै भार्या तत्र तीर्थं न संशयः ॥ ७७ ॥

यत्र धर्मरतिर्नित्यं विद्वान्पुत्रः प्रवर्तते । तत्र तस्य हि तत्तीर्थं तारणाय प्रतिष्ठितम् ॥
इत्येमादि तीर्थानि राजवेश्म तथैव च । एवमादिषु तीर्थेषु पर्वयोगाद्विशेषतः ॥ ७९ ॥
अनाराध्य हृषीकेशं सर्वदं सर्वदेहिनाम् । कोऽपिक्कापि किमप्यत्र न लभेतेतिनिश्चितम्
अपत्यं द्रविणं दारास्तारहर्म्यं हया गजाः । सुखानि स्वर्गमोक्षौ च न दूरे हरिभक्तितः
नारायणः परो देवः सत्यरूपो जनार्दनः । त्रिधाऽऽत्मानं स भगवान्ससर्ज परमेश्वरः

रजस्तमोभ्यां युक्तोऽभूद्रजः सत्त्वादिकं विभुः ।
ससर्ज नाभिकमले ब्रह्माणं कमलासनम् ॥ ८३ ॥

रजसा तमसा जुष्टं स रुद्रमसृजद्विभुः । सत्त्वं रजस्तमश्चैव त्रितयं चैतदुच्यते ॥८४॥

सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम् ।
रजसा सत्त्वयुक्तेन भवेच्छ्रीमान्यशोऽधिकः ॥ ८५ ॥

यद्वेदवाक्यं धर्मस्य समुद्दिश्योपसेवते । तद्रुद्रमिति विख्यातं विशिष्टं गदितं नृणाम्
तेनराजा भवेल्लोके रजसा तमसा पुनः । यद्धीनं रजसा धर्मं केवलं तामसञ्च यत् ॥

तच्च दुर्गतिदं नृणामिह लोके परत्र च ।
यो विष्णुः स स्वयं ब्रह्मा यो ब्रह्मा स स्वयं हरः ॥ ८८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवास्त्रयोऽपि यज्ञेऽस्मिन्निज्यादेवेषु नित्यशः। यो भेदंकुरुते तेषां त्रयाणां द्विजसत्तम!
स पापकारी पापात्मा अनिष्टां गतिमाप्नुयात्। विष्णुरेव परं ब्रह्म विष्णुरेवजगद्द्विज
तस्यायं माधवो मासः प्रियः सर्वेषु कर्मसु। कीर्त्यते हयमेधादि महाक्रतुफलप्रदः॥
तीर्थस्नानतपोदानजपयज्ञफलाधिकः॥ ९२॥
स्नानं विप्राते नियमेन नद्यामनारतं मेषगते रवौ ये।
कुर्वन्ति येऽस्मिन्नपि विप्रपूजां मद्दण्डभाजो नहि ते भवन्ति॥ ९३॥
हत्वा हत्वा किङ्करौघं पुरो मे लुप्त्वा लुप्त्वा चित्रगुप्तस्य लेख्यम्।
स्नात्वा स्नात्वा माधवे मासि तीर्थे पूर्वान्पूर्वानुद्धरन्तीह पापात्॥९४॥
इदं भयच्छेदकरं न तस्मात्प्रकाशनीयं परमं रहस्यम्।
निर्वासहेतुर्नरकालयस्य ममाधिकारक्षयकारणन्तत्॥ ९५॥
भागीरथी नर्मदा च यमुना च सरस्वती।
विशोका च वितस्ता च विन्ध्यस्योत्तरतः स्थिताः॥ ९६॥
गोदावरी भीमरथी तुङ्गभद्रा च देविका।
तापी पयोष्णी विन्ध्यस्य दक्षिणास्तु प्रकीर्तिताः॥ ९७॥
द्वादशैता महानद्यो नित्यं तेनावगाहिताः। वैशाखे विधिना स्नानंनद्यां यः प्रातराचरेत्
सर्वाः समुद्रगाः पुण्याः सर्वे पुण्या नगोत्तमाः।
सर्वे चायतनाः पुण्याः सर्वे पुण्यावनाश्रयाः॥ ९९॥
तेनावगाहिता दृष्टाः प्रणताबहुसेविताः। स्नानमर्द्धोदिते सूर्ये वैशाखे नियतश्चरेत्॥
तस्य पुण्यं महीदेव कश्चिद्वक्तुं न शक्नुयात्। यदिवक्त्रसहस्राणांसहस्राणिभवन्तिहि
आयुश्च ब्रह्मणा तुल्यं यदिस्याद्द्विजसत्तम!।
तदा माधवमासस्य फलं कथयितुं भवेत्॥ १०२॥
महानिरयकर्षाग्निमाधवो माधवो यथा। ब्रह्महत्यादिकं पापमगम्यागमनादिकम्॥
कामाकामकृतं पापमतिपातकमेव च। उपपापरहस्यञ्च सङ्करीकरणं परम्॥ १०४॥
ज्ञातिभ्रंशकरं घोरमपात्रीकरणन्तथा। मलापहं प्रकीर्णञ्च वाङ्मनःकायसम्भवम्॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माधवो निर्दहेन्मासो विधिना समुपासितः। कल्पकोटिसहस्राणि कल्पकोटिशतानिच
वसेद्विष्णुपुरे श्रीमान्माधवे योऽर्चयेद्धरिम् ॥१०७॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्ये सप्तनवतितमोऽध्यायः ॥

---

## अष्टनवतितमोऽध्यायः

### वैशाखमासे विष्णुपूजाविधानकथनम् ।

सूत उवाच ।

एतच्छ्रुत्वा वचस्तस्य धर्मराजस्य भूसुरः । पुनः पप्रच्छ मासस्य माधवस्य विधिं शुभम्

ब्राह्मण उवाच ।

धर्मराज ! महाभाग सम्यग्गुह्यं प्रकाशितम् । माधवस्नानजं पुण्यं नराणां मुक्तिदम्परम्
माधवं माधवे मासि स्नात्वा प्रातः समाहितः ।
कथं सम्पूजयेद्देवं कैः पुष्पैस्तद्विधिं वद ॥ ३ ॥

धर्मराज उवाच ।

सर्वेषां पत्रजातीनां तुलसी केशवप्रिया । पुष्करादीनि तीर्थानि गङ्गाद्याः सरितस्तथा
वासुदेवादयो देवा वसन्ति तुलसीदले । सर्वदा सर्वकालेषु तुलसी विष्णुवल्लभा ॥५॥
त्यक्त्वा तु मालतीपुष्पं मुक्त्वा च सरसीरुहम् ।
गृहीत्वा तुलसीपत्रं भक्त्या माधवमर्चयेत् ॥ ६ ॥
तस्य पुण्यफलं वक्तुमलं शेषोऽपि नो भवेत् ।
अस्नात्वा तुलसीं छित्त्वा देवार्थं पितृकर्मणि ॥ ७ ॥
तत्सर्वं निष्फलं याति पञ्चगव्येन शुध्यति । दारिद्र्यदुःखभोगादि पापानि सुबहून्यपि
तुलसी हरते क्षिप्रं रोगानिव हरीतकी । तुलसी कृष्णगौराख्या तयाऽभ्यर्च्यमधुद्विषम्
विशेषेण हरेर्भक्तो नरोनारायणो भवेत् । माधवं सकलं मासंतुलस्या योऽर्चयेद्यतः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रिसन्ध्यं मधुहन्तारं नास्ति तस्य पुनर्भवः। अलाभे पुष्पपत्राणामन्नाद्येनापि पूजयेत्
शालितण्डुलगोधूमैर्यवैर्वापि हरिं सदा। प्रातः स्नात्वा विधानेन माधवे माधवप्रिये
पितृदेवमनुष्यांश्च तर्पयेत्सचराचरम्। योऽश्वत्थमूलं वै सिञ्चेत्तोयेन बहुना सदा॥
कुर्यात्प्रदक्षिणं तं तु सर्वदेवमयं ततः। योऽश्वत्थमर्चयेद्देवमुदकेन समन्ततः॥ १४॥

कुलानामयुतं तेन तारितं स्यान्न संशयः।
अलक्ष्मीः कालकर्णी च दुःस्वप्नो दुर्विचिन्ततम्॥ १५॥

अश्वत्थ तर्पणात्तात सर्वदुःखं विलीयते। तर्पिताः पितरस्तेन तेन विष्णुः समर्चितः॥

योऽश्वत्थमर्चयेद्धीमान्ग्रहास्तेनैव पूजिताः॥ १७॥
श्वेताश्वपुष्पाणि तथा शमीञ्च हुताशनं चन्दनमर्कबिम्बम्।
अश्वत्थवृक्षञ्च समालभेत ततश्च कुर्यान्निजजातिधर्मान्॥ १८॥
कण्डूयनञ्च गोग्रासं स्नात्वा पिप्पलतर्प्पणम्।
कृत्वा गोविन्दपूजाञ्च न स दुर्गतिमाप्नुयात्॥ १९॥
त्रयोदश्यां चतुर्दश्यां वैशाख्याञ्च दिनत्रयम्।
सर्वाशक्तोऽपि विधिना नारी वा पुरुषोऽपि वा॥ २०॥

पूर्वोक्तनियमैर्युक्तः प्रातः स्नात्वा च शक्तितः। विमुक्तःपातकैः सर्वैः स्वर्गमक्षयमश्नुते

वैशाखमासे यो भक्त्या भोजयेद् ब्राह्मणान्दश।
त्रिरात्रमुत्थितः स्नात्वा सक्रुच्च प्रयतः शुचिः॥ २२॥
गौरान्वा यदि वा कृष्णांस्तिलान्क्षौद्रेण संयुतान्।
दत्त्वा द्वादशविप्रेभ्यस्तैरेव स्वस्ति वाचयेत्॥ २३॥
प्रीयतां धर्मराजो मे पितृन्देवांश्च तर्पयेत्।

यावज्जीवकृतं पापं तत्क्षणादेव नश्यति। अयुतायुतञ्च तिष्ठेत्स स्वर्गलोकेयथासुखम्
मामेव तु न पश्येत्स पूजितोऽखिलदैवतैः। पाकान्नोदककुम्भादि पितृदैवततुष्टये॥
त्रयोदश्यां चतुर्दश्यां पूर्णायाञ्च दिनत्रयम्। यो दद्याद्भक्तितो विप्र महापापैःप्रमुच्यते
सुवर्णतिलपात्रैस्तु ब्राह्मणाञ्छक्तितोऽन्वहम्। तर्पयेदुदपात्रैस्तु ब्रह्महत्यां व्यपोहति॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैशाख्यांपौर्णमास्याञ्च सृष्टाःकमलयोनिना। तिलादेयाश्च भक्त्या च श्रेयःसन्ततिहेतवे
इहार्थेच पुरावृत्तं तदाकर्णय सुव्रत!। फलं माधवमासस्य पूर्णायां परमाद्भुतम्॥
मेषङ्क्रममारभ्य तिथयस्त्रिंशदुत्तमाः। सर्वयज्ञाधिकाः पुण्याः पुराणेषु प्रकीर्तिताः॥

विशेषतोऽपि तास्तिस्रः पवित्राः पापिदुर्लभाः।
ततोऽपि पूर्णिमा पुण्या माधवी माधवप्रिया॥ ३१॥

एषा वाराहकल्पादि तिथिराद्या महाफला। पुरानारायणेनास्यांदितिजौ द्वाविमौहतौ
हिण्याक्षमधू विप्र पृथिवी च समुद्धृता। त्रयोदश्यां चतुर्दश्यां पौर्णमास्यामयं विभुः
क्रमादेतत्त्रयं चक्रे शुक्लेऽस्मिन्मासि माधवे। ततः प्रभृति विप्रेन्द्रविशेषादेव पूर्णिमा
कल्पादिः पावनाख्याताकर्मणःकल्पसाक्षिणी। येन स्नातंनवैशाखे प्रातर्नियमशालिना

किं तस्य जन्मना विप्र! नूनामात्मापकारिणा।
त्रयोदश्यां चतुर्दश्यां पौर्णमास्यां विशेषतः॥ ३६॥

अपि सम्यग्विधानेन नारी वा पुरुषोऽपि च। प्रातः स्नातःसनियमःसर्वपापैः प्रमुच्यते
स्नानदानार्चनश्राद्धक्रियापुण्यादिवर्जिता। यस्यातीता च वैशाखी स नूनं निरयालयः
न वेदेन समं शास्त्रं न तीर्थं गङ्गया समम्। नदानं जलगोतुल्यं न वैशाखी समातिथिः
जलधेनुञ्च यो दद्याद्वैशाख्यां विष्णुतत्परः। त्रयाणामपि देवानां चतुर्थोऽयं विशेषतः
मातृहा पितृहा चैव भ्रूणहा गुरुतल्पगः। जलधेनुंसमालोक्य मुच्यते सर्वपातकैः॥
दशपूर्वान्परान्वंश्यान्नरकात्तारयन्ति ते। जलधेनुं प्रयच्छन्तिवैशाख्यां विधिनाऽत्रये
शर्कराफलताम्बूलमुपानत्करपत्रिकाः। प्रयच्छन्ति द्विजाग्र्येभ्योधन्यास्तेचात्र कीर्तिताः

मणिकोदककुम्भांश्च पक्वान्नं हैमदक्षिणाम्।
यः प्रयच्छति वैशाख्यां सोऽश्वमेधफलं लभेत्॥ ४४॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम्। ब्राह्मणस्य च सम्वादं प्रेतैः सार्द्धं महावने॥
ब्राह्मणोधनशर्माऽसीन्मध्यदेशेपुराऽनघ!। कुशाद्यर्थं वनं यातो ददर्शेदमथाद्भुतम्॥

भीतोऽपश्यदसौ प्रेतान्दुष्टांस्त्रीनतिदारुणान्।
ऊर्ध्वकेशान्सरक्ताक्षान्कृष्णदन्तान्कृशोदरान्॥ ४७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुर्वतो विविधारावान्धावतोऽपि यतस्ततः ।
तान्दृष्ट्वा भयसन्त्रस्तो ब्राह्मणो विद्रुतो जवात् ॥ ४८ ॥
क्रन्दमानास्ततस्तेऽपि तमेवानुययुस्तदा । सधर्ष्यमाणस्तैःप्रेतैरुवाच मधुरं वचः ॥४६॥

धनशर्मोवाच ।

केयूयं वः कुतोऽवस्था जातेति निरयोचिता । भयार्त्तमनुकम्प्यं मां दुःखितं त्रातुमर्हथ
वैष्णवं बहुभृत्यं च निःस्वं विप्रं वनागतम् । भवतामपि सश्रेयोनूनं दास्यति केशवः
ब्रह्मण्यो भगवानविष्णुस्तुष्टो मय्यनुकम्पया ।
अतसीपुष्पसङ्काशो विष्णुः पीताम्बरो हरिः ॥ ५२ ॥
यस्य श्रवणमात्रेण नाम्नो याति महातमः । अनादिनिधनोदेवः शङ्खचक्रगदाधरः ॥
अक्षयः पुण्डरीकाक्षः प्रेतमोक्षप्रदायकः ॥ ५३ ॥

यम उवाच ।

नामश्रवणमात्रेण विष्णोस्तेपरितोषिताः। पिशाचाःपुण्यभावस्थादयादाक्षिण्ययन्त्रिताः
प्रीणितास्तस्य वचसा तदादिष्टेन नोदिताः । इदमूचुर्द्विजंप्रेताःक्षुत्तृष्णापूरपीडिताः ॥

प्रेता ऊचुः ।

दर्शनेनैव ते विप्र ! नामश्रवणतो हरेः । भावमन्यमनुप्राप्ता वयं जाता दयालवः ॥५६॥
अपाकरोति दुरितं श्रेयश्च योजयत्यपि । यशोविस्तारयस्याशु नूनं वैष्णवसङ्गमः ॥
रसायनमयी शीता परमानन्ददायिनी । नानन्दयति कं नाम वैष्णवामृतचन्द्रिका ॥
अयं कृतघ्ननामास्ति द्वितीयोऽयं विदैवतः । अवैशाखस्तृतीयोऽयं त्रयाणामपि पापकृत्
सदैवानुष्ठिताऽनेन पापेनातिकृतघ्नता । तेनास्य कर्मजं नाम कृतघ्नाख्यं व्यवस्थितम् ॥
सुदास इति नाम्नाऽयं शूद्रोऽभूत्पूर्वजन्मनि । कृतघ्नस्तेन पापेन प्राप्तोऽवस्थामिमां द्विज!
अतिपापिनि धूर्ते च गुरुस्वाम्यहितेऽपि च ।
निष्कृतिर्विद्यते विप्र ! कृतघ्ने नास्ति निष्कृतिः ॥ ६२ ॥
नानानिरयसङ्घातं शरीरैर्यातनाक्षमैः । अनुभूय तां त्ववस्थामन्त्यामेतांगतो द्विज ! ॥
अनेनान्नं सदा भुक्तमकृत्वा देवतार्चनम् । अदत्त्वा गुरुविप्रेभ्यस्तेनैवायं विदैवतः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयं दशसहस्राणां ग्रामाणामीश्वरो नृपः । हरिवीर इतिख्यातो नाम्नाऽऽसीत्पूर्वजन्मनि
रोषाहङ्कारनास्तिक्यैर्गुर्वाज्ञालङ्घनोद्यतः । अकृत्वैव महायज्ञान्भुक्तवान्विप्रनिन्दकः ॥
कर्मणा तेन पापेन महानरकसङ्कटम् । अनुभूय ततः प्रेतो जातो नाम्ना विदैवतः ॥
अवैशाखस्तृतीयोऽहं त्रयाणामपि पापकृत् । तेनमे कर्मजं नाम ब्राह्मणोऽहं व्यवस्थितः

मध्यदेशेऽभवं नाम्ना गौतमो गौत्रतोऽप्यहम् ।

विप्रो वासपुरे वासी यज्वाऽऽसं पूर्वजन्मनि ॥ ६९ ॥

मया केवलमेवैकं श्रौतमार्गानुसारिणा । उद्दिश्य माधवं देवं न स्नातं मासि माधवे
न दत्तं न हुतं किञ्चिद्वैशाख्यां चाविशेषतः । नार्चितो मधुहा तत्र तोषिता न मनीषिणः

मणिकोदककुम्भानां न दानैः पितृदेवताः ।

तर्पिता न तिला दत्ताः सक्षौद्राः श्रोत्रियेषु च ॥ ७२ ॥

न पुष्पफलताम्बूलचन्दनव्यजनाम्बरैः । विद्वांसो नार्चितास्तत्र पितृदैवततुष्टये ॥ ७३ ॥
मया नैकाऽपि वैशाखी पूर्णा पूर्णफलप्रदा । स्नानदानक्रियापूजासुकृतैः परिपालिता ॥
तेन मे वैदिकं कर्म सर्वं चैवतु निष्फलम् । ततोऽवैशाखनामाहं प्रेतो जातोऽस्मि सर्वतः
एतत्ते सर्वमाख्यातं त्रयाणामपि कारणम् । त्वंनो भवसमुद्धर्ता पापाद्विप्रोऽसि वैयतः
विमुक्तं ब्रह्मतीर्थं च साधवः परमं यतः । तारयन्ति महापापान्निरयेभ्योऽपि संश्रितान्
गङ्गादि पुण्यतीर्थेषु यो नरः स्नाति सर्वदा । यः करोति सतांसङ्गं तयोः सत्सङ्गमो वरः
अथवा मम पुत्रोऽस्ति धनशर्मेति विश्रुतः । तं गत्वा बोधयस्वामिन्नस्मदर्थे कृतोद्यमः
कार्ये समुद्यमं कृत्वा परेषां समुपस्थिते । पुष्कलं फलमाप्नोति यज्ञदानक्रियाधिकम्

यम उवाच ।

प्रेतवाक्यं तदाकर्ण्य धनशर्माऽतिदुःखितः । स तं जनकमाज्ञाय पतितं निरये निजम् ॥

आत्मानमभितो निन्दन्निदं वचनमब्रवीत् ॥ ८१ ॥

धनशर्मोवाच ।

अहं तव सुतः स्वामिन्गौतमस्य निरर्थकः ।

यस्तु पुत्रो न निस्तारं पितुः कुर्यादतन्द्रितः ॥ ८२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आत्मानं पावयेन्नासावदाता द्रव्यवानिति । धर्मो हि गहनो ज्ञेयः प्रयत्नेनापि धीमता
यथा ममपिताच त्वामिमां प्राप्तोऽसि दुर्गतिम् । यदाचसुखसन्तानंनमत्तः प्राप्तवानसि
लोकयोः सुखसन्ताने तथा न तनयो मतः । द्वौ गुरू पुरुषस्येह पिता माता च धर्मतः

तयोरपि पिता श्रेयान्बीजप्राधान्यदर्शनात् ।
किं करोमि क्व गच्छामि कथं तात ! गतिस्तव ॥ ८६ ॥
धर्मतत्त्वं न जानामि संश्रयामि भवद्वचः ॥ ८७ ॥

प्रेत उवाच ।

शृणु पुत्र वचः सत्यं भाविनोऽर्थस्यमे बलात् । अथ पुण्येन केनापि भवित्रीसुगतिर्मम
मया श्रौतानि कर्माणि कुर्वता किल गर्वतः । अनादृतं गुरुवचो गुरुस्तत्रावमानितः ॥
गुरूणामपमानेन प्रहर्षक्रोधविस्मयैः । पुण्यानि क्षयमायान्ति यशांसीव हि दुर्नयैः ॥
पौराणिकविधानेन कर्मश्रौताविरोधियत् । केवलं वैदिकं कर्म कृतमज्ञानतो मया ॥
पापेन्धनदवज्वाला पापद्रुमकुठारिका । कृता नैकाऽपि वैशाखी विधिना पुत्र पूर्णिमा
अव्रता यस्य वैशाखी सोऽवैशाखो भवेन्नरः । दश जन्मानि च ततस्तिर्यग्योनिषुजायते
चिरं भुक्त्वा दुःखमन्ते प्रेतः पर्यायतो भवेत् । लभतेमानुषं जन्म कथञ्चिदपिदुर्लभम्
उपायं ते वदिष्यामि प्रेतमोक्षकरम्परम् । श्रुतवान्यदहंपूर्वजन्मनि स्वगुरोर्मुखात् ॥९५
गच्छ पुत्र गृहंस्नात्वा यमुनायां विधानतः । अद्यतः सर्वगतिदा कल्पाद्यासाप्युपागता

पश्चिमेऽहनि वैशाखी पितृदेवार्चने हिता ॥ ९६ ॥
पानीयमप्यत्र तिलैर्विमिश्रं सद्योदकुम्भान्नफलानि भक्त्या ।
दद्यात्पितृभ्यो भवतीह दत्तं श्राद्धं सदा तेन समासहस्रम् ॥ ९७ ॥
वैशाख्यां पौर्णमास्यां यो भोजयेद् भूमिदेवताः ।
सिक्थे सिक्थे भवेत्तृप्तिः पितॄणां युगसङ्ख्यया ॥ ९८ ॥
वैशाख्यां विधिना स्नात्वा भोजयेद् ब्राह्मणान्दश ।
पायसं सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ९९ ॥
गौरान्वा यदिवा कृष्णांस्तिलान्क्षौद्रेण संयुतान् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दत्त्वा दशभ्यो विप्रेभ्यस्तेनैव स्वस्ति वाचयेत् ॥ १०० ॥
प्रीयतां धर्मराजेति पितॄन्देवांश्च तर्पयेत् । यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥
वैशाख्यां पौर्णमास्याञ्च सृष्टाः कमलयोनिना ।
तिला देयाश्च भक्त्या च स्पृश्याः सर्वाङ्गतो द्विज ! ॥ १०० ॥
यस्तिलैर्यवसम्मिश्रैःस्नातिसर्वाङ्गतस्तदा । तस्यब्रह्मा च धर्मोऽत्र ददातिवरमीप्सितम्
प्रीतये धर्मराजस्य यो दद्यादुदकुम्भकान् । सप्त सप्त कुलं तेन तारितं स्यान्न संशयः
त्रयोदश्याञ्चतुर्दश्यां पूर्णायां भक्तितत्परः ।
स्नात्वा जप्त्वा तथा हुत्वा दत्त्वा सम्पूज्य माधवम् ॥ १०५ ॥
यत्फलं जायते पुत्र तदस्माकं प्रयच्छ भोः। नैतौ परिचितौ प्रेतौ हित्वास्वर्गतिमाश्रये
एतयोरपि पापस्य ह्यन्तोऽयं समुपस्थितः ॥ १०७ ॥

यम उवाच ।

तथेत्युक्त्वा गतः सर्वं ततश्चक्रे स वै द्विजः। प्रीतःपरमयाभक्त्या वैशाख्यांस्नानदानकृत्
स्नातः समुदितो भक्त्या प्राप्य माधवपूर्णिमाम् ।
दत्त्वा बहूनि दानानि तेभ्यः पुण्यं ददौ पृथक् ॥ १०६ ॥
तत्क्षणादेव ते सर्वे विमानस्था दिवं ययुः । तत्पुण्यदानयोगेन मुदिता द्विजसत्तम ! ॥
धनशर्माऽपि विप्रेन्द्रः श्रुतिस्मृतिपुराणवित् ।
भुक्त्वा भोगांश्चिरं कालं ब्रह्मलोकमवाप्तवान् ॥ १११ ॥
एषा पुण्यतमा तस्माद्वैशाखी विश्वपावनी । कथ्यतेतुमया विप्र समासेनातिगौरवात्
धन्यास्त एव कृतिनश्च त एव जाता लोके त एव पुरुषाः पुरुषार्थभाजः ।
ये माधवे मधुनिषूदनमर्चयन्ति प्रातर्निमज्ज्य नियमेन विशुद्धचित्ताः ॥११२
यो माधवे मासि नरः प्रभाते स्नातः समाराधयते रमेशम् ।
यमैरुपेतोनियमैरशेषैर्वृतोऽपि नूनं स निहन्ति पापम् ॥ ११४ ॥
तैरेव कालो विजितस्त एव नरेषु धन्या विगतैनसस्ते ।
त एव गर्भे न विशन्ति भूयो मज्जन्ति ये माधवमासि युक्ताः ॥ ११५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स माधवो गर्जति यज्ञयोगात्तपःक्रियादानविधानयोगात् ।
यस्मिन्कृतं मासि कथञ्चिदल्पं पुण्यं पुनः स्यादिह कल्पतुल्यम् ॥ ११६ ॥
मज्जतो हि मनुजस्य माधवे माधवार्चनकृते दिनोदये ।
तामसोऽपि जलबिन्दुसङ्गमादङ्गमावहतिपावनं यतः ॥ ११७ ॥
तानि देहमधिरुह्य देहिनस्तावदेव विचरन्त्यघानि च ।
यावदेति न स माधवाह्वयः श्रीरमारमणवल्लभो विराट् ॥ ११८ ॥
स्नातुं पदानि मनुजो गमनेविभाते तीर्थे ददाति मधुसूदनमासि युक्तः ।
भूयो भवन्ति हयमेधसमानि तानि श्रीमाधवस्मरणतः पठतोऽस्य नाम ॥
मेरुमन्दरतुल्यानि पापान्युग्राण्यनेकशः ।
दहते माधवो मासः स्नातो माधववल्लभः ॥ १२० ॥
इदं संक्षेपतः प्रोक्तं मया तेऽनुग्रहाद्द्विज । वैशाखस्नानमाहात्म्यं श्रोतुः पापक्षयङ्करम्
यस्तु श्रोष्यति भक्त्यैनमितिहासं मयोदितम् ।
सोऽपि पापविनिर्मुक्तो न मामालोकयिष्यति ॥ १२२ ॥
ब्रह्महत्यादि पापानि बहुशोऽपि कृतान्यपि ।
वैशाखस्य विधानेन तानि नश्यन्ति निश्चितम् ॥ १२३ ॥
त्रिंशत्पूर्वान्परांस्त्रिंशत्त्रिंशच्चैव परावरान् । वैशाखे विधिना स्नातोनरकादुद्धरेत्पितॄन्
एकतः सर्वतीर्थानि सर्वयज्ञाः सदक्षिणाः । एकतो माधवो मासो नियमादनुपालितः
यतो भगवतस्तस्य हरेरुत्कृष्टकर्मणः । प्रियोऽसौ माधवो मासःसर्वेभ्यः प्रवरोऽधिकः
संशयं नोविधेहीति महीदेव ! कथञ्चन । वैशाखं प्रति वै मासं समासाद्य मयोदितम्
इहार्थे यत्पुरा वृत्तं तदाकर्णय चाद्भुतम् । अनाख्येयमपीदं ते कथयिष्ये कथानकम् ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्येऽष्टनवतितमोऽध्यायः

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# नवनवतितमोऽध्यायः

## महीरथराजवृत्तान्तवर्णनम् ।

यम उवाच ।

बभूव भूपतिः पूर्वंख्यातो नाम्ना महीरथः । पूर्वपुण्यफलावाप्तप्रभूतैश्वर्यसम्पदः ॥ १ ॥
केवलं कामकलनाललनाललितस्थितः । तदेकव्यसनासक्तिर्न धर्मार्थेऽस्य संस्थितः ॥२॥

मन्त्रिणि न्यस्तराज्यश्रीर्बुभुजे विषयान्नृपः ।
स कामिनीसहचरो राज्यकार्यपराङ्मुखः ॥ ३ ॥

न प्रजा न धनं धर्मं नाथकार्यं च पश्यति । केवलं कामिनीकेलिकलनोन्नितवासनः ॥
अथ कालेन महता पुरोधास्तस्य कश्यपः । वचःप्रोवाचतंधर्म्यमिति चेतस्यचिन्तयत्
न वारयति योमोहादधर्मान्नृपतिं गुरुः । सोऽपि तत्पापभुक्तस्माद्बोधनीयः पुरोधसा

बोधितोऽप्यवजानाति स चेद्वाक्यं पुरोधसः ।
पुरोधास्तत्र निर्दोषो राजा स्यात्सर्वदोषभाक् ॥ ७ ॥

शृणु राजन्मम गुरोर्वचो धर्मार्थसंहितम् । अभिन्नार्थमुपेतार्थमिच्छारागादिवर्जितम् ॥
अयमेव परो धर्मो यद्गुरोर्वचसिस्थितिः । गुर्वाज्ञायालवोराज्ञामायुःश्रीसौख्यवर्द्धनः
न विप्रास्तर्पिता दानैर्विष्णुर्नाराधितस्त्वया । न व्रतंन तपःकिञ्चिन्नतीर्थंहि कृतं त्वया
हरिनाम त्वया कामवशगेन न चिन्तितम् । हा त्वयाभीरुसङ्गत्या नविद्वत्सङ्गतिःकृता
स्मरचामरवाहिन्यो वल्लभाः कस्य न प्रियाः । किं तु ताः पवनोल्लोलकदलीदलचञ्चलाः
तरङ्गतरलैरर्थैर्भोगैर्भ्रूभङ्गभङ्गुरैः । मुहूर्तपेयैस्तारुण्यैर्न तृप्यन्ते महाशयाः ॥ १२ ॥
किं विद्यया च तपसा किंत्यागेन नयेनवा । किं विविक्तेनमनसा स्त्रीभिर्यस्य हृतंमनः
एक एव सुहृद्धर्मो निधनेष्वनुयाति यः । सर्वमन्यच्छरीरेण समं नाशं गमिष्यति ॥
धर्मं शनैः सञ्चिनुयाद्वल्मीकमिव पुत्तिकाः । धर्मेणहि सहायेन तमस्तरतिदुस्तरम् ॥
अनिलोल्लासितोत्तालजलकल्लोलचञ्चलम् । किं न जानासिराजेन्द्रनृणांजीवितविभ्रमम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विनयो रत्नमुकुटः सत्यधर्मौ च कुण्डले । त्यागश्च कङ्कणो येषां किं तेषां जडमण्डनैः
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं भुवि । विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति
गम्यमानेषु सर्वेषुक्षीयमाणे तथाऽऽयुषि । जीविते लुप्यमाने च किमुत्थाय न धावसि
कुटुम्बं पुत्रदारादिशरीरं द्रव्यसञ्चयः । पारक्यमध्रुवं किं तु स्वीये सुकृतदुष्कृते ॥२१॥
यदा सर्वं परित्यज्य गन्तव्यमवशेन ते । अनर्थे किं प्रसक्तस्त्वं स्वधर्मं नानुतिष्ठसि ॥
अविश्राममनालम्बमपाथेयमदेशिकम् । मृतः कान्तारमध्वानं कथमेको गमिष्यसि ॥

नहि त्वां प्रस्थितं कश्चित्पृष्ठतोऽनु गमिष्यति ।
सुकृतं दुष्कृतं च त्वां यास्यन्तमनुयास्यति ॥ २४ ॥

श्रुतिस्मृत्युदितं कर्म कुलदेशोचितं हितम् । धर्ममूलं निषेवस्व सदाचारमतन्द्रितः ॥
परित्यजेदर्थकामौ स्यातां चेद्धर्मवर्जितौ । धर्मेण प्राप्यते सर्वमर्थकामादिकं सुखम् ॥

इन्द्रियाणां जयं योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियो हि शक्नोति पथि स्थापयितुं प्रजाः ॥ २७ ॥

अतिप्रगल्भललनाकटाक्षचपलाश्रियः । विनये प्रणिधानेन चिरं तिष्ठन्ति भूभुजाम् ॥
कामदर्पादिशीलानामविचारितकारिणाम् । आयुषा सह नश्यन्ति सम्पदो मूढचेतसाम्
भूतिभिर्नप्रहृष्टाभिर्नृत्यन्ते न महाशयाः । नागताभिर्नयाताभिर्नदीभिश्चीयतेऽम्बुधिः ॥
व्यसनस्य च मृत्योश्च व्यसनंकष्टमुच्यते । व्यसन्यधोऽधोव्रजतिस्वर्गाम्यव्यसनीनृपः
व्यसनानि दुरन्तानि कामजानि विशेषतः । त्यजतस्मान्महाराज कामन्धर्मविरोधिनम्
जडानामविवेकानामसुराणांदुरात्मनाम् । भाग्यभोग्यानिराज्यानिसन्त्यनीतिमतामपि
नैवस्थिराणि तानीह दुरितैरनुसेवितैः । विलीयन्ते यथा वह्निसंसर्गेणेन्धनानि च ॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपिवा । न विचारपरं चेतो यस्यासौमृतएवसः
उपदेष्टा श्रुतवतां गुरुरित्युच्यते यतः । किं तु त्वासन्नविपदामुपदेशाः शिरोरुहाः ॥

विषयज्वरमुत्सृज्य समया स्वस्थया धिया ।
युक्त्या च व्यवहारिण्यो स्वार्थः प्राज्ञेन साध्यते ॥ ३७ ॥

अशुभाच्चलितं याति शुभंतस्मादपीतरम् । जन्तोश्चित्तंश्च शिशुवत्तस्मात्तच्चालयेद्बलात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपधार्यमतिराजन्वृद्धानां धर्मदर्शिनाम् । नियच्छेत्परया बुद्ध्या चित्तमुत्पथगामियत्
न धनान्युपकुर्वन्ति न मित्राणि न बान्धवाः । न हस्तपादचलनं न देशान्तरसङ्गतम्
न कायक्लेशवैधुर्यं न तीर्थायतनादयः । केवलं तन्मनस्कस्य जपेनासाद्यते पदम् ॥४१
विषये वर्तमानस्य तस्माच्चित्तस्यसंयमे । यत्नं कुर्याद्बुधोराजन्ध्रुवं यन्तेव वाजिनाम्
तत्तत्कुर्याद्यतोराजन्भवता येन वञ्चितः । मुनिभिश्च फलैस्तैस्तैस्ततोऽप्याकर्णयाधुना
मुह्यताऽपि मनुष्येण प्रष्टव्याःसुहृदोबुधाः। ते च पृष्टा यथा ब्रूयुस्तत्कर्त्तव्यंयथोचितम्
सर्वोपायेन कर्त्तव्यो निग्रहः कामकोपयोः। श्रेयोऽर्थिना यतस्तौहि श्रेयोघातार्थमुद्यतौ
कामोहि वलवान्राजञ्छरीरस्थो रिपुर्महान् । न तस्यवशगोभूयाज्जनःश्रेयोऽभिलाषुकः
यः कामो देवदेवेन पुरा तेनैव शूलिना । ललाटवह्निना दग्धः कृतोऽनङ्ग इति स्थितिः

यदा वाञ्छत्यसौ नारीं निहन्तुं स मनोभवः ।
पुंसां कायं समाश्रित्य स्वरूपं दर्शयत्यसौ ॥ ४८ ॥

चिन्त्यमानस्य वै पुंसो नार्यारूपं पुनः पुनः । तमदृष्टं समाश्रित्य नरमुन्मादयत्यसौ ॥
तथैवोन्मादयत्येष योषिदङ्गं न संशयः । स्मरः संस्मरणान्नामजातं तस्य ततो नृप ! ॥
यादृस्तादृशो रङ्गो वस्त्रं वीरसमाश्रयेत् । आत्मतेजःप्रकाशात्सोऽश्रुधारापेयतां व्रजेत्
नार्यारूपं समारुह्य धीरं तमपि मोहयेत् । पुरुषं तु समाश्रित्य द्रावयत्येषयोषितम् ॥
स एष सहजो राजन्नशरीरीशरीरगः । शरीरकस्यापि विभो कथं पापंविधीयते ॥५३॥

यं प्राप्यातिपवित्राणि पञ्चगव्यहवींषि च ।
अशुचित्वं क्षणं यान्ति कोऽन्यः स्यादशुचिस्ततः ॥ ५४ ॥
जिघ्रन्नपि स्वदुर्गन्धं पश्यन्नपि मलं स्वकम् ।
न विरज्यति लोकोऽयं पीडयन्नपि नासिकाम् ॥ ५५ ॥
हृद्यान्नमन्नपानानि यं प्राप्य सुरभीणि च ।
अशुचित्वं प्रयान्त्याशु कोऽन्यः स्यादशुचिस्ततः ॥ ५६ ॥

यस्योदरगतं चान्नं स्वं हिरूपं परित्यजेत् । कृमिमिश्रममेध्यत्वं शीघ्रं प्रज्ञायते किल ॥
तथापि देहे भूपाल ! निजरूपं परित्यजेत् । शुनतां यातिवै पश्चात्कृमिदुर्गन्धिसङ्कुले ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जायन्ते तत्र वै यूकाः कृमयो वा न संशयः । स कृमिःकुरुते स्फोटंकण्डूश्चपरिदारुणः
व्यथामुत्पादयेद्भूयः सर्वाङ्गं परिचालयेत् । नखाग्रैर्घृष्यमाणासाकण्डूःशान्ताप्रजायते
तद्वत्सुखं भवत्येव सुरतस्य न संशयः । भुञ्जत्येवं रसान्मर्त्यः सुभक्षान्पिबते पुनः ॥
तत्रस्थं पचते वह्निरपाने पातयेन्मलम् । सारभूतो रसस्तत्र उद्रिक्तस्तु प्रजायते ॥
निर्मलः शुद्धवीर्यस्तु ब्रह्मस्थानं प्रयाति च । आकृष्टः स समानेन नीतस्तेनापि वायुना
स्थानं न लभते वीर्यं चञ्चलत्वेन वर्तते । प्राणिनां हि कपालेषु कृमयः सन्ति पञ्चवै
द्वावेतौ कर्णमूले तु नेत्रस्थाने ततः पुनः । कनिष्ठाङ्गुलिमानेन रक्तपुच्छाश्च भूपते ! ॥
नवनीतस्य वर्णेन कृष्णपुच्छा न संशयः । तेषांनामानि भद्रं ते मत्तो निगदतः शृणु ॥

पिङ्गली शृङ्गली नाम द्वौ कृमी कर्णमूलयोः ।
शृङ्गली जङ्गली चान्यौ नेत्रयोरन्तरस्थितौ ॥ ६७ ॥
कृमीणां शतपञ्चाशत्तांद्धभूता न संशयः ।
ललाटान्तः स्थिताः सर्वे राजिकायाः प्रमाणतः ॥ ६८ ॥

कपालरोगिणः सर्वे विकुर्वन्ति न संशयः । अन्यमेवं प्रवक्ष्यामि प्राजापत्यो महाकृमिः
स तण्डुलप्रमाणेन तद्वद्वर्णेन संशयः । केशद्वयं मुखे तस्य विद्यते शृणु भूपते ! ॥७०॥

प्राणिनां संक्षया वुद्धिस्तत्क्षणाद्धि न संशयः ।
स्वस्थाने संस्थितस्यापि प्राजापत्यस्य वै मुखे ॥ ७१ ॥

तद्वीर्यं रसरूपेण पतते नात्र संशयः । सुखेन पिबते वीर्यं तेन मत्तः प्रजायते ॥ ७२ ॥
तालुस्थानं प्रभेद्यैव चञ्चलत्वेन वर्त्तते । इडा च पिङ्गलानाडीसुषुम्ना तत्र संस्थिताः ॥

स्वबलेनापि तस्यैव कम्पिता नाडिका क्षणम् ।
कामकण्डूर्भवेद्राजन्सर्वेषां प्राणिनां किल ॥ ७४ ॥

नरस्य स्फुटते लिङ्गं नार्या योनिश्च भूपते । स्त्रीनरौ च प्रमत्तौतौ गच्छतः सङ्गमं ततः
कायेन कायं सङ्घृष्य मैथुनेनहि जायते । क्षणमात्रं सुखं तत्र पुनः कण्डूश्च तादृशी ॥
सर्वत्रदृश्यते वीर भाव एवं विधः किल । विरसः परिपाकोऽयं विषमस्य न संशयः
धर्म एव पुनः श्रेयान्विधिना समनुष्ठितः । धैर्यमालम्ब्य च ततो धर्ममेव समाचर ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्वास एष चपलः क्षणमध्ये यो गतागतशतानि विधत्ते ।
जीवितं तनुभृतां तदधीनं कः समाचरति धर्मविलम्बम् ॥ ७६ ॥
दशमीमपि यातस्य चेतो नाद्यापि भूपते । विषयेभ्यो निषिद्धेभ्यो ह्यहानविरमेचलम्
न जातुकामःकामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥
पुंश्चल्यापहृतं चित्तं कश्चान्यो मोचितुं क्षमः । आत्मारामेश्वरमृते भगवन्तं च माधवम्
तस्मात्सर्वं निष्फलत्वं प्रयातं कामकश्मलात् ।
वयस्तेऽप्यधुना भूप ! समाचर हितं निजम् ॥ ८३ ॥
वदाम्यहं तव नृप ! हितं सर्वोत्तमोत्तमम् । पुरोहितो यतस्तेऽहं सद्सत्कर्मभागपि ॥
एकतः सर्वपुण्यानि पापनाशाय पापिनाम् । एकतोमाधवो मासोमाधवस्य प्रियःसदा
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्येव कीर्तितानि मुनीश्वरैः ॥
तत्रं यन्मनसा काये व्रतेनापि कृतं नरैः ।
नाशयेन्माधवो मासः सर्वं पापतमो महन् ॥ ८७ ॥
दिवाकर इव ध्वान्तं नाशयेन्नृप सर्वशः । तथा श्रीमाधवो मासस्तमाचर विधानतः
आजन्मनोऽपि विहितानि महान्ति राजन्घोराणि तानि दुरितानि विहाय मर्त्याः
वैशाखमासविहिताचरणप्रभावपुण्येन ते हरिपुरं मुदिता लभन्ते ॥ ८६ ॥
यद्येकमपि वैशाखमाचरन्ति विधानतः । भावतः पापिनोऽप्यन्ते प्रयान्ति हरिमन्दिरम्
तस्यात्त्वमपि राजेन्द्र ! मासेऽस्मिन्माधवेऽधुना ।
प्रातः स्नात्वा विधानेन समर्चय मधुद्विषम् ॥ ९१ ॥
तण्डुलस्य यथा चर्म यथा ताम्रस्य कालिमा । नश्यन्ति क्रियया वीर पुरुषस्यतथामलः
जीवस्य तण्डुलस्येव सहजोऽपि मलो महान् । नश्यत्येव न सन्देहस्तस्मात्कर्मोदितंकुरु
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्ये नवनवतितमोऽध्यायः ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# शततमोऽध्यायः

## कश्यपेन महीधरस्य वैशाखे स्नापनम् ।

श्रीराजोवाच ।

क्षीरोदजलतुल्याभिःशीतलामलदृष्टिभिः।तथ्याभिश्चविचित्राभिस्त्वयागीर्भिःप्रबोधितः
असागरोत्थं पीयूषमद्रव्यं व्यसनौषधम् । त्वयाऽहं पायितः सौम्य भवरोगनिवारणम्
हर्षप्रदो नृणां पापहानिकृज्जीवनौषधम् । जरामृत्युहरो विप्र सद्भिः किल समागमः ॥
यानियानिदुरापानिवाञ्छितानिमहीतले । प्राप्यन्ते तानि तान्येव साधूनामेव सङ्गमात्
यःस्नातःपापहरयासाधुसङ्गमगङ्गया । किं तस्य दानैः किंतीर्थैः किंतपोभिः किमध्वरैः

निमज्ज्योन्मज्जतां नृणां भवाब्धौ परमायनम् ।
सन्तो धर्मविदः शान्ता नौ दृढेवाप्सु मज्जताम् ॥ ६ ॥

यो मे भावः पुरा ह्यासीत्कामैकसुखलालसः । दर्शनाद्वचनात्तेऽद्य विपरीतोऽभवद्विभो

एक जन्मसुखस्यार्थे सहस्राणि विलोपयेत् ।
प्राज्ञो जन्मसहस्राणि सञ्चिनोत्येकजन्मना ॥ ८ ॥

हाहाकामरसास्वादसुखलालसचेतसा । मया मूढेन न कृतंकिञ्चिदात्महितं द्विज ॥ ९ ॥
अहो मे मनसो मोहो येनात्मा योषितां कृते । पातितो व्यसने घोरे दुःखोदर्के दुरत्यये
भगवन्परितुष्टोऽस्मि बोधितो वचनेन ते । उपदेशप्रदानेन मामुद्धर्तुमिहार्हसि ॥ ११ ॥

पुराऽऽचरितपुण्योऽहं भवता बोधितोऽस्मि यत् ।
त्वत्पादरजसा वाऽपि विशेषादपि पावितः ॥ १२ ॥

विधिं माधवमासस्य ब्रूहि मे वदतांवर ! । सर्वपापक्षयकरो यस्त्वया परिकीर्तितः ॥
किं दानं तत्र किंस्नानं को देवो नियमास्तु के । एतदाचक्ष्व विप्रर्षे दुरितोत्तारणायमे

यम उवाच ।

इत्येवमुक्तो भगवान्कश्यपः स दयानिधिः । प्रोवाच वचनं विप्र धर्म्यं विश्वहितंशुभम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कश्यप उवाच ।

पूर्वापरसमाधानक्षमबुद्ध्या च ते नृप ! । पृष्टं प्राज्ञेन वक्तव्यं नाधमे पापमानसे ॥१६
पापप्रवृत्तस्य तथा दत्त्वा भूप शुभां मतिम् । विद्यादानफलं सम्यक्प्राप्यते नात्र संशयः

नापृष्टः कस्यचिद् ब्रूयान्न चान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥ १८ ॥
विदुषामपि शिष्याणां पुत्राणां च क्रियावताम् ।
अपृष्टमपि वक्तव्यं श्रेयः श्रद्धावतां हितम् ॥ १९ ॥

साम्प्रतं शुद्धहृदयो जातस्त्वं वचनान्मम । पुरा चरितपुण्येन केनापि च महीपते! ॥२०
पापावस्थं शरीरं तद्गतं तव ममाश्रयात् । श्रवणाद्धर्मशास्त्रस्य धर्मावस्थं तु तेऽभवत्
पापावस्थमधर्माख्यं धर्मज्ञानविवर्जितम् । अपरं सद्व्रतं यद्धि विज्ञेयं तद्धि धार्मिकम्
धर्माधर्मोपभोगाय तत्तृतीयमतीन्द्रियम् । तत्त्रिभेदं शरीरं हि धर्मविद्भिरिहोच्यते ॥
यावता धर्मभोगश्च मुक्तिश्चैतत्त्रिभेदकम् । पापावस्थं शरीरं तत्पापसंज्ञं तदुच्यते ॥
इदानीं गुरुभक्तिं च कुर्वतश्च वचो मम । शृण्वतो धर्मरूपं तु शरीरं ते व्यवस्थितम् ॥
तेनैव शुद्धिरमला जाता धर्मक्रियोचिता । दैवेन देहिनां नाम चेतांसि चरितानि च ॥
शरीराणि च पुष्यन्ति काले काले विपर्ययम् । साम्प्रतं भवतश्चेतो नूनं धर्मे प्रवर्तते ॥

तेन त्वां कारयिष्यामि माधवस्नानमुत्तमम् ॥ २८ ॥

यम उवाच ।

ततस्तु कारितस्तेन कश्यपेन पुरोधसा । स नृपो माधवे मासि स्नानं दानं च पूजनम्

यथा दृष्टं पुरा शास्त्रे वैशाखस्नानजं विधिम् ।
स मुनिः प्रत्युवाचासौ भूपाय च यथोदितम् ॥ ३० ॥
श्रावितः स्तोत्रसारं च पाठितो हरिमेधसः ।
श्रुते यस्मिन्नधीते च स सम्यक्फलमाप्नुयात् ॥ ३१ ॥
स कारितस्तेन विशुद्धभावो राजाऽपि चक्रे विधिवत्तदानीम् ।
श्रीमाधवे मासि विधानमीड्यं ततो यथाऽऽकर्णितमादरेण ॥३२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रातः स्नानं च पाद्यं च ह्यर्घं च हरिपूजनम् । नैवेद्यं भक्तिभावेन चकार स नृपोत्तमः
दानं यथा नियमपालनमादरेण वैशाखमासि विदधाति विधानमेवम् ।
यो भक्तितोऽन्वहमसौ प्रतिवर्षमेवं कृत्वा प्रयाति हरिधाम महीसुराग्र्यः ॥३४
अथेतरेषु मासेषु कामिनीकुचकेलिवान् । भोगैकलालसो भूयो भवत्येवं यथारुचि ॥
न धर्मनियमं राजकार्येषुन विचारणम् । करोति कामवशगो हित्वा मासं समाधवम्
महतामपि विप्राग्र्य ! दुर्निवार्यो मनोभवः । शरीरसहजो नूनमनादिर्वासनाक्रमः ॥
केशकज्जलशालिन्यो दुःस्पर्शालोचनप्रियाः । यस्मादग्निशिखा नार्यो दहन्ति तृणवन्नरम्
घोरः शत्रुः शरीरस्थःपुंसांकामो यथोचितम् । मोहधूममयःपापो न केषामान्ध्यकारकः
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमासमाहात्म्ये शततमोऽध्यायः ॥

———

## एकाधिकशततमोऽध्यायः

### महीधरदेवदूतसंवादे यमलोकस्थानेकपापिपापविपाकनिरूपणम् ।

यम उवाच ।

अथ कालकटाक्षेण लक्षितो नृपतिस्तदा । मृतोऽतिरतिसेवोत्थक्षयक्षीणकलेवरः ॥१
नीयमाणो यमगणैस्ताड्यमानो मुहुर्मुहुः । क्रन्दमानो महारावान्स्मरन्निजपातकम्
विष्णुदूतैः समागम्य ताडयित्वा ममानुगान् । धर्मवानयमित्युक्त्वा विमानमथरोपितः
नीतो हरिपुरं भूपः स्तूयमानोऽप्सरोगणैः । प्रातः स्नानेन वैशाखमासस्य क्षीणपातकः
अथ धर्मविहीनोऽयमिति मत्वा च तै पुनः । देवदूतैर्निदेशेन विष्णोर्भूमिपतिस्तदा ॥
अदूरादेव निरयवर्त्मना स समाहितः । स गच्छन्नपि शुश्राव जीवानां क्रन्दतां पुनः ॥
निरये पच्यमानानामारावं विविधं तदा । पापिनां कथ्यमानानामाक्रन्दमति दारुणम्
श्रुत्वा विस्मयवान्विप्र ! राजाऽभूदतिदुःखितः ।
प्रोवाच दूताः किमयमाक्रन्दो दारुणः श्रुतः । पुनर्न श्रूयते तन्मे कारणं वक्तुमर्हथ ॥८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दूता ऊचुः ।

जन्तवस्त्यक्तमर्यादाः पापास्त्वाचारवर्जिताः। निरयेषु च घोरेषु तामिस्रादिषु पातिताः
कृतपातकिनस्त्वत्र प्राणत्यागादनन्तरम् । यास्यंपन्थानमाश्रित्य दुःखमश्नन्ति दारुणम्
यमस्य पुरुषैर्घोरैः कृष्यमाणा इतस्ततः । अन्धकारे निपतिता भक्ष्यन्ते ह्यतिदारुणैः ॥
श्वभिः शृगालैः क्रव्यादैःकाककङ्कवकादिभिः । अग्नितुण्डैर्वृकव्याघ्रैर्भुजगैर्वृश्चिकादिभिः
अग्निना दह्यमानाश्च तुद्यमानाश्च कण्टकैः । क्रकचैः पाट्यमानाश्च पीड्यमानाश्चतृष्णया
क्षुधया बाध्यमानाश्च घोरैर्व्याधिगणैस्तथा । पूयशोणितगन्धेन मूर्छ्यमानाः पदे पदे

कथ्यन्ते च क्वचित्तैले ताड्यन्ते मुशलैः क्वचित् ।
आयसीषु प्रपच्यन्ते शिलासु क्वचिदेव च ॥ १५ ॥
क्वचिद्वान्तमथाश्नन्ति क्वचित्पूयमसृक् क्वचित् ।
क्वचिद्विष्ठां क्वचिन्मांसं पूतिगन्धिषु दारुणम् ॥ १६ ॥

कृमिभिर्भक्ष्यमाणाश्चवह्नितुण्डैःक्वचित्क्वचित् । केशशोणितमांसासृग्वसास्थिनिकरेषुच

आस्थिताः कुणपाः कीर्णाः कृमिभिर्भक्षिताः स्फुटम् ।
काककङ्कमहागृध्रवदनैर्ध्वंसितेषु च ॥ १८ ॥

शिवदुर्गन्धनीरन्ध्रसङ्कटशतकोटिषु । करपात्रशिलापत्रतप्तनिस्तैलकेषु च ॥ १९ ॥
लोहतैलवसास्तम्भकूटशाल्मलसद्मसु । क्षुरकण्टककीलोग्रज्वालास्तम्भविभातिषु ॥२०
तप्तं वैतरणीपूयपूरितेषु पृथक्पृथक् । असिपत्रवनोत्कृत्तनरनारीस्तनेषु च ॥ २१ ॥
घोरान्धकारग्रहणदारुणेषु मुहुर्मुहुः । पापच्यमानाः क्रन्दन्तो दारुणैर्विविधैः स्वरैः ॥

कण्ठेषु बद्धपाशाश्च भुजगावेष्टिताः क्वचित् ।
पीड्यमानास्तथा यन्त्रैः कृष्यमाणाश्च जानुभिः ॥ २३ ॥

भग्नपृष्ठशिरोग्रीवाः स्तब्धकण्ठाः सुदारुणाः । कूटागारे भ्राम्यमाणाः शरीरैर्यातनाक्षमैः

पीड्यन्ते पापिनो राजन्क्रन्दमाना विकर्मिणः ।
सहितं विषयास्वादैः क्रन्दनं तैर्विधीयते ॥ २५ ॥

भुज्यते च कृतं पूर्वमेतत्सर्वैश्च जन्तुभिः । परस्त्रीषु कृतः सङ्गः प्रीतये दुःखदो हि सः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुहूर्तविषयास्वादो जातोऽनेकाब्ददुःखदः । वपुषस्तव राजेन्द्र प्रातः स्नानस्य माधवे

विधिना पावनस्यैते मरुतः स्पर्शमाप्यतु ।
लब्धसौख्याः क्षणं जाता महसाप्यायितास्तव ॥ २८ ॥
आक्रन्दरहितास्तेन जातास्ते निरये स्थिताः ।
नामापि पुण्यशीलानां श्रुतं सौख्याय कीर्तितम् ॥ २९ ॥
जायते तद्वपुस्पर्शवायुस्पर्शः सुखावहः ॥ ३० ॥

यम उवाच ।

इति दूतवचः श्रुत्वा स राजा करुणानिधिः । प्रत्युवाच ह तान्दूतान्विष्णोरद्भुतकर्मणः
कोमलं हृदयं नूनं साधूनां नवनीतवत् । वह्निसन्तापसन्तप्तं तद्यथा द्रवतिस्फुटम् ॥

राजोवाच ।

नार्तं जन्तुमहं हित्वा पीडितुं गन्तुमुत्सहे । तं पापिष्ठं धिगार्तानामार्तिशक्तो न हन्तियः
मदङ्गसङ्गमोच्छिष्टवायुस्पर्शेन ते यदि । जन्तवः सुखिनोजातास्तस्मात्तत्र नयन्तु माम्
पवित्रयन्ति जननीमवनीमपि ते नराः । परतापच्छिदो ये तु चन्दना इव चन्दनम् ॥
परोपकृतये ये तु पीड्यन्ते कृतिनो हि ते । सन्तस्त एव ये लोके परदुःखविदारणाः ॥
आर्तानामार्तिनाशार्थं प्राणा येषां तृणोपमाः । तैरियं धार्यते भूमिर्नरैः परहितोद्यतैः ॥
मनसो यत्सुखं नित्यं तत्स्वर्गो नरकोपमः । तस्मात्परसुखेनैव सुखिनः साधवः सदा
वरं निरयपातोऽत्र वरं प्राणवियोजनम् । न पुनः क्षणमार्तानामार्तिनाशमृते सुखम् ॥

दूता ऊचुः ।

जन्तवो निरये घोरे पच्यन्ते तेऽत्र पापिनः । स्वकर्मैवोपजीवन्ति मोहस्थानं न विद्यते
यैर्न दत्तं न च हुतं तीर्थे स्नानं न वा कृतम् । पुनर्नोपकृतं भक्त्या सुकृतं न कृतं परम्
नेष्टं न तप्तं नो जप्तं यैर्न हृष्टतया नृप ! । परस्मिन्निह घोरेषु पच्यन्ते निरयेषु ते ॥
दुःशीला ये दुराचारा विहाराहारनिन्दिताः । परापकारिणः पापकारिणो दुर्विहारिणः

विदारिणो हि मर्मोक्त्या पापाः परहृदां हि ये ।
निरये ते विपच्यन्ते ये परस्त्रीविहारिणः ॥ ४४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एहि नूनं महीपाल गच्छामो हरिमन्दिरम् । न ते पुण्यवतोयुक्तमिह स्थातुमतःपरम् ॥

राजोवाच ।

यद्यहं सुकृती दूताः कस्मादस्मिन्महाभये । नारके पथि वा नीतः किं वा मे सुकृतंपरम्
मयाऽपि न कृतं तादृक्सुकृतं कामशालिना । कथं पुरिहरेर्गन्ता संशयानोऽहमस्मि वै

दूता ऊचुः ।

सुकृतं न कृतं सत्यं त्वयाकामवशात्मना । नेष्टं यज्ञैर्नवा यज्ञावशिष्टं भवताऽशितम् ॥
किंतु माधवमासे यद्विधिना वत्सरत्रयम् । प्रातः स्नात्वा गुरुवचः प्रेरितेन पुरात्वया
भक्त्या सम्पूजितोविष्णुर्विश्वेशो मधुसूदनः । महापापातिपापौघनिहन्ता भक्तवत्सलः
सर्वधर्मैकसारेण तेनैकेन नरेश्वर ! । नीयते पुण्यभवनं पूज्यमानो मरुद्गणैः ॥५१॥

महतामपि पापानां निहन्ता माधवोऽर्चितः ।
तथैव माधवो मासो मर्त्यानां विधिनोदितः ॥ ५२ ॥

यथैव विस्फुलिङ्गेन ज्वाल्यते तृणसञ्चयः । प्रातः स्नानेन वैशाखे तथाऽघौघोऽपिदह्यते
तावद्वपुषि पापानि प्रभवन्ति महान्त्यपि । यावन्न माधवेमासि तीर्थे मज्जतिचोषसि ॥
वैशाखेमासि यो युक्तो यथोक्तनियमैर्नरः । हरिभक्त्यैव पापौघैर्मुक्तोऽच्युतगृहंव्रजेत्
आजन्मनो हि सुकृतं यत्त्वया न पुराकृतम् । तेनत्वं निरयस्थानमार्गं नीतो नरेश्वर! ॥
अथ भूमिपते तूर्णमस्माभिस्तु मरुद्गणैः । स्तूयमानो विमानेन गच्छगोविन्दमन्दिरम्
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्ये एकोत्तरशततमोऽध्यायः

## द्व्युत्तरशततमोऽध्यायः

### महीधरप्रदत्तवैशाखमासीयैकदिनपुण्येन नारकिसमुद्धारवर्णनम् ।

यम उवाच ।

ततस्तु करुणावार्धिस्तेषां शोकेन पीडितः । भूपतिः श्रीहरेर्दूतान्विनयेनाह वाडव ! ॥
ऐश्वर्यस्याभिजात्यस्य गुणानां सुकृतस्य च । सन्तः फलं हि गण्यन्ते यद्भीतपरिरक्षणम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्यस्ति सुकृतं किञ्चिन्मम तेनैव जन्तवः ।
स्वर्गं गच्छन्तु मुक्तौघाः स्थाने तेषां वसाम्यहम् ॥ ३ ॥

एवं भूपवचः श्रुत्वा तस्य सत्यवतो हि ते । ध्यायन्तः सत्यमौदार्यमब्रुवंस्ते वचोनृपम्

दूता ऊचुः ।

अनेन तव कारुण्यकर्मणा वचसा नृप ! । बभूव वृद्धिर्धर्मस्य सञ्चितस्य विशेषतः ॥५॥
स्नानं दानं जपो होमस्तपो देवार्चनादिकम् । कृतं यन्माधवे मासि तदनन्तफलं विदुः
स्वर्गे यज्वा च दाता च क्रीडते त्रिदशैःसह । वापीषु हेमपद्मासु कल्पवृक्षतलेऽपि च ॥
गीयमानो मुदंयाति गीर्वाणरमणीगणैः । जलान्नदानतो लोकं लभते वारुणं शुभम् ॥
कुलानि हेलया सप्त सन्तारयति गोप्रदः । हयं दत्त्वा रवेर्लोकं याति विद्याप्रदो नरः ॥

ब्रह्मलोकं तथा हेमदानाद्याति सुरालये ।
यो ददाति तथा कान्यां विष्णुलोकं स गच्छति ॥ १० ॥
माधवे मासि यः स्नात्वा दत्त्वा सम्पूज्य माधवम् ।
अवाप्य सकलान्कामान्प्रयाति पदमव्ययम् ॥ ११ ॥
एकतोऽपि तपोदानक्रतुसुत्यादिकाःक्रियाः ।
एकतो विधिवन्मासो माधवश्चरितो महान् ॥ १२ ॥

तस्य माधवमासस्य दिनैकस्यापि भूपते ! । कृतं यत्सुकृतं तत्ते सर्वदानादिकं पुरा ॥१३
कारुण्येन दिनैकस्य पुण्यंदेहि धरापते ! । निरये पच्यमानेभ्यो दुःखितेभ्यो दयानिधे ! ॥
न दयासदृशो धर्मो न दयासदृशं तपः । न दयासदृशं दानं न दयासदृशः सखा ॥१६॥
पुण्यदःपुण्यमाप्नोति नरो लक्षगुणं सदा । कारुण्येन विशेषात्ते धर्मवृद्धिस्ततो भवेत्
दुःखितानां हि भूतानां दुःखोद्धर्त्ता नरोहियः । स एवसुकृतीलोके ज्ञेयोनारायणांशजः
वैशाखेमासि पूर्णायां स्नानदानादिकं त्वया । यत्तीर्थे विहितं वीर सर्वाघविनिषूदनम्

तदेभ्यो देहि विधिवत्कृत्वा साक्ष्ये हरिं प्रभुम् ।
त्रिवाचिकं च निरयाद्येनामी स्वर्गमाप्नुयुः ॥ १९ ॥

कपोतार्थं स्वमांसानिकारुण्येनपुराशिबिः । दत्त्वादयानिधिःस्वर्गेराजतेकीर्तिवारिधिः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दधीचिरपि राजर्षिर्दत्त्वाऽस्थिचयमात्मनः ।
त्रैलोक्यकौमुदीं कीर्तिं लब्धवान्स्वर्गमक्षयम् ॥ २१ ॥

सहस्रजिच्च राजर्षिः प्राणानिष्टान्महायशाः । ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान्
न स्वर्गे नापवर्गेऽपि तत्सुखं लभते नरः । यदार्तजन्तुनिर्वाणदानोत्थमिति नो मतिः
सर्वेषु दातृजातेषु पुराजातोऽसि भूपते ! । कर्मणाऽनेन सङ्ख्यासु धुरि धैर्यं नियोज्य च
दृष्ट्वा तवधियं धर्मे दयादानंसुनिश्चलम् । अस्माभिरपि तूत्साहः क्रियते धर्मवादिभिः
यदि ते रोचते राजन्नविलम्बतया ततः । तदेभ्यो देहि तत्पुण्यं यातनादुःखदाहकम् ॥

इत्युक्तः स तदा देवं कृत्वा साक्ष्ये गदाधरम् ।
तेभ्यस्त्रिवाचिकं पुण्यं दयावान्विधिना ददौ ॥ २७ ॥

दत्ते माधवमासस्य तस्मिन्नेकदिनोद्भवे । सुकृते जन्तवो याम्ययातनापरिवर्जिताः ॥
विमानवरमारूढाः सर्वे ते त्रिदिवं ययुः । प्रणमन्तः स्तुवन्तश्च पश्यन्तस्तं प्रहर्षिताः ॥

नृपेण दत्तं तदवाप्य पुण्यं वैशाखमासैकदिनाभिजातम् ।
सर्वे ययुस्ते नरकाद्विमुक्ता दिवं विमानाधिगता हि चित्रम् ॥ ३० ॥
नूनं विचित्रो भुवि भूतवर्गः सम्भूतभावो बहुधा विचित्रः ।
तथा विचित्रोऽखिलकर्मयोगस्तत्कर्मशक्तिप्रचयो विचित्रः ॥ ३१ ॥
संस्तूयमानो मुनिदेवसङ्घैर्यस्तद्विशेषाधिकलब्धपुण्यः ।
परं पदं योगिवरैरलभ्यं ययौ जगन्नाथगणाभिवन्द्यः ॥ ३२ ॥

इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे वैशाखमासमाहात्म्ये द्व्युत्तरशततमोऽध्यायः

————

## त्र्यधिकशततमोऽध्यायः

विष्णुमूर्तिध्यानवर्णनपुरःसरं वैशाखमासमाहात्म्यसमाप्तिवर्णनम् ।

यम उवाच ।

एतन्माधवमासस्यसमासात्किञ्चिदीरितम् । माहात्म्यंपूर्णिमायाश्चविशेषाद्द्विजसत्तम !

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैशाखमासे मधुसूदनस्य प्रियं य एनं पठतीतिहासम् ।
स याति कृष्णालयमाशु पूतः कल्पाननेकानिह मोदते च ॥ २ ॥
धन्यं यशस्यमायुष्यमिदं स्वस्त्ययनं महत् ।
स्वर्ग्यं श्रीदं सौमनस्यं प्रशस्यमघमर्षणम् ॥ ३ ॥

इदं माधवमासस्य माहात्म्यं माधवप्रियम् । चरित्रं भूपतेस्तस्य संवादं चावयोरपि ॥
श्रुत्वा पठित्वा विधिवदनुमोद्य मनःप्रियम् । भवेद्भक्तिर्भगवति यया स्यात्पापसंक्षयः
अथ गच्छ महीदेव ! देव लोकाद्यथेच्छया । निपात्य भुवि वैदेहं रुदन्त्याद्यापि बान्धवाः

विलप्यमानैरपि बन्धुभिस्तैर्न यावदग्नौ तव तच्छरीरम् ।
प्रक्षिप्यते हन्त जवैर्न तावद्याहि स्वयं सुप्त इव प्रबुद्धः ॥ ७ ॥
मम प्रसादादिह पुण्ययोगः श्रुतो यथावत्तमिमं विधेहि ।
विधानतो वै समये ममन्ते समागमोऽन्ते भविता सुरैश्च ॥ ८ ॥

सूत उवाच ।

इति देववचः श्रुत्वा नत्वा धर्माधिपं ततः । पुनः पपात स इह परितुष्टमना द्विजः ॥
धर्मराजप्रसादेन ततस्तत्र महीतले । संसुप्त इव चोत्तस्थौ बन्धुवर्गसमन्वितः ॥१०॥
विधिमेनं द्विजो भूमौ वर्षेवर्षे च स स्वयम् । चकार कारयामास माधवस्नापनंजनम्
यमब्राह्मणसंवादो मयाऽयं परिकीर्तितः । तस्य माधवमासस्य पुण्यस्नानप्रसङ्गतः ॥

वैशाखमासे सततं हरिप्रिये स्नानं विदध्याच्च ददाति भक्त्या ।
दानञ्च होमं सुकृतं तथा बुधो हरेः पदं तस्य न दुर्ल्लभं कदा ॥ १३ ॥

यः शृणोत्येकचित्तेन माहात्म्यं मेषसूर्यजम् । सर्वपापविनिर्मुक्तो याति विष्णोःपरंपदम्

ऋषय ऊचुः ।

सूतसूत महाप्राज्ञ ! त्वयाऽतिकरुणात्मना । वैशाखमासमाहात्म्यं कीर्तितंपापनाशनम्
नियमा मधुहन्तुर्ये माधवे कथितास्त्वया । पूजनं स्नानदानाद्यं श्रौतस्मार्तविधानतः
यथा च माधवो देवः प्रीयते पापनाशनः । अधुना श्रोतुमिच्छामो ध्यानंतस्यमहात्मनः
कृष्णस्य भक्तवृन्दानां प्रियस्य भवतारणम् ॥ १८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूत उवाच ।

शृणुध्वं मुनयः सर्वे कृष्णस्य जगदात्मनः । गोगोपगोपीप्राणस्य वृन्दावनचरस्य च ॥
एकदा नारदः पृष्टो गौतमेन द्विजोत्तमाः । स तस्मै प्राहयद्ध्यानं तद्वक्ष्ये पापनाशनम् ॥

नारद उवाच ।

सुमप्रकरसौरभोद्गलितमाध्विकाद्युल्लसत्सुशाखिनवपल्लवप्रकरनम्रशोभायुतम् ।
प्रफुल्लनवमञ्जरीललितवल्लरीवेष्टितं स्मरेत सततं शिवं शितमतिः सुवृन्दावनम् ॥
विकासिसुमनोरसास्वदनमञ्जुलैः सञ्चरच्छिलीमुखमुखोद्गतैर्मुखरितान्तरंझङ्कृतैः ।
कपोतशुकसारिकापरभृतादिभिः पत्रिभिर्विराणितमितस्ततो भुजगशत्रुनृत्याकुलम् ॥
कलिन्ददुहितुश्चलल्लहरिविप्लुषां वाहिभिर्विनिद्रसरसीरुहोदररजश्चयोद्धूसरैः ।
प्रदीपितमनो भवव्रजविलासिनीवाससां विलोलनपरैर्निषेवितमनारतं मारुतैः ॥
प्रवालनवपल्लवं मरकतच्छदं मौक्तिकप्रभाप्रकरकोरकं कमलरागनानाफलम् ।
स्थविष्ठमखिलर्तुभिः सततसेवितं कामदं तदन्तरपि कल्पकाङ्घ्रिपमुदञ्चितं चिन्तयेत् ॥
सुहेमशिखराचले उदितभानुवद्भासुरामधोऽस्य कनकस्थलीममृतशीकरासारिणः ।
प्रदीप्तमणिकुट्टिमां कुसुमरेणुपुञ्जोज्ज्वलां स्मरेत्पुनरतन्द्रितो विगतषट्तरङ्गाम्बुधः ॥
तद्रत्नकुट्टिमनिविष्टमहिष्ठयोगपीठेऽष्टपत्रमरुणं कमलं विचिन्त्य ।
उद्यद्विरोचनसरोचिरमुष्यमध्ये सञ्चिन्तयेत्सुखनिविष्टमथो मुकुन्दम् ॥ २६ ॥
सुत्रामहेतिदलिताञ्जनमेघपुञ्जप्रत्यग्रनीलजलजन्मसमानभासम् ।
सुस्निग्धनीलघनकुञ्चितकेशजालं राजन्मनोज्ञशितिकण्ठशिखण्डचूडम् ॥
रोलम्बलालितसुरद्रुमसूनसम्प्रयुक्तं समुत्कचनवोत्पलकर्णपूरम् ।
लोलालिभिः स्फुरितभालतलप्रदीप्तगोरोचनातिलकमुज्ज्वलचिल्लिचापम् ॥
आपूर्णशारदगताङ्कशशाङ्कबिम्बकान्ताननं कमलपत्रविशालनेत्रम् ।
रत्नस्फुरन्मकरकुण्डलरश्मिदीप्तगण्डस्थलीमुकुरमुन्नतचारुनासम् ॥ २९ ॥
सिन्दूरसुन्दरतराधरमिन्दुकुन्दमन्दारमन्दहसितद्युतिदीपिताशम् ।
वन्यप्रवालकुसुमप्रचयावक्लृप्तग्रैवेयकोज्ज्वलमनोहरकम्बुकण्ठम् ॥ ३० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मत्तभ्रमद्भ्रमरघुष्टविलम्बमानसन्तानकप्रसरदामपरिष्कृतांसम् ।
हारावलीभगणराजितपीवरोरुव्योमस्थलीलसितकौस्तुभभानुमन्तम् ।
श्रीवत्सलक्षणसुलक्षितमुन्नतांसमाजानुपीनपरिवृत्तसुजातबाहुम् ।
आबन्धुरोदरमुदारगभीरनाभिं भृङ्गाङ्गनानिकरमञ्जुलरोमराजिम् ॥ ३२ ॥
नानामणिप्रघटिताङ्गदकङ्कणोर्मिग्रैवेयसारसननूपुरतुन्दबन्धम् ।
दिव्याङ्गरागपरिपिञ्जरिताङ्गयष्टिमापीतवस्त्रपरिवीतनितम्बबिम्बम् ॥ ३३ ॥
चारूरुजानुमनुवृत्तमनोज्ञजङ्घं कान्तोन्नयप्रपदनिन्दितकूर्मकान्तिम् ।
माणिक्यदर्पणलसन्नखराजराजद्रक्ताङ्गुलिच्छदनसुन्दरपादपद्मम् ॥ ३४ ॥
मत्स्याङ्कुशारिदरकेतुयवाब्जवज्रैः संलक्षितारुणकराङ्घ्रितलाभिरामम् ।
लावण्यसारसमुदायविनिर्मिताङ्गं सौन्दर्यनिन्दितमनोभवदेहकान्तिम् ॥
आस्यारविन्दपरिपूरितवेणुरन्ध्रलोलत्कराङ्गुलिसमीरितदिव्यरागैः ।
शश्वद्द्रवैः कृतनिविष्टसमस्तजन्तुसन्तानसन्नतिमनन्तसुखाम्बुराशिम् ॥
गोभिर्मुखाम्बुजविलीनविलोचनाभिरूधोभरस्खलितमन्थरमन्दगाभिः ।
दन्ताग्रदष्टपरिशिष्टतृणाङ्कुराभिरालम्बिवालधिलताभिरथाभिवीतम् ॥३७॥
सम्प्रस्नुतस्तनविभूषणपूर्णनिश्चलास्यद्रुदृढक्षरितफेनिलदुग्धमुग्धैः ।
वेणुप्रवर्तितमनोहरमन्दगीतदत्तोच्चकर्णयुगलैरपि तर्णकैश्च ॥ ३८ ॥
प्रत्यग्रशृङ्गमृदुमस्तकसम्प्रहारसंरम्भभावनविलोलखुराग्रपातैः ।
आमेदुरैर्बहुलसास्नगलैरुदग्रपुच्छैश्च वत्सतरवत्सतरीनिकायैः ॥ ३९ ॥
हम्भारवक्षुभितदिग्वलयैर्महद्भिरप्युक्षभिः पृथुककुद्भरभारखिन्नैः ।
उत्तम्भितः श्रुतिपुटीपरिपीतवंशध्वानामृतोद्धतविकासिविशालघोणैः ॥
गोपैः समानगुणशीलवयोविलासवेशैश्च मूर्च्छितकलस्वनवेणुवीणैः ।
मन्दोच्चतारपटुगानपरैर्विलोलदोर्वल्लरीललितलास्यविधानदक्षैः ॥ ४१ ॥
जङ्घान्तपीवरकटीरतटीनिबद्धव्यालोलकिङ्किणिघटारणितैरटद्भिः ।
मुग्धैस्तरक्षुनखकल्पितकान्तभूषैरव्यक्तमञ्जुवचनैः पृथुकैः परीतम् ॥ ४२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ सुललितगोपसुन्दरीणां पृथुकबरीषनितम्बमन्थराणाम् ।
गुरुकुचभरभङ्गुरावलग्नत्रिवलिविजृम्भितरोमराजिभाजाम् ॥ ४३ ॥
तदतिरुचिरचारुवेणुवाद्यामृतरसपल्लविताङ्गजाङ्घ्रिपस्य ।
मुकुलविमलरम्यरूढरोमोद्गमसमलङ्कृतगात्रवल्लरीणाम् ॥ ४४ ॥
तदतिरुचिरमन्दहासचन्द्रातपपरिजृम्भितरागवारिराशेः ।
तरलतरतरङ्गभङ्गविप्रुट्प्रकरघनश्रमबिन्दुसन्ततानाम् ॥ ४५ ॥
तदतिललितमन्दचिल्लिचापच्युतनिशितेक्षणमारबाणवृष्ट्या ।
दलितसकलमर्मविह्वलाङ्गप्रविसृतदुःसहवेपथुव्यथानाम् ॥ ४६ ॥
तदतिरुचिरवेषरूपशोभामृतरसपानविधानलालसानाम् ॥
प्रणयसलिलपूरवाहिनीनामलसविलोलविलोचनाम्बुजानाम् ॥ ४७ ॥
विस्रंसत्कबरीकलाप विगलत्फुल्लप्रसूनास्रव-
न्माध्वीलम्पटचञ्चरीकघटयासं सेवितानां मुहुः ॥
मारोन्मादमदस्खलन्मृदुगिरामालोलकाञ्च्युल्लस-
न्नीवीविश्लथमानचीनसिचायान्तार्चिर्नितम्बत्विषाम् ॥ ४८ ॥
स्खलितलसितपादाम्भोजमन्दाभिघातच्छुरितमणितुलाकोटयाकुलाशामुखानाम् ।
चलदधरदलानां कुड्मलापक्ष्मलाक्षिद्वयसरसिरुहाणामुल्लसत्कुण्डलानाम् ॥
द्राघिष्ठश्वसनसमीरणाभितापप्रम्लानीभवदरुणौष्ठपल्लवानाम् ।
नानोपायनविलसत्कराम्बुजानामालीभिः सततनिषेवितं समन्तात् ॥५०॥
तासामायतलोलनीलनयनव्याकोशलीनाम्बुज-
स्रग्भिः सम्परिपूजिताखिलतनुं नानाविलासास्पदम् ।
तन्मुग्धाननपङ्कजप्रविगलन्माध्वीरसास्वादिनीं,
बिभ्राणं प्रणयान्मदाक्षिमधुहन्मालां मनोहारिणीम् ॥ ५१ ॥
गोपीगोपपशूनां बहिः स्मरेदग्रतोऽस्य गीर्वाणघटाम् ।
वित्तार्थिनीं विरिञ्चित्रिनयनशतमन्युपूर्विकां स्तोत्रपराम् ॥ ५२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्वद्दक्षिणतो मुनिनिकरं दृढधर्मवाञ्छया समाम्नायपरम् ५३ ॥
योगीन्द्रानथ पृष्ठे मुमुक्षमाणान्समाधिना तु सनकाद्यान् ॥ ५४ ॥
सव्ये सकान्तानथ यक्षसिद्धगन्धर्वविद्याधरचारणांश्च ।
सकिन्नरानप्सरसश्च मुख्याः कामार्थिनीर्नर्तनगीतवाद्यैः ॥ ५५ ॥
शङ्खेन्दुकुन्दधवलं सकलागमज्ञं सौदामिनीततिपिशङ्गजटाकलापम् ।
तत्पादपङ्कजगताममलाञ्च भक्तिं वाञ्छन्तमुज्झिततरान्यसमस्तसङ्गम् ॥
नानाविधिश्रुतिगुणान्वितसप्तरागग्रामत्रयीगतमनोहरमूर्छनाभिः ।
सम्प्रीणयन्तमुदिताभिरपि प्रभक्त्या सञ्चिन्तयन्नभसि मां द्रुहिणप्रसूतम् ॥
इति ध्यात्वाऽऽत्मानं पटुविशदधीर्नन्दतनयं,
नरो बुद्ध्यैवार्घ्यप्रभृतिभिरनिन्द्योपहृतिभिः ।
यजेद् भूयो भक्त्या स्ववपुषि बहिष्ठैश्च विभवैरिति प्रोक्तं सर्वंयदभिलषितं भूसुरवराः ॥

श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्ये त्र्युत्तरशततमोऽध्यायः

इति वैशाखमासमाहात्म्यं समाप्तम्

---

## चतुरधिकशततमोऽध्यायः

### अश्वमेधक्रतोरनन्तरं शम्भुब्राह्मणरूपेण शङ्करस्यायोध्यां प्रत्यागमनम् ।

ऋषय ऊचुः ।

भूयो वद महाभाग रामचारित्रमद्भुतम् । राममाहात्म्यसर्वस्वं भक्तानां प्रीतिदायकम्

सूत उवाच ।

अश्वमेधं क्रतुवरं कृत्वा दाशरथिर्यथा । प्रवृत्तो लोककृत्येषु शास्त्रकृत्येषु कोविदः ॥
अयोध्यां गन्तुकामेन शङ्करेण महात्मना । पार्वत्यासह देवेन उषितं सरयूतटे ॥ ३ ॥
मुनयस्तं समभ्येत्य शङ्करं विश्वरूपिणम् । कश्यपाद्या महात्मानःपप्रच्छुरमितौजसम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वागतं ते मुनिश्रेष्ठ सभार्यः कुत आगतः । किमागमनकृत्यं ते कं देशं गन्तुमुद्यतः ॥५

शङ्कर उवाच ।

अहं शम्भुरितिख्यातो विप्रो हिमगिरिस्थितः । द्रष्टुं च राघवं गच्छे ममकार्यं महत्ततः
मामाह्वयति राजाऽसौ पुराणश्रवणेरतः । आगच्छन्तु भवन्तोऽपि राघवःपरितुष्यति ॥
ततस्ते मुनयःशम्भुर्ययू रामदिदृक्षया । तानागतान्बलिष्ठस्तु ज्ञात्वा रामाय चोक्तवान्
ततःसत्वरमुत्थाय निर्ययौ स पुरोहितः । अर्घ्यपाद्यादिकैस्सर्वान्पूजयामास तानृषीन्
गृहराजं ततःसर्वान्प्रावेशयदरिन्दमः । प्रत्येकमासनं दत्त्वा स्वागतोक्त्याऽऽसनस्थितान्
क्रमेण रघुशार्दूलःपूजयामासतानृषीन् । वाचा मधुरया प्रीणन्निदमाहासनस्थितान् ॥

श्रीराम उवाच ।

अद्य मे सफलं जन्म प्राप्तमद्य तपःफलम् । अद्याभ्यासस्य विद्यानां फलकालोऽयमागतः
अद्य मे पितरस्तुष्टा राज्यं च सफलं मम । अद्य मे सफलं वृत्तमद्य मे सफलं श्रुतम् ॥
एवं वदन्तं राजानं ब्राह्मणाःकश्यपादयः । ऊचुःप्रियतरंवाक्यं रामं राजीवलोचनम् ॥

ऋषयः ऊचुः ।

अयं शम्भुर्द्विजःप्राप्तःसर्वशास्त्रविशारदः । वेदवेदाङ्गतत्त्वज्ञःसर्वभूतहिते रतः ॥ १५ ॥
कैलासवासी सततं तपसे कृतनिश्चयः । ब्रह्मणा ब्रह्मवर्चस्के तुल्यो ब्रह्मविदांवरः ॥१६॥
हरिणा ब्रह्मवात्सल्ये प्रसादे शङ्करोपमः । एवंविधो महातेजाःशम्भुर्ब्राह्मणपुङ्गवः ॥१७॥
अष्टादशपुराणज्ञो मीमांसान्यायकोविदः । त्वद्भाग्यगौरवादेव प्राप्तोऽयं मुनिसत्तमः ॥
त्वयाऽऽहूतो मुनिवरःकैलासादागतःप्रभो । अतःपृच्छ महाभाग पुराणाख्यानमुत्तमम् ॥
श्रोतुकामा वयं प्राप्तास्त्वामद्य रघुनन्दन । अन्तंगतस्य वेदानां सर्वशास्त्रार्थवेदिनः ॥
पुंसोऽश्रुतपुराणस्य न सम्यग्याति दर्शनम् ॥ २१ ॥

सूत उवाच ।

एवमुक्तो रघुश्रेष्ठो मुनिभिस्तत्त्वदर्शिभिः । प्रहर्षमतुलं लेभे पुराणश्रवणोत्सुकः ॥२२॥

श्रीराम उवाच ।

लिङ्गार्चनप्रकारं च लिङ्गमाहात्म्यमेव च । महेशनाममाहात्म्यं पूजामाहात्म्यमेव च ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नमस्कारस्य माहात्म्यं दृष्टिमाहात्म्यमेव च । जलदानस्य माहात्म्यं धूपदानस्य सत्तम !
दीपगन्धादि दानस्य पुष्पमाहात्म्यमेव च ।
नानाख्यानेतिहासानां कथां पापप्रणाशिनीम् ॥ २५ ॥
धर्मार्थकाममोक्षांश्च तदुपायांश्च सुव्रत । तत्सर्वं श्रोतुमिच्छामि त्वत्तो मुनिवरोत्तम ॥
शम्भुरुवाच ।
रामराम महाबाहो पुण्यवानसि राघव । राज्यासक्तस्य ते जाता पुराणश्रवणे रतिः ॥
स्यान्महत्सेवया राम पुण्यतीर्थनिषेवणात् । साजिह्वा या शिवंगायेत्तच्चित्तंयत्तदर्पितम्
तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ करौ । सुजन्मदेहमत्यर्थं तदेवाशेषजन्मसु ॥
यदेवोत्पुलको भासि हरनामानुकीर्तनात् । कृतार्थोऽसि महाराज तत्प्रश्नानुगता मतिः
अनन्तरं समाजग्मुर्जाङ्घिकाःसत्वरश्रमाः । तत्करात्पत्रिकां गृह्य पपाठ रघुसत्तमः ॥
मनसाऽचिन्तयद्रामःकथमेतदभूदिति । रामं शम्भुस्तदा प्राह देव्या ब्राह्मणवेषवान् ॥
शम्भुरुवाच ।
किं चिन्तयसि काकुत्स्थ ! मुनिष्वग्रे वसत्स्वपि ।
तद्वाक्यं राघवः श्रुत्वा पप्रच्छ मुनिपुङ्गवान् ॥ ३३ ॥
श्रीराम उवाच ।
विभीषणःकथमसौबद्धःशृङ्खलया नृभिः । मत्स्थापितं शिवंलिङ्गंदृष्ट्वारामेश्वरं त्वहो
द्राविडैःकुटिलैर्दुष्टैरात्मनातद्विचार्यताम् । विचार्य मुनिवर्यास्ते नेशास्तज्ज्ञातुमल्पतः
न जानीम इति प्राहू रामं रामस्तदाऽब्रवीत् । पुराणं वीक्ष्यविधिनातत्सर्वं ब्रूतसत्तमाः
भवदज्ञानहेतुश्च विचार्यस्तदनन्तरम् । किं किं पुराणं प्रेक्ष्यं स्याद्वर्जनीयं तथैव किम्
प्रशस्तःकीदृशःश्लोकस्तदन्यःकीदृशो भवेत् । कीदृशेषु च कार्येषु कीदृशःपूजकस्तथा
पूजा च कीदृशैर्भक्तैः कार्या निर्णयदर्शने । इति रामस्य वचनंश्रुत्वा ते द्विजसत्तमाः ॥
प्रत्यूचुस्तं रघुश्रेष्ठं चिन्ता व्याकुलमानसम् ।
न वक्तारो वयं राम ! वीक्ष्यतां तु पुराणवित् ॥ ४० ॥
तच्छ्रुत्वा राघवःशम्भुं पप्रच्छविनयान्वितः । सोऽपितद्वाक्यमाकर्ण्यप्रत्युवाचमहामतिः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शम्भुरुवाच ।

पुराणजीवी पूजार्हःस्वशाखाध्ययनःशुचिः । मीमांसातत्त्वविज्ञानःश्रोत्रियोऽनृतदूषकः
देवेषु च समस्तेषु समदृष्टिःशिवेरतः । शतरुद्रियजापी च साग्निकश्चातिवाचकः ॥४३
यजुर्वेदी विशेषेण पूजयेत्पुस्तकं सुधीः । श्रीतालपत्रलिखितं देवलिप्यन्वितं शुभम्
बन्धाद्यतिप्रपञ्चं यद्युगपत्प्रणवाक्षरम् । प्रागूदुर्ध्वं रेखयोःप्रान्ते प्रणवस्याग्रयोजिका ॥
रेखाभवेद्देवमेका अकारस्तस्य पार्श्वतः । शिरोभागमुपक्रम्य सकोणाधःप्रलम्बिनी ॥
आकारःस हि विज्ञेयःपट्टिकादशरेखया ! वामे षड्वक्रबिन्दूद्वाविकार इति कीर्तितः ॥
तस्य वामशिरोरेखा लम्बिन्या ई उदाहृतः । सर्वाक्षरे शिरोरेखा अवक्रा प्रणवंविना ॥
तस्यां तु लम्बरेखान्या तदन्ते च लवित्रवत् । उकारःसहि विख्यातो लवित्रद्वयतस्तदू
एवमन्यानि सर्वाणि अक्षराण्याह भारती । लिप्याऽनयैव लिखितं पुराणं तु प्रशस्यते
ब्राह्मं पाद्मं वैष्णवं च मार्तण्डं नारदेरितम् । मार्कण्डेयमथाग्नेयं कौर्मं वामनमेव च ॥
गारुडं लैङ्गमाख्यातं स्कान्दं मात्स्यं नृसिंहकम् । तथैवगदितं राम पुराणं कपिलंतथा
वाराहं ब्रह्मवैवर्तं शकुनेषु प्रशस्यते । शैवं भागवतं दौर्गं भविष्योत्तरमेव च ॥ ५३ ॥

भविष्यं चोपसंज्ञानि त्वन्यानि च विवर्जयेत् ।
विमुच्य पुस्तकं रत्नपीठे निक्षिप्य संस्कृतम् ॥ ५४ ॥

धौतवस्त्रधरःस्नात्वाशुचिरक्रोधनोऽज्वरः । आदावात्मानमभ्यर्च्यकृत्वासङ्कल्पमेव च

अङ्कुशं चाक्षसूत्रं च पाशं पुस्तकमेव च ।
धारयन्तीं सितां ध्यायेत्प्रसन्नास्यां सरस्वतीम् ॥ ५६ ॥

गोक्षीरसदृशाकारं त्रिनेत्रं वृषवाहनम् । सहासवदनं शान्तं शुक्लाम्बरधरं शिवम् ॥५७॥

हरिणं चाभयं चोद्र्ध्वबाहुयुग्मं किरीटिनम् ।
व्याख्यामुद्रां च दक्षेऽधो वामहस्ते वरप्रदम् ॥ ५८ ॥

नानारत्नविभूषाढ्यं गिरिजार्द्धाम्बुजासनम् । बहुभिर्मुनिमुख्यैस्तु ध्यायमानपदाम्बुजम्
मूर्तिमद्भिस्तथा वेदैः स्तूयमानं पुराणकैः । अन्यैः समस्तलोकैश्च संसेवितपदाम्बुजम्

ध्यात्वैव पूजकः सम्यगादौ पूजां समारभेत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आपो वा इदंमित्येतंत्कलशस्याभिमन्त्रणम् ॥ ६१ ॥

तज्जलं च गृहीत्वा च पात्रस्थमभिमन्त्रयेत् । तत्सद्ब्रह्मेति मन्त्रेण प्रशस्य प्रणवेन तु आत्मानं सर्वपात्राणि तत आवाहयेदिति । यद्वागितित्यृचेनैव भारती षोडशार्चनम् ॥

पुरुषसूक्तेन वा कुर्याद्गायत्र्या वा समर्चयेत् ।

ओंनमो भगवते अमुक पुराणायेति पुराणमर्चयेत् ॥ ६४ ॥

काण्डादिति हि मन्त्रेण दूर्वामानीय पूजयेत् । ओं नमो भगवत्यै दूर्वायै इति ॥६५॥ सलोकपालपूजास्यादथ कन्यासमर्चनम् । वत्सरात्पञ्चकादूर्द्ध्वं दशवर्षादधः शुभाः ॥ अनुत्पन्नर्त्तुर्वाऽपि तां प्रयत्नेन पूजयेत् । गन्धपुष्पाक्षतैर्धूपैर्दीपताम्बूलभूषणैः ॥६७॥

पाठयेदप्यमुं मन्त्रं पूजकः कन्यकामिमाम् ॥ ६८ ॥

सत्यं ब्रूहि प्रियं ब्रूहि भगवति सरस्वति नमस्ते नमस्त इति ॥ ६९ ॥

गायत्र्यानुक्रमार्थात्तुदूर्वायुग्मंतुकारयेत् । सन्निधौ पुस्तकस्याधः सहस्रपरमेत्यृचा ॥ दूर्वायुग्मत्रयं दद्यात्तस्या हस्ते विचक्षणः । साऽपिक्षिपेत्पुस्तसन्धौ शलाका त्रयमन्वनु विसृज्यतां पुनर्दद्याच्छिवाभ्यां नमइत्यथ । पत्रयोर्मध्यमःश्लोकः कार्यसिद्धेर्हि सूचकः

पूर्वपत्रे समाप्तिः स्याच्छ्लोकस्य यदि राघव! ।

परपत्रे पठेच्छ्लोकं विविच्यार्थमुदीरयेत् ॥ ७३ ॥

शनैः शनैः पठेत्प्राज्ञो व्याख्यास्येच्च शनैः शनैः ।

त्वरेह नहि कर्तव्या कुप्यति त्वरया तु गीः ॥ ७४ ॥

घटिकावास्तुपादःस्यादत्वरास्यात्ततोऽधिका । त्वरयेन्नचवक्तारंज्ञातंव्यासमनुद्विजम् विविच्य पाठं श्लोकस्यनिश्चित्यार्थं च मानसे । प्रतीपं तन्नवक्तव्यंविविच्य रघुनन्दन यदि युक्तमयुक्तं वा श्लोकमन्यं पठेदसौ । पुस्तकस्थं च हित्वैव पूजकः स द्विजो यदि तत्तथैव हि विज्ञेयं विसंवादो न शस्यते । दैवागतो हि स श्लोको दैवं हि बलवत्तरम् उपश्रुतिषु यद्वच्च नापराधो द्विजस्य तु । विस्मयोन च कर्तव्यो दैवस्य कुटिलागतिः यत्तत्पदविपर्यासे पत्रे चोपरि वारिणि । तमादेशं तिरस्कृत्य द्वितीयं तु पठेदतः ॥ ततस्तृतीयंपाठ्यंस्यात्ततःकार्यंविवेचनम् । अविसर्गान्तपूर्वास्ते पवर्गेतरपञ्चमाः ॥८१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तुतिलिङ्वर्जितः श्लोकःशकुनेषुप्रशस्यते। अध्यायादिः समाप्तिश्चवृथापत्रंवृथालिपिः
उक्तानुवचनं चैव ह्यप्रस्तुतमथैव च। दग्धपत्रं नष्टलिपिः सन्दिग्धाक्षरमेव च ॥ ८३ ॥
एतानि शकुने नित्यं वर्जनीयानि पण्डितैः। प्रश्नो हि द्विविधो ज्ञेयो दीप्तशान्तप्रभेदतः
शान्तं च द्विविधं ज्ञेयमुत्पत्तिस्थितिवृद्धितः। तत्र शान्तंप्रशस्तं स्याल्लक्षितंपूर्वलक्षणैः

कार्यभेदास्तु वर्ण्यन्ते केचिन्मर्त्योपयोगिनः।
कस्यचित्कार्यमादाय कश्चित्प्रष्टा भवत्यपि ॥ ८६ ॥

स करोति तदा प्रश्नं समेत्य स्मरतेऽत्र किम्। स पुनर्धार्यपत्रं तत्तस्मिन्पत्रं प्रशस्यते
अथवा तत्क्षमोपेतं वैराग्यं परमेव च। यतः कुतश्चिद्दृष्टस्तु स्तुतिपादकमेव च ॥८८॥
परिहृत्य परं चापि तस्मिन्नर्थे शुभावहम्। मृतो गृह्णाति वागर्थमिति प्रश्नोऽशुभप्रदः
विवादे विजयप्रश्ने जयद्योतकमिष्यते। सृष्टिरप्यत्र शस्ता स्यात्क्रूरायां क्लेशतोजयः
प्रशान्तायामुपायैस्तु मिश्रायां विड्वरो भवेत्। पुरादिवर्णनं यत्तु मध्यमं यदिचोत्तमम्
कलिसम्भावनायास्तु शृङ्गारस्योपवर्णने। राज्यनिर्वाहचिन्तायां राज्यलिङ्गं शुभावहम्
यस्यापि यादृशं योग्यं विचार्यंतादृशं बुधैः। स्तुतिवैराग्ययोःकार्यंविलयः परिकीर्तितः

कार्याल्पसिद्धिः स्खलिते न च निर्वाहमृच्छति।
तस्यान्यार्थस्यान्यभावो राम! शान्तिविचारणे ॥ ९४ ॥

विसर्गान्तश्च पूर्वार्द्धविपर्यासौ भविष्यतः। सङ्कल्पितान्यथाभावो ह्यध्यायस्यसमापने
काण्डादेस्तु समाप्तौ तु स्यात्तत्कार्यविनाशनम्। तस्मादेतादृशेदोषे शकुनस्यविपर्ययः
क्षुते पुस्तकपाते च त्वाहते मस्तकादिषु। वक्ता वैमाननं याति ततः शकुननाशनम् ॥
तस्मादेतादृशे दोषे शकुनं परिवर्जयेत्। उपमायां भवेद्राम कार्याभासो न वस्तुतः ॥
सन्तानं भोऽन्यत्र चोक्तासृष्टिर्मध्यफलप्रदा। स्तुतिःप्रशस्ताकुत्रापि गुणवत्कार्यनिर्णये
विवाहे चौषधे दानेव्यवहारेकृषौ तथा। यथार्था च स्तुती राम निर्वाहेऽपि न दूषणम्
अयथार्था स्तुतिर्या हि तत्र कार्यं न सिध्यति। अबुद्धार्थे तथा पद्ये पुराणादिष्वनादृते
पलायने देशभावे व्याधिसम्भव एव च। चौराद्यभिभवे तस्मिन्घोरकार्यविनाशनम् ॥

शान्तः स्याद्यदि च प्रश्न इति प्राहुः पुराविदः ॥ १०२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राम उवाच ।

अबुद्धार्थं कथं पद्यं पुराणज्ञो वदिष्यति । अनुक्तो न श्रुतः सम्यक्श्रोतॄणामितिनिश्चयः
तदुदाह्रियतां मह्यमर्थश्चापि विचार्यताम् । भागाबोधकमप्यत्र वक्तुमर्हसि पण्डित ! ॥

शम्भुरुवाच ।

मधूनि च मधून्यत्र मधुर्मधुभुजं मधुः । मधुनामधुनादर्थविषाणि च विशाणि च ॥
अबुद्धार्थस्त्वयं श्लोकः शकुनेन हि शस्यते ॥१०६॥

रुते रुते रुते रोरौ रीरीरारंररीररम् । एवं करोति शुद्धात्मा ब्राह्मणो ब्रह्मतोऽतिथिः ॥
भागाबुद्धस्त्वयं श्लोकः शकुनेन प्रशस्यते । एवमादीनि पद्यानि पुराणेषु रघूत्तम ! ॥
सन्ति तेषां न च व्याख्यातत्पाठस्तु परं भवेत् । वक्तुः श्रोतुरवैगुण्यं व्रतेषु नियमेषु च
वेदवच्च पुराणानि न चिन्त्यानिकथंन्विति । त्रिरुक्तादिवशादर्थधीरप्यस्तु विचारतः
श्लोकार्थं प्रक्रियांचैववविचार्यपरमार्थतः । बलवांस्तत्रहि श्लोकःप्रक्रिया तु ततोलघुः
वृथा पत्रे वृथायासे दग्धपत्रे विनाशनम् । स्यादन्तरितनिर्वाहपत्रे कार्यविसूत्रता ॥
शीर्णपत्रे व्ययः प्रोक्तः प्रनष्टलिपिके तथा । वृथाक्षरे वृथायासः पुनरुक्ते विसंविदे ॥
उपमाने तु तत्कार्यंसिध्यतिवा न सिध्यति । विलम्बेनाथ वा सिद्धिरस्पष्टाक्षरके पुनः
कार्यं संशयमाप्नोति निर्दिष्टदिवसेष्वपि । न प्रत्यहं निरीक्षेत पुराणशकुनं नृपः ॥११५

भुक्त्वोत्तिष्ठंस्तथा नैव निरीक्षेत पुराणकम् ।
पूर्वस्य दिवसस्याथ रात्रौ पूजां विधाय च ॥ ११६ ॥

प्रातः काले परेद्युश्च शकुने रघुनन्दन । पश्चान्निरीक्षणं कार्यं सद्यःकालमथापिवा ॥११७
प्रक्रियादिविशेषेण विशेषं शकुनं वदेत् । शुभकार्येषु सर्वेषु प्रेतश्राद्धादिवर्जनम् ॥११८
दण्डप्रणयनं शापोद्देशानां च विपर्ययः । रक्षसां दुष्टसत्त्वानां शुद्धं प्राणिविहिंसनम् ॥
दहनादेव निर्माणं ष्ठीवनं वमनं रुदीः । हासो बीभत्सता दुःखदुःस्वप्नभ्रमपापकाः ॥
पटादिपूरणं पीडा कलहो मरणं तथा । क्रूराणामागमश्चापि महतां भयमेव च ॥१२१॥

एवमाद्यास्तथा चान्याः प्रक्रियास्तु विवर्जयेत् ।
श्रियः प्राप्तिविचारे च राजसृष्टिः सुखावहा ॥१२२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रहणामुदयो रोगशान्तिरप्यत्र शस्यते । किमत्र बहुनोक्तेन तत्तद्योगं विचारयेत् ॥१२३
सर्वेषु च पुराणेषु स्कान्दमत्र प्रशस्यते । वैष्णवं केचिदिच्छन्ति रामायणमथापरे ॥१२४
सत्यादिसर्वदोषाणां वैष्णवे नैव दोषता । स्कान्दे रामायणे चैवदोषत्वमपि चाल्पता
किं तु पूजयितुं शक्यं वैष्णवं नैव केनचित् । सदाचारविहीनेन पूजितं यदि चेद्भवेत्
तदा शुभमिवायाति शकुनं नैव सिध्यति । सर्वाचारसमोपेते शाखाबन्धे यथा वृषः ॥

सूत उवाच ।

इत्थं शम्भुद्विजेनाथ बोधितो राघवस्तदा । विभीषणपरीक्षायां शकुनायोपचक्रमे ॥
वसिष्ठं सर्वतत्त्वज्ञं पुराणेषु विशारदम् । बभाषे राघवो वाक्यं पुराणं वीक्ष्यतामिति
वसिष्ठोऽप्याह रामं तं मुनेश्चामुष्यसन्निधौ । वक्तुं निरीक्षितुं राम न शक्तिर्मम विद्यते

शम्भुं प्राह ततो रामो मुनिसम्प्रेक्षिताननम् ।
भवन्तोऽपि हि तत्त्वज्ञाः पुराणेषु विशारदाः ॥ १३१ ॥

तद्वदन्तु पुराणस्थंशकुनं मम कार्यतः । तथेति शम्भुरुक्त्वा तु शुचिर्भूत्वाऽर्चकोऽभवत्

स्कान्दमभ्यर्च्य विधिवत्प्रश्नं कृत्वेति तत्त्वतः ।
स किं श्रृङ्खलया बद्धो मम भक्तो विभीषणः ॥ १३३ ॥
अमी दृष्टास्तदा श्लोकास्त्रय आदेशकास्त्रिधा ॥१३४॥
बद्ध्वा समुद्रं स तु राघवेन्द्रो रुरोध पुर्यां क्षणदाचरेन्द्रान् ।
योद्धुं विनिर्गत्य समाययुस्ते लङ्कापुरश्चाप्यतिकायमुख्याः ॥१३५॥

अट्टशूला जनपदाः शिवशूला द्विजातयः । प्रमदाः केशशूलिन्यो भविष्यन्ति कलौयुगे ।
एवं स्तुतो महेशस्तु देवताः प्राहवै शिवः । मोचयिष्ये भवत्पत्नीर्मल्लासुरनिरोधिताः
श्लोकत्रयं निरीक्ष्याथ बन्धनिश्चयमुक्तवान् । मोचनंत्वरया राम भविष्यति न संशयः
इति श्रुत्वामुनेर्वाक्यंरामः स मुनिवानरः । कर्तुं विनिर्ययौ शीघ्रं विभीषणगवेषणम् ॥
श्रीरङ्गनामनगरं त्वरया प्रविवेशह । रामं ते पूजयामासुः पार्थिवास्तत्र ये स्थिताः ॥

पूजितस्तानुवाचाथ क्व स्थितोऽसौ विभीषणः ।
देव ! श्रीराम ! न वयं जानीमस्तु कथामिमाम् ॥१४१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रेषयामास काकुत्स्थो वानरान्सर्वतो दिशः । ततो गत्वा कपिवरा दृष्टवन्तो नचैवतम्
अथ रामो मुनिं प्राह शम्भुंपश्चाद्वदस्व मे । तथेति रामसहितो मुनिः शम्भुद्विजान्वितः
दर्शयेति तथैवेति विप्रघोषं जगाम सः । पृष्टास्तेऽपि द्विजास्तत्र दर्शयामासुरर्चिताः ॥
अन्तर्भूमिगृहे बद्धं राक्षसं बहुशृङ्खलैः । अथाह राघवो विप्राः किमनेन कृतं त्विति ॥
तैरुक्तं ब्रह्महत्येति वृद्धो ब्राह्मणसत्तमः । द्विजोऽतिधार्मिकः कश्चिदेकान्ते प्रवयाः कृशः

ध्यानायोपवने तस्थौ तत्र गत्वा विभीषणः ।
पादेनाघर्षयद्विप्रं स विप्रोऽप्यतिचूर्णितः ॥ १४७ ॥

पदमेकमतो गन्तुं न शशाक विभीषणः । अस्माभिस्ताडितो दुष्टो न ममार वधैरपि ॥
अतो राम ! निहत्यैनं पापात्मानं वृषीभव । रामः संशयमापन्नो विप्रानिदमुवाचह ॥
वरं ममैवमरणं मद्भक्तो हन्यते कथम् । राज्यमायुर्मया दत्तंतथैव स भविष्यति ॥१५०
भृत्यापराधे सर्वत्र स्वामिनांदण्डइष्यते । रामवाक्यं द्विजाःश्रुत्वा विस्मयादिदमब्रुवन्

द्विजा ऊचुः ।

न पट्टबद्धमरणं भोराम मुनिसंमतम् । वसिष्ठादिमुनीन्द्रैस्तु विचारं कुरु यद्धितम् ॥
रामपृष्टा मुनिवराः प्रायश्चित्तमथोचिरे । अज्ञानब्रह्महत्या तु प्रायश्चित्तैरपोह्यते ॥१५३॥
इयमज्ञानतो हत्या प्रायश्चित्तमपेक्षते । गवां च त्रिशतं षष्टिं ददातु स विभीषणः॥१५४

बन्धकाश्चापि ते विप्रास्तथेत्यूचुः परस्परम् ।
मोचयिष्यामस्तद्रक्षः प्रायश्चित्तं करोतु सः ॥ १५५ ॥

विमुच्य राक्षसं विप्रा राघवाय न्यवेदयन् । रामोऽपि नाभिभाषेत्तं प्रासङ्गिकमभाषत
ज्ञात्वा पृष्ट्वामुनीन्वृद्धान्प्रायश्चित्तमतः परम् । द्विजानुमतितःपापीमामुपैक्षतु राक्षसः
श्रुत्वेति राघववचो राक्षसः पापसंयुतः । प्रायश्चित्तमृषिप्रोक्तं कृत्वा राममथाभ्यगात्
प्रायश्चित्तविशुद्धात्मा ननाम रघुनन्दनम् । रामस्तं प्रहसन्वाक्यमिदमाह सभान्तरे ॥

श्रीराम उवाच ।

अद्य प्रभृति पौलस्त्यविमृश्य कुरु यद्धितम् । अस्माकं त्वत्कृतेरक्षःप्रयासोऽयमभूद्यतः
कृपालुर्भव सर्वत्र भृत्यो मम यतो भवान् । अथ ते मुनयः सर्वे निश्चितार्थे रघूत्तमे ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऊचुरस्माकमज्ञानं कथं शीघ्रमुपागतम् ॥ १६१ ॥

शम्भुरुवाच ।

विप्रावज्ञानतो विप्रा अज्ञानं नाशमेष्यति ( ना समेष्यति ) ॥ १६२ ॥

ऋषय ऊचुः ।

त्रेतायुगेऽभिरामोऽसौपुराणानि च कृत्स्नशः । द्वापरान्ते भारतं च कथमेतद्धि युज्यते ॥

सूत उवाच ।

पुराणानि तथाप्येवं सन्तितन्नामकानि तु । व्यासेरितानित्वद्यैवपुराणानि न चान्यथा
अद्यापि च विधानं तत्पुराणश्रवणे फलम् । महाभारतमप्यत्र शकुनाय विशिष्यते ॥
आदिपर्वैकमभ्यर्च्य निरीक्षेत विनिश्चयम् । अथवा सर्वपर्वाणि प्रशस्तान्यर्थनिर्णये ॥
श्लोकादि लक्षणं सर्वं पूर्वोक्तं तदिहापितु । श्लोकानामन्वयादेकस्तात्पर्यादथवाऽपरः
अर्थः सम्प्रतिपद्येत तत्परं तत्र गृह्यते । अर्थादेव हि सर्वत्र वस्त्वादेस्तु निरूपणम् ॥
यत्रार्थो दृश्यते तत्र धातुः स समुदाहृतः । अत्रार्थादेव शब्दानां न मिथ्यैवनिरूपणम्
तस्मात्सर्वत्र नान्योऽर्थो गृहीतव्यो मनीषिभिः ॥ १७० ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे
चतुरुत्तरशततमोऽध्यायः ॥ १०४ ॥

---

# पञ्चाधिकशततमोऽध्यायः

## श्रीरामस्य पुष्करेण श्रीरङ्गनगरम्प्रतिगमनम् ।

मुनय ऊचुः ।

अतःपरं महाभाग ! किं चकार स राघवः । मुनयस्ते महात्मानः किमकुर्वंस्ततःपरम्

सूत उवाच ।

रामचन्द्रे सुखासीने विभीषणकपीश्वरे । शम्भुमूचुर्मुनिवराः कथां पुण्यां वदस्व नः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेषमाकर्ण्य वचनं पार्वतीमाह शङ्करः । इदं कस्यापि विप्रस्य गृहं परमशोभनम् ॥३॥
रम्योपवनवापीभिर्वीरुद्भिरुपशोभितम् । कूजन्मधुकरश्रेण्या आहूतकुसुमायुधम् ॥ ४ ॥
मध्याह्नसन्ध्यामारोढुमिव सूर्यः प्रवर्त्तते । स्वच्छवापीजलस्नातौ परिधाय सुवाससी
मृगनाभिसमुद्घृष्टघनसारसुचन्दनम् । आलिप्य सल्लकीदामद्वढधम्मिल्लसंयुतौ ॥ ६ ॥
अनल्पघनसारं तु ताम्बूलं प्रतिखादितम् । आस्वाद्यमाद्यन्मुदितौ यत्र धारागृहे शुभे ॥
मयूरनादबहुले बर्हिर्मधुरगीतकैः । शय्यायामास्तृतायां च परस्परसुखस्थितौ ॥ ८ ॥
विशालस्मितरक्तोष्ठमाननं चुम्बितंयदि । संसारफलमाघ्रातमावयोस्तु भविष्यति ॥९॥
इतीरितमथ श्रुत्वा कुपिता मुनयस्तु ते । उक्तं वा सुशुभंवाक्यमस्मासु किमिदं त्वया

विप्रलापः प्रियासक्तेः कृतो नोऽस्मद्वचः कृतम् ।
अथ कोपपराच्छम्भोराननात्परमाऽद्भुता ॥ ११ ॥

ज्वलाविनिर्गता साऽपिकरालवदनाऽभवत् । कस्यचित्तुमुनेर्भार्यामाससादाथसत्वरम्

पलायनपरा चासीद्रामं दृष्ट्वा च बिभ्यती ।
रामोऽपि ब्राह्मणीं शुद्धां मोचयामीत्यभाषत ॥ १३ ॥

जगाम पुष्पकेणैव ब्रुवन्मुक्ति पुनः पुनः । बाणं च धनुषा योक्तं न चसस्मार राघवः ॥

शम्भुरप्यति पुण्यानि वनान्यायतनानि च ।
पुराणि च विचित्राणि दृष्ट्वा रामं न चास्मरत् ॥ १५ ॥

क्षणेन चतदा प्राप्तो लोकालोकं महागिरिम् । दृष्ट्वाऽथ राघवःशैलं गृहमार्गसमाकुलम्
विप्रयोषिन्महाभागा क्वगता वदतद्विजाः । इतो गतेतिते प्रोचुस्तमो भागं गिरेरिति ॥
रामो विवर्णवदनः कष्टमित्यभिचिन्तयन् । अथशम्भुर्महातेजाःप्रकाशमतुलं ददौ ॥१८॥
तत्प्रकाशप्रभावेन रामः कृत्यां ययावनु । तमोमयी महाभूमिः सर्वजन्तुविवर्जिता ॥
आब्रह्माण्डकटाहान्ताशतयोजनकोटितः । महारजतभूमिश्च तमोमध्येव्यवस्थिता ॥२०
तत्र नारायणपुरं सूर्यकोटिसमप्रभम् । स राममुनिवर्यास्तु तं दृष्ट्वा विस्मयं ययुः ॥
किमेतदिति चाचिन्त्य नःप्रवेशःकथंभवेत् । किमेष प्रलयाग्निः स्यान्मायया परमात्मनः

किं वा नो मरणं त्वद्य उत श्रेयो भविष्यति ।

३०—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति चिन्ताकुलेष्वेव सरामेषु मुनिष्वथ ॥ २३ ॥
शम्भुराह शृणुष्वाद्य राघवैतद्वदामि ते । प्रकल्पिता मया माया त्वत्कृतेनैतदद्भुतम् ॥
नारायणीयमेतत्तु परमंधाम भास्वरम् । उष्णशीताद्यविच्छेद्यं ज्ञानगम्यं न चाक्षुषम् ॥
तत्तु पूजयतश्चोर्ध्वं पश्य ब्रह्मपुरोगमान् । दिक्षु सर्वासु च मुनीन्पश्य पूजयतोऽमलान्
चतुरो निगमान्पश्य स्तुवतः परमं पदम् ।
योगिनः सनकाद्यास्तु योगमास्थाय यत्नतः ॥ २७ ॥
ध्यायन्ति परमं तेजस्तदिदं पश्य राघव ! । अमुं च रोमशं पश्य प्रदक्षिणनमस्क्रियाः ॥
कुर्वाणं कोटिकोटिश्च वालखिल्यान्मुनीश्वरान् ।
लक्ष्म्यादि सर्ववनितापूज्यमानं परं पदम् ॥ २६ ॥
साकारं च निराकारं ब्रह्मयत्परिकीर्तितम् । अज्ञानिनो न पश्यन्तिपश्यन्ति ज्ञानचक्षुषः
शम्भुवाक्यादतः सर्वे पूजयामासुरच्युतम् । गिरिकर्णीं च तुलसीं मल्लिकां मारुतं तथा
नीलोत्पलैस्त्वगुरुभिश्च कृष्णास्फुटजलैरपि । पूजयन्तो महात्मानो महात्मानं जनार्दनम् ॥
नारदं खेऽथ ददृशुर्जटिलं सविपञ्चिकम् । नारायणपदाघोषं लम्बकूर्चोपवीतिनम् ॥
स चापि मनसा दध्यौ क एष इति नारदः । स पपात प्रभोः पादे शम्भोरानन्दनिर्भरः
शैवीं पञ्चाक्षरीं विद्यां जजाप मनसा मुनिः ।
धन्योऽस्म्यनुगृहीतोऽस्मि जन्माद्य सफलं मम ॥ ३५ ॥
ब्रह्मादिवन्द्यं चागम्यं ज्ञातवानस्मि ते पदम् । नारदं तमथ प्राह शम्भुर्मैवं वदेति हि ॥
यथा च मां न जानन्ति तथा मे कुरु वर्तनम् । गच्छ शीघ्रंहरिं ब्रूहि ममागमनमल्पतः ॥
अथ स त्वरया गत्वा सर्वं व्यज्ञापयद्धरिम् । अथ स त्वरया विष्णुरादायार्घोदकंशुभम्
कमलासहितो योगिकोटिकोटिसमावृतः । निर्ययौ नारदं हस्ते गृहीत्वा गरुडध्वजः
नमो नमो नमोऽस्त्वस्मै शङ्करायेत्युदीरयन् ।
अर्घपाद्यादिना सर्वान्पूजयामास केशवः ॥ ४० ॥
प्रावेशयदमेयात्मा नारायणपुरं शुभम् । गृहराजे ततः स्थित्वा नारायण उवाच ह ॥
कथमेते समायाताः कोऽयं राजा महायशाः । अमानुषप्रवेशोऽयं ब्रह्माद्यैरप्यगोचरः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शम्भुरुवाच ।

मुनिवेषा यथा प्राप्ता वयमेते नृपस्तथा । तवांशो नृपतिश्चायं रामचन्द्रः प्रतापवान् ॥
एनां संवीक्षितुं पत्नींतव केशवकाङ्क्षति । नारायणस्तथेत्युक्त्वा प्रविशेत्याह राघवम्

अथ प्रविश्य भवनं लक्ष्मीं वीक्ष्य नमस्य च ।
विनयावनतो भूत्वा वाचमाह सुचारिणीम्
कृतार्थोऽस्मि न सन्देहो वद त्वं किं तु मन्यसे ॥ ४५ ॥

श्रीदेव्युवाच ।

त्वं युवाकामरूपश्च रूपवानसि राघव । सीता सा चारुसर्वाङ्गी तव पत्नी तया भवान्
वियुक्तोऽस्ति पुरा चासीदतीव विरहाकुलः । ममापि वद सर्वं तदथवा न चलप्स्यसि

सहासान्यथ वाक्यानि यूनां चित्तहराणि च ।
श्रुत्वा तु तानि सर्वाणि रामभद्रो यतात्मवान् ॥ ४८ ॥

निर्गन्तुं काङ्क्षते तत्र आनम्यतन्मुखाम्बुजम् । स्मरवाणेन पद्मेन सम्पीड्य रघुशेखरम्
अन्वेव निर्ययौ देवी पद्मा पद्मवनप्रिया । एकपत्नीव्रतं ज्ञात्वा रामं ते समुपागमन् ॥
अथ वेपितसर्वाङ्गं स्खलत्पदगतिं नृपम् । शिवनारायणौ दृष्ट्वा विस्मयं परमं गतौ
अहोऽस्य दृढिमाचित्ते मायिनोऽप्यवशात्मनः । धैर्यं पश्येहनियतंतेनरामःसुकीर्तिमान्
सर्वतःशिवमेवास्य नाशिवं विद्यते क्वचित् । अथ रामोवचःप्राह गच्छेऽहंभगवन्प्रभो ! ॥
अनुज्ञातोऽथ हरिणा पुष्पकेण स राघवः । स मुनिःसहशम्भुश्च सहनारायणो ययौ ॥
लोकालोकं गतः शीघ्रं ततः स्वादूदधिंगतः । ततो द्वीपसमुद्रांश्च जम्बूद्वीपं पुनर्गतः ॥
भरद्वाजाश्रमपदे तस्थिवान्गौतमीतटे । अथ स्नात्वा महानद्यां भरद्वाजो मुनीश्वरः ॥
शिष्यैः श्रीमान्परिवृतः पुष्पकं दृष्ट्वान्मुनिः। तत्र रामं महाबाहुं शिवनारायणावृषीन्
यथावत्पूजयित्वा तु तानुवाच महामुनिः । ममाश्रमपदे यूयं भोक्तुमर्हथ सत्तमाः ॥
रामस्तु मुनिवाक्येन तथेत्याह कथञ्चन । अथ स्नात्वा महानद्यां कृत्वादेवादि तर्पणम्

भोक्तुकामं तदा रामं वसिष्ठो वाक्यमुक्तवान् ।
धर्मत्यागो भवेद्राम न श्राद्धं क्रियते यदि ॥ ६० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीराम उवाच ।

अमायां ग्रहणे तीर्थे व्यतीपातेऽथ संक्रमे । व्यतीतं यदि चेच्छ्राद्धं भगवन्क्रियते पुनः ॥
नित्यश्राद्धं पुनर्नैव कुर्यादिति वचस्तव । यथा ममैव मातॄणां मरणे समुपस्थिते ॥
आशौचे च समायाते नित्यश्राद्धं न वै कृतम् । व्यतीपातादि कालेषु कृतन्तु वचनात्तव

वसिष्ठ उवाच ।

एते हि मुनयः सर्वे तथा शम्भुरयं द्विजः । एतन्मुखादशेषेण निर्णयस्तु भविष्यति ॥
सह सर्वे विनिश्चित्य मुनयः शम्भुमब्रुवन् । वदास्माकमशेषं त्वं द्विजवर्य ! महानसि ॥

शम्भुरुवाच ।

त्यक्तव्यं यच्च वै श्राद्धं पुनः कर्तव्यमेव च । सूतके समनुप्राप्ते विघ्नेषु च वदाम्यहम्
मासिकान्युदकुम्भानि श्राद्धानि सकलानि च । प्रतिसाम्वत्सरंश्राद्धं सूतकानन्तरं विदुः

त्यक्तान्यन्यानि यावन्ति सूतके विघ्नसम्भवे ।
अनन्तरं हि कार्याणि सर्वाणीति न संशयः ॥ ६८ ॥
मासिकानि समस्तानि श्राद्धं प्रत्याब्दिकं तथा ।
सूतकानन्तरं कार्यं विघ्नेऽन्यस्मिन्यतोऽन्यथा ॥ ६९ ॥

एकादश्यां कृष्णपक्षे कर्तव्यं शुभमिच्छता । तत्र व्यतिक्रमे हेतावमायां क्रियते तु तत् ॥
यथोत्तरदिनेष्वेव कर्तव्यं यद्यविघ्नतः । कृष्णपक्षे त्वमायां तु कर्तव्यं राम ! नो कृतम्
मृताहस्य यदामासो न ज्ञायेत कथञ्चन । मार्गशीर्षेऽथवा माघे श्राद्धं तद्दिवसे स्मृतम्
यदा तु वासराज्ञानं मासस्य ज्ञानमेव च । अमायामेव तन्मासे श्राद्धं सांवत्सरं भवेत्
दिनमासापरिज्ञाने प्रोषितस्य मृतस्य च । तत्तिथ्यां तद्दिनं ग्राह्यं तत्राज्ञानं यदा भवेत्

आश्विनामा च मार्गामा माघामा च दिनत्रयम् ।
तत्र वान्यतमं ग्राह्यं दिनमासाप्रतीतितः ॥ ७५ ॥

वृद्धिसप्तमसीमन्त प्रेताश्राद्धानुमासिकम् । नित्योदकुम्भश्राद्धं च मासेस्युरधिकेऽपि च
ग्रहणे पुत्रजन्मादौ कर्मण्यपि च शान्तिके । सङ्कल्पिते च सर्वस्मिन्नधिमासो न दुष्यति

रोगी यदा मनुष्यः स्याच्छ्राद्धकर्मण्युपस्थिते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भार्यां वा भ्रातरं वापि शिष्यं वापि नियोजयेत् ॥ ७८ ॥
तस्याभावेन हानिः स्यात्कर्मणः श्राद्धसंज्ञिनः ।
नित्यश्राद्धे यथाशक्ति भोक्तारं तु नियोजयेत् ॥ ७९ ॥
अमावास्या मासिकं च मृताहव्यतिरेकि यत् ।
स्वयं कर्मण्यशक्तश्चेत्सुतं विप्रं नियोजयेत् ॥ ८० ॥
राजकार्यनियुक्तस्य दासग्रहणवर्तिनः । व्यसनेषु समस्तेषु श्राद्धंविप्रेण कारयेत् ॥८१
प्रातःकाले तुन श्राद्धं प्रकुर्वन्ति द्विजोत्तमाः । नैमित्तिकेषु श्राद्धेषु न कालनियमःस्मृतः
ग्रहादिव्यतिरिक्तस्य प्रक्रमःकुतपःस्मृतः । कुतपादथवाप्यर्वागासन्नकुतपो भवेत् ॥८३
मासेमासे यथाश्राद्धेऽपराह्णस्पृग्विधीयते । अपराह्णव्यापिनी स्यादुभयत्र यदा त्वमा
क्षये पूर्वा तु कर्तव्या वृद्धौ साम्ये परा स्मृता ।
अमावास्या तु या हि स्यादपराह्णद्वये समा ॥८५॥
क्षये पूर्वा परावृद्धौ साम्येऽपि च परा भवेत् ।
क्षीणस्तु चन्द्रमा यत्र तत्र श्राद्धं तु पार्वणम् ॥ ८६ ॥
अमाष्टभागे सूक्ष्मोऽसौ भूताष्टांशे स नास्ति चेत् ।
मध्याह्नव्यापिनी सा स्यादेकोद्दिष्टे तिथिर्भवेत् ॥ ८७ ॥
सायाह्नव्यापिनी या स्यात्पार्वणे सा तिथिर्भवेत् ।
अल्पापराह्णगा याऽमा ग्राह्या श्राद्धादिके भवेत् ॥ ८८ ॥
मृताहे त्रिमुहूर्ता च सायङ्काले तिथिर्भवेत् । परे ह्यस्तङ्गता यत्र त्रिमुहूर्तं तु पूर्ववत् ॥
तत्रापरेद्युः श्राद्धं स्याज्ज्येष्ठपुत्रस्य नाशनम् । अमाश्राद्धं यथाकुर्यान्मृताहे समुपस्थिते
मध्याह्नव्यापिनी तत्र ह्यद्विजस्य विधीयते ॥ ९१ ॥

राम उवाच ।

श्राद्धक्रममशेषेण मर्त्यकर्मक्रमं तथा । प्रासङ्गिकानां धर्माणां निर्णयं वक्तुमर्हसि ॥९२

शम्भुरुवाच ।

श्राद्धस्य दिवसेप्राप्ते पूर्वेद्युर्नियमान्वितः । निमन्त्रयीत विप्रेन्द्रान्विप्रलक्षणसंयुतान् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकभुक्तं ब्रह्मचर्यमन्त्यजाद्यैरभाषणम्। दन्तधावनमभ्यङ्गनखकेशनिकृन्तनम् ॥ ९४ ॥
कर्ता कुर्वीत पूर्वेद्युस्त्यक्त्वाचैव परेऽहनि । गृह्णीत नियमानुक्तान्सर्वमेतत्परित्यजेत् ॥
त्रिकालंचैव पूजाचेत्प्रातर्देवं यजेत्स्वकम् । अरुणोदयवेलायां करोति यदि पूजनम् ॥

अधःशायी तथाभूतः प्रातरुत्थाय कर्मवित् ।
प्रातस्त्यमपि यत्कर्म तत्कृत्वा स्नातपूर्वकम् ॥ ९७ ॥

ऋणत्रयविनिर्मुक्तो यास्यति ब्रह्मतत्परम् । सूर्यस्योदयवेलायां शिवपूजां करोति यः ॥
सूर्येण समतेजस्वी शिवलोके महीयते । उदिते भास्करे पश्चाद्घटिकान्तरपूजनम् ॥९९॥
रुद्रेण समतेजस्वी शिवलोके महीयते । द्वितीयघटिकायां तु यदि पूजनमीशितुः ॥
वायुना समतेजस्वी शिवलोके महीयते । तृतीयघटिकायां तु शिवपूजां समाचरेत् ॥
कुवेरसमतेजस्वी शिवलोके महीयते । चतुर्थीपञ्चमीषष्ठीसप्तमीघटिकासु यः ॥ १०२ ॥
शिवं पूजयते भक्त्या शिवलोके मरुत्समः । तत्काल एव क्रियते पूजांयत्कालनोदिता
यथाप्रतिज्ञमथवा गृहीतनियमो यजेत् । उपचारेषु शक्त्या वै नियमं परिपालयेत् ॥

नियमातिक्रमे वापि यागश्च स्याद्विभोर्यदि ॥ १०५ ॥

श्रीराम उवाच

क्व पूजा देवदेवस्य शङ्करस्यामितौजसः । स्मरणात्पापनाशस्य स्मरणान्मोक्षदस्य च
शिवस्य शिवरूपस्य शिवतत्त्वार्थवेदिनः । सोमस्य सोमभूपस्य सोमनेत्रस्य राजितुः
वेदमूर्तेरमूर्तेश्च वेदसारस्य वेदिनः । वेदवेदांगवित्तस्य वेद्यावेद्यस्य योगिनः ॥१०८॥
गोक्षीरसमदेहस्य गोक्षीरस्नानमोदिनः । गोपालिनस्त्रिनेत्रस्य त्रयीनेत्रस्य मायिनः ॥
प्रश्नमध्ये तथा रामं शिवज्ञानमथादिशत् । स्थाणुभूत इवासीनो नासाग्रन्यस्तलोचनः

आनन्दनिष्यन्दविलोचनाश्रुप्रवाहसंस्पृष्टकपोलदेशः ।
दधार देवं गिरिशं हृदम्बुजे गोक्षीरसुस्निग्धसुचारुगात्रम् ॥ १११ ॥

प्रतिबिम्बमधो गात्रे रामस्य समदृश्यत । दृष्ट्वैवविम्बितं शम्भुं चतुर्बाहुं त्रिलोचनम्
विस्मयं परमं याताःसर्वे मुनिहरीश्वराः । शम्भोर्वक्षःस्थितं रामंदृष्ट्वा दीप्ताकृतिंशुभम्
तूर्णीं बभूवुर्यामार्द्धमथ राममुदैक्षत । स्वप्रश्नमनुसन्धाय प्राह सर्वं वदेति च ॥११४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शम्भुरुवाच ।

अचले या सदा पूजा चलेवापि यथेच्छया । लिङ्गसम्पूजनं मुख्यमलाभेप्र तिमादिषु ॥
अधिकारविशेषेण तत्र तत्रापि पूजनम् । विगुणं सगुणं वापि सफलं लिङ्गपूजनम् ॥
प्रतिमादि कृतापूजा विगुणा सफला न हि । अचलेवाचलेवापि पूजालिङ्गे प्रशस्यते ॥
चलस्य पूजनं वक्ष्ये स्थापनोद्वासने तथा । ते उभेन विजानाति कश्चिन्मुनिरपि क्वचित्
स्थापयन्ति हृदब्जे वै गोपयन्ति यजन्ति च । उद्वासयन्ति देवेशं शङ्करं योगिनःसदा
क्रियांत्रातीवहोतृणां वह्नौ देवं त्रियम्बकम् । पूजकानामशेषाणां शिवलिङ्गे महेश्वरम्
लिङ्गस्य स्थापनं पूजा उद्वासनमथैव च । धारणं शङ्करस्यैव लिङ्गमेव महेश्वरम् ॥
सज्जिकं परमोत्कृष्टं स्वर्णचैव विनिर्मितम् । राजतैर्वादलैःकार्यं राजतैर्वैणवैस्तु यत् ॥
लतासूत्रैरथोवापि रचितं दारुणाऽथवा । वस्त्रेण वाऽथ रचितं मृदा विरचितं भवेत्
तत्र संवेष्ट्य वस्त्रेण सुगन्धेनसमन्विते । धौतवस्त्रयुगे शुद्धे मृद्वासनसमन्विते ॥१२४
शीतोष्णरहिते पादचतुष्टयसमन्विते । प्रावृत्तिच्छेदनोपेते कृमिकीटविवर्जिते ॥१२५

धौतेन मृदुवस्त्रेण सर्वतो वेष्ट्य तं शिवम् ।
विन्यस्य सज्जिकामध्ये प्रावृत्य च पुनर्विभुम् ॥१२६॥

एषा हि सज्जिकारामदेवस्याग्रेऽतिकीर्तिता । तस्य च स्थापनंपाठोरहस्ये च महेशितुः
अथवा भित्तिमूलेस्याद्देववेद्यामथापि वा । सुरक्षिते तथादेशे रक्षकं च नियोजयेत् ॥
प्राणादेरविनाभावं कुर्वीत नियमैःसह । एतद्धि राजसंप्रोक्तं स्थापनं परमात्मनः ॥
सात्त्विकं स्वसमीपस्थं धारणं तामसं पुनः । धारणं गात्रसंस्पर्शमशेषदेहगोपनम् ॥
मस्तकेधारणं मुख्यं ब्रह्मणा च तथा कृतम् । विन्यस्य मुकुटस्यान्ते धारणं शुभमुच्यते

ललाटे धारणं शस्तं यथा लक्ष्म्या धृतं शुभम् ।
बाणेन च धृतं मूर्ध्नि दक्षिणोरसि वा पुनः ॥ १३२ ॥

कर्णे च हरकर्णेन मुनिना परमर्षिणा । विनिर्भिद्य तथागात्रं लोहस्थानं प्रकल्प्य च
धारयन्ति तथालिङ्गं राक्षसाःकेचिदुत्तमाः । अनिकेतनमर्त्यानामशक्तानां शिरोधृतिः ॥
अधमाधममाख्यातं नीविबन्धादि धारणम् । तेषु तूच्छिष्टसंप्राप्तौ मस्तके धारणंभवेत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अधमाधमवृत्तीनां सदा वै लिङ्गधारणम् । पापिनामपि चाश्चर्यं यमलोके न विद्यते ॥

श्रीराम उवाच ।

चित्रगुप्तेन लिखिता ललाटे या लिपिर्दृढा । तया तु लिप्या नियतं नरकं कथमन्यथा

करोति पूजनं शम्भोः पापं नाशयते कथम् ॥ १३७ ॥

शम्भुरुवाच ।

पापं नाशयते कृत्स्नमपि जन्मशतार्जितम् । भर्त्सनात्सर्वपापानांस्मरणाच्च महेशितुः

भस्मेति पदमाख्यातं तस्य धारणमुत्तमम् । यथाविधि ललाटे वै वह्निवीर्यप्रधारणात्

नाशयेल्लिखितां यामीं पटस्थामिव हव्यभुक् । कर्णोपरि कृतंपापं नष्टंस्यान्मुखधारणे ॥

कण्ठे च धारणात्कण्ठभोगादि कृतपातकम् । बाह्वोर्बाहुकृतं पापं वक्षसि मनसाकृतम्

नाभ्यां शिश्नकृतं पापं पृष्ठे गुदकृतं तथा । पार्श्वयोर्धारणाद्राम परस्त्र्यालिङ्गनादिजम्

तद्भस्मधारणं शस्तं सर्वत्रैव त्रिपुण्ड्रकम् ।

ब्रह्मविष्णुमहेशानां त्र्यग्नीनां च धारणम् ॥ १४३ ॥

गुप्त्यै लोकत्रयाणां च धारणं तेन वै कृतम् । धृतं पञ्चदशस्थानेशुद्धंभस्माभिमन्त्रितम्

कोष्ठयुग्मे बाहुयुग्मे कोष्ठोपरियुगे तथा । धारणं सर्वदेहानां पूजायै धर्मसंमतम् ॥

भस्माशना भस्मशय्या भस्मोद्धूलितविग्रहाः ।

भस्मस्नानाः सदापापैर्मुच्यन्ते नात्र संशयः ॥ १४६ ॥

आदौ ब्राह्मणदीक्षायां त्रियायुषमिति स्मृतम् ।

प्रसवे च मनुष्याणां भूतावेशेऽपि रक्षकम् ॥ १४७ ॥

सर्पादि विषहान्यर्थं सर्वेषां साधनं त्विदम् । अपि वा वैष्णवो मर्त्य अथवापीतरोजनः

भस्मस्नायी भस्मयुक्तः कर्मस्वधिकरोति वै ॥ १४९ ॥

श्रीराम उवाच ।

भस्ममाहात्म्यमादौ मे भस्मायुष्यं हि कस्य वै । कथं हिरक्षते ह्येतत्सर्वमेतद्वदस्व मे ॥

शम्भुरुवाच ।

आयुष्यवर्द्धनेहेत्रिविधस्यापि देहिनः । पापघ्नं शीतमुष्णं च स्पर्शाच्छिवपदंप्रदम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्र ते कीर्तयिष्यामि चेतिहासं पुरातनम् । आसीद्वासिष्ठवंश्यस्तु धनञ्जय इति द्विजः
तस्य भार्याशतं चासीद्रूपलावण्यसंयुतम् । तासामेका तु सुषुवे शामाका करुणं मुने
भार्याणां सङ्ख्यया राम ! सुताश्चासंस्तपस्विनः ।
पित्रा विभागस्तेषां च विषमः परिकल्पितः ॥ १५४ ॥
भ्रातृणां च तथाह्येव वैरबन्धो महानभूत् । नराणामेकजातीनां वैरं नियतमेव तु ॥ १५५
अथासौ करुणो गत्वा भवनाशिनिकातटे । नानामुनिगणैःसार्द्धं नरसिंहदिदृक्षया ॥
नृसिंहदर्शनार्थन्तु ब्राह्मणेन तु केनचित् । उत्कृष्टफलजम्बीरमानीतं रूपगन्धवत् ॥ १५७
करुणस्तु तदादाय व्यजिघ्रत्फलमुत्तमम् । तत्रा स्थिता द्विजगणाः शापेन तमोजयन्
मक्षिका भव पापात्मन्वर्षाणां शतमप्यतः । शापावासनं भविता दधीचेन महात्मना ॥
अथ मक्षिकतां प्राप्तो भार्यामिदमभाषत ।
मक्षिकात्वमहं प्राप्तो मां शुभे ! पालयस्व भोः ॥ १६० ॥
इत्युक्त्वा स तथा भूतोबभ्राम च ततस्ततः । अथैवंविधमाज्ञाय ज्ञातयः पापनिश्चयाः
तद्वधे यत्नमास्थाय तैलमध्ये ह्यपातयन् । मृतं पतिमथादाय दुःखिता सा कृशोदरी ॥
तद्दुःखशमनार्थाय प्राह देवी त्वरुन्धती । अमुं सञ्जीवयाम्यद्य भस्मनैव शुचिस्मिते ॥
अथाग्निहोत्रजं भस्म अरुन्धत्यै न्यवेदयत् । मृत्युञ्जयेन मन्त्रेण मृतजन्तौ तथाऽक्षिपत्
मन्दवायुं तथा चक्रे व्यजनेन शुचिस्मिता । उदतिष्ठत्ततो जन्तुर्भस्मनोऽस्य प्रभावतः ॥
ततो वर्षशते पूर्णे ज्ञातिरेको ह्यमारयत् ।
मृते भर्तरि सा साध्वी दुःखिता च शुचिस्मिता ॥ १६६ ॥
दधीचं नाम विप्रेन्द्रं महामाहेश्वरं मुनिम् । जगाम शरणं साध्वी प्राह विप्रस्तपोधनः
त्रियायुषाविहीनं तु जमदग्निं तपोनिधिम् । भस्मैवजीवयामास कश्यपं च तथाविधम्
देवानपि तथाभूतान्मामप्येतादृशं पुरा । तस्मात्तु भस्मना जन्तुं जीवयामि तवानघे ! ॥
इत्येवमुक्त्वा भगवान्दधीचो महेश्वरं वै शरणं जगाम ।
भस्माभिमन्त्र्याथ करे गृहीत्वा सञ्जीवयामास धवं सुसाध्व्याः ॥ १७० ॥
महेशस्य करस्पर्शाद्विशापः करुणोऽभवत् । स्वरूपं च ततो गत्वा स्वमाश्रमपदं ययौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दधीचमपि सा साध्वी गृहमानीय भोजने । प्रार्थयामास विप्रर्षिमुक्तवानथ स द्विजः ॥
भुक्तवत्यथविप्रेन्द्रे कोटिशिष्याःसमागताः। अथ देवाःसमायाताभस्मोद्धूलितविग्रहाः
नमस्कृत्य दधीचं तु पप्रच्छुः शिवकाङ्क्षया ॥ १७२ ॥

देवा ऊचुः ।

अस्माकं तु पुराज्ञानंनष्टमासीन्महामते । गौतमस्य तु भार्यां वै दृष्ट्वाकामातुरा वयम्
तथा च धर्षिता देवी विवाहकृतमङ्गला । तां वै कामयमानानां नष्टं ज्ञानमभूच्च नः ॥
ततः सर्वे वयं भीता गता दुर्वाससं मुनिम् ।
स उवाचाधुना सर्वमपनेष्यामि वो मलम् ॥ ७६ ॥
शतरुद्रियमन्त्रेण मन्त्रितं शम्भुना स्वयम् । ममापि दत्तं तेनैव ब्रह्महत्यादिशान्तये ॥
इत्येवमुक्त्वा दुर्वासा दत्तवान्भस्म चोत्तमम् । अथ तद्वचनात्सर्वे वयं विकृतचेतनाः
शतरुद्रियमन्त्रेण भस्मोद्धूलितविग्रहाः । निर्धूतपातकाः सर्वे संवृत्तास्तत्क्षणेन हि ॥
आश्चर्यमेतज्जानीमो भस्मसामर्थ्यमीदृशम् ॥ १८० ॥

दधीच उवाच ।

शैवस्य भस्मनः शक्तिं संक्षेपेण वदामि वः । विस्तरेण न शक्येत वक्तुं वर्षशतैरपि ॥
अत्रवः कीर्तयिष्यामि पुरा वृत्तं तु देवयोः । हरिशङ्करयोः सर्वे ब्रह्महत्यादिनाशनम् ॥
पुरा चैकार्णवे घोरे ब्रह्मणः प्रलये सति । महाविष्णुस्तु भगवाञ्छेते स्म प्रलयाम्भसि
तस्यपार्श्वद्वयं प्राप्य ब्रह्माण्डानां शतद्वयम् ।
विंशतिः पादयोः पार्श्वे विंशतिर्मस्तकान्तरे ॥ १८४ ॥
नासामौक्तिकभावेन ब्रह्माण्डमदधात्प्रभुः । तन्नाभिमण्डले केचिल्लोमशाद्या मुनीश्वराः
तपस्तपन्तः सुमहदीश्वरं पर्युपासते । अथ विष्णुर्महातेजाश्चिन्तामाप सिसृक्षया ॥
ध्यानयोगपरो भूत्वा न किञ्चित्पर्यपश्यत । अथ दुःखेन महता रुरोदोच्चैः पुनः पुनः ॥
एतस्मिन्नन्तरे दीप्तिः काचिल्लोकविलक्षणा ।
दृष्ट्वा च हरिणा भीत्या लोचने च निमीलिते ॥ १८८ ॥
आगम्यमानो गोक्षीरसमतेजाः सुगात्रवान् । संग्रथ्य कोटिब्रह्माण्डदामयुग्मं करद्वये ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दधानमुरसा धामकोटिब्रह्माण्डकल्पितम् । ब्रह्माण्डमेकं निपतदुत्पतच्च करद्वये ॥१९०॥
सर्वाभरणसंयुक्तं तथाभूतंतमव्ययम् । विष्णुस्तुष्टाव चादृष्ट्वा दर्शनाय च तस्य वै ॥

विष्णुरुवाच ।

नमस्ते देवदेवेश नमस्ते शाश्वताव्यय । न जानेऽहं भवन्तंभोस्त्वं च वेत्सि नमोनमः ॥

जानामि न च ते भावं दुर्निरीक्ष्या च ते द्युतिः ।
माणिक्यकुण्डलं हेमदामजालविभूषितम् ॥ १९३ ॥

रत्नाङ्गुलीयं सुभगं बाहुकोष्ठविभूषणम् । तनुरक्तोत्तमाकीर्णदीप्तायतविलोचनम् ॥१९४
बाणलोचनसङ्काशं भाललोचनमव्ययम् । कन्दर्पकार्मुकभ्रान्तिजनकभ्रुवमीश्वरम् ॥
स्निग्धाधोन्नतचार्वङ्गनासमच्छकपोलकम् । मन्दस्मितं प्रसन्नास्यं विभुं बालेन्दुदर्शनम्
विज्ञानरक्तवसनवेदकल्पितभूषणम् । शरणं त्वां प्रपन्नोऽस्मि चक्षुर्मे दीयतां विभो ! ॥
दीनान्धकृपणाज्ञाननष्टस्य शरणं भव । अथ दिव्यं ददौ चक्षुः स्वात्मदर्शनशक्तिमत् ॥

अथ दृष्ट्वा हरिः शम्भुं त्रिनेत्रं पुरतः स्थितम् ।
को भवानित्युवाचाथ न जाने त्वां महायशाः ॥
प्रणामं केवलं कर्तुं शक्तोऽस्मि न हि वेदितुम् ॥ १९९ ॥

सदाशिव उवाच ।

तव ज्ञानं प्रदास्यामि कुरु स्नानं च वारुणम् ।
भस्मस्नानं ततः पश्चात्ततो ज्ञानं वदाम्यहम् ॥ २०० ॥

श्रीभगवानुवाच ।

मत्स्नानयोग्यं सलिलं न च तिष्ठति कुत्रचित् ।
इत्युक्तोऽथ निषण्णस्तु ब्रह्माण्डासक्तविग्रहः ॥२०१॥

ऊर्ध्वभ्रजले स्नानं न योग्यमभवद्धरेः । शम्भुर्जहास स्नानाय जलमत्यधिकं त्वहो ॥

दधीच उवाच ।

अथ देवः शिवो विष्णुं भालाक्षेण व्यलोकयत् ।
विलीनसूक्ष्मावयवं वामाक्षेण व्यलोकयत् ॥ २०३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः सूक्ष्मतनुर्विष्णुःशीतदेहश्च शम्भुना । उक्तश्च स्नाहिभो विष्णो ह्रदएष विकल्पितः
ततो ह्रदेहरिः स्नातुं हराङ्के कल्पितेतदा । प्रवेष्टुं न शशाकाथगम्भीरे तद्ध्रदस्य तु ॥
हरिराह च नो पन्थाह्रदस्यास्य प्रवेशने । मार्गो मे दीयतां देव तमथो शम्भुरब्रवीत् ॥
कोटियोजनगम्भीरं जलमेतन्महत्पुरा । निविष्टस्यैव भवत ऊरुदघ्नं जलं विभो ! ॥

इदानीं तिष्ठतश्चापि न प्रवेशो ह्रदे कथम् ।
अष्टाङ्गुलप्रमाणोऽयमूरुस्तस्मिन्ह्रदे च मे ॥ २०८ ॥

पश्यामि प्रविशत्वं चपादस्पर्शंददामि ते । वाक्यमेकं तु सोपानं वेदंमद्वाक्यनिस्सृतम्

हरिरुवाच ।

शब्दारोहणसामर्थ्यं कस्यापीह न विद्यते । मूर्तस्य रोहणं शक्यग्रहणं वा कथंश्रुतेः ॥

शम्भुरुवाच ।

पुंसः शक्तिर्न वस्तूनां धारणारोहणादिषु । गृहाणेमं महावेदं जग्राह हरिरप्यथ ॥२११॥
नम्रकरश्चाशक्तेर्हि पतन्निव जनार्द्दनः । न च शक्यं मया धर्तुमिति प्राह शिवं हरिः ॥
शिवः प्रहस्य निपतीपात्यतेव (?) महाह्रदे । तत्सोपानमथारुह्य स्नातुमर्हसि केशव ॥

दधीच उवाच ।

वेदे सोपानभूते हि ऊरुदघ्नोपलब्धिनि । तत्र स्नात्वा स विधिना बहिरुत्तीर्य चोक्तवान्

स्नातोऽस्मि किमतः कार्यं शम्भुराह हरिं ततः ।
ध्यायसे हृदये किं त्वं न च किञ्चिद्वदस्व मे ॥ २१५ ॥

हरिर्न किञ्चिदित्याह तमथो शम्भुरुक्तवान् । भस्मस्नानेन संशुद्धोवेत्स्यसे परमं शुभम्

दीक्षितस्य हि तच्छस्तं तद्रक्षां करवाण्यहम् ॥ २१७ ॥

दधीच उवाच ।

स्ववक्षःस्थितभस्मैकं नखेनादाय शङ्करः । प्रणवेनाभिमन्त्र्याथ गायत्र्या ब्रह्मभूतया ॥
अङ्गुलिभ्यामुपादाय शिवः पञ्चाक्षरेण वै । हरिमस्तकगात्रेषु सर्वेष्वपि समाक्षिपत् ॥

शान्तदृष्ट्या निरीक्ष्याथ जीवेत्याह हरिं हरः ।
ध्यायस्व किं ते हृदये स च ध्यानपरोऽभवत् ॥ २२० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपश्यद्धृदये दीपं दीर्घाकारमतिप्रभम् । हरिराह शिवं साक्षाद्दीपो दृष्टो मयेति च ॥
शिवः प्राह न ते ज्ञानं परिपक्वमथोहरे । भस्म भक्षय ते ज्ञानं समग्रं सम्भविष्यति ॥

हरिरुवाच ।

भक्षयिष्ये शुभं भस्मस्नातोऽहं भस्मनापुरा । दृष्ट्वेश्वरं भक्तिगम्यं भस्माभक्षयदच्युतः
तत्राश्चर्यमतीवासीत्पक्वबिम्बसमद्युतिः । वासुदेवः शुद्धमुक्ताफलवर्णोऽभवत्क्षणात् ॥

ततः प्रभृति शुक्लोऽसौ वासुदेवः प्रसन्नवान् ।
पुनर्ध्यानपरो भूत्वा दीपमध्ये च पूरुषम् ॥ २२५ ॥

शुद्धस्फटिकसङ्काशं त्रिनेत्रं द्विभुजं शिवम् । वरदं दक्षिणे हस्ते वामे चाभयदं विभुम् ॥
पञ्चवर्षीयवपुषं शरच्चन्द्रयुतद्युतिम् । माणिक्यकुण्डलं हेमदामजालविभूषितम् ॥२२७
रत्नाङ्गुलीयसुभगं बाहुकोष्ठसुभूषणम् । तनुरक्तोष्ठमाकर्णदीर्घायतविलोचनम् ॥२२८
बाणलोचनसङ्काशं भाललोचनमव्ययम् । कन्दर्पकार्मुकभ्रान्तिजनकभ्रुवमीश्वरम् ॥
स्निग्धोन्नतसुचावङ्कनासमच्छकपोलकम् । मन्दस्मितं प्रसन्नास्यं बालेन्दुदर्शनंविभुम्
विज्ञानरक्तवसनं वेदकल्पितनूपुरम् । वामाङ्गुलीयमध्यस्थमणिप्रणवमव्ययम् ॥२३१

दृष्टवानथ तं विष्णुः कृतकृत्योऽभवत्तदा ।
अथाह शम्भुर्भो विष्णो हृदि दृष्टं त्वया किमु ॥ २३२ ॥

हरिराह पुरा दृष्टः पुरुषः शान्तविग्रहः । इत्युदीर्य महाविष्णुः शिवपादे पपात ह ॥२३३

हरिरुवाच ।

न शक्तिं भस्मनो जाने प्रभावं वा कुतस्तव ।
नमस्तेऽस्तु नमस्तेऽस्तु त्वामेव शरणं गतः ॥ २३४ ॥

सदाशिव उवाच ।

वरं वृणु महाभाग ! मनसायं त्वमिच्छसि । शिववाचमथाकर्ण्य हरिर्वव्रे वरोत्तमम् ॥

हरिरुवाच ।

त्वत्पादयुगले शम्भोभक्तिरस्तु सदा मम । अथ दत्त्वा वरं शम्भुरिदमाह वचोहरिम् ॥

भस्मधारणसम्पन्नो मम भक्तो भविष्यसि ॥ २३६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दधीच उवाच ।

इत्थमुक्तं महाज्ञानं भस्मसम्भवमादितः । तस्माद्यूयं सुराः सर्वे धारयध्वं तदादरात् ॥
विस्मयोत्फुल्लनयनादेवाऽऽश्वासंस्तदस्त्विति। यइदंशृणुयान्नित्यंपुण्याख्यानमनुत्तमम्
विमुक्तः सर्वपापेभ्यो यात्यसौ शाङ्करं पदम् ॥ २३६ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे भस्ममाहात्म्ये पञ्चोत्तरशततमोऽध्यायः ॥ १०५ ॥

---

# षडधिकशततमोऽध्यायः

## भस्ममाहात्म्यवर्णने कस्यचिच्छुनो मुक्तिः ।

शुचिस्मितोवाच ।

आयुष्यवर्द्धनं भस्माशनं दृष्टं महामुने ! । परलोकगतिं दातुं शक्तमेतं वदस्व मे ॥ १ ॥

दधीच उवाच ।

अत्र ते कथयिष्यामि इतिहासं पुरातनम् । चित्रगुप्तयमाभ्यां च यद्विख्यातं बभूव ह ॥
मिथिलायां पुरा कश्चिच्छुनः पर्यटते क्षुधा ।
पुरा जन्मशतात्पूर्वं ब्राह्मणः पापनिश्चयः ॥ ३ ॥
पूर्वे वयसि वेदाढ्यः शास्त्राढ्यश्च सुबुद्धिमान् ।
स स्नातुं जाह्नवीं गत्वा स्नानं कृत्वा पितॄनपि ॥ ४ ॥
देवानृषीन्समभ्यर्च्य ययौ प्राक्तलिकापुरम् । प्रतिश्रयमथोचक्रे ब्राह्मणस्य निवेशने ॥
तत्रैकाक्षत्रियसुता यौवनस्था हतप्रिया । भ्रष्टराज्या च षट्कोटिनिष्कद्रव्येण संयुता
भुक्त्वाऽथ शयितं विप्रं सर्वावयवसुन्दरम् ।
रात्रौ चन्द्रोदये शुद्धे ज्योत्स्नाहसितदिङ्मुखे ॥ ७ ॥
ब्राह्मणाभ्याशमागत्य तमुदीक्ष्येदमब्रवीत् । कुतस्त्वमागतो विप्र कं वादेशं गमिष्यसि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्राह्मण उवाच।

अकालचर्या सर्वेषां शङ्कामुत्पादयेद्ध्रुवम्। वयःस्थयोर्मिथो वादोरहस्ये दास्यमन्दिरे

क्षत्त्रियोवाच।

कथाप्रसङ्गे यात्रायां तीर्थे देशादिविप्लवे। दुर्भिक्षे ग्रामदहने रहोवादो न दूषितः॥

प्रतिश्रयस्तु मद्गेहे भवतैव पुराकृतः। मद्गेहवासिनी चाहं न शङ्कात्विह कस्यचित्

ब्राह्मण उवाच।

तूष्णीस्भावो मया कार्यो गच्छ त्वं शीघ्रमग्रतः।
इत्युक्त्वा ब्राह्मणेनासौ मनसेदमचिन्तयत्॥ १२॥
अनेन सङ्गमो मह्यं यथा भूयात्तथाविधि।
रोदनं तु करिष्यामि तथा यास्यति सान्त्वितुम्॥ १३॥

मां च सान्त्वयितुंप्राप्तो मां समुत्थापयिष्यति। अहमुत्तिष्ठमानैवदोर्लताकण्ठसङ्गिनी

कुचयुग्मेन तद्गात्रं स्पर्शयन्ती विमूर्च्छिता।
गतभानां हि मां दृष्ट्वा निषण्णां स्वयमेव सः॥१४॥

उत्सङ्गे मामकं देहं निधास्यति द्विजाग्रणीः। अचेतनेव वसनमपास्य रुदतीव च॥

सुस्निग्धं रोमरहितं पक्वाश्वत्थदलाकृति। दर्शयिष्यामि तत्स्थानं कामगेहं सुगन्धि च

मयैव विलुठन्त्याङ्गे तस्य वस्त्रमपास्यते।
विलुप्य मानसं तस्य करिष्ये स्ववशं द्विजम्॥ १८॥

अदृष्टौ यादृशं चित्तं दृष्टौ नैतादृशं भवेत्। दर्शने यादृशं चित्तं संलापे नैव तादृशम्॥

संलापे यादृशं चित्तं हास्योक्तौ नैव तादृशम्।
हास्योक्तौ यादृशं चित्तं स्पर्शने नैव तादृशम्॥

स्पर्शने यादृशं चित्तं योनिदृष्टौ न तादृशम्। तद्दृष्टौ यादृशंचित्तं योनिस्पर्शे नतादृशम्

बाहुमूलकुचद्वन्द्वस्वयोनिस्पर्शदर्शनात्। कस्य न स्खलते चेतो रेतःस्कन्नं च नोभवेत्

दधीच उवाच।

इति सञ्चिन्त्य मनसा क्षत्त्रियागृहमभ्यगात्। स्वगृहद्वारमासाद्य मन्दं मन्दं रुरोद वै

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चिरं कालं च रुदितं ब्राह्मणः करुणानिधिः ॥ २४ ॥
स्त्रीबालवृद्धातुरराजयोगिनां विषाग्नितोयाद्रिनिपातनादिना ।
दुःखस्य चैवोद्धरणं प्रशस्यते कूपस्य खातेन समं वदन्ति ॥ २५ ॥
इत्थं विचार्य विप्रोऽसौ शुचिर्भूतः प्रसन्नधीः । तस्याः समीपमगमत्तामुवाचततोद्विजः
अलं शोकेन महता इहामुत्रविरोधिना । शरीरशोषणे ह्येतच्चित्तविध्वंसनं तथा ॥२७॥
त्यजशोकमिमं बाले न चार्थः शोचितेन वै । शोकस्य कारणं किंवाथेनेत्थं रुद्यते त्वया
दधीच उवाच ।
एवमुक्ता द्विजेनाथ न सा किञ्चिदुवाचह । मूर्च्छितेवापतद्भूमौ तमदृष्ट्वेव वीक्षते ॥
तामथोत्थापयामास ब्राह्मणः परमार्थवित् । उत्थितोत्थापिता तेन निपपात पुनपुनः
पतितां पतितां विप्रो निषिध्योत्थाप्य तां पुनः । अङ्कमारोपयामास प्रममार्ज विलोचने
अथ सा मूर्च्छितेवाऽऽशुवसनं परिमुच्यतम् । दर्शयन्ती स्तनौ गुह्यं बाहुमूले विलोचने
आलम्ब्य कण्ठे बाहुभ्यां स्तनाभ्यामस्पृशद् द्विजम् ।
चन्द्रातपश्च विशदो मन्दमारुतसम्भवः ॥ ३३ ॥
अथ चिन्तापरो विप्रो नैव कार्यमिदं मम । पितुर्वा मातुरुचितं पत्युर्वाथ गुरोस्तथा
असंबुद्धस्य मे सर्वं विपरीतं विभाति वै । अथ कामः समायातो रहस्येस्थितयोस्तयोः
विव्याध निशितैर्बाणैर्द्विजं कामो दुरात्मवान् ।
स्मरबाणातुरो विप्रश्चिन्तयामास कामुकः ॥ ३६ ॥
इयं सुचारुसर्वाङ्गी कामिनीव प्रदृश्यते । नोचेद्योनिमुखे ह्यस्याः कथं रोमाञ्चसम्भवः
तदेतस्याः कुचस्पर्शात्सर्वं व्यक्तं भविष्यति ।
इति सञ्चिन्त्य मनसा कुचौ योनिं द्विजोऽस्पृशत् ॥ ३८ ॥
साऽपि मूर्च्छितरूपेव मन्दस्मितमुखाऽभवत् । आलिलिङ्ग द्विजं गाढमाननं च चुचुम्बह
तयोरथ सल्लायोगो वर्षाणां शतमप्यभूत् । गते वर्षशते पश्चादेकस्मिन्दिवसे द्विजः ॥
स्नातुं ययौ नदीं प्रातः साऽपि विप्रप्रसङ्गतः ।
स्नानं तत्र तथा चक्रे पुराणं श्रुतवानथ ॥ ४१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कौर्मं समस्तपापानां नाशनं शिवभक्तिदम् । इदं च पद्यं शुश्राव पुराणज्ञेन भाषितम् ॥
ब्रह्महामद्यपः स्तेनस्तथैव गुरुतल्पगः । कौर्मं पुराणं श्रुत्वैव मुच्यते पातकात्ततः ॥
श्रुत्वैतद्वचनं विप्रः पौराणिकमभाषत ।
मया कृतानां पापानां न च सङ्ख्यास्तिऽकाचन ।
अशेषपापसन्दोहनाशनं तदिहोच्यताम् ॥ ४४ ॥

पौराणिक उवाच ।

आराधयस्व देवेशं शङ्करं त्रिदशेश्वरम् । तस्य सम्पूजनाद्विप्र सर्वं पापं विनश्यति ॥
पापमेव तमः प्रोक्तं ज्ञानदीपेन नश्यति । अथवा पूजया विप्र ! समस्ताघविनाशनम् ॥
ज्ञानपूजाविहीनानां नरके पतनं ध्रुवम् ॥ ४७ ॥

दधीच उवाच ।

अथ द्विजो ह्यभिगतः शिवालयमनुत्तमम् । द्रोणपुष्पसहस्रेण पूजयामास शङ्करम् ॥
गृहं जगाम च ततो भोजनं कृतवानथ । विहाय क्षत्रियां विप्रो जगामेष्टां भुवं ततः ॥
हविष्यमन्नमादाय भुक्त्यशक्तेःशिवालयम् । गत्वादीपस्थिताज्येन भोजनं कृतवान्बहिः
अथ मृत्युवशं प्राप्तो यमलोकं जगाम वै ॥ ५० ॥

यम उवाच ।

त्वया कृतानां पापानां केषांचिन्नाशनं पुरा । त्वयैक दिवसे पूजा शङ्करस्य यतः कृता
तव पापसहस्रं च प्रनष्टं भवतो द्विज ! । स्थितानामपि पापानां फलं नरकपातनम् ॥
वर्षकोटिद्वयं विप्र ! श्वानजन्मशतं पुनः । शिवदीपाज्यहरणात्फलं नरकसेवनम् ॥
नरके च स्थितिस्तस्य शतवर्षं सुभीषणम् ।
कुम्भीपाके च काष्ठत्वं भस्म भूत्वा पुनः पुनः ॥ ५४ ॥
वर्षाणां दशकं त्वेवं कृमिभुक्तिः परं दश । पुनश्च दीपवर्तित्वं वर्षाणां च तथा दश ॥
श्लेष्मामेध्यपुरीषेषु मूत्ररेतोह्रदेषु च ।
उन्मज्ज्य च निमज्ज्याथ श्लेष्मविण्मलभोजनम् ॥ ५६ ॥
ततो नरकशेषेण श्वानजन्मशतं परम् । यमवाक्यमिति श्रुत्वा ब्राह्मणो निपपात ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ तस्य प्रियाभार्या पतिचिन्तापराऽभवत् ।
एतस्मिन्नन्तरे तस्याः समीपं नारदोऽभ्यगात् ॥ ५८ ।
नारदस्य पपातासौ पादयोरतिदुःखिता । तामुत्थाप्य मुनिः शुद्धां गतासुषमभाषत ॥
अयि मुग्धे ! विशालाक्षि ! भर्तारं गन्तुमर्हसि ।
भर्ता ते हि विशालाक्षि मृतो बन्धुविवर्जितः ॥ ६० ॥
न रोदितव्यं ते भद्रे ज्वलनं प्रविशस्व भोः ॥ ६१ ॥

ब्राह्मण्युवाच ।

अशक्यं यदि वा शक्यं मया गन्तुं मुने वद । अग्निप्रवेशकालो वै व्यतीतो न भवेद्यथा

नारद उवाच ।

योजनानां शतं त्वेकमितः स्थानात्पुरं हि तत् ।
श्वोदाहः किल विप्रस्य भविता गन्तुमर्हसि ॥ ६३ ॥

अव्ययोवाच ।

दूरस्थितं कायनाथं गन्तुमर्हामि हे मुने । तद्वचस्तु समाकर्ण्य नारदस्तामभाषत ॥६४॥
विपञ्चीनालसंस्थात्वं भव गच्छाम्यहं क्षणात् ।
इत्युदीर्य तदा गत्वा त्वरां चक्रे गतं च तत् ॥ ६५ ॥
देशं नष्टद्विजस्थानं तामुवाचाव्ययां मुनिः । रोदनं नेह कर्तव्यं यदि तत्राग्निमेष्यसि ॥
पापं यदि कृतं भद्रे परपुरुषसेवनम् । एतद्विशुद्धये पुत्रि ! प्रायश्चित्तं समाचार ॥६७॥
तवोपपातकव्रातंनाशो वह्निप्रवेशनात् । नान्यत्पश्यामि नारीणां सर्वपापोपशान्तये ॥
अग्निप्रवेशं मुक्त्वैकं प्रायश्चित्तं जगत्त्रये ॥ ६८ ॥

दधीच उवाच ।

अथ नारदवाक्येन नोदिता सा वचोऽब्रवीत् । अग्निप्रवेशे नारीणां किंकर्तव्यं महामुने

नारद उवाच ।

स्नानं मङ्गलसंस्कारो भूषणाञ्जनधारणम् । गन्धपुष्पं तथाधूपं हरिद्राक्षतधारणम् ॥
मङ्गलं च तथा सूत्रं पादालक्तकमेवच । शक्त्या दानं प्रियोक्तिश्च प्रसन्नास्यत्वमेवच ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नानामङ्गलवाद्यानां श्रवणं गीतकस्य च। व्यभिचारकृते पापे तत्पापस्य प्रशान्तये ॥

अतीतं पातकं पृष्ट्वा प्रायश्चित्तं तदीरितम्।
कुर्यादथ स्वकां भूषां विप्राय प्रतिपादयेत् ॥ ७३ ॥
भूषाभावे स्वकीयेन प्रायश्चित्तं तु कारयेत्।
नान्यथा तस्य पापस्य नाशनं वेति कुत्रचित् ॥ ७४ ॥

अव्ययोवाच।

सर्वमेतत्करिष्यामि हरिद्रा मे न विद्यते। भूषणं किमुत ब्रह्मन्सर्वमेतत्प्रदीयताम् ॥

नारद उवाच।

नह्यस्ति किञ्चित्सौभाग्यद्रव्यमन्यत्त्वपेक्षया ॥ ७६ ॥

दधीच उवाच।

अथ क्षणेनाभ्यगमत्कैलासं शिवमन्दिरम्। गिरिजामथ दृष्ट्वाऽसौ प्रणिपत्येदमब्रवीत्
हरिद्रा दीयतां मातर्भूषणानि च सूत्रकम् ॥ ७७ ॥

पार्वत्युवाच।

विधावायै मया किञ्चिद्भूषणं दीयतां कथम्। मया दत्ते हि तस्मिन्वै वैधव्यंनोपपद्यते

नारद उवाच।

मातर्न विधवा यावद्धवाङ्गं वर्तते स्त्रियः। आदाहात्सूतकंनास्तितिष्ठेत्सौभाग्यमुत्तमम्

पार्वत्युवाच।

न चान्यदेहो मद्भूषां हरिद्रां धर्तुमर्हति। भूषणादौ मयादत्ते चिरंजीवितमिष्यते॥
दीयते हि जयन्त्यैव सर्वमेतत्त्वयोदितम्। जयन्तीं स जगामाथ तया दत्तमथाहरत्॥
स्नाताया अव्ययायै तु हरिद्रां दत्तवान्मुनिः। ततःस सूक्ष्मवसनभूषणानि मुनिर्ददौ॥
आह चैनां तवान्तेष्टिं कः करोति नियुङ्क्ष्वतम् ॥ ८३ ॥

अव्ययोवाच।

त्वमेव मे समस्तानां क्रियाणां कारणं मुने!।
पिताऽसि सर्वं कुर्वद्य नमस्ते मुनिसत्तम! ॥ ८४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दधीच उवाच ।

अथ तं ब्राह्मणं दृष्ट्वा नारदस्तामुवाच ह । अग्नये गच्छदहनं प्रविश त्वं यदीच्छसि

अथ सा भूषिता साध्वी त्रिःप्रदक्षिणपूर्वकम् ।

नारदं तु नमस्कृत्य सा गौर्यामर्पयन्मनः ॥ ८६ ॥

सुसूक्ष्मं मङ्गलं सूत्रं हरिद्रामक्षतांस्तथा । कुसुमानि च वासांसि कस्तूरी चन्दनं तथा

सौवर्णकङ्कतिकां च फलानि विविधानि च ।

स्वदक्षिणादि वस्त्रान्तं स्पर्शयित्वा पृथक्पृथक् ॥ ८८ ॥

पार्वती प्रीतिकामा सा पुरन्ध्रीभ्योऽखिलं ददौ ।

ज्वालामालाभिराकाशं दहन्तमिव चानलम् ॥ ८६ ॥

त्रिः प्रदक्षिणमागत्य स्थित्वाऽग्नेःपुरतःसती । इदं प्राहतदावाक्यं प्राञ्जलिः प्रहसन्मुखी

अग्न्ययोवाच ।

इन्द्राद्यो दिशां पाला मातर्मेदिनि भास्कर । धर्मादयः सुराःसर्वे शृणुध्वं ममभाषितम्

पाणिपीडनमारभ्य चैतदन्तमहर्निशम् । वाङ्मनः कर्मभिभर्ता सेवितो यदि भक्तितः ॥

व्यभिचारो यथा न स्यादवस्थात्रितये मम ।

तेन सत्येन मे पत्या सार्द्धं यानं प्रयच्छत ॥ ६३ ॥

इत्युक्त्वाऽथ स्वहस्ताग्रपुष्पकं द्रुतमाक्षिपत् । प्रविष्टा ज्वलनंदीप्तमथापश्यद्विमानकम्

सूर्येण सममुत्कृष्टमप्सरोगीतशोभितम् । आरुरोह विमानं सा भर्त्रा साकं दिवं ययौ ॥

यमः प्राहाथ सम्पूज्य वनितां तां पतिव्रताम् । अक्षयःस्वर्ग एवेह नच पापं तवास्ति वै

कोटिद्वयसमास्तत्र नरके हन्तपातकम् । मृष्टमेव न सन्देहः किं तु पातकमेव च ॥६७॥

एकं शिवस्य दीपाज्यभक्षणेन समार्जितम् । तवापि नरके पातः श्वानजन्मशतं भवेत्

अग्न्ययोवाच ।

अग्निप्रवेशशुद्धानां पुनश्च नरकः कथम् । अग्निप्रवेशात्सर्वेषां पापानां नाशनं भवेत् ॥

यम उवाच ।

शिवद्रव्यापहारस्य पातकं नैव नश्यति । इत्थमाह पुरा शम्भुरन्येषांनाशनं भवेत् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ स श्वानतामाप्य शताब्दं स्यात्ततः परम्।
दधीचमन्दिरं प्राप्तो मृत्योरास्यगतो हि सः ॥ १०१ ॥
तस्य भित्तिसमीपे तु भस्मास्ते ह्यभिमन्त्रितम्।
भस्मनि श्वा पपाताथ ममार च गतो यमम् ॥ १०२ ॥

यमः सम्पूज्यावनतो श्वान्पुण्यतमो मुनिः। मद्गेहे भवतःस्थानं न योग्यंगम्यतां बहिः
अथ गत्वा बहिस्तस्थौ सारमेयोयमोदितः। सन्तापावस्थितं तं च नारदोद्दृष्टवानमुम्
पप्रच्छ च किमर्थं त्वमिहतिष्ठसि दीप्तिमान्। शिवभस्मस्थितमृतं शैवं जाने महामते

शैवानां पापिनां चापि साहसेन तनुत्यजाम्।
यमलोको न चास्तीति शिवाज्ञा शिवनोदिता ॥ १०६ ॥

दधीच उवाच।

इत्थमाभाष्य तं श्वानं कैलासमगमन्मुनिः। दण्डवत्प्रणिपत्येशं व्यज्ञापयदथोहरम् ॥
देव ! कश्चिद्यमपुराद्बहिरास्ते सकुक्कुरः। भस्मन्येव मृतस्तद्वद्भवलोकं स चार्हति ॥
अथ मुख्यगणाविष्टो वीरभद्रः शिवेरितः। आनयामास तं श्वानं दिव्यरूपधरं तदा ॥
महेशपादप्रणतं देवायाथ व्यजिज्ञपत्। आह माहेश्वरो देवं गणमेनं कुरुष्व मे ॥११०॥

तथेति च शिवः प्राह गणः श्वानमुखोऽभवत् ॥ १११ ॥

दधीच उवाच।

अतुलं भस्म माहात्म्यं मयोक्तं ते शुचिस्मिते !।
इतः परं हि किंभूयः श्रोतुमिच्छसि सुव्रते ॥ ११२ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे विभूतिमाहात्म्ये षडुत्तरशततमोऽध्यायः ॥ १०६ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सप्ताधिकशततमोऽध्यायः

## भस्ममाहात्म्ये कश्यपाद्यृषिवृत्तान्तवर्णनम् ।

शुचिस्मितोवाच ।

कश्यपं जमदग्निं च देवानां च पुराकथम् । ररक्ष भस्मतद्ब्रह्मन्समाचक्ष्व मुने ! मम ॥

दधीच उवाच ।

कश्यपादियुतादेवाः पूर्वमभ्यागमन्गिरिम् । शौकरं नाम विख्यातंगिरिमध्येसुशोभनम्
नानाविहङ्गसङ्कीर्णं नानामुनिगणाश्रयम् । वासुदेवाश्रयं रम्यमप्सरोगणसेवितम् ॥३॥
चत्रवृक्षसंवीतं सर्वर्तुकुसुमोज्ज्वलम् । तथाविधं प्रविश्यैते गिरिं वयमथापरे ॥

स्तुवन्तः केशवं तत्र गताः स्म गिरिशेश्वरम् ।

दृष्ट्वा तत्र महाज्वालां प्रविष्टाश्च वयं च ताम् ॥ ५ ॥

मामेकं तु तिरस्कृत्य ह्यदहद्देवता मुनीन् । मां ददाह ततःपश्चाद्भस्मीभूता वयं शुभे ! ॥
अस्मानेताद्रृशान्दृष्ट्वा वीरभद्रः प्रतापवान् । केनापि कारणेनासौ गतवान्पर्वतं चतम्

भस्मोद्धूलितसर्वाङ्गो मस्तकस्थशिवः शुचिः ।

एकाकी निःस्पृहः शान्तो ह्याहाशब्दमथाश्रृणोत् ॥ ८ ॥

अथ चिन्तापरश्चासीन्म्रियमाणशवध्वनिः । शवानामिवगन्धश्च दृश्यते तन्निरीक्षणे ॥
इति निश्चित्य मनसा जगामाग्निमतिप्रभम् । सवह्निर्वीरभद्रं च दग्धुमारब्धवानथ ॥
तृणाग्निरिव शान्तोऽभूदासाद्य सलिलं यथा । ततोऽपरां महाज्वालांवीरभद्रस्तु दृष्टवान्
खेगच्छन्तींमहाकालोज्वालांनिपपितामपि । मनसा चिन्तयच्चापि वीरभद्रः प्रतापवान्

सर्वेषां नाशिनी ज्वाला प्राणिनां शतकोटिशः ।

तत्सर्वं रक्षणार्थं हि पिपासुश्चाप्यहं त्विमाम् ॥ १३ ॥

प्राश्नामि महतीं ज्वालां सलिलं तृषितो यथा ।

एतस्मिन्नन्तरे वीरं वागाह चाशरीरिणी ॥ १४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भारत्युवाच ।

वीर ! मा साहसं कार्षीः क्व तृषा क्वाशुशुक्षणिः ।
तृषितानां जलेनार्थो विपरीतो वनाग्निना ॥ १५ ॥

निकामं योजनशिराः प्रनष्टो राक्षसेश्वरः । शतयोजनवक्त्रश्च शतबाहुस्तथापरः ॥१६॥
अगस्त्यश्च महाभागो निःशेषं पीतसागरः । एतानन्यानसङ्ख्याताञ्ज्वालेयं तानमारयत्

वीरभद्र उवाच ।

भीषिकेयं महाज्वाला त्वदुक्ता न हि जायते । सरस्वति भवत्यां च मम रोषश्च जायते
सर्वदेवार्चितपदं वीरभद्रमवेहि माम् ॥ १८ ॥

भारत्युवाच ।

मयोक्तं हितभावेन न द्वेषान्नान्यतो मुने । कोपमुत्सृज वीरत्वमात्मनो हितमाचर ॥१९
इत्युक्त्वान्तर्दधे देवी भारती वीरभीतितः । अथ वीरो महाज्वालमपासील्लीलयैव तु
क्षणेन महती ज्वाला शतयोजनविस्तृता । एकेन वीरभद्रेण पीता परमदुःसहा ॥२१॥
अथ चेन्द्रमुखानां च मुनीनां भस्मराशयः । दृष्टा वै वीरभद्रेण आहूताश्च महात्मना ॥
न चाब्रुवन्प्रतिवचो मृता मुनिदिवौकसः । वीरभद्रस्तु विज्ञाय नाशं मुनिदिवौकसाम्
दध्यावमून्कथं सर्वाञ्जीवयाम्यद्य कोविदः । ध्यानेन दृष्टवांश्चापि जीवितं भस्मदेहिनाम्
अथाचम्य मृतानां तु भस्मान्यथ च भस्मना । मृत्युञ्जयेन मन्त्रेण मन्त्रितेन ह्यमन्त्रयत्

अथोत्थिता मुनिवराः स्वं स्वं रूपमुपाश्रिताः ।
अथ ते गतवन्तश्च गिरिपार्श्वं महाप्रभम् ॥ २६ ॥

तत्रापि भक्षिताः सर्वे सर्पेणातिशरीरिणा । अथ वीरो महासर्पसमीपमगमत्प्रभुः ॥२७॥
वीरमागतमालोक्य भुजगो योद्धुमारभत् । युयुधे वर्षमेकं तु नानारूपधरः फणी ॥
अथ वीरः प्रगृह्यौष्ठयुगं करयुगेन च । द्विधा चक्रे समस्ताङ्गं देवांस्तत्र गतायुषः ॥२९
दृष्ट्वाऽथ भस्मनैवैताञ्जीवयामास शङ्करः । अथ देवाः स मुनयो वीरभद्रं प्रणम्य तु
गतवन्तो यथा मार्गं ददृशू रक्ष आगतम् । पञ्चमेढ्रं महाकायं दोर्भिश्च दशभिर्युतम् ॥
पञ्चपादसमोपेतं शिरोभिर्युतमष्टभिः । काङ्क्षमाणं महाहारं युध्यमानो हि वालिना ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महावराहवपुषो वासुदेवस्य यद्बलम् । तादृशं द्विगुणीभूतं कपौ वालिनिनिश्चितम् ॥
तादृशं वानरश्रेष्ठं ससुग्रीवं सराक्षसः । मुष्टियुद्धे पञ्चपादैः सहसाऽऽहत्य वालिनम् ॥
सुग्रीवं च कराभ्यां स हन्तुमेव प्रचक्रमे । आस्ये निक्षिप्य सुग्रीवमग्रसत्कवलं यथा ॥
वालिसुग्रीवग्रसनं दृष्ट्वा चिन्तामवाप ह । कथमेनं हनिष्यामि रक्षयिष्ये कथं कपिम्
एवं चिन्तयमानं तं वानरं राक्षसेश्वरः । अग्रसीदेकयत्नेन तथा भूतं चराक्षसम् ॥३७॥
दृष्ट्वा देवर्षयः सर्वे पलायनपरास्तथा । पलायमानांस्तान्दृष्ट्वा पञ्चमेढ्रः सराक्षसः ॥
हस्तैः समस्तैस्तान्सर्वानादायाभक्षयत्तदा । वीरभद्रस्ततो दृष्ट्वा वानरर्षिसुरादनम् ॥
पञ्चाशद्योजनशिलां करेणादाय तं रुषा । निजघान शिरो मध्येमध्यमं पतितं शिरः ॥

तत आदाय शैलस्य शृङ्गं तच्छतयोजनम् ।
स्थापयित्वा दृढतरं राक्षसेन्द्रं तथा हरत् ॥ ४१ ॥

राक्षसोऽथ बभाषे तं वीरभद्रं त्रिलोचनम् । मम बाहुबलं पश्य वीक्षितं त्वद्बलं मया
असिद्वयं तैलधौतं पञ्चाशद्योजनोन्नतम् । एकयोजनविस्तारं सुदृढं लक्षणान्वितम् ॥
एकं गृहाणाभिमतं वशिष्टं तन्मम प्रियम् । वीरभद्रस्तथेत्युक्त्वा गृहीत्वासिं महाबलः
करेणाचालयत्तीक्ष्णं क्ष्वेलीं चक्रे ततः क्रुधा । गृहीतासिस्तथाक्ष्वेलीं चक्रे राक्षसपुङ्गव
वीरभद्रं समभ्येत्य कण्ठं प्रतिसमर्पयत् । तद्गात्रं भिन्नमभवच्छोणितं निर्गतं बहु ॥४६
राक्षसस्त्वेकहस्तेन पपौ तच्छोणितं ततः । वीरभद्रः कण्ठदेशे राक्षसं प्राहरद्रुषा ॥४७

शिरोद्वयं तथा च्छिन्नं पतमानं ततोऽग्रहीत् ।
न्यभक्षयदमेयात्मा सिंहनादं चकार ह ॥ ४८ ॥

तेन नादेन महताक्षुब्धमासीज्जगत्त्रयम् । अन्योन्यमसिघातेन भिन्नगात्रौ विकस्वरौ
किंशुकाविव दृश्येते पुष्पितौ रुधिरोक्षितौ । वर्षमेकं तु संयुध्यसासीद्देवासुरौ तदा
अतः परं वर्षमेकं गदायुद्धमभूत्तयोः । असिपुत्रिकया पश्चाद्वर्षमेकमभूद्रणः ॥ ५१ ॥
पुनर्गृहीत्वाऽसियुगं युयुधाते परस्परम् । शं ब्रुवाणो महाखड्गं दंष्ट्राकारो गणेश्वरः ॥
सरोषरक्तनयनश्चालयित्वाऽसिमग्रतः । तस्य कण्ठवनं सर्वं चिच्छेद कदलीं यथा ॥
शिरांसिसर्वाण्यादाय बभक्ष भगनेत्रहा । तस्य गात्रं कररुहैर्विदार्याहृत्य देवताः ॥५४

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कपीन्द्रौ च तथा चान्या अद्राक्षीत्परमेश्वरीम् ।
एतद्युद्धं महाघोरं नारदो वीक्ष्य चाभ्यगात् ॥ ५५ ॥
ब्रह्मणे वासुदेवाय शङ्कराय व्यजिज्ञपत् । मुनयो रक्षिता देवा वालिसुग्रीववानरौ ॥
एतौ सञ्जीवयामास ब्रह्मविष्णुशिवात्मकः । रक्षसे शम्भुना दत्तो वरः परमदारुणः ॥
हिरण्यकशिपो राज्ये बलवानेकराक्षसः । देवैः सार्द्धं तु युयुधे वर्षाणां शतमद्भुतम् ॥
पलायितास्च बहुधा मृतास्च शतशोऽसुराः ।
शुक्रेण रक्षितः सोऽथ गुरुणाऽचिन्तयत्त्विदम् ॥ ५९ ॥
मृतोऽस्मि शतशः शुक्रजीवितोऽस्मि त्वयैव हि । अमृत्यवेत्वमेतस्मादुदरस्थमृतायच
अन्यथा मरणं मह्यं भविष्यति न संशयः । गुरौ यमेन साकं मे युद्धमासीत्सुदारुणम्
मयाऽसौ ग्रसितो युद्धे यमराजः प्रतापवान् । ममोदरं प्रविश्यासौ बिभेद च ननाद च
अहं मृतस्तदा चासं त्वया सञ्जीवितः पुनः । तस्मादुदरसंस्थानां मरणाय तपे तपः ॥

शुक्र उवाच ।

एवमेतन्न सन्देहो यथावत्त्वं समाचर । स्यमन्तपञ्चकं तीर्थं तत्र त्वं तप्तुमर्हसि ॥६४॥

राक्षस उवाच ।

तपे महत्तपो घोरं यन्न चीर्णं सुरासुरैः । गुल्फप्रदेशे पादान्ते त्वयः पाशैः प्रबध्य च
अयः स्तम्भयुगं कृत्वा अयः पट्टिकयान्वितम् ।
पट्टिकायां पादबन्धं कृत्वाधः शीर्षतां तथा ॥ ६६ ॥
विवृतास्यं तथाकल्पं कृत्वाधोमुखमुच्चकैः ।
स्तम्भोत्तरेण ज्वालायां चक्रिकायामितस्ततः ॥ ६७ ॥
अधःशिरास्तथा तिष्ठन्नुन्मील्यैव विलोचने ।
एवं तपश्चरिष्यामि वरदः कोऽपि मे भवेत् ॥ ६८ ॥
ब्रह्मा वा वरदः सोऽस्तु शङ्करो विष्णुरेव च । वरदेन तु मे भाव्यं योवा कोवा वरप्रदः
इत्थमाभाष्य मुनिना गुरुणा भार्गवेण सः ।
तथाऽतपच्च षण्मासं पुनरन्यच्चकार ह ॥ ७० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नखाभ्यां स्वशिरश्छित्त्वा जुहावाग्नौ समन्त्रकम् ।
नमो भद्राय मन्त्रेण चत्वारि च शिरांसि सः ॥ ७१ ॥
पञ्चमं तु शिरोहातुं यतमाने च राक्षसे । वह्निमध्यात्समुत्तस्थौ भगवानम्बिकापतिः
शुद्धस्फटिकसङ्काशो बालचन्द्रविभूषणः । अधःशिरस्कं तद्रक्ष इदमाहमहेश्वरः ॥ ७३ ॥
मा साहसं कृथा रक्षो वरदोऽस्मि वरं वृणु ॥ ७४ ॥

राक्षस उवाच ।

बहूनां च वराणां त्वं दाता नूनं महेश्वरः । हतशीर्षसमुत्पत्तिं ग्रस्तजीवस्मृतिं तथा ॥
वराहवपुषो विष्णोरस्तुशक्तिश्चतुर्गुणा । मयि ते न हिरोषःस्यात्सन्निधिस्तु सदा मम
त्वज्जटोत्पातनेनैकः पुरुषः सम्भविष्यति । तेनैव मरणं नान्यैरिदमस्तु वृतं मम ॥७७॥
भविष्यत्येवमेवैतदित्युक्त्वाऽन्तर्हितोहरः । एवं लब्धवरःपापीराक्षसो निहितस्त्वया
अथालिङ्ग्य हरिर्वीरं शङ्करश्च पितामहः । यथागतमथो जग्मुरथ देवादियोषितः॥७९॥
निपत्य दण्डवद्भूमौ वीरभद्रमथाब्रुवन् ।
नमस्ते देवदेवेश ! नमस्ते करुणाकर ! । नमस्ते शाश्वतानन्त नमस्ते वरदो भव ॥८०

वीरभद्र उवाच ।

भस्मना जीवयिष्यामि सुरान्समुनिवानरान् । भवतीभिःप्रतोष्टव्यंशोकःकार्योनचाधुना
इत्युक्त्वा वीरभद्रस्तु भस्मनाऽजीवयत्स तान् ।
उत्थिता मुनिदेवाश्च वानरौ चोत्थितौ ततः ॥ ८२ ॥
इदमूचुर्वचोहृष्टाःशिरःस्थाञ्जलयोऽनमन् । त्वयाऽत्र जीवितास्तातपिता त्वंधर्मतो हिनः
अस्माकं शरणं नित्यं भव शङ्करसम्भव । शिशूनां दुष्टचरितं दृष्ट्वाशिक्षेस्तथा च तान्
रक्षेःपरकृताबाधा व्याधिभ्यश्च यथौरसान् ।
दक्षाध्वरे कृतागस्काः शिक्षिता भवतानघ ! ॥ ८५ ॥
इदानीं रक्षितास्तात वयं शिशुवदेव ते ॥ ८६ ॥

वीरभद्र उवाच ।

सत्यमेतन्न सन्देहो यत्र बाधा भवेत्तु वः । तत्र मां स्मरतक्षिप्रं बाधानाशं गमिष्यति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वीरभद्रपदं येऽपि पठन्त्यष्टशतं ततः। प्रणवादिनमोऽन्तं च चतुर्थीसहितं तथा॥
तेषां राक्षसपीडानां नाशनं च भविष्यति। ब्रह्मराक्षसपीडासु पिशाचादिभयेषु च॥
नामानुस्मरणात्सर्वबाधानां च विनाशनम्॥ ६०॥
विद्युत्प्रभालोचनमुग्रमीशं बालेन्दुदंष्ट्रारुणशोभिताधरम्।
सुनीलगात्रं च जटाकृतस्रजं दधानमङ्गे भसितत्रिपुण्ड्रकम्॥ ६१॥
ब्रह्मराक्षसमुक्त्यर्थं स्मरणं त्विदमीरितम्। मन्त्रे च वीरभद्रस्य सर्वमेतदुदीरितम्॥

दधीच उवाच।

अथैवं विदधे वीरो मुनिर्देवास्तथागताः। एतत्त्रियायुषं प्रोक्तं भस्ममाहात्म्यमुत्तमम्
पठतः शृण्वतो वापि स्मरतोऽघविनाशनम्। शिवभक्तिप्रदं पुण्यमायुरारोग्यवर्द्धनम्॥

शुचिस्मितोवाच।

अहं कृतार्था धन्या च नारीणामुत्तमाऽस्म्यहम्। हतपापातथाचास्मिनमस्ते मुनिपुङ्गव!
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे सप्तोत्तरशततमोऽध्यायः

---

# अष्टाधिकशततमोऽध्यायः

## भस्मनिर्माणविधानकथनम्।

श्रीराम उवाच।

भस्मोत्पत्तिं महाभाग भस्ममाहात्म्यमेव च। भस्मसन्धारणे पुण्यं भस्मदाने च तद्वद

शम्भुरुवाच।

भस्मोत्पत्तिं प्रवक्ष्यामिसर्वपापप्रणाशिनीम्। स्मरणात्कीर्तनाद्राम तांशृणुष्वनराधिप
य एकः शाश्वतो देवो ब्रह्मवन्द्यः सदाशिवः।
त्रिलोचनो गुणाधारो गुणातीतोऽक्षरोऽव्ययः॥ ३॥
सिसृक्षा तस्य जाताऽथ वीक्ष्यात्मस्थं गुणत्रयम्। वेदत्रयमिदं ज्ञेयंवेदत्रयगुणं हियत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पृथक्कृत्वात्मनस्तात तत्र स्थानं विभज्य च।
दक्षिणाङ्गेऽसृजत्पुत्रं ब्रह्माणं वामतो हरिम्॥ ५॥
पृष्ठदेशे महेशानं त्रीन्पुत्रानसृजद्विभुः। जातमात्रास्त्रयो देवा ब्रह्मविष्णुमहेश्वराः॥ ६॥
इदमूचुर्वचः स्पष्टं कोभवान्के वयंत्विति। तानाह च शिवः पुत्रान्यूयं पुत्रा अहं पिता
इदं गुणत्रयं पुत्रा भजध्वं कर्महेतुकम्॥ ८॥

पुत्रा ऊचुः।

कं वा गुणं को भजतां कियन्तं कालमीश्वरम्। कथं गुणनिवृत्तिश्च भवेदेतद्वदस्वनः

शिव उवाच।

यावज्ज्ञानं हि भवतां यावदायुरथापि वा। धारणं तावदेवस्यादेकैकस्य गुणस्य च॥
सत्त्वं ब्रह्मा रजो विष्णुर्भजेन्महेश्वरस्तमः। इत्युक्तमात्रे देवेशे ब्रह्मा सत्त्वमथाग्रहीत्॥
न च चालयितुं शक्तो धारणे किमु शक्तिमान्।
ते गुणं तु तिरस्कृत्य रजोगुणमथाग्रहीत्॥ १२॥
न च चालयितुं शक्तो जग्राहाथ तमोगुणम्। न च चालयितुं शक्तो निपपात रुरोद च
विष्णुश्च वामहस्तेन रजोगुणमधारयत्। अङ्गुलीभ्यां महेशोऽपि तमोगुणमधारयत॥
सत्त्वमेकोऽङ्गुलीभ्यां च सत्त्वं विष्णुमथादधात्। ब्रह्माणं पादपीठे च दधारचननर्त च
नृत्यन्तमत्यन्तविलासरूपं गोक्षीररूपं तरुणं त्रिनेत्रम्।
सर्वं दधानं कृतकौतुकं शिवं समीक्ष्य पुत्रं वरदो बभाषे॥ १६॥

शिव उवाच।

प्रीतोऽस्मि तव पुत्राहं वरं वृणुयथेप्सितम्। अथाह पितरं पुत्रो वरमेनं ददस्व मे॥
मामुद्दिश्य कृता पूजा तव पूजा भवेच्छिव। तिष्ठेर्मयि सदात्वं च त्वमेवाहं च वाव्ययः

शिव उवाच।

एवमेतन्महाभाग भविष्यति न संशयः। रक्तगौराविमौ पुत्रौ ब्रह्मविष्णू ममैव तु॥१६
बाहुमूलस्थिरौ रम्यौ ममाकारौ तथाऽनघौ।
अथ ब्रह्माणमाहेदं भजत्वेकं गुणं भवान्॥ २०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मोवाच ।

त्वन्निर्दिष्टं गुणमहं धर्तुं शक्तो नहीश्वर ।
धारयिष्ये रजो देवसत्त्वं भजतु वै हरिः । अवशिष्टं गुणं चायमीश्वरो धारयिष्यति ॥

शम्भुरुवाच ।

गुणानादाय ते देवा न शेकुर्नित्यधारणम् । कर्तुं भरणशक्त्यर्थं शिवमित्यवदत्पुनः ॥
गुणान्वयं सर्वकालं न च धारयितुं क्षमाः । दीयतांभगवञ्छक्तिर्यदि भोस्त्वं वरप्रद ! ॥

शिव उवाच ।

अथ तद्वचनं श्रुत्वा शिवो वाक्यमभाषत ॥ २४ ॥
विद्याशक्तिः समस्तानां शक्तिरित्यभिधीयते ।
गुणत्रयाश्रया विद्या अविद्या च तदाश्रया ॥ २५ ॥
गुणत्रयं च दग्ध्वैव तत्सारं धर्तुमर्हथ । यच्चकिञ्चिद्भवेत्तत्र भवद्भिर्ध्रियतां हि तत् ॥
अथाहुस्तत्सुता वाक्यं न दाहोज्वलनं विना । शिवः प्राहमहेशस्य लोचने वह्निरस्तिवै
गुणत्रयमिदं धेनुर्विद्यास्याद्गोमयं शुभम् । मूत्रं चोपनिषत्प्रोक्तं कुर्याद्भस्म ततः परम् ॥
वत्सास्तु स्मृतयो यस्यास्तत्सम्भूतं तु गोमयम् ।
आगाव इति मन्त्रेण धेनुं तत्राभिमन्त्रयेत् ॥ २६ ॥
गावोभगो गाव इतिप्राशयेत्तु तृणंजलम् । उपोष्य च चतुर्दश्यांशुक्ले कृष्णेऽथ वाव्रती
परेद्युः प्रातरुत्थाय शुचिर्भूत्वा समाहितः । कृतस्नानो धौतवस्त्रो गोमयार्थं व्रजेत्तु गाम्
उत्थाप्य तां प्रयत्नेन गायत्र्या मूत्रमाहरेत् । सौवर्णे राजते ताम्रे धारयन्मृन्मये घटे
पौष्करे वा पलाशे वा पात्रेगोश्रृङ्ग एव वा । आदधीत हि गोमूत्रंगन्धद्वारेति गोमयम्
अभूमिपातं गृह्णीयात्पात्रे पूर्वोदितेऽधिके । गोमयं शोधयेद्विद्वाञ्छ्रीर्मे भजतु मन्त्रतः ॥
अलक्ष्मीर्मयीतिमन्त्रेण गोमयस्यापमार्जनम् ।
सन्त्वा सिञ्चामि मन्त्रेण गोमूत्रं गोमये क्षिपेत् ॥ ३५ ॥
पञ्चानां त्वेति मन्त्रेण पिण्डांश्चैव चतुर्दश । कुर्यात्संशोष्यकिरणैस्तरणेराहरेत्तु तान्
निदध्यादथपूर्वोक्तपात्रे गोमयपिण्डकान् । स्वगृह्योक्तविधानेन प्रतिष्ठाप्याग्निमिन्धयेत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पिण्डान्विनिक्षिपेत्तत्तद्वर्णदेवाय पिण्डकान् ।
आघारावाज्यभागौ च प्रक्षिप्य जुहुयात्सुधीः ॥३८॥
ततो निधनपतये त्रयोदश जयादयः । होतव्याः पञ्च ब्रह्माणि नमो हिरण्यबाहवे ॥३६
इति सर्वाहुतीर्हुत्वा चतुर्थ्यन्तैस्तु मन्त्रकैः । ततः शर्वाय रुद्राय यस्य वैकङ्कतीति च
एतैस्तु जुहुयाद्विद्वाननाज्ञातत्रयं तथा । व्याहृतीरथ हुत्वा तु ततः स्विष्टकृतंहुनेत् ॥
इध्मशेषं तु निर्वर्त्य पूर्णपात्रोदकं ततः । पूर्णमासान्तयजुषा जलेनान्येन बृंहयेत् ॥४२
ब्राह्मणेष्वमृतमिति तज्जलं शिरसि क्षिपेत् ।
प्राच्यामिति दिशां लिङ्गैर्दिक्षु तोयं विनिक्षिपेत् ॥ ४३ ॥
ब्रह्मणे दक्षिणां दत्त्वा शान्ते पुलकमाहरेत् ॥ ४४ ॥
आहरिष्यामि देवानां सर्वेषां कर्मगुप्तये । जातवेदसमेनं त्वं पुलकच्छादयाद्य मे ॥४५
मन्त्रेणानेन तं वह्निं पुलकैश्छादयेदथ । त्रिदिनंज्वलनस्थित्यैछादनंपुलकैःस्मृतम् ॥४६
ब्राह्मणान्भोजयेद्भक्त्यास्वयंभुञ्जीतवाग्यतः । भस्माधिकमभीप्संस्तु ह्यधिकं गोमयंहरेत्
दिनत्रयेण यदि वा एकस्मिन्दिवसे बहु ।
तृतीये वा चतुर्थे वा प्रातः स्नात्वा सिताम्बरः ॥ ४८ ॥
शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः । शुक्लदन्तो भस्मदिग्धो मन्त्रेणानेन मन्त्रवित्
तद्वेति चोच्चारयित्वाभस्मसत्यं न सन्त्यजेत् । तत आवाहनमुखा उपचारास्तु षोडश
कर्तव्या हुतदानेन ततोऽग्निमुपसंहरेत् । अग्नेभस्मेति मन्त्रेण गृह्णीयाद्भस्मचोद्भवम् ॥
अग्निरस्मीति मन्त्रेण प्रमृज्य च ततः परम् ।
संयोज्य गङ्गासलिलैः कपिलापयसाथ वा ॥ ५२ ॥
चन्द्रकुङ्कुमकाश्मीरमुशीरचन्दनं तथा । अगुरुद्वितयं चैव चूर्णयित्वा तु सूक्ष्मतः ॥५३
क्षिपेद्भस्मनि तच्चूर्णमोमिति ब्रह्ममन्त्रतः । ततः पयःसेचने च गदितः कपिला मनुः
अमृतं देवि ते क्षीरं पवित्रमिह बुद्धिदम् ।
तव प्रसादान्मुच्यन्ते मनुजाः सर्वपाप्मनः ॥ ५५ ॥
प्रणवेनावहेद्विद्वान्भस्मनो वटकानथ । अणोरणीयानिति हि मन्त्रेण तु विचक्षणः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शम्भुरुवाच ।

इत्थं तु भस्मसम्पाद्य शुष्कमादाय मन्त्रवित् । प्रणवेन विमृज्याथ सप्तप्रणवमन्त्रितम्
ईशानेन शिरो देशं मुखं तत्पुरुषेण च । उरो देशमघोरेण गुह्यं वामेन मन्त्रयेत् ॥५८॥
सद्योजातेन वै पादौ सर्वाङ्गं प्रणवेन तु । तत उद्धूल्य सर्वाङ्गमापादतलमस्तकम् ॥
तत आचम्य वसनं धौतं श्वेतं प्रधारयेत् । पुनराचम्य कर्म स्वं कर्तुमर्हति सर्वतः ॥६०
ततो भस्म समादाय प्रमृज्य प्रणवेन तु । त्रिनेत्रं त्रिगुणाधारं त्रयाणां जनकं विभुम्
स्मरन्नमः शिवायेति ललाटे तु त्रिपुण्ड्रकम् ।
नमः शिवाभ्यामित्युक्त्वा बाह्वोर्वापि त्रिपुण्ड्रकम् ॥ ६२ ॥
अघोराय नम इति उभाभ्यां च प्रकोष्ठयोः । भीमायेति ततः पृष्ठे शिरोऽधिपश्चिमेतथा
नीलकण्ठाय शिरसि क्षिपेत्सर्वात्मने नमः । प्रक्षाल्याथततो हस्तौ कर्मानुष्ठानमाचरेत्

शिव उवाच ।

यूयमेवं प्रकारेण भस्म कृत्वा प्रघृष्य च । गुणान्धारयितुं शक्तास्ततः स्रक्ष्यथवै प्रजाः

शम्भुरुवाच ।

इत्थंशिवोदितादेवाब्रह्मविष्णुमहेश्वराः । तथा कृत्वा च विधिनाऽहमहमिकयातदा ॥
अन्योन्यबोधनाशक्ताःप्रणम्यशिवमूचिरे । कं गुणं धारयेत्को वा शिवः प्राह सुतानथ
कर्मशक्तिं तथाज्ञानं मुखरैण्वैव नश्यति । अल्पायुर्दृश्यते ब्रह्मा मनुभिश्चास्य जीवितम्
योऽहं ब्रह्माण्डमालाभिर्भूषितो ब्रह्मगोपनम् । रजोगुणमवष्टभ्य न च जानासिमां तदा
ब्रह्मधिकबलो विष्णुरायुषि ब्रह्मणोऽधिकः । ब्रह्माण्डमालाभरणे महेशस्य ममैव तु ॥
चतुर्निःश्वासमात्रेणविष्णोरायुरुदाहृतम् । ब्रह्मणोऽधिकसत्त्वत्वात्सत्त्वमालम्बतांहरिः
जानाति सर्वकालं मां कचिदेव न विस्मरेत् ।
सात्त्विकैकैव पूजाऽस्य राजसी तामसी न तु ॥७२॥
शान्तं शिवं सत्त्वगुणं रजवक्त्रावमानतः । नमो नीलं तथा चैव गुणं शम्भुस्तथाभजन्
सत्त्वं रजस्तमश्चापि दधार च पुरा किल ।
अतोऽस्य त्रिविधा पूजा शङ्करस्य विधीयते ॥ ७४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रजश्च तमसा युक्तं दारुणं परिकीर्तितम्। दारुणापि ततः पूजा शङ्करे गतिदा मता॥
रजश्च तमसायुक्त मलंशास्त्रप्रवर्तकम्। विच्छिन्नाऽपि ततः पूजा शङ्करे फलदा मता॥
तमश्च सत्त्वसंयुक्तं मिश्रकं च प्रवर्तकम्। मिश्रपूजा विफलदा शङ्करे लोकशङ्करे॥
यादृशं तादृशं वापि नियमेनार्चनं विभोः। शङ्करस्याशु फलदं यादृशस्यापि देहिनः॥

शम्भुरुवाच।

एतत्संक्षेपतः प्रोक्तं विधानं भस्मनोऽनघ!। वक्तृश्रोतृजनानां च समस्ताघविनाशनम्

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे भस्मोत्पत्तिविधानं नामाष्टोत्तरशततमोऽध्यायः॥ १०८॥

---

## नवाधिकशततमोऽध्यायः

### शिवलिङ्गार्चनमाहात्म्यवर्णनम्।

शम्भुरुवाच।

अत्र ते कीर्तयिस्यामि कथां पापप्रणाशिनीम्।
श्रुत्वा यां प्राप धर्मात्मा शिवभक्तिमनुत्तमाम्॥ १॥
इक्ष्वाकुर्नाम विप्रेन्द्रः पुरा ह्यासीन्महामतिः। वहुशास्त्रप्रवीणश्च नीतिशास्त्रविशारदः
न यष्टा न च दाता च न देवानां च पूजकः।
न चाध्यापयिता वेदं न व्याख्याता श्रुतस्य च॥ ३॥
न पुणाणेतिहासनां श्रुतीनामागमस्य वा। यत्नाङ्गोक्ता तथा देहसंस्कारैकप्रवर्तकः॥४
तादृशंस्य द्विजस्याथ समालक्षा(क्ष्या)युरत्यगात्।
लक्षान्तरे तथैकस्मिन्वत्सरे मासि पञ्चमे॥ ५॥
तृतीयदिवसे रात्र्यां पुराणं श्रुतवानिदम्। स्वसम्पादितवित्तस्य येन दानं न वै कृतम्
दिने दिने भुज्यमानं निःसारं स्यात्क्रमेण हि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वर्षाण्येव च तावन्ति नरके पच्यते ध्रुवम् ॥ ७ ॥
कृमियोनिसहस्रं च अनुभूय ततः परम् । दरिद्रो व्याधितोऽबन्धुर्दुष्टभार्यो बहुप्रजाः ॥
दिने दिने भिक्षितेन याचितेन च जीवनम् ।
यत्र क्वापि च बीजानां मग्नानामथ मार्गणात् ॥ ६ ॥
लब्धेन जीवनं कर्म भृत्यानामथ जीवनम् । मध्ये श्रोत्रविहीनश्च नेत्रहीनः स्खलन्मलः
एवं पुराणं श्रुत्वाऽसाविक्ष्वाकुर्भृशदुःखितः ।
मनसाऽचिन्तयेच्चेदं स्मारं स्मारं द्विजाधमः ॥ ११ ॥
रूपपुष्पैर्माहिन्मयी दुर्गाऽपि फलवर्जिता । तथा पुराणरहिता विद्या नो गतिदर्शिनी ॥
बहुशास्त्रं समभ्यस्य बहुवेदान्सविस्तरान् । पुंसोऽश्रुतपुराणस्य सम्यग्याति न दर्शनम्

शम्भुरुवाच ।

एवं चिन्तयतस्तस्य अकालमरणं त्वभूत् । यमलोकं गतश्चाथ यमेन परिभाषितः ॥

यम उवाच ।

अनेकपापयुक्तोऽसि पुण्येनैव महत्तव । न वेदाध्यापनात्प्राप्तं पापं च विदितं तव ॥
कोटिवर्षाणि नरके तव स्थितिरिति द्विज ! ।
आयुरस्ति तवात्यल्पं गम्यतां पौर्विकीं तनुम् ॥ १६ ॥
कुरु पुण्यं हितं दानं देवतापूजनं जपम् । साङ्गमध्यापनं विप्र भोजनं भस्मधारणम् ॥
भज विश्वेश्वरं देवं देवदेवमुमापतिम् । तस्य प्रयत्नमात्रेण मम लोकं न गच्छसि ॥
यत्किञ्चित्प्रत्यहं पापिन्पुराणं शृणु सादरम् । ततस्तच्छ्रवणादेव नेक्षसे मम यातनाः
यमस्य वचनं श्रुत्वा ब्राह्मणः स्वां ययौ तनुम् । अथेशपूजनकृते यत्नमास्थाय सद्द्विजः
अगमन्मुनिवर्यं तु जाबालिं शिवपूजकम् । तपःस्वाध्यायसम्पन्नं श्रुतिस्मृतिविवेचकम्
पुराणतत्त्ववेत्तारं लक्षशिष्यसमावृतम् । जराशिथिलसर्वाङ्गं वेदवेदाङ्गपारगम् ॥ २२ ॥
द्रष्टुकामो ययौ शैलं सुन्दरं चारु कन्दरम् । नानाविहगसम्पूर्णं नानापुष्पलतावृतम् ॥
सर्वर्तुकुसुमोपेतं नानागन्धोपशोभितम् । किन्नराणां च मिथुनैर्गीतपूर्णमहागुहम् ॥
अनेकरूपलावण्यवनितोषितपादपम् । लम्बमानविचित्राभिस्ताभिः शोभितपादपम् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रतिश्रमप्रसुप्तानां बोधनादितषट्पदम् ।
कूजन्ति च पिकाः कामं वियुक्तानां युजे किल ॥ २६ ॥
नानामुनिगणाकीर्णं प्रशान्तमृगचारिणम् । अप्सरोगणसङ्कीर्णं गन्धर्वगणसेवितम् ॥
नानासिद्धमुखोद्भूतगीतपूर्णवनान्तरम् । विचित्रफलसम्पूर्णं नानादेवालयान्वितम् ॥
प्रासादशतसम्बाधं नानागृहसमन्वितम् । सिंहाननैर्गजमुखैरुलूकवदनैस्तथा ॥ २९ ॥
अमुखैर्विमुखैरुग्रैरूर्द्ध्ववक्त्रैर्मृगीमुखैः । रुरुजन्तुकगोधाऽहिवानरर्क्षमुखैरपि ॥ ३० ॥
व्याघ्रवृश्चिकभल्लोष्ट्रश्वानगर्दभतुण्डकैः । समस्तजीववदनसदृशास्यैर्गणेश्वरैः ॥ ३१ ॥
वल्लीमुखैर्वृक्षमुखैः शिलावक्त्रैरयोमुखैः । शङ्खमुक्तादिजलजवदनैरुपशोभितम् ॥ ३२ ॥
अधिकाङ्गैरनङ्गैश्च जटिलैः शिखिमुण्डितैः । पत्रिवक्त्रैर्द्विषड्वक्त्रैस्त्रिविग्रहमुखैरपि ॥
घटास्यैः शूर्पवदनकर्णपादमुखैरपि । घण्टामुखैर्वेणुमुखैःकिङ्किणीवदनैरपि ॥ ३४ ॥
यादृग्वस्तु जगत्यस्ति तादृशास्यैरयोमुखैः ।
कैश्चिन्निभृतकन्दर्परूपलावण्यकोमलैः ॥ ३५ ॥
कोटिसूर्यप्रतीकाशैश्चन्द्रकोटिसमप्रभैः । नानावर्णैर्विश्वमुखैर्विश्वरूपैश्चतुर्मुखैः ॥ ३६ ॥
द्विमुखैः पञ्चवक्त्रैश्च त्रिमुखैः षण्मुखैरपि । एकानेकमुखैः शान्तैः सर्वदा सुखिभिर्युतम्
नानाभोगसमृद्धैश्च रतिकामसमैरपि । लक्ष्मीनारायणमुखैरुमेशसमविग्रहैः ॥ ३८ ॥
नानारूपधरैश्चान्यैः सेवितं मन्दराचलम् । धेनवो यत्र वेदाश्च मीमांसावत्ससंयुताः ॥
धर्मादयः सवर्ष्माणः पुराणानि च कर्मणा ।
स्मृतीतिहासजातानि आगमाश्च शरीरिणः ॥ ४० ॥
स्थिताश्च मन्दरे यत्र सशैलः पापनाशनः । तस्य मध्ये महापुण्यं पुरं परमशोभितम् ॥
वापीतडागोपवनप्रासादशतशोभितम् । सप्त प्राकारपरिखं रत्नाट्टालकसंयुतम् ॥ ४२ ॥
गोपुरैर्नवभिर्युक्तं विचित्रगृहसंयुतम् । यस्य चाप्रतिमं तेज उष्णशीतादिवर्जितम् ॥४३
तन्मध्ये नगरी पुण्या तन्मध्ये च सभा शुभा ।
तस्यां भद्रासनं मध्ये वेदपादविचित्रितम् ॥ ४४ ॥
सर्वोपनिषदाक्लृप्तं पादपीठं सुशोभनम् । पुराणान्यागमास्तस्यस्वस्तीति शिवपादयोः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्रासीनो महायोगी गोक्षीरसदृशाकृतिः ।
मन्दस्मितसुचार्वास्यो द्व्यष्टवर्षवयाः प्रभुः ॥ ४६ ॥
दधान उरसा मालां मणिरुद्राक्षकल्पिताम् । बिभ्राण उपवीतं च कर्णिकारसमद्युतिः ॥
सुरत्नकुण्डलोद्देयः किरीटकनकाम्बरः । नानाभूषणसंयुक्तो नानागन्धविलेपनः ॥
वामाङ्कन्यस्तगिरिजो वीक्षमाणस्तदाननम् ।
मुग्धां च सुमुखीं बालां नवयौवनशोभिताम् ॥ ४९ ॥
भूषितां चारुसर्वाङ्गीं बिभ्रती कनकाम्बुजम् ।
आलिङ्ग्य वामेन करेण देवीं दक्षेण तस्या मुखमुन्नमय्य ।
स्पृष्ट्वा शिरो वामकरेण तस्या दक्षेण कुर्वंस्तिलकं च देवः ॥५०॥
भक्तिर्वीजयते देवं प्रणवव्यजनेन च । पूजाकान्ताऽपि कुसुमैर्मालां देवाय बिभ्रती ॥
ज्ञप्तिर्विरक्तिर्वनिते बिभ्रत्यौ योगचामरे । समाधिः कार्यकर्ताऽस्य धारणा योषिदस्य च
यमाश्च नियमाश्चैव किङ्करास्तस्य कीर्तिताः ।
प्राणायामः पुरोधास्तु प्रत्याहारः सुवर्णधृत् ॥ ५३ ॥
ध्यानं च द्रविणाध्यक्षः सत्यं सेनापतिस्तथा ।
ब्रह्मप्रभृतिकीटान्ताः पशवस्तत्पतिः शिवः ॥ ५४ ॥
पशूनां पालको धर्मः स्यादधर्मश्च तस्करः । मायापाशेन ते बद्धामोचनी काशिकामृतिः
नानाविधाश्च प्रमदा देवदेवमुमापतिम् । एतादृशमुमानाथं कोटिजन्तुरनुस्मरेत् ॥५६॥
इष्टान्भोगानवाप्याथ शिवलोके महीयते । ब्रह्मविष्णुमहेन्द्राद्यास्तत्पुरद्वारपालकाः ॥
लक्ष्मीसरस्वतीदेव्यौ देहल्यर्च्चन उक्षितौ । नियुक्ते देवदेवस्य देवाश्च सुरयोषितः ॥
दास्यो देवाः समस्ताश्च दासा यस्य महात्मनः ।
एतादृशमहाशैलमिक्ष्वाकुः सन्ददर्श ह ॥ ५९ ॥
मुनिं प्रणम्य जाबालिमिदमाह वचस्तदा ।
गन्तुकामो महाशैलं शक्तोऽस्म्यस्मिन्न वा मुने ! ॥ ६० ॥
ममायुरल्पं कथितं यमेन ज्ञानिना पुरा । नरकश्च बहुः प्रोक्तः कथं श्रेयो भविष्यति ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जावालिरुवाच ।

मयाऽपि सर्वमेतत्ते ज्ञातं दिव्येन चक्षुषा । आयुर्दशदिनं ब्रह्मन्विद्वानपि न धर्मकृत् ॥
न तपस्तेह्यनभ्यासान्न च योगोऽल्पकामतः। नदानं द्रविणाभावादसामर्थ्यात्तथाऽर्हणा
न यज्ञो न व्रतं पूतं न चपुण्यमनायुषः । न चाध्यापनतीर्थादिसेवाकालनिरोधतः ॥
तस्मात्तत्पापनाशाय प्रायश्चित्तं न विद्यते । गतिप्रदं तथा धर्मं गच्छ वा तिष्ठ वा मुने

इक्ष्वाकुरुवाच ।

यावज्जीवं प्रतिज्ञाय क्रियते यो वृषो द्विज । तेन पापपरीहारो भविष्यतिसुनिश्चितम्
तं ब्रूहि येन धर्मेण मम पापं प्रणश्यति । केन वा पुण्ययोगेन स्वर्गतिश्च भविष्यति ॥
शरणं भव विप्रर्षे ! नरकादति बिभ्यतः । सर्वधर्मफलं प्राहुः शरणागतपालनम् ॥६८॥

जावालिरुवाच ।

सत्यं स्वल्पेन कालेन न तादृग्लभ्यते वृषः । अमृते त्वनृते शक्यं वक्तुं स्वप्नान्तरेष्वपि
रहस्यमेकं किञ्चित्तु यस्य कस्यापि नोच्यते ॥ ७० ॥

इक्ष्वाकुरुवाच ।

शरणं पालय मुने ! कालो मे निर्गमिष्यति ॥ ७१ ॥

जावालिरुवाच ।

मम प्राणाधिकं विप्र रहस्यं श्रुतिचोदितम् । शिवलिङ्गार्चनं नामब्रह्मादिभिरनुष्ठितम् ॥
समस्तपापशमनं सर्वोपद्रवनाशनम् । भुक्तिमुक्तिप्रदं तस्माच्छिवपूजां समाचर ॥७३॥
नातिक्रामेद्यदि मुने शिवलिङ्गार्चनं शुभम् ।
यः शम्भुपूजां विच्छिन्द्यात्तेन च्छिन्नं हि मे शिरः ॥ ७४ ॥
वरं शूलविनिक्षेपो वरंशाल्मलिकर्षणम् । वरं प्राणपरित्यागो नैव पूजाव्यतिक्रमः ॥
वरं वह्निप्रपतनं वरं चाधःशिरःकृतम् । वरं स्वमलभुक्तिर्वा नेशपूजाव्यतिक्रमः ॥ ७६ ॥
अपूजयित्वा चेशानं योहि भुङ्क्ते नराधमः । पापानामन्नरूपाणां तस्य भोजनमुच्यते
अनुच्चार्य पदं शम्भोर्भुङ्क्ते यदि च खादति । शिवेति मङ्गलं नाम यस्यवाचिप्रवर्तते
भस्मीभवन्ति तस्याशु महापातककोटयः । शिवं प्रदक्षिणीकृत्य यो नमस्यति मानवः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भूमेः प्रदक्षिणं कृत्वा यत्तत्पुण्यमवाप्नुयात् । प्रदक्षिणत्रयं कृत्वा नमस्कारं च पञ्चधा
पुनः प्रदक्षिणं कृत्वा नत्वामुच्येत पातकैः । सर्ववाद्यानि यः कुर्यात्कारयेद्वा शिवालये
बलेन महता युक्तो वेदसेव्यत्र जायते । श्रावयेद्यः पुराणानि देवदेवं त्रिलोचनम् ॥८२
सर्वपापविनिर्मुक्तो वसेच्छिवपुरे कृती । तं नित्यमादरेणेशो वक्ति वाक्यं प्रियं सदा ॥
एतत्संक्षेपतः प्रोक्तमीशपूजनमुत्तमम् । अल्पायुश्च भवान्विप्र शिवपूजनमाचर ॥ ८४ ॥
त्रिकालं वा द्विकालं वा एककालमथापि वा । यामं यामार्धमथवा शिवपूजनमाचर
वानप्रस्थाश्रमी भूत्वा वानप्रस्थकृताश्रयः । वानप्रस्थप्रसूनैश्च प्रातः पूजय शङ्करम् ॥
श्रीफलैः शतपत्रैश्च पद्मसौगन्धिकैरपि । नीपैर्जपाभिः पुन्नागैः करवीरैश्च पाटलैः ॥८७
तुलस्या च रविदलैरपराजितया तथा । अपामार्गदलै रुद्रजटादमनकेन च ॥ ८८ ॥
सर्वैरेभिः समफलैर्बिल्वपत्रैश्च धूर्तकैः । द्रोणैः शिरीषैः शक्रैश्च दूर्वया कोरकैरपि ॥८९
नन्द्यावर्तैरक्षतैश्च तिलमिश्रैश्च केवलैः । अन्यैरपि यथाशक्तिप्रातः सम्पूजयेच्छिवम् ॥
कर्णिकारैश्च सौवर्णदूर्वयापि शिवार्चनम् । मुकुलैर्नार्चयेद्देवं चम्पकैर्जलजं विना ॥९१
जलजानां च सर्वेषां पत्राणामक्षतस्य च । कुशपुष्पस्य रजतसुवर्णकृतयोरपि ॥ ९२ ॥
अन्यत्कृत्वा यथा यत्तु तैलपक्वं भवेन्नृप । न तत्पर्युषितं प्रोक्तमपूपादि गमिष्यति ॥
उक्षितं यत्फलायुक्तं तैलक्षाराम्लजीरकैः । जले तत्प्रोक्षितं मूलफलशाकादिकं नृप ! ॥
न च पर्युषितंप्रोक्तं गङ्गातोयं च सागरम् । महानदीजलं सर्वं केदारजलमेव च ॥९५॥
ह्रदरूपेण यत्तीर्थं कूपतीर्थेन वाडव । तडागवापीसरसां कूपेनापां च यद्भवेत् ॥ ९६ ॥
तत्तीर्थतोयं सर्वं च न च पर्युषितं भवेत् । न रात्रौ जलमाहार्यं दिवा सम्पादयेज्जलम्
ससैकतं तथा धार्यं न च पर्युषितं हि तत् । एवं विदित्वापूजां त्वं शिवलिङ्गे समाचर

शम्भुरुवाच ।

एवमुक्तोऽथ मुनिना इक्ष्वाकुर्ब्राह्मणप्रियः । शिवपूजापरो भूत्वा दिनाष्टकमतिष्ठत ॥
नवमेऽथ दिने प्राप्ते प्रातः काले कृतार्चनः । मरणावसरे प्राप्ते शिवपूजां विधाय सः
स्वान्प्राणानुपहाराय तत्याजैव महेशितुः । मृतं तमथ विज्ञाय यमदूता समागताः ॥
यमलोकप्रापका ये यत्नमास्थाय तस्थिरे । शैवाश्चापि समायाता दूताचह्निमुखादयः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेषामन्योन्यवादोऽभून्मामको मामकस्त्विति । अथयामः पाशपाणिःशिवदूतमथार्दयत्
अथ वह्निमुखः क्रुद्धो यमदूतशतं ततः । महाकायस्तथा भूत्वा गृहीत्वा च करेण तत्

शिरांसि च तथैकेनापीड्य चिच्छेदशष्पवत् ।

मारयित्वा ततो दूतानादायेक्ष्वाकुमभ्यगात् ॥ १०५ ॥

निवेदयामास च तं वीरभद्राय धीमते । स चापि शङ्करायाथ तं प्राह च महेश्वरः ॥
त्वयाष्टदिनपूजैव कृता कृष्णादिने दिने । त्वमनिन्दः पुरा मां च लिङ्गं शिश्नाग्रमित्युत
तेनैव पापयोगेन शिश्नवक्त्रो भविष्यसि । शिश्नाग्रे विवरं चक्रं जिह्वानासादिवर्जितः

पूर्वं मन्नामवक्तृत्वाद्वक्ता चापि भविष्यसि ।

अथेशवचनात्सोऽपि तथाभूतोऽभवत्क्षणात् ॥ १०६ ॥

शम्भुरुवाच ।

य इदं शृणुयान्नित्यं पुराणाख्यानमुत्तमम् । विमुक्तपापबन्धश्च शिवभक्तो भविष्यति

स याति च शिवस्थाने वक्ता चापि तथा भवेत् ।

यश्च वक्ति कथामेनां हरेण सदृशो भवेत् ॥ १११ ॥

उक्त्वा कथामिमां पूर्वमधीरो नाम भूमिपः । स्वर्गं स गतवान्राजाक्षतपापोऽथ भार्यया

श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे विभूतिमाहात्म्ये
नवोत्तरशततमोऽध्यायः ॥ १०९ ॥

———

## दशाधिकशततमोऽध्यायः

### अग्निमुखाभिधशिवगणवृत्तान्तवर्णनम् ।

श्रीराम उवाच ।

अयमग्निशिखो नाम वह्निः शिवगणश्च वै । स कथं तादृशो भूतस्तन्मे वद नमोऽस्तु ते

शम्भुरुवाच

अयमासीत्पुरा कश्चित्क्षत्त्रियःक्रोधनः सदा । नष्टभार्यो नष्टसेनो नष्टराष्ट्रोऽतिदुःखितः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लब्ध्वा लुलायद्वितयं कृषिं चक्रे सहात्मजैः। ऋणेन महता युक्तः पुनश्चातीवदुःखितः॥
पुनश्च दुःखितो राजा सर्पेण सुतनाशनात्। तथाभूतो महीपालस्तत्याज कृषिमप्युत
परित्यज्य सुतौ चापि त्यक्ताहारो रुरोदह। सुतावथ समागम्य प्राहतुः पितरं त्विदम्
किमर्थं रुद्यते तात नष्टो नायाति रोदनात्।
शरीरशोषणायाथ शोकस्तेऽद्य भविष्यति॥ ६॥
शोकेन चक्षुषी नष्टे कण्ठो नष्टस्तथा तव। अनुष्ठानं तथा नष्टं किमर्थं परितप्यसे॥७॥
एको नष्टो न चायाति रक्ष पञ्च स्थितानसून्।
बहूनां रक्षणं पुण्यमाश्रितानां विशेषतः। अन्याश्रितममुं शत्रुं कथं शोचितुमर्हसि॥८
पितोवाच।
पुत्रः शत्रुः कथं पुत्रौ युवां शत्रू तथा च मे। अत्यन्तसुखिनं पुत्रं कथं शत्रुमभाषतम्॥
सुतावूचतुः।
जायमानो हरेद्दारां वर्द्धमानो हरेद्धनम्। म्रियमाणस्तथा प्राणाञ्छत्रुत्वं किमतःपरम्
यत्सुखं च त्वया प्रोक्तं स्पर्शनालिङ्गनादिभिः। दुःखोदर्कमिदं राजन्सर्वमेतद्वदामि ते
प्रसूतिकाले पुत्रस्य भार्यानाशविचारणा।
जीवितायामथो पत्न्यामात्मनः सुखनाशनम्॥ १२॥
योन्यशुद्धौ तु जातायां संयोगो नोपपद्यते। आलिङ्गनपरे गाढं स्तन्येनाङ्गपरिप्लुत॥
तथापि यदि संयोगः शिशुरोदनतः स्त्रियाः। द्रुढं शिशुगतं चित्तं ततो वैरस्यमेव च॥
अथ चेत्पतितो डिम्भो मध्ये मैथुनमुद्गतिः।
रतिमध्ये तु विच्छेदे दुःखं किञ्चिदसन्निभम्॥ १५॥
सर्वकाले परिमिते कदाचिद्रतिसम्भवः।
तत्काले भोजनं नास्ति स्वापो नास्ति च भार्यया॥ १६॥
शिशूनां रक्षणे दुःखं व्याधितर्षग्रहादिभिः। तन्मयं यत्सुखं चित्रं यथाङ्कारोहणं पितुः॥
आलिङ्गनकृतं तात चुम्बनादिकृतं तथा। अत्यन्तमधुरोक्त्यादि यत्सुखानि नरेश्वर!॥
रतिमध्ये विरामस्य कलां नार्हन्ति षोडशीम्।
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्यान्यपि च दुःखानि सन्ति पुत्रे सहस्रशः ॥ १६ ॥
अनेनत्वं किं कुरुषे इहामुत्रविरोधिना । त्यजशोकमिदं तस्मादावांपुत्रौ स्थिताविह ॥

श्रीराजोवाच ।

त्यजामि शोकं दुर्वारं सर्वकार्यविरोधिनम् । आत्मनश्च हितं कार्यमिहामुत्र सुतौ मम
पुरोधसं तु गच्छामि ममपूर्वं महागुरुम् । वसिष्ठं मुनिवर्यं च स दास्यति गतिं मम ॥
एवमुक्त्वा गतो विप्रं वाराणस्यां स्थितं गुरुम् । दण्डवत्प्रणनामाथ मुनिना परिपूजितः
आलिङ्गितः शिरोघ्रातो दत्तासनपरिग्रहः । उक्तश्चागमनं किं ते किंकार्यं करवाणिवै ॥

राजोवाच ।

गतिं प्रयच्छ मे विप्र! संसारतरणाय हि । खिन्नोऽहं कर्मणा शश्वद्भवन्तं शरणं गतः॥

वसिष्ठ उवाच ।

गतिं पश्य महालिङ्गं विश्वेश्वरमिति स्थितम् । एनं पूजय राजेन्द्र देवदेवं पिनाकिनम्
यमाराध्य पुरा शक्तिररुन्धत्याः सुतो मुनिः । रक्षसा भक्षितश्चापियमलोकं गतो न सः
किञ्चित्कालगतः स्वर्गं ब्रह्मलोकमगादतः ।
ब्रह्मलोकाद्विष्णुलोके क्रीडन्नास्ते सुतो मम ॥ २८ ॥
अमुं पश्य महाराज लुब्धकं वनचारिणम् । पूजयन्तं हि विश्वेशं पत्रमात्रैः स्वसम्भृतैः
शमीवृक्षस्य सम्भूतैस्तथा पूगप्रसूनकैः । कदम्बकुसुमैरर्ककुसुमैर्यूथिकाभवैः ॥ ३० ॥
एतैरन्यैर्महेशानं पूजयन्तं विलोकय । इतोऽर्द्धयाममात्रेण मरिष्यति तदद्भुतम् ॥३१॥
अन्तकाले समायाते लुब्धकोऽपि शिवाय वै । उपहारप्रदानाय दृष्टवान्पार्श्वतो घटम्
तं चूतफलसम्पूर्णं शुना स्पृष्टं विगर्हितम् । सङ्कल्पितोपहारस्य ह्यभावाल्लुब्धकस्तथा
इदं जगौ शुभं वाक्यंलोकानां भक्तिसूचकम् । पुष्पाभावेहरिर्नेत्रं फलाभावेऽगुलं रविः
लिङ्गविस्रंसनेकं च जमदग्निऋषिस्तथा । लिङ्गपीठविभेदे च गात्रं निर्भिद्य दत्तवान् ॥
अन्यैर्माहेश्वरैरन्यत्साहसं परमं कृतम् । ममापि तत्तथा कार्यमन्यथा दोषभागहम् ॥
एतस्मिन्नन्तरे कश्चिदुन्मत्तः शिवमभ्यगात् ।
अथ लुब्धकृतां पूजामाहत्याभक्षयत्क्षणात् ॥ ३७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वमनं च तथा चक्रे शिवपीठेऽथ लुब्धकः ।
शिवापकारिणं चैनं हन्मि नो वेत्यचिन्तयत् ॥ ३८ ॥

अथ स्वात्मवधायैव यत्नमास्थाय शङ्करः । उन्मत्तेनयथोद्भुक्ता शिवपूजा मया कृता
लिङ्गप्रावरणे ह्येषा त्वहं मम देहिनः । प्रावृतिस्त्वगियं त्वद्य निर्मोक्तव्या मया द्रुतम् ॥
पूजाविमोचनायैतत्फलहानेर्गलं त्यजेत् । इत्थं सङ्कल्प्यसतथातीक्ष्णस्वधितिनाद्भुतम्
चक्रे त्वचं दक्षपादं त्वचं छित्त्वा कटेरधः । वामपादं तथा चक्रे कटिपर्यन्तमाशु च ॥
हृष्टश्चावेपितश्चैव तत ऊर्ध्वमथाच्छिनत् । करांसोदरहृत्कण्ठत्वचं निर्भिद्यलुब्धकः ॥
मस्तकस्य त्वचं चापि निर्बिभेद प्रहृष्टवान् । तयोरन्तरतस्तस्माद्गात्रं निर्भिद्य वर्तुलम्
छित्त्वाऽङ्गुलिं समादाय देवायार्पितवांस्त्वचम् । आरादेव तथा दिव्यरूपः स्वक्षश्चतुर्भुजः
नानाभूषणसंयुक्तः स्थितो वियति शाङ्करः । अथ शैवाः समायाता दूताः शतसहस्रशः
विचित्रमुकुटाकराः सर्वाभरणभूषिताः । त्रिशूलपाणयः सर्वे शुद्धस्फटिकसन्निभाः ॥
चतुर्भुजाः सुरूपाश्च विमानवरसंस्थिताः । सर्वे सूर्यसमाः शान्तारम्भावत्प्रिययायुताः
सूनुपत्नीबलोत्साहविलासस्त्रीशतान्विताः । तेजसा सूर्यसदृशाः पुष्पवृष्टिमवाकिरन् ॥
तैराहूतो लुब्धकश्च नागच्छदवदच्चतान् । भार्याबन्धुजनोपेतो गच्छेऽहमथवा न वा ॥
शैवास्तद्वचनं श्रुत्वा वाक्यमेतदथोचिरे । येन पुण्यं कृतं पापं तेन भोग्यं हि तत्फलम्

लुब्धक उवाच ।

अशौचानां च सर्वेषां धर्माणामेककर्तृकम् । माहेश्वराणां धर्माणां फलं च द्विवह्वष्वपि
एतस्मिन्नन्तरे प्राप्तो वीरभद्रः शतार्भकः । नानाकोटिगणोपेत एहि लुब्धकबन्धुयुक्

सर्वं त्वयोक्तं च तथा सभार्यो ज्ञातिबन्धुयुक् ।
आरुह्येदं विमानं च शिवं गच्छ शिवं तु वः ॥ ५४ ॥
अथ तद्वचनात्प्राप्तः शिवलोकं विमानगः ॥५५॥

वशिष्ठ उवाच ।

इष्टवानसि सर्वं त्वमीशपूजां समाचर । विमुक्तपापबन्धस्त्वं शिवलोकं गमिष्यसि ॥
यदि राज्यं त्वया प्रार्थ्यं मार्जये शाङ्गणं नृप । गोमयोदकलेपं च नित्यमेव समाचर ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतावता भूमिराज्यं ध्रुवं तव भविष्यति । यावदायुश्च ते राज्यमन्ते शिवपदं भवेत् ॥
नैतस्मिंस्तु भवेद्राज्यसंसिद्धिरनुमृत्युतः । अतो देहान्तरं प्राप्य शिवसेवाप्रभावतः ॥
भविष्यति च ते राज्यं शिवभक्तिः स्थिरा तथा ॥ ५९ ॥

शम्भुरुवाच ।

अथ कृत्वा तथा पूजां मृतः स्वर्गगतस्ततः। राजजन्म पुनः प्राप्य राज्यं चक्रे शिवे रतः
कदाचिदथ देवस्य गृहमभ्यगमन्नृपः । नानादीपसमोपेतं मणिभिर्नागराडिव ॥ ६१ ॥
भटानामथ संमर्द एको दीपोऽपतन्नृपे । तदाऽसौ कुपितो राजा दीपमादाय सत्वरम् ॥
देवालयपुरे रम्ये न्यक्षिपत्कोपसंयुतः । दग्धं देवगृहं तेन एनश्च समपद्यत ॥ ६३ ॥
अथ तेन पुनस्तत्र दग्धं वेश्मगृहादिकम् । निर्मापयामास नृपो महेशानमथायजत् ॥
अथ मृत्युदिने प्राप्ते राजाऽऽराधितशङ्करः । भस्मस्नायी भस्मशायी जपन्रुद्रं ममार ह
शिवलोकं गतःसोऽयं वीरभद्रेण भाषितः । भव त्वं गणशार्दूलो मम वै परिचारकः

शाङ्करान्मम निर्देशादानयस्व ममान्तिकम् ।
शिरोहीनो भवांश्चापि ज्वालावक्त्रो भविष्यति ॥६७॥
स तूवाच महात्मानं वीरभद्रं गणेश्वरम् ।
चक्षुःश्रोत्रं तथा जिह्वानासिकास्यं शिरोगणः ॥ ६८ ॥
एतैर्विना व्यवहृतिः कथं मे सम्भविष्यति ।
अभावे शिरसः किं वा मया पापं कृतं विभो ! ॥६९॥

वीरभद्र उवाच ।

त्वयैव स्वीकृता पूर्वं देवी परमसुन्दरी । महेशभवनं नित्यं चातुर्वर्णकरङ्गकैः ॥ ७०॥
स्वस्तिकं सर्वतोभद्रं नन्द्यावर्तादिकं शुभम् । पद्ममुत्पलमान्दोलपादौ व्यजनचामरे ॥
त्रिशूलं शङ्खचक्रेचगदाधनुरथैव च । त्रिशूलं डमरुं खड्गं वृषं भृङ्गिरिटिं शिवम् ॥७२॥
तथाष्टत्रं कमलमन्यद्यन्त्रादिकं तथा । कल्पयन्ती प्रतिदिनं सेवते वृषभध्वजम् ॥७३॥
कदाचिदथ सावेश्या देवसद्मन्युपस्थिता । राज्ञः कारार्ङ्किकः कश्चिद्देववेश्मसमाविशत्
अथ तां दृष्टवांस्तत्र स इदं वाक्यमुक्तवान् ॥ ७४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारांङ्किक उवाच।

एकान्तसंस्थिता वेश्या युवाऽहं स्थविरश्च न ॥ ७५ ॥

स्थविरं व्याधितं षण्ढमशक्तं धनवर्जितम्। अदीर्घमेहनं दीनं पुरुषं योषिदुत्सृजेत् ॥

अश्मश्रुलंमलच्छन्नं जडं दुर्गन्धिदूषितम्। स्वल्पमव्यसनं नारी दूरतः परिवर्जयेत् ॥

तस्मान्मे दीयतां वेश्ये! मैथुनं जीवयाशु माम्।

वेश्योवाच।

नियतः सर्वजातीनामिहामुत्र सुखप्रदः ॥ ७८ ॥

पातिव्रत्यं परो धर्मः स्त्रीणामिति हि शुश्रुम।

यदधीना यदावश्या तदा नान्येन सङ्गता ॥ ७९ ॥

पतिव्रतेति विख्याता तस्मात्तं परिपालयेत्।

काराङ्किक उवाच।

यदि चैवं मृतिः शीघ्रं भविष्यति न संशयः ॥ ८० ॥

अथ राजान्तिकं गत्वा राजानमिदमुक्तवान्।

वेश्या वेश्यैव नो भार्या नेति वक्तुं च नोचितम् ॥ ८१ ॥

इत्थं राजानमुक्त्वाऽथ मण्डं चैवारनालजम्।

किञ्चिदादाय तस्यास्तु मन्दिरं गतवानयम् ॥ ८२ ॥

निद्रावसरमालोक्य प्रसृज्य च करं ततः ॥ ८३ ॥

वस्त्रस्य विवरे तत्र मण्डं चिक्षेप दुष्टधीः। एवं कृत्वा ततोगत्वा राजानमिदमुक्तवान्

राजन्निर्गत्य गत्वाऽथ वेश्याग्र्यां तव योषितम्।

उत्थापयित्वा वेश्यां तां सर्वाङ्गं द्रष्टुमर्हसि ॥ ८५ ॥

उन्मुक्तबन्धमथवा वसनं पश्य यत्नतः। वेश्यावेश्माथ गतवान्राजाकाराङ्किकं वचः ॥

इदमाह सनिद्रेयं पश्येमां यामिपश्यसि। स तूवाच नृपं तत्र न मे युक्तमिदं नृप! ॥

तन्मातरं वा पितरं दर्शनाय नियोजय। तद्दृष्टौ सर्वमेवेदं व्यक्तमाशु भविष्यति ॥८८

आनीता ह्यथ राज्ञातु माता वीक्षितुमुद्यता। वचनात्तु नृपस्यैव वस्त्रं शोधयतीव सा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र स्थितं मण्डमथ विज्ञायाम्बाह्यमर्दयत् । मर्दनाद्वसनं क्लिन्नं किं तदित्याह पार्थिवः न किञ्चिद्देव नोकिञ्चिदिति वेश्याप्रसूरपि । बहुवाक्येन राजाऽथ वसनं वीक्ष्य शङ्कया शुक्रक्लिन्नमिदं वासः प्राहैतद्दृश्यतामिति । अथ दृष्ट्वासमीपस्थास्तथेत्यूचुर्वचो नृपम् राजाऽथ स्वगृहं गत्वादण्डाध्यक्षमभाषत । इदानीमेववेश्यायाःशिरश्छिन्ध्यविचारयन्

दर्शनीयं शिरस्तस्या घटिकाभ्यन्तरे मम ।
दण्डकश्च नृपोक्त्याऽस्यास्तथा कृत्वा ह्यदर्शयत् ॥ ६४ ॥

वीरभद्र उवाच ।

एवं कृतं त्वया पूर्वं प्राप्तं च फलमद्य ते ।

ज्वालयैवहिवक्तात्वं श्रोताद्रष्टाचजिघ्रसि । रसं जानासिमतिमानतिक्रोधीभविष्यसि

शम्भुरुवाच ।

एवं ज्वालामुखोजातोराजामाहेश्वरोऽक्षमी । तस्मात्तु क्षमिणाभाव्यं परत्रेहसुखेप्सुना य इदं श्रृणुयान्नित्यं पुण्याख्यानमनुत्तमम् । विमुक्तपापबन्धश्च शिवलोके भविष्यति

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे शिवपूजामाहात्म्यकथनं नाम दशोत्तरशततमोऽध्यायः ॥ ११० ॥

----

# एकादशाधिकशततमोऽध्यायः

## शिवनाममाहात्म्यवर्णनम् ।

श्रीराम उवाच ।

महेशनाममाहात्म्यं पूजामाहात्म्यमेव च । नमस्कारस्य माहात्म्यं दृष्टिमाहात्म्यमेवच जलदानस्य माहात्म्यं धूपदानस्य सत्तम । दीपगन्धादिदानस्य माहात्म्यं वद मे गुरो

शम्भुरुवाच ।

एकैकनाममाहात्म्यंविस्तरान्न हि शक्यते । संक्षेपेण च ते वच्मि श्रृणु राघव सादरम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरा त्रेतायुगे राजा विधृतो नाम वीर्यवान् ।
मृते पितरि बालोऽसौ भूमिराज्येऽभिषेचितः ॥ ४ ॥

समानवयसः सर्वान्समीपस्थांश्चकार सः। ये वृद्धा ये विद्वांसस्ते च तस्य न संमताः
युवानः संमता दुष्टा अकार्यकरणास्तथा । सुस्त्र्यानयनदक्षाश्च चोरकर्मविशारदाः ॥
भाण्डवार्तारतालास्यनिपुणास्तस्य संमताः । वशीकरणमन्त्रज्ञा वस्त्रौषधविदस्तथा
गीतनर्तनशीलाश्च धूर्त्ताद्यूतविदः प्रियाः । पितृसंमतकर्तृणां त्यागं चक्रे स पार्थिवः ॥

विचार्य स च तैः सार्द्धं दुष्टैः कार्यमकारयत् ।
एतादृशांस्तथा चान्यान्दुष्टान्सह युयोज ह ॥ ६ ॥

एतदुक्तिमुपालभ्य शिष्टं सुहृदमत्यजत् । उरोमुष्टिं च फेत्कारं ये कुर्युस्तस्य ते प्रियाः
भगलक्षणतत्त्वज्ञा रतितन्त्रविशारदाः । राजनीतिविहीनं तद्राज्यं समभवत्तदा ॥११॥
गजाश्वरथमुष्ट्राजं गोमहिष्यादिकं चयत् । तत्सर्वं नाशमापन्नमपहारा यतस्ततः ॥१२
रत्नानि वसुधान्यानि न दृश्यन्ते पुरे तदा । अथ भूपान्तरेणासौ निर्जितः प्रपलायितः
महारण्यमथो गत्वा गिरिदुर्गमकल्पयत् । तत्र चाल्पपरीवारश्चोरवृत्तिसमाश्रितः ॥१४
सुवर्णवस्त्रधान्यादि रत्नगन्धादिकं तथा । तत्र तत्र विनिर्दिश्य चोरानानीय वञ्चकान्
बन्धाद्यकारयत्तैस्तु द्रव्याहरणकर्मणि । यदाहारो न विद्येत तदाहारमकल्पयत् ॥१६॥
गोमहिष्यादिमांसेन यद्यन्नं नोपलभ्यते । अश्वीयनरमांसेन भोजनं पर्यकल्पयत् ॥
एतादृशमभूद्वृत्तं सन्ध्योपासादिवर्जितम् । एकस्तुसचिवस्तस्य सुरापो नाम राक्षसः
नियुङ्क्ते सर्वकालं तमाहर प्रहरेति च । एवं रक्षो मतेस्थित्वा नानादेशगतान्नरान् ॥
नृसहस्रपरीवारो ह्याद्याद्दकुपालयः । स्वस्याभिमतयोषास्तु ज्ञात्वा ज्ञात्वा समाहरत्

किञ्चित्कालं च ता भुक्त्वा तासां मांसमभक्षयत् ।
एवं हत्वा नरान्नारी राज्यं चक्रे सुदुःसहम् ॥ २१ ॥

एवं वर्षसहस्रं तु राज्यं कृत्वा नराधमः । जराशिथिलसर्वाङ्गो वलीपलितदूषितः ॥२२
निर्जीवमभवत्स्थानं समन्ताद्दशयोजनम् । अथ मृत्युदिनं प्राप्तं राज्ञस्तस्य महात्मनः

मृत्युकालेऽथ सम्प्राप्ते स्नातं भूमिगतं नृपम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्य चानुचराः सर्वे परिवार्योपतस्थिरे ॥ २४ ॥
सुरापः सचिवः प्राह किंकार्यं मम चादिश । अथ राजातथाऽशक्तो निर्गतायुस्तदार्दितः
नाभेरधस्तु क्षीणासुः कथञ्चिद्वाक्यमुक्तवान् । त्वं सर्वकाले दैत्येन्द्र प्रहर प्राहराहर
इत्यथोक्त्वा ममारासौ यमदूताः समाययुः। विचित्रं वन्धनेयत्नं चक्रुस्ताडनतत्पराः॥
चूर्णिता वन्धपाशाश्च हेतिदण्डाश्च चूर्णिताः । तद्गात्रस्पर्शमात्रे च तद्द्भुतमिवाभवत्
अथायातः स्वयं मृत्युः पाशेनैनमयोजयत् ।
मृत्युपाशमपि च्छिन्नं वीक्ष्य मृत्युरचिन्तयत् ॥ २६ ॥
सर्वमर्त्यसृतिर्द्दृष्टा दृष्टानैतादृशी क्वचित् । इति चिन्तापरे मृत्यौज्वालावक्त्रःप्रतापवान्
वीरभद्रेण निर्दिष्टः सहसाऽऽयाच्च शूलभृत् ।
ज्वालावक्त्रमथालोक्य मृत्युस्तूर्णं पलायितः ॥ ३१ ॥
पलायमानं तं दृष्ट्वा मृत्युं वह्निमुखस्तदा। अरे रे चोर चोर त्वं तिष्ठ तिष्ठ क्व यास्यसि
एनसो मुच्यते चोरः शूलारोपणमात्रतः । एवमाभाष्य मृत्युं तं शूलप्रोतमकल्पयत् ॥
शूलस्कन्धगतं कृत्वादूतान्सङ्ग्रथ्य रज्जुना । पादशृङ्खलविन्यस्तानादायनृपमभ्यगात्
विमानवरमारोप्य गीतवाद्यसुशोभितम् । वीरान्तिकमथोगत्वा सर्वमस्मै न्यवेदयत् ॥
वीरभद्रोऽपि तत्सर्वं शङ्करायामितात्मने । नानामुनिगणैर्देवैर्ब्रह्मविष्णुपुरःसरैः ॥३६॥
सेव्यमानाय देवाय पार्वतीसहिताय च । प्रणिपत्य निवेद्याथ शूलस्थं मृत्युमेव च ॥
तूष्णीं बभूव विश्वात्मा वीरभद्रः प्रतापवान् ॥ ३८ ॥
अग्न्याननं वीक्ष्य शिवो निगर्हयन्कथं त्वयैतद्गण साहसं कृतम् ।
बिभेषि मृत्योर्न कथं यमाधिकाद्वदस्व सर्वं परमार्थतो न ॥ ३९ ॥
प्रणम्य तं वह्निमुखोऽतिरोषो मृत्युं समालोक्य ननर्त हर्षात् ।
उवाच चौर्यं कृतमेव मृत्युना तदेष शूलेऽपि मया प्ररोहितः ॥ ४० ॥
विमोचयामास शिवोऽपि मृत्युं दूतानशेषान्निरुजश्चकार ।
मृत्युं समालोक्य शिवो बभाषे मन्नाम एषां मरणे समास्ते ॥ ४१ ॥
मच्चेतसामन्यधियां च नाम हीनाक्षरं वाऽधिकवर्णयुक्तम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ममैव लोकं प्रददामि सत्यं ह्यनेन नामप्र हरेति भाषितम् ॥ ४२ ॥
प्रशब्दमात्रं त्वधिकं हरेरितपदप्रदं वै पदमीरयन्ति ।
आरादमूस्त्वं जपतो नमस्व मदीयवाक्यं च यमं वदस्व ॥ ४३ ॥
नतिं यतिं कीर्तिमुपास्तिमाश्रिता दास्यं च कैङ्कर्यमथ श्रुतिस्वदाः ।
पञ्चाक्षरोक्तिं शतरुद्रियोक्तिं शिवस्य कुर्वन्ति न ते विचार्याः ॥ ४४ ॥
भस्माक्षरुद्राक्षविभूतिधारणो ममाग्रतो यस्तु पुराणवक्ता ।
सर्वेषु पापेष्वपि तेषु सत्सु प्रशास्म्यहं नैव यमाधिकारः ॥ ४५ ॥
ये चापि पापान्वितमायिनो नराः परान्नवस्त्रादिवधूभुजश्च ।
वाराणसीमृत्युपराश्च ये वै श्रीशैलमर्त्याश्च न ते विचार्याः ॥ ४६ ॥
यूकाश्च दंशा अपि मत्कुणाश्च मृगादयः कीटपिपीलिकाश्च ।
सरीसृपा वृश्चिकशूकराश्च काशीमृताः शङ्करमाप्नुवन्ति ॥४७॥

इदं नाम गृणन्ध्यायेद्यो वै हृत्पद्ममन्दिरे । त्रियम्बकं विरूपाक्षं सोमं सोमार्द्धभूषणम्
त्रिनेत्रकं त्रयीनेत्रं सोमसूर्याग्निलोचनम् । तं नमस्कृत्य दूरस्थो भव मृत्यो ! ममाज्ञया
अथाकर्ण्य शिवप्रोक्तं मृत्युस्तुष्टाव शङ्करम् । नमस्ते देवतानाथ ! नमस्ते देवमूर्तये ॥
सर्वज्ञाय नमस्तुभ्यं पशुनां पतये नमः । अथ देवो महादेवो मृत्युं प्राह वरं वृणु ॥

स्तोत्रेणानेन तुष्टोऽस्मि मृत्युर्वरमयाचत ।
त्वदीयं पालय विभो ! मां च शङ्कर ! पापिनम् ॥ ५२ ॥
तथेत्युक्त्वा मृत्युमीशो गच्छ वत्सेति चाब्रवीत् ।
यमलोकं गतः सोऽपि यमायाशेषमुक्तवान् ॥ ५३ ॥

शम्भुरुवाच ।

य इदं श्रृणुयान्नित्यं पुण्याख्यानमनुत्तमम् । विमुक्तः सर्वपापेभ्योयातिशङ्करसन्निधिम्

इति श्रीपाद्मेमहापुराणेपञ्चमे पातालखण्डेशिवराघवसंवाद एकादशोत्तरशततमोऽध्यायः

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## द्वादशाधिकशततमोऽध्यायः

### शिवनाममाहात्म्ये देवरातसुतायाःकलाया वृत्तान्तवर्णनम् ।

शम्भुरुवाच ।

अथान्यदपि निर्वच्मि प्रमदाख्यानमुत्तमम् । सुतया देवरातस्ययत्प्राप्तं नाम कीर्तनात्

देवरातसुता बाला कला नामाऽतिरूपिणी । धनञ्जयसुतस्यासीद्भार्या शोणस्य धीमतः

तावुभौ नियतौ नित्यं धर्मैकप्रवणौ शुभौ ।

लब्धवन्तौ निधिमथो गङ्गास्नानाय तौ गतौ ॥ ३ ॥

प्रवाहपतिते कूले मृत्तिकानयनाय तौ । कूलादादाय मृल्लोष्टं दृष्टवन्तौ महाधनम् ॥ ४ ॥

राजतं चोदुर्ध्वपाषाणमथ शोणःप्रियां वचः । इदमाह कथं कार्यं किं कर्तव्यं हि नोहितम्

भार्योवाच ।

न नारीमतमालम्ब्य किञ्चित्कार्यं समाचरेत् ।

न च नार्या चरेद् गुह्यमप्रियं वाऽथ किञ्चन ॥६॥

यदि नारीसमक्षं तु द्रविणं दृष्टिमापतेत् । वञ्चयीत तथा नारी त्वीदृशैर्वाक्यसञ्चयैः ॥

अस्माभिर्न हि सम्प्रेक्ष्यं किं वा तत्र हि तिष्ठति ।

द्रविणं चेन्न संप्रेक्ष्यं बाधोदर्कं भविष्यति ॥ ८ ॥

अन्याज्ञातं तु यदि चेत्कुतो ज्ञानविनिश्चयः ।

अप्रदृष्टस्त्विदानीं चेन्निभृतः कोऽपि तिष्ठति ॥ ९ ॥

तिरोधानं न किञ्चिच्चेन्मायया कोऽपि तिष्ठति ।

न चेन्मायामनुष्याणां क्षेत्रपालस्तु तिष्ठति ॥ १० ॥

न हि चेद्भैरवश्चेह तिष्ठति ब्रह्मराक्षसः । न सोऽपि चेन्महाविद्या राज्ञां तत्र भविष्यति

न च जानाति चेद्राजा व्यवहारादिसम्भवः । स चेद् गूढप्रकारेण,चोरबाधा भविष्यति

अप्रमत्तस्य भवतो महानर्थो भविष्यति । प्रायेणार्थवतां नॄणां भोगलिप्सा प्रजायते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भोगाद्भोगान्तरेच्छा च सर्वानुष्ठाननाशिनी। जानाति यदि नारी स्वं भावयोगगतं तथा
नारी स्वतन्त्रतामेतिरोषाल्लब्धप्रकाशिनी। रोषे विश्वासतां याति तदा दोषः पुरोदितः

घश्वासिनि च विश्रम्भः प्रवासो वान्यचित्तता।
विश्रम्भाज्जायते स्त्रीणां नानाविधि विचेष्टता ॥ १६ ॥
यं कञ्चित्पुरुषं दृष्ट्वा युवानं प्रीतिरापतेत्।
प्रीत्या सञ्जायते योगो योगान्मैथुनसङ्गतिः ॥ १७ ॥

सततं मैथुने आरोविश्रम्भान्तरमापतेत्। भवता वा तथा पूर्वं भुक्तेदानीं च भुज्यते ॥

कां प्रतीच्छा तवेदानीं प्रीतिः कस्यामथापि वा।
का विदग्धा सुसंश्लिग्धा पुरुषादन्यतश्चरेत् ॥ १९ ॥
योऽब्रवीदथ वाक्यं तां यदि ब्रूयास्त्वमद्य मे।
सर्वमेव तथा वच्मि नान्यथा वाक्यमुच्यते ॥ २० ॥

इत्थं च धृष्टतां याता तथा रूपान्तरेण च। द्रव्यमादाय यत्किञ्चिदनुवर्तेस्वतन्त्रतः ॥

स मारयित्वा तां द्रव्यं गृहीत्वा पातयिष्यति।
अथ पूर्वं पतिमृतौ प्रविशेन्नाशुशुक्षणिम् ॥ २२ ॥

वैधव्ये द्रविणं सर्वं धर्मार्थं मे भविष्यति। इतिनिश्चित्य मनसा वैधव्ये समुपस्थिते

योनिकुण्डं समासाद्य दिवा वा यदि वा निशि।
एकान्तस्थानमभ्येत्य विवृत्य वसनं भगम् ॥ २४ ॥

इदमूचे वचो दुःखादुपस्थस्थकरासती। किं त्वया वै कृतं योने किंवा पापमुपाश्रिता
शिश्नस्य वाथवा पापं यत्त्वदन्तरवेशनात्। यच्च कर्तृकृतंपापं मादृक्सेवाविवर्जनात्
अतोऽपि कण्डूसम्भूतौ प्रवेशयेदथाङ्गुलीम्। विचित्रचेष्टा कृत्वा तु कण्डूबुद्धेरतःपरम्

मर्दयित्वा कराभ्यां तत्सन्ताड्य च विवृत्य तु।
असकृद्धुन्वती पादौ विवृतास्यातिदुःखिता ॥ २८ ॥

खट्वाकाष्ठमथालिङ्ग्यस्तनपीडं यथाप्रियम्। अथोविचित्रचित्तत्वे ततःप्रद्युष्टताभवत्

अथवाह्निपुरेस्थित्वा शाकं व्यवहृतं च यत्।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आलम्ब्य वेश्मनि निशि सन्ध्यायां विशिखासु च ॥ ३० ॥

कृत्वान्यवेषमात्मानं यैःकैरप्युपभुज्यते । अथवाच्यप्रभावेन शङ्कितायोग्यमाहरेत् ॥३१

अज्ञातं च गृहं गत्वा रमये देव निश्चितम् । नारी समक्षं लब्धं तु द्रविणे ह्येतदिष्यते

तस्मान्मयापि भवतो न विचारप्रयोजनम् ॥ ३२ ॥

शोण उवाच ।

एवमेतन्न सन्देहो गच्छ त्वं तिष्ठ दूरतः ।

मलमूत्रविसर्गार्थं स्थित्वा गच्छाम्यतः परम् ॥ ३३ ॥

तस्यां गतायां शोणोऽपि वस्त्रखण्डं त्वकल्पयत् ।

एकैकस्मिंस्ततःखण्डे त्वग्रहीद्द्रविणं बहु ॥ ३४ ॥

सैकते विवरं जानुदघ्नं कृत्वा ततस्ततः । क्षिप्त्वा धनं पूरयित्वा विष्ठां चक्रे तपोपरि

वस्त्राधारं घटं तं च प्रतिचिक्षेप कुत्रचित् । सर्वमज्ञातवत्कृत्वा स्नानाय प्रययौ मुनिः

तस्य भार्या ततः स्नानं कृत्वा सम्पूज्य पार्वतीम् ।

गच्छेति भर्त्रा सा प्रोक्ता स्ववेष्माभ्यागमत्सती ॥ ३७ ॥

एतामेकाकिनीं ज्ञात्वा मारीचो नाम राक्षसः । भर्तृरूपमथास्थाय कलामेतदुवाचह ॥

मारीच उवाच ।

सप्तगोदावरीतीरे पवित्रं पापनाशनम् । द्राक्षाराममिति प्रोक्तं यत्र भीमः स्वयं स्थितः

भुक्तिमुक्तिप्रदो नृणां स्मरणात्पापनाशनः । तत्र गच्छावहे शीघ्रं त्वं तु निर्गच्छ सुन्दरि

कलोवाच ।

इदानीमभिषेकाय प्रवृत्तो नाभिषिक्तवान् । कथमेतादृशं त्वंहि पूर्वानुक्तं वदिष्यसि ॥

प्रकृतेरन्यथा भावमुत्पातं विदुरुत्तमाः ॥ ४२ ॥

मारीच उवाच ।

भर्तुरप्रतिकूलत्वं नारीणां धर्म उच्यते । प्रतिकूलानुकूला वा मम शीघ्रं वदस्वतत् ॥४३

तूष्णीं भूत्वाऽथ सा साध्वी भर्तेत्येव विचार्य तम् ।

निर्ययौ तेन सा बाला वनमध्ये गता सती ॥ ४४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ मध्याह्नकालेऽसौ क्रियतामाह्निकक्रियाः ।
राक्षसोऽथ वचः श्रुत्वा नानुष्ठानस्थलं त्विह ॥ ४५ ॥
यत्र तत्रास्ति गन्तव्यमितो गच्छावहे ततः ।
किञ्चित्प्रदेशं गत्वा तु गुहां वीक्ष्य सरस्तथा ॥ ४६ ॥
इह स्थानं हि मे स्थातुं कार्यं स्नानमथ प्रिये ! ।
इत्युक्त्वा सरसि स्नात्वा फलाहारं प्रकल्प्य च ॥ ४७ ॥
भोजनावसरे प्राप्ते कलादध्यावुमां शिवम् । अयं धवो मम नवाइति ध्यानपराऽभवत्
अथ ध्यानेन तं चोरं निश्चित्य च पतिव्रता । भीताति नम्रवदना अश्रुपूर्णमुखी तदा ॥
कष्टमापतितं पापमित्युक्त्वा निपपात च । रुदतीं तामथो दृष्ट्वा राक्षसः पापनिश्चयः
धर्षितुं तामथारेभे न चैतद्धर्षणं प्रति । बलात्कारमथोकर्तुं यतमाने तु राक्षसे ॥५१॥
आजानुनाभिपर्यन्तं शैलस्थानमकल्पयत् । शिलासमभवद्वस्त्रं राक्षसो वीक्ष्य तामथ ॥
इत्येवं तां हनिष्यामि खादयिष्याम्यतः परम् ।
इत्युक्त्वा भ्रामयित्वाऽसिं शिरश्छेत्तुं प्रचक्रमे ॥ ५३ ॥
कलाहमत्पतिर्ज्ञात्वा शापं दास्यति माहर । इत्युक्तमात्रे वचसि शिरश्चिच्छेद राक्षसः
प्राप्तायां दुर्मृतिं तस्यामथ शैवाः समागताः ।
दूता विचित्रा भरणाःसर्वायुधधराः शुभाः ॥ ५५ ॥
एतां विमानमारोप्य शिवालोकमुपागमन् । तामागतां गिरिसुताहर्षेण प्रतिपूज्य च
स्वपादप्रणतां शुद्धामुमावाक्यमभाषत । पातिव्रत्येन ते तुष्टा अभीष्टं प्रददामि ते ॥

कलोवाच ।

दासीभावं प्रयच्छ त्वं त्वत्पादाब्जं मम प्रियम् ।
प्रार्थ्यैः किमन्यैर्बहुभिस्तथास्त्विति शिवाऽब्रवीत् ॥ ५८ ॥
इन्द्रादि वनिताभिः सा पूजिताऽथ कलानिधिः ।
एतस्मिन्नन्तरे प्राप्तः शोणो मुनिरथो गृहम् ॥ ५९ ॥
न तत्र दृष्ट्वा तां भार्यां ध्यानयोगपरोऽभवत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रक्षोहृतां मृतां प्राप्तां शिवालोकमुमां प्रति ॥ ६० ॥
उमादत्तवरां चापि दृष्ट्वाऽऽज्ञानचक्षुषा । किञ्चिद्दुःखश्चिरं ध्यात्वापरावृत्य मुनिस्तदा
श्वशुरं गतवान्सोऽथ देवरातं मुनीश्वरः । निवेद्य सर्वं सहितो विश्वामित्रमगान्मुनिम्
निवेद्य तद्वसिष्ठस्य वसिष्ठोऽप्याह तान्मुनीन् ।
गत्वा कैलासमाद्रौ तु दृष्ट्वा देवं महेश्वरम् ॥ ६३ ॥
अनुज्ञां शिवतो लब्ध्वा पार्वतीमन्दिरे गताः ।
देव्यै विज्ञाप्य तत्सर्वं यथार्थंप्रवदामतत् ॥ ६४ ॥
तथेत्युक्त्वा मुनिवराः कैलासं शङ्करालयम् । गत्वा प्रणम्य देवेशं वीरभद्रेण पूजिताः
विज्ञापयामासुरिदं शोणभार्याहृतेति च ।
शिवः प्राह मुनीन्द्रांस्ताञ्ज्ञातमेव मया त्विदम् ॥ ६६ ॥
अकालमरणं त्वस्या आयुर्वर्षशतं स्थितम् । अकालमृत्युयुक्तानां पुनर्जीवनमस्ति च
दशपुत्रप्रसूर्वीरा रूपसौभाग्यवत्यपि । भवद्भिरिति निश्चित्य समागतमिह द्विजाः ॥६८
यमलोकगतानां तु सर्वमेतद्विनिश्चितम् । ममलोकगतानां च गतिरन्या न विद्यते ॥
अनया कीर्तितं नाम प्राणनिर्गमने पुरा । तया यमलिपिर्मृष्टा कथमायुष्यनिर्णयः ॥
अथवा गिरिजायै च निवेद्यतत्कृत्स्नशः । अथ ते पार्वतीपाददर्शनाय गता द्विजाः ॥७१
प्रणम्य मातरं सर्वे विश्वामित्रोऽब्रवीदिदम् ।
दीनानाथा कृशा भार्या प्रनष्टपितृकाञ्छिशून् ॥ ७२ ॥
रक्षयित्वा पुरा मातरिष्टदा त्वं सदा ह्यभूः ।
कला पौत्री ममैवेयं त्वामाराध्य पतिं त्वमुम् ॥ ७३ ॥
शोणं लब्धवती मातस्त्वत्पूजायाः फलं त्विदम् ।
तपसा लभ्यतेऽपर्णे ! दानेन यदि वाऽपि च ॥ ७४ ॥
व्रतोपवासैरथवा कला सा लभ्यतेमया । एतया परिविष्टान्नंभोक्तुमिच्छामि तत्कथम्

पार्वत्युवाच ।

यादृशी चेष्यते भार्या तादृशीदीयते मया । नैनां त्यक्तुमहं शक्ता किं वा त्वं मन्यसेमुने

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विश्वामित्र उवाच ।

माता त्वमित्येव मया अविशङ्कितमीरितम् । शोणो मुनिरयं मातस्तव विज्ञापयिष्यति

शोण उवाच ।

तामेव भार्यांप्रतिमेप्रीतिरत्युत्कटा सति । सैव मे दीयतांभार्याचान्यथा मरणं भवेत्

पार्वत्युवाच ।

भार्या पतिस्समावेव विषमौ तु विगर्हितौ ।

तव चासदृशी चेयं सदृशीं प्रददाम्यहम् । न च मन्मन्दिरे प्राप्तांत्यक्ष्ये देहविवर्जिताम्

शोण उवच ।

यदि नो दीयते चेयं भार्यामन्यां ममप्रियाम् । राज्यं महेश्वरे भक्ति प्रयच्छवरमुत्तमम्

भविष्यत्येवमेवैतदित्युक्त्वा चाब्रवीन्मुनीन् ।

भोक्तव्यमिह युष्माभिर्ममास्मिन्दिवसत्रयम् ॥ ८१ ॥

प्रतीन्दुवारे देवस्य महेशस्यैव तुष्टये । भोजनीयाः सदाकालमष्टौ विप्रा मुनीश्वराः ॥

इच्छया यत्र कुत्रापि व्रतमेतदुपक्रमेत् । वत्सरे परिपूर्णे तु महाराजतमीश्वरम् ॥८३॥

चतुर्निष्कप्रमाणेन तदर्द्धेनैव कारयेत् । श्वेतवस्त्रयुगं सूक्ष्मं चामरे व्यजने तथा ॥८४॥

पादुकोपानहं छत्रं सर्वं विप्रे नियोजयेत् ।

स्वशक्त्या दक्षिणां दत्त्वा ब्राह्मणांश्च विसर्जयेत् ॥ ८५ ॥

एतदुद्यापने कुर्यादादौ मध्ये तथा सुधीः । दिने दिने तथा पूजा सोमस्य परमात्मनः ॥

तत्पुरुषस्य विद्महे महादेवस्य धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ८७ ॥

इति पूजामन्त्रः ।

स्थण्डिले पूजयेद्देवं प्रतिमायामथापिवा । एकभक्तं स्वयं कुर्याद्ब्रह्मचर्यसमन्वितम् ॥

एतत्सोमव्रतं प्रोक्तं शिवतुष्टिप्रदं शुभम् । य एवं कुरुते भक्त्या नारी वा पुरुषोऽपिवा

छायेव शङ्करस्यासौ नित्यमेवानुवर्तते । अद्य सोमदिनं प्राप्तं मध्याह्नात्परतो भुजिः

यूयं च सर्वे मुनयः कृतपौर्वाह्णिकक्रियाः ।

माध्याह्निकीं क्रियां कृत्वा भोक्तुमर्हथ सत्तमाः ॥ ९१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातुर्वचनमाकर्ण्य तथेत्युक्त्वा नमस्य च। अनुष्ठानाय ते सर्वे गता भागीरथीं नदीम्

सङ्गमे मध्यतो वृत्ते कृत्वा माध्याह्निकीं क्रियाम्।
विश्वेशपूजां कृत्वा च षोडशैरुपचारकैः ॥ ९३ ॥

अथ ते पार्वतीगेहं गत्वा देवीं प्रणम्य च। लोकमातुर्नियोगेन शालङ्कायनकात्मजः ॥
पादप्रक्षालनमुखानुपचारानकल्पयत्। पञ्चगन्धकमादाय तान्मुनीनभ्यलेपयत् ॥ ९५॥

राज्यं च महदाप्नोति यो दद्यात्पञ्चगन्धकम्।
पञ्चबाणसमो भूत्वा स्त्रीणां वल्लभतामियात् ॥ ९६ ॥
विष्णवे यो हि दद्यात्तु सोऽपि मारसमो भवेत्।
कामी त्वकामी यः कुर्यात्कैलासे पञ्चवत्सरान् ॥ ९७ ॥

सर्वगन्धसमोपेतो भोगीचेष्टार्थसंयुतः। यथेष्टवर्त्तनो भूत्वा ततो जायेत भूमिपः ॥९८॥
कस्तूरीचन्दनं चन्द्रमगरुद्वितयं तथा। पञ्चगन्धं समाख्यातं सर्वकार्येषु शोभनम् ॥
विलिप्तपञ्चगन्धेषु ब्राह्मणेषु महात्मसु। आसीनेषु तदाभ्यागाद्ब्राह्मणः स्थविरः कृशः

उन्मत्तवेषो दिग्वासा जराजर्जरितस्त्वरी।
खल्वाटः श्वासकासी च बहुहिक्की क्षुधान्वितः ॥१०१॥
लालास्नुतः श्मश्रुकूर्चः श्लेष्मानम्रः स्खलत्पदः।
द्व्यष्टवर्षा तथा नारी सर्वाभरणभूषिता ॥१०२॥

रूपलावण्यसंयुक्ता लोकोत्कृष्टस्वरूपिणी। पुरुषान्रूपसंयुक्तान्वीक्षन्ती च ततस्ततः ॥
गायन्ती त्वथ नृत्यन्तीतं दृष्ट्वाऽऽह सतीपतिम्। प्रबाधने वृद्धधवं शीघ्रमेहि कृशाधम
आलम्ब्य त्वत्करं वृद्धदुःखितानित्यमस्म्यहम्। भूषणं वसनं घ्राणं स्रग्विलेपनमेव च
हासो गीतिस्तथापानं मण्डनं शोभनं गृहम्। सर्वमृतुसमृद्धिश्च कामस्यैवाभिवृद्धये
सर्वेषामेव कामानां रतिरेका प्रयोजनम्। सुखानि सर्वाण्येकत्र रतिरेकत्र च स्थिता
तुलया तुलितं सर्वं रतिः शतगुणाधिका। तन्मादृशी समासाद्य भवन्तं किं करिष्यति

इति चान्यानि वाक्यानि ब्रुवाणा गृह्य वै करे।
तदुत्तरमुवाचेदं किं कुर्मो भाग्यमीदृशम् ॥ १०९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मा मारय दुरुक्त्या त्वं मां विज्ञायाथ चेदृशम्।
एतादृशो द्विजः प्रायात्पार्वतीमन्दिरं तदा ॥ ११० ॥
अविज्ञायैव गिरिजामिदं वचनब्रवीत् ॥ १११ ॥

द्विज उवाच।

अन्नार्थिनमिह प्राप्तं विद्धि मामतिथिं मुने। भोजनावसरे प्राप्तं ब्राह्मणान्नहि भोजय
तद्भार्यावचनं प्राह क्व मुनिर्योषिदेव हि। अन्धस्य वचनं सर्वमेवमेतादृशं दृढम् ॥ ११३॥

पार्वत्युवाच।

प्रक्षाल्य चरणावेतमासने चोपवेशय। जाम्बूनदकृतेऽतीव भोज्येनातर्पयद्द्विजम् ॥ ११४
सुरत्नचषकोपेतमस्तुतं ब्रह्मवादिनीम्। अरुन्धतीमथाहूय पर्यवेषयदम्बिका ॥ ११५ ॥
कला चारुन्धती चैव अनसूया पतिव्रता। परिवेषं पदार्थानां स्रग्गन्धाक्षतभूषणाः ॥
अकुर्वन्नम्बिकावाक्यात्षड्रसानां पृथक्पृथक्।
भुञ्जानेषु तु विप्रेषु दिग्वासा ब्राह्मणाकृतिः ॥ ११७ ॥
क्षणेन बुभुजे सर्वं दातुं नोशेकुरङ्गनाः। अथ सा गिरिजा देवी स्वयं दातुं प्रचक्रमे ॥
यथा दत्तमशेषं तु क्षणेनाश्नाति स द्विजः। भाण्डस्थितमशेषं च भोक्तुमैच्छत्प्रियायुतः
तथाम्बिकासमादाय प्रादादक्षय्यमस्त्विवति। अथ वामकरेणासौ भोक्तुमैच्छत्ततःसती
तत्राप्यक्षय्यमेवास्तु तवान्नमिति चार्पयत्। करान्तरमथोत्पाद्य भोक्तुमैच्छद्द्विजोत्तम
एवं करसहस्रं च कृत्वैच्छद्भोजनं द्विजः। दत्त्वा दत्त्वा पुनर्देवी सन्तुष्टा न च कोपना
न चित्तमन्यथा कर्तुं शक्यमस्या इति द्विज।
प्रक्षाल्य हस्तौ चरणौ हस्तार्पितसुगन्धवान् ॥ १२३ ॥
पार्वतीं वाक्यमाहेदं तोषितोऽहं वरं वृणु ॥ १२४ ॥

पार्वत्युवाच।

मम दातुं वरं शक्तौ यदि त्वं ब्राह्मणोत्तम। वरेण मम किं कार्यं शङ्करो मे यतः पतिः
तदाह ब्राह्मणो देवीं शङ्करः कीदृशस्त्विवति।
सदृशोऽसौ त्वया नो वा त्वद्योग्यो नान्यथा भवेत् ॥१२६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्त्रीवल्लभत्वमप्येव रूपं दाक्ष्यं शुभाङ्गना । नोचेदेतादृशी भार्या मदधीना कथम्भवेत् ॥

पार्वत्युवाच ।

त्वद्भार्यावचनं श्रुत्वा तव वाक्यं तथा द्विज ! ।
अपलापस्त्वयं ब्रह्मन्कृतं किं वा तथा विषम् ॥ १२८ ॥

ब्राह्मण उवाच ।

धम्मिल्लं ते करिष्यामि ममाङ्कं त्वं समारुह । प्रचलेद्यदि ते चित्तं पातिव्रत्यं कुतस्तव

पार्वत्युवाच ।

मम व्रतं द्विजश्रेष्ठ शङ्कराङ्करोहणम् । अथ तच्चित्तमाज्ञाय भवान्याः परमेश्वरः॥१३०
द्व्यष्टवर्षवया भूत्वा सुस्निग्कचबन्धनः । सुस्निग्धचारुनयनो गोक्षीरसमविग्रहः ॥
कोटिकन्दर्पलावण्यः सर्वाभरणभूषितः । स्वपार्श्वस्थितनार्यंसे प्रसारितभुजद्वयः ॥

गायन्मन्दं तया साकमुमया पटुता यथा ।
अथ तां पार्वतीं शम्भुः करेणाकृष्य च स्मयन् ॥ १३३ ॥
विन्यस्य हस्तौ वनिताद्वयांसे गायन्समस्ताभरणः प्रसन्न दृक् ।
ननर्त चानन्दसमृद्धगात्रो मुनीन्द्रगीतश्च सकालवेलम् ॥ १३४ ॥

एतादृशं शिवं ध्यात्वा जन्मकोटिशतेष्वपि । न दुःखं जायते तस्य सदा हर्षश्च जायते

अथ स्तुतो मुनिवरैर्नारीं कृत्वा हरिं ततः ।
अथ सा पार्वती तुष्टा देवं प्राह पिनाकिनम् ॥ १३६ ॥

पार्वत्युवाच ।

किमित्येतादृशं भावमास्थाय त्वमिहागतः ।
नारीं कृत्वा तथा विष्णुं किं प्रकृत्या न चागतौ ॥ १३७ ॥
शिवः प्राह व्रते चात्र ह्यतिथेर्भोजनं शुभम् ।
जाने सिद्धिमथो येषां विषादो नाभिजायते ॥ १३८ ॥
जाते विषादे तु व्रतमसम्यगिति निश्चयः ।
सोमवाराः समायान्ति यावन्तोऽब्दशतानि तु ॥ १३९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तावन्ति मत्पुरे देवि सर्वभोगसमन्वितः। सभार्यपुत्रवन्धुश्च वेदोक्तायुष्यजीवितः।
पश्चाद्वाराणसीं गत्वा मृतो मुक्तिमवापस्यति।

शम्भुरुवाच।

अथ देवे स्थिते तत्रमुनयस्त्रिःप्रदक्षिणम्। कृत्वा पञ्चनमस्कारान्पुनःकृत्वा प्रदक्षिणम्
पुनश्च दण्डवद्भूत्वा विसृष्टा निर्ययुस्ततः।
अथ शोणः शोभिताङ्गीं भार्यामाप ह्यनिन्दिताम्॥ १४२॥
राज्यं च भारते वर्षे धर्मेणापालयद्द्विजः। मानुषानखिलान्भोगान्वुभुजे शिवभक्तिमान्
नित्यं देवार्चनपरो नित्यंब्राह्मणपूजकः। नित्यदाता नित्ययाजीनित्यश्रोता पुराणकम्
मृतः स गतवाँल्लोकं शङ्करस्य विभोः शुभम्। नामकीर्तनमाहात्म्यं प्रसङ्गात्परिकीर्तितम्
शृण्वतांसर्वपापघ्नंभक्तानां च तथा नृप!। सर्वकल्याणदंनित्यं सुभार्याराज्यदंशिवम्
शिवभक्तिप्रदं गोप्यं यस्य कस्यापि नेरयेत्॥ १४७॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे शिवनाममाहात्म्ये
द्वादशोत्तरशततमोऽध्यायः ॥ ११२॥

---

## त्रयोदशाधिकशततमोऽध्यायः

### पुराणश्रवणमाहात्म्यम्।

श्रीराम उवाच।

खे दृश्यन्ते विमानस्थानानारूपधराः शुभाः। सर्वकामफलोपेताः सुभार्याः शतयोषितः
सहस्रनरनारीभिः पूज्यमानाः पदे पदे। गायन्ति विंशतिर्योषा रूपलावण्यकोमलाः॥
करङ्कवाहिनी चैका चामरासक्तबाहवः। तालवृन्तद्वयं नार्योवीजयन्ति प्रगृह्य वै ॥३॥
स चक्र चाङ्कमध्येऽस्या उपधानं तथाऽपरः। एकस्याः करयोर्हस्तः स्तावकानेकसंयुतः
नानाविधपरीहासकृतोत्फुल्लमुखाम्बुजः। एकैकत्र विमाने तु दृश्यते चन्द्रदीप्तितिः॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्त्रीशतेषु विमानेषु दृश्यते चेश्वरः शुभः । एते किं पुण्यकर्तारो विष्णुमायाऽथवा मुने

शम्भुरुवाच ।

एते हि ब्राह्मणाः पुण्या गृहस्थाश्रमवासिनः । येषामेव च सुग्रामो दत्तो दशरथेन ते ॥

मच्चित्तानां च तेषां तु कदाचिद्भवन्मतिः । यथेह सुखिनः सर्वे वयं चान्योपजीविनः

अस्मानेवानुजीवन्ति शतशोमनुजा इह । येन पुण्येन च वयं सर्वे कामानुमोदिनः ॥९॥

सुस्त्रीकृतोपचाराश्च सर्वे राज्यसुखान्विताः । जरामरणहीनाश्च युवानः सर्वदैव हि ॥

विचार्यैव द्विजाः सर्वे वसिष्ठस्याश्रमं ययुः ।
आगतानथ सम्पूज्य वसिष्ठो वाक्यमुक्तवान् ॥ ११ ॥
किमर्थमागता यूयं शीघ्रं ब्रूत द्विजोत्तमाः ॥ १२ ॥

द्विजा ऊचुः ।

वयमिच्छामहे सर्वे सर्वसम्पत्समन्विते । विमाने कामगे रोढुं तत्सम्पादय नो गुरो

तत्तेषां चिन्तितं श्रुत्वा वसिष्ठो वाक्यमब्रवीत् ।
पुराणं सर्वदा विप्राः श्रोतव्यं पापनाशनम् ॥ १४ ॥

धर्मश्चार्थश्च कामश्च मोक्षस्तत्रैव दृश्यते । तथेत्युक्त्वाऽथ मुनयः पुराणकुशलं मुनिम्

जग्मुरङ्गिरसं श्रेष्ठं सर्वशास्त्रविशारदम् । सर्वागमपुराणज्ञं सदासत्कर्मचारिणम् ॥१६॥

इदमूचुर्नमस्कृत्य वयं सफलजीविनः । कृतकृत्या वयं ब्रह्मन्साक्षाद्दृष्टोऽसि यन्मुने ॥

अङ्गिरा उवाच ।

यदर्थमागता यूयं तत्कार्यं करवाण्यहम् । पुराणं श्रोतुकामास्तु यूयमत्र समागताः ॥

कीर्तयिष्ये विधानं वः समस्ताघविनाशनम् । सर्वज्ञानप्रदं देवं तत्त्वविज्ञानसम्भवम्

शिवभक्तिप्रदं हृद्यं विष्णुभक्तिप्रदं शुभम् । विचित्रस्वगतिप्राप्तिज्ञानदं रमणीप्रदम् ॥

नानाविधशुभज्ञानं रतितन्त्रप्रकाशकम् । भुक्तिमुक्तिप्रधानं च विधिदर्शनदीपकम् ॥२१

विचित्रभक्तिकथनं भक्तिसाहसकीर्तनम् । व्रतप्रतिष्ठादानादिभस्मपूजाविधिप्रदम् ॥२२

पुराणं पाद्ममुदितं ब्रह्मपद्मोपनिर्वृतम् । महेश्वरेण कथितं प्रमथाकृतिवर्णनम् ॥ २३ ॥

एतदन्यत्र कथितं पुराणे पाद्म एव तु । दिलीपेन पुरा पृष्टो वसिष्ठः प्रोक्तवानिदम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तच्छृणुध्वं मुनिवरा ज्ञानं सर्वं भविष्यति। अथ तद्वचनाद्विप्राः पुराणश्रवणेरताः॥
कथं श्रोतव्यमधुना किं कृत्वेत्यब्रुवन्मुनिम्। सोऽपि सर्वं समाचष्ट श्रृणुधर्मं सनातनम्
नमस्कृत्य पुराणज्ञं दद्याच्चार्घासनं ततः। निषीद तत्र चेत्युक्त्वा गन्धपुष्पैः समर्चयेत्
आत्मयोगं च ताम्बूलमधिकं वा समर्पयेत्।
ब्रूहि पुण्यकथां ब्रह्मन्पौराणिकीमितीरयेत्॥ २८॥
न खट्वासनमारुह्य नोच्चासनमथापि वा। नीचासनो वै श्रृणुयाद्धर्मकामार्थसिद्धये
श्रृण्वित्युक्त्वा पुराणज्ञ इमं मन्त्रमुदीरयेत्। नमो हरिं हरमथो गणेशं भारतीमतः॥
इष्टदेवं नमस्कृत्य पुराणं वक्तुमर्हति। अर्द्धयामं प्रतिदिनं यदि वापीच्छया भवेत्॥३१
एवं पाठसमाप्तिं च श्रुत्वा कृत्यं समाचरेत्। श्रोतुश्च तूष्णीं मननं तूष्णीं श्रवणमेववा
अन्यथा भारती क्रुध्येत्तत्क्रोधान्मूकताभवेत्।
तस्मात्पुराणश्रोत्रा च ताम्बूलादिसमर्पणम्॥ ३३॥
वक्तुश्च जीविका कार्या स्वसामर्थ्यानुसारतः। पुराणप्रक्रमेदेयं सचेलोद्गमनीयम्॥
सूक्ष्माम्बरमथो वापि वस्त्रद्वितयमर्पयेत्। आसनं तु महच्चित्रं रम्यमूर्जस्वलं मृदु॥
सुवर्णं वा तथा दद्याद्गोभूगेहादिकं तथा। एतत्समस्तं विप्रेन्द्रा दक्षिणामूर्तिनापुरा
शङ्करेण मुनीनां हि भाषितं च दिवौकसाम्।
अथ ते मुनयः सर्वे तं प्रणम्यासनस्थितम्॥ ३७॥
पृथक्पृथक्चताम्बूलं दत्त्वा शुश्रुषवः स्थिताः। तेनापि कथितं सर्वंपुराणं सर्वसम्प्रदम्
उपान्ताध्यायपर्यन्तं श्रुतवन्तो द्विजोत्तमाः॥ ३८॥

दिलीप उवाच।

कामगेन विमानेन सर्वसम्पत्समृद्धिना। सर्वतः सुखयुक्तेन पुण्यस्थानमुपस्थितम्॥

वशिष्ठ उवाच।

नालं पृष्टं त्वया राजन्नितोऽप्यतिशयान्तरैः। क्रीडमाना भविष्यन्ति येन तत्पुण्यमुच्यते
सुधा धवलितं कृत्वा शिववेश्मसमन्ततः।
स्त्रियो रूपविलासाढ्याः सर्वालङ्कारभूषिताः॥ ४१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नानासुगीतकुशला नानानृत्यविशारदाः । चतस्रोऽष्टौ षडथवा मर्दलध्वनिकाः स्त्रियः

वशिन्यौ द्व आवजिक्यौ कोणिकाधमने उभे ।

लासिक्यस्तु चतस्रः स्युः सन्तुष्टैकाथ गायिका ॥ ४३ ॥

एको द्वे वा सुगीतज्ञेऽमुखरैहि प्रकीर्तिते । कोणवाद्यकृते द्वे तु तूष्णीं भूताः षडष्टवा

सर्वारूपविलासिन्यः सर्वाश्चापतितस्तनाः । रतितन्त्राधिकुशलास्तत पश्चाधिशङ्किताः

सुसूक्ष्मवस्त्रवेषाश्च विद्युच्चञ्चलदृष्टयः । एतादृशीभिर्योषाभिर्येन नृत्यं हि कारितम् ॥

एकस्मिन्दिवसे राजन्वत्सरान्सविमानगः । शतस्त्रीवीक्षितमुखो युवा बहुभिरर्चितः

आनन्दपोषसपूर्णः क्रोधेर्ष्यादिविवर्जितः । पञ्चगन्धविलिप्ताङ्गः स चन्द्राहिदलाननः ॥

सूर्योपमस्तु योषाश्च सर्वास्तादृशभान्विताः । सद्यो विकसितामोदि पारिजातकृतस्रजः

सर्वा विकसितारोहिरक्तसन्धिकृतस्रजः ।

धम्मिल्ले वक्षसि तथा बिभ्रत्यःसुस्मिताधराः ॥ ५० ॥

चरत्येतादृशोभिस्तु नृत्यगीतानुमोदितः । एवं विमानगो भूत्वाउषित्वा कालमक्षयम्

पश्चाज्जायेत नृपतिरेवं कृत्वा पुनस्तथा । राज्यं स्वर्गफलं भूत्वाशिवभक्तो भविष्यति

शम्भुरुवाच ।

दिलीपाय वसिष्ठोक्तं मुनिभ्योऽवददङ्गिरा । ते तथा कृतवन्तश्च तीर्थत्रिकमुमापतेः ॥

श्रुत्वा पुराणं पाद्मं च समग्रं सुखिनोऽभवन् ।

त एते ब्राह्मणा राम विमानवरमास्थिताः ॥ ५४ ॥

दृश्यन्ते खे च सुखिनः सदा मुदितमानसाः । एतत्तेसर्वमाख्यातं पुराणेषु विनिश्चितम्

इतः परं च किं भूयः श्रोतुमिच्छसि राघव ॥ ५६ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे

त्रयोदशोत्तरशततमोऽध्यायः ॥ ११३ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# चतुर्दशाधिकशततमोऽध्यायः

## गौतमगृहवृत्तान्तवर्णनम् ।

### राम उवाच ।

क एष दृश्यते व्योम्नि सर्वाभरणभूषितः । विमानस्थो महादीप्तमध्याह्नार्क इवापरः ॥
दुष्प्रेक्ष्यः सर्वमर्त्यानां तस्याङ्के चारुहासिनी । अपरा श्रीरिवब्रह्मंस्तथापश्च सुयोषितः
गायन्ति मधुरां गीतिं सुभ्रूभङ्गनिरीक्षणैः । मन्दस्मितैः करतलशब्दास्फोटिकयातथा
क्वचिद्गलकृतैर्गीतैरन्योन्यकरताडनैः । अन्योन्यमुखमालोक्य प्रलोभैर्गीतपूर्वकैः ॥४॥
क्रीडनास्ते महायोगी पद्मकिञ्जल्कसन्निभः । एवं चरितपुण्योऽसौ कोऽयमेतद्वदस्व मे

### शम्भुरुवाच ।

एष विप्रः पुरा राम सर्वसम्पत्समन्वितः । नानाविधसुखोपेतो भार्यापोषणतत्परः ॥
अपुत्रो दानहीनश्च देवतार्चनवर्जितः । पञ्चयज्ञविहीनश्च स्वाध्यायपरिवर्जितः ॥ ७ ॥
प्रातर्मध्याह्नसायाह्नभोजनप्रवणोऽशुचिः । कदाचिदगमद्गेहं गौतमस्य महात्मनः ॥

त्र्यम्बकस्य गिरौ पुण्ये नानामुनिगणाश्रिते ।
तत्रापि शोभितगृहं स्फटिकस्तम्भकल्पितम् ॥ ६ ॥

अगुरुद्रवकस्तूरीचन्द्रकुङ्कुमचर्चिता । भित्तिर्यस्य च सन्तानकुसुमामोदसौष्ठवम् ॥ १०
कस्तूरिकापुष्परसमुत्सेचितभूतलम् । सूक्ष्मसुश्वेतविविधवितानपरिशोभितम् ॥ ११॥
अङ्गणं शोभितमहाकदलीपूगशोभितम् । समीपसरसीजातमञ्जुकूजन्मधुव्रतम् ॥ १२॥
पाटीरतरुसम्भूतगन्धपूरितदिङ्मुखम् । शिक्षागीतकृताह्लादगीतपूरितदिङ्मुखम् ॥१३॥
निदाघजनितातापनाशनाय विनिर्मितम् । कदलीदलसञ्छादिपावकाकल्पितच्छदम् ॥
पाटीरतरुसुस्निग्धसान्द्रद्वारकपाटकम् । सौगन्धिकमहामोदिकल्पितान्तरभित्तिकम् ॥
ईशानभागसुभगरतिकल्पितवेदिकम् । हाटकाकल्पितपदं विचित्रवेदिकायुतम् ॥१६॥
सुस्निग्धनिविडच्छायं घटमूलोपकल्पितम् । प्रसूनकदलीखण्डसरोभिः प्रान्तशोभितम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महावटाग्रसँल्लग्नतुषारितपयोधरम् । नाकोपवनसम्पन्नविचित्रारामशोभितम् ॥ १८ ॥
वापीकूपतडागाद्यमनेकवनशोभितम् । मन्दम्मन्दं ववौ वायुर्यत्र गेहे सुखप्रदः ॥ १९ ॥

वादिन्यश्चारुसर्वाङ्ग्यो वाद्यानि स्मरसम्पदः ।
वीणां वेणुं त्रिवेणुं च वादयन्ति वराङ्गनाः ॥ २० ॥

तौर्यत्रिककृतो नार्यश्चतुर्दिक्षु तथोद्र्ध्वतः । सुवर्णादिकपात्रेषु वटका भस्मनः शुभाः
वासिताः सर्वगन्धैश्च सुधूपैरपि धूपिताः । कुशग्रथितसङ्घाश्च अक्षमालाश्च कोटिशः॥
कृष्णाजिनसहस्राणि वहिः प्रान्ते स्थितानि च । एतादृशे गृहवरे देववन्द्यो मुनीश्वरः
कर्पूरादिश्च संस्थाप्य चतुर्दिक्षु मुनीश्वरः । पाटीरपीठेकर्पूरसिंहासनमकल्पयत् ॥२४॥

सूक्ष्मं श्वेतञ्च सुस्निग्धमावृत्तं घनसारकैः ।
सुगन्धवासितजलैः स्नाप्य क्षीरेण शङ्करम् ॥ २५ ॥
अन्यैश्च वैदिकैर्मन्त्रैः स्नापयित्वा सदाशिवम् ।
दारुचन्द्रोपपीठे तु वस्त्रपीठं निधाय च ॥ २६ ॥
पात्रिकामग्रतः स्थाप्य स्थापयित्वादलेष्वमून् ।
एकस्मिन्नक्षताःपात्रे त्वन्यस्मिन्सतिलाक्षताः ॥ २७ ॥

पञ्चगन्धकमेकस्मिन्नन्यस्मिन्नष्टगन्धकम् । काश्मीरं मृगनाभिं तु कर्पूरं चन्दनं तथा
पात्रेष्वन्येषु विन्यस्य पूजास्थाने प्रकल्प्य च । नानावरणमार्गेण पूजा तत्र विधीयते
लिङ्गमध्ये स्थितो देवः पञ्चवक्त्रः सदाशिवः । तस्यप्रावरणंलिङ्गं शक्तिस्तस्य विधीयते
शक्तेरावरणं विष्णुर्विष्णोरावरणं विधिः । ब्रह्मप्रावरणं चन्द्रस्तस्य सूर्यस्ततः श्रुतिः
दिग्देवतासुतद्गुप्तिस्तासामावरणं दिशः। दिशामावरणं शम्भुस्तस्य चावरणं गुणाः॥
दशप्रावरणंह्येतच्छिवलिङ्गार्चनं शुभम् । केषाञ्चिन्मतमेतत्स्यादथ प्रावरणान्तरम् ॥
विद्यावरणमाख्यातं तदुमावरणंस्मृतम् । विष्णुरावरणं तस्या विष्णोश्चावरणं विधिः
ब्रह्मप्रावरणं चन्द्रस्तस्य भानुरथावृतिः । भानोरावरणं चेश इति षोढावृतिस्मृताः ॥
विधिं विना समाख्यातं पञ्चावरणमुत्तमम् । शशाङ्कविष्णुशक्तीनामेतदावरणत्रयम् ॥
अम्बिकावरणं प्रोक्तमेकावरणमुत्तमम् । अथवा लोकपालाःस्युरावृतिःसोमपूजने ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनावरणमथवा पूजनं शस्यते शिवे । पत्रिकाष्टदलेष्वेव स्थितद्रव्यैर्यजेच्छिवम् ॥३८
पत्रिकालक्षणं वक्ष्ये सर्वकर्मोपयोगि च । स्वर्णेन राजतेनाथ ताम्रेणाथ प्रकल्पितम् ॥
मुक्ताशुक्तिनिभं कुर्यात्पत्रिकाष्टदलं शुभम् । पद्मपत्रसमानाष्टकोणाकारं प्रकल्पयेत् ॥
पलमात्रं ततः शस्तं निर्वृतं विस्तृतं पदम् । अस्थूलमध्यमुपरि पद्माकृति दलाष्टकम् ॥
अथवा शक्तिमार्गेण पञ्चपत्रं प्रकल्पयेत् । त्रिपत्रमथवा कुर्याच्छक्तिभावेन तेन च ॥४२
यथास्याच्छोभनं पात्रं तथाकुर्याद्विचक्षणः । शक्त्यान्तरितरुद्राक्षैः कल्पिताष्टशतैःशुभा
मालोपवीतं त्रिंशत्या अष्टकेन प्रकल्पितम् । प्रगण्डयोरथैकैकं बद्ध्वा तु चिप्रकोष्ठयोः

शिरस्येका धृता तेन कण्ठे च परमर्षिणा ।
रुद्राक्षैः स्फटिकैः रत्नै.कल्पिता ह्यक्षमालिका ॥ ४५ ॥
व्याघ्रचर्मासनं कृत्वा पद्मासन गतो मुनिः ।
आवाहनासनं चार्घ्यं पाद्यं वाऽऽचमनीयकम् ॥ ४६ ॥

निर्वर्त्यगङ्गासलिलैः स्नापयामास शङ्करम् । अष्टगन्धकसंयुक्तैः पुष्पैर्वकुलपाटलैः ॥
स्वर्णभाण्डस्थितैर्वस्त्रशोधितैर्वासितैर्दृढम् । द्वारे ताम्रकटाहश्च प्रबन्धद्रोणिनाशुभम्
गोशृङ्गेण विषाणेन गवयस्य तथाक्वचित् । दक्षिणावर्तशङ्खेन रत्नपात्रैस्थापि वा ॥
स्वर्णैर्वाराजतैर्वापिताम्रैःकांस्यैरथापिवा । स्वर्णैश्च सूक्ष्मकलशैःस्नापयामासचेच्छया

अथवा मृण्मयैः कुर्यात्पद्मपत्रैरथापि वा ।
पालाशैश्चूतजम्ब्वाद्यैः पात्रैः संस्नापयेद्विभुम् ॥ ५१ ॥

स्नानानामथ सर्वेषां धारास्नानं विशिष्यते । नमस्तेत्यादिमन्त्रेण शतरुद्रियसंज्ञिना ॥
शंचेत्याद्यनुवाकेन शान्तिरूपेणचेश्वरम् । आवृत्य च यथाशक्ति पश्चादङ्गादिविन्यसेत्
ततश्च शोभनैः पुष्पैः पत्रैर्बिल्वैः समर्चयेत् । तुलसीमारुवदलैः कह्लारैश्च महोत्पलैः ॥
नीलोत्पलैरुत्पलैश्च शेषैश्च करवीरकैः । कर्णिकारैः सिताम्भोजैरपराजितया तथा ॥
तिलाक्षतैरक्षतैश्च श्रीपत्रैस्तिलमिश्रकैः । एवं महेशमीशानं पूजयामास गौतमः ॥५६॥
कर्पूरागरुकस्तूरीसर्जागरुकचन्दनैः । अन्यैश्च धूपयामास षोडशाथ प्रदीपिकाः ॥५७॥
कर्पूरवर्त्तिसंयुक्तादीपयन्त्रोपरिस्थिताः । निवेदितं महेशाय अथ नैवेद्यमुत्तमम् ॥५८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुपक्वशालिपिष्टान्नं भक्ष्यं लेह्यं च चोष्यकम्। मधुरादिसमोपेतं पञ्चभक्ष्यसमन्वितम्
अनेकपक्वशाकाढ्यमनेकपक्वमिश्रितम्। पानं विंशतिसंयुक्तं द्राक्षारम्भाफलान्वितम्॥
सहकारफलैश्चान्यैर्नागरङ्गफलाक्षतैः। शर्करागुडसंयुक्तैराज्यपात्रसमन्वितम्॥ ६१ ॥
सूपाष्टकादिसंयुक्तं युक्तं मूलफलादिना। यथासम्भवसंयुक्तैरन्यैरप्युपकल्पितम् ॥६२॥
अग्रपुष्पसमोपेतं नैवेद्यं प्रददौ मुनिः। सौवर्णपात्रिकान्यस्तनीराजनसहस्रकम् ॥६३॥
सोपहारायदेवाय दत्त्वा चैव नमस्य च। पूगखण्डानथो धृष्टान्पत्राणि क्षालितानि च
पृष्ठाग्राणि सुश्वेतच्छादप्रावृतिकानि च। घनसारकचूर्णं च न्यस्तपत्रत्रयं शुभम्॥
सौवर्णपात्रविन्यस्तमिदं ताम्बूलमीश्वरे। अथ प्रदक्षिणं कृत्वा नमस्कारानन्तरम्॥

अष्टयोषास्ततः प्राप्तास्तन्त्रीवेण्वादिधारिकाः।
विचित्रवाद्यवादिन्यः सम्प्राप्ता मुनिसन्निधिम्॥ ६७ ॥

क्षुद्रतालयुगं गृह्य स्वयं गातुं प्रचक्रमे। गौतमे गातुमुद्युक्ते तानं कुर्युरथाङ्गनाः॥ ६८॥
मन्दमन्दं च वाद्यानि वादयन्ति तथा पराः। मधुरं गायति मुनौ स्वरामूर्तिभृतस्तथा
प्रानृत्यन्त महेशाग्रे तदद्भुतमिवाभवत्। एतस्मिन्नन्तरे प्राप्तो भगवान्नारदो मुनिः॥

तमागतं गौतमोऽपि सम्पूज्य प्रणिपत्य च।

आहचैनं कृतार्थोऽस्मि न च कश्चिन्मया समः। तवागमनकृत्यं किं कुत आगमनं तथा

श्रीनारद उवाच।

पातालादागतोऽस्मीह भुक्त्वा वै बाणमन्दिरे।
आयास्यन्ति महात्मानो बाणशुक्रादयो गृहम्॥ ७२ ॥

अथ क्षणादभ्यगाच्च बाणः परपुरञ्जयः। विंशत्यक्षौहिणीयुक्तो गजमारुह्य सोऽसुरः
अपरं हि गजं शुक्रः प्रह्लादो रथमुत्तमम्। वृषपर्वारथवरं बलिस्तुरगमुत्तमम्॥ ७४ ॥

आगतानथ तान्सर्वानाज्ञाय स तु गौतमः।
स शिष्यो निर्जगामाथ ह्यादायार्घ्यादिकं तथा॥ ७५ ॥
गौतमं चापि ते वीक्ष्यावरुह्य च गजाङ्कितात्।
नमश्चक्रुरथो दैत्यास्तं नमस्कृत्य भार्गवम्॥ ७६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आलिङ्ग्य राक्षसान्सर्वान्पूजयित्वा यथाविधि। सेनायाःसन्निवेशं चचकार मुनिपुङ्गवः
पादौ प्रक्षाल्य शुक्रस्य जलं मूर्ध्नि धृतं तथा। विचित्रफलसंयुक्तंदत्तवानर्हणं मुनिः॥
वापीतडागसरसीस्नानपूर्वंकृतक्रियाः। सङ्गमेवर्तमाने तु गौतमस्याश्रमे शुभे॥ ७६॥
तद्गेहं तु प्रविश्याथ राक्षसास्सपुरोहिताः। देवपूजाप्रपत्तिं च चक्रुः सर्वे द्विजालये॥

सद्यः प्रकल्पितायां च वेद्यां शुक्रोऽयजच्छिवम्।

तस्यैव वामभागे तु प्रह्लादोऽयजदच्युतम्॥ ८१॥

सोमं च बलिरप्येवमन्ये चासुरपुङ्गवाः। अथ बाणोऽजयद्देवमेकमेव त्रियम्बकम्॥
शुक्रोऽपि भगवन्तं तमुमानाथमपूजयत्। गौतमोऽप्यथमध्याह्ने पूजयामास शङ्करम्॥

सर्वे शुक्लाम्बरधरा भस्मोद्धूलितविग्रहाः।

सितेन भस्मना कृत्वा सर्वस्थाने त्रिपुण्ड्रकम्॥ ८४॥

नत्वा तु भार्गवं सर्वे भूतशुद्धिं प्रचक्रमुः। हृत्पद्ममध्ये सुषिरं तत्रैव भूतपञ्चकम्॥८५॥
तेषां मध्ये महाकाशमाकाशे निर्मलामलम्। तन्मध्ये च महेशानं ध्यायेद्दीप्तिमयं शुभम्
अज्ञानसंयुतं भूतं शमलं सर्वसङ्गतम्। तद्देहमाकाशदीपे प्रदहेज्ज्ञानवह्निना॥ ८७॥
आकाशस्यावृतं चाहं दग्ध्वाकाशमथो दहेत्। दग्ध्वाकाशमथो वायुमग्निभूतं तदादहेत्
अब्भूतं चततो दग्ध्वा पृथिवीभूतमेव च। तदाश्रितान्गुणान्दग्ध्वा ततो देहं प्रदाहयेत्
एवं संदह्यभूतानि देहो तज्ज्ञानवह्निना। शिखामध्यस्थितं विष्णुमानन्दरसनिर्भरम्
निष्पन्नचन्द्रकिरणसङ्काशकिरणं शिवम्। शिवाङ्गोत्पन्नकिरणैरमृतद्रवसंयुतैः॥६१॥

सुशीतला ततो ज्वाला प्रशान्ता चन्द्ररश्मिवत्।

प्रसारितसुधारश्मिः सान्द्रीभूतश्च सम्प्लवः॥

क्रमेण प्लावितं भूतग्रामं सञ्चिन्तयेत्परम्॥ ६२॥

इत्थं कृत्वा भूतशुद्धिं क्रियार्हो मर्त्यः शुद्धो जायते शुद्ध एव।

पूजां कर्तुं जाप्यकर्माऽपि पश्चाद्देवध्याने ब्रह्महत्यादि हानिः॥ ६३॥

एवं ध्यात्वा चन्द्रदीप्तिप्रकाशं ध्यानेनारोप्याशु लिङ्गे शिवस्य।

सदाशिवं दीपमध्ये विचिन्त्य पञ्चाक्षरैर्गार्चनमव्ययं तु॥ ६४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आवाहनादीनुपचारांस्तथाऽपि कृत्वा स्नानं पूर्ववच्छङ्करस्य ।
उदुम्बरं राजतं स्वर्णपीठं वस्त्रादिछन्नं सर्वमेवेह पीठम् ॥ ९५ ॥
अन्ते कृत्वा बुद्बुदानाञ्च वृष्टिं पीठे पीठे नागमेकं पुरस्तात् ।
कुर्यात्पीठे चोर्द्ध्वके नागयुग्मं देवाभ्याशे दक्षिणे वामतश्च ॥ ९६ ॥
जपापुष्पं नागमध्ये निधाय मध्ये वस्त्रं द्वादशप्रातिगुण्ये ।
सुश्वेतेन तस्य मध्ये महेशं लिङ्गाकारं पीठयुक्तं प्रपूज्यम् ॥ ९७ ॥
एवं कृत्वा बाणमुख्यादितीशा दत्त्वा दत्त्वा पञ्चगन्धाष्टगन्धम् ।
पुष्पैः पत्रैः श्रीतिलैरक्षतैश्च तिलोन्मिश्रैः केवलैश्च प्रपूज्य ॥ ९८ ॥
धूपं दत्त्वा विधिवत्सम्प्रयुक्तं दीपं दत्त्वा चोक्तमेवोपहारम् ।
पूजाशेषं ते समाप्याथ सर्वे गीतं नृत्यं तत्र तत्रापि चक्रुः ॥ ९९ ॥
अथास्मिन्नन्तरे गौतमस्य प्राप्तः शिष्यः शङ्करात्मेति नाम्ना ॥ १०० ॥
उन्मत्तवेषो दिग्वासा अनेकावृतिमाश्रितः ।
क्वचिद् द्विजातिप्रवरः क्वचिच्चण्डालसन्निभः ॥ १०१ ॥
क्वचिच्छूद्रसमो योगी तापसः क्वचिदप्युतः ।
गर्जत्युत्पतते चैव नृत्यति स्तौति गायति ॥ १०२ ॥
रोदिति श्रृणुते व्यक्तं पतत्युत्तिष्ठति क्वचित् । शिवज्ञानैकसम्पन्नः परमानन्दनिर्भरः ॥
सम्प्राप्तौ भोज्यवेलायां गौतमस्यान्तिकं ययौ ।
बुभुजे गुरुणा साकं क्वचिदुच्छिष्टमेव च ॥ १०४ ॥
क्वचिच्च लीढे तत्पात्रं तूष्णीमेवाभ्यगात्क्वचित् ।
हस्तं गृहीत्वैव गुरोः स्वयमेवाभुनक् क्वचित् ॥ १०५ ॥
क्वचिद्गृहान्तरे मूत्रंक्वचित्कर्दमलेपनम् । सर्वदा तं गुरुर्दृष्ट्वा करमालम्ब्य मन्दिरम् ॥
प्रवेश्य स्वीयपीठे तमुपवेश्याभ्यभोजयत् । स्वयं तदस्य पात्रेण बुभुजे गौतमो मुनिः
तस्य चित्तं परिज्ञातुं कदाचिदथ सुन्दरी ।
अहल्या शिष्यमाहूय भुङ्क्ष्वेत्युक्त्वाऽथ सा शुभा ॥ १०८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सौवर्णे भाजने चान्नंनिधाय चषकान्तरे। पानादिकमथो दत्त्वाएकस्मिन्पावकं पुनः
निधायाङ्गारनिचयंकण्टकानांचयंपरे। निधायभुङ्क्ष्व भुङ्क्ष्वेति स चापि बुभुजेमुनिः
यथा पपौहि पानीयं तथा वह्निमपि द्विजः। कण्टकानपिभुक्त्वा स यथा पूर्वमतिष्ठत
पुराहि मुनिकन्याभिराहूतो भोजनाय च। दिने दिने तत्प्रदत्तं लोष्ठमम्बु च गोमयम्

कर्दमं काष्ठदण्डं च भुक्त्वा प्रीत्याऽथ हर्षितः।

एतादृशो मुनिरसौ चण्डालसदृशाकृतिः॥ ११३॥

सुजीर्णोपानहौहस्ते गृहीत्वा तु तथाकरे। अन्त्यजोचितभाषाभिर्वृषपर्वाणमभ्यगात्

वृषपर्वशयोर्मध्ये दिग्वासाः समतिष्ठत।

वृषपर्वा तमज्ञात्वा पीडयित्वा शिरोऽच्छिनत्॥ ११५॥

हते तस्मिन्द्विजश्रेष्ठे जगदेतच्चराचरम्। अतीव कलुषमभवत्तत्रस्था मुनयस्तथा॥११६
गौतमस्य महाशोकः सञ्जातः सुमहात्मनः। निर्ययौ चक्षुषोर्वारिशोकं सन्दर्शयन्निव

गौतमः सर्वदैत्यानां सन्निधौ वाक्यमुक्तवान्।

किमनेन कृतं पापं येन च्छिन्नमिदं शिरः॥ ११८॥

मम प्राणाधिकस्येह सर्वदा शिवयोगिनः।

ममापि मरणं सत्यं शिष्यरूपी यतो गुरुः॥ ११९॥

शैवानां धर्मयुक्तानां सर्वदाशिववर्तिनाम्। मरणं यत्र दृष्टं स्यात्तत्र नो मरणं ध्रुवम्॥

शुक्र उवाच।

एनं सञ्जीवयिष्यामि मम गोत्रं शिवप्रियम्। किमसौ म्रियतेब्रह्मन्पश्य मे तपसोबलम्

इति वादिनि विप्रेन्द्रं गौतमोऽपि ममार ह।

तस्मिन्मृतेऽथ शुक्रोऽपि प्राणांस्तत्याज योगतः॥ १२२॥

तस्यापि मृतिमाज्ञाय प्रह्लादाद्या दितेस्सुताः। सर्वे मृताः क्षणेनैव तदद्भुतमिवाभवत्॥
मृतमासीदथ बलं तस्य बाणस्य धीमतः। अहल्याशोकसन्तप्तारुरोदोच्चैः पुनः पुनः
गौतमेन महेशस्य पूजया पूजितो विभुः। वीरभद्रो महायोगी सर्वं दृष्ट्वा चुकोप ह
अहो कष्टमहोकष्टं माहेशा बहवो मृताः। शिवं विज्ञापयिष्यामि तेनोक्तं करवाण्यहम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति निश्चित्य गतवान्मन्दराचलमव्ययम् । नमस्कृत्य विरूपाक्षमिदं सर्वमथोक्तवान्
ब्रह्महरी स्थितौ तत्र दृष्ट्वा प्राह शिवो वचः । मद्भक्तैः साहसं कर्मकृतं दृष्ट्वा वरप्रदः
गत्वा पश्यामहे विष्णो युवामप्यागमिष्यथ । अथेशो वृषमारुह्य वायुना धूतचामरः
नन्दिकेन सुवेषेण धृते छत्रेऽतिशोभने । सुश्वेतहेमदण्डे च नान्ययोग्ये धृते विभोः ॥

महेशानुमतिं लब्ध्वा हरिर्नागान्तके स्थितः ।
आरक्तनीलच्छत्राभ्यां शुशुभे लक्ष्यकौस्तुभः ॥ १३१ ॥

शिवानुमत्या ब्रह्मापि हंसारूढोऽभवत्तदा । इन्द्रगोपप्रभाकारच्छत्राभ्यां शुशुभे विधिः
इन्द्रादि सर्वदेवाश्चस्वस्ववाहनसंयुताः । अथ ते निर्ययुः सर्वे नानावाद्यानुमोदिताः ॥
कोटिकोटिगणाकीर्णा गौतमस्याश्रमंगताः । ब्रह्मविष्णुमहेशाना दृष्ट्वा तत्परमाद्भुतम्
स्वभक्तं जीवयामास वामकोणनिरीक्षणात् । शङ्करो गौतमं प्राह तुष्टोऽहं ते वरं वृणु

गौतम उवाच ।

यदि प्रसन्नो देवेश यदि देयो वरो मम । त्वल्लिङ्गार्चनसामर्थ्यं नित्यमस्तु महेश्वर ॥
वृतमेतन्मया देव शृणुष्वैतत्त्रिलोचन । ममशिष्यो महाभागो हेयाहेयादिवर्जितः ॥
प्रेक्षणीयं ममत्वेन न च पश्यति चक्षुषा । न च घ्राणेन घ्रातव्यं न दातव्यं न चेतरत् ॥

इति बुद्ध्वा तथा कुर्वन्स हि योगी महायशाः ।
उन्मत्तविकृताकारः शङ्करात्मेति कीर्तितः ॥ १३६ ॥

न कश्चित्तं प्रतिद्विष्यान्नचतंहिंसयेदिति । एतःमेदीयतां देव एतेषाममृतिस्तथा ॥१४०

श्रीभगवानुवाच ।

आकल्पमेतेजीवन्तुततोमुक्तिभजन्तु च । त्वयाकृतमिदंवेश्म विस्तृतं चिकृतं शुभम् ॥
तिष्ठामः क्षणमात्रं तु ततो यास्याम मन्दिरम् ॥ १४२ ॥

गौतम उवाच ।

अयोग्यं प्रार्थयामीश ह्यर्थी दोषं न पश्यति । ब्रह्माद्यलभ्यं देवेश ! दीयतां यदि रोचते
अथेशो विष्णुमालोक्य गृहीत्वा तु करं हरेः । प्रसन्नम्बुजाभाक्षमित्युवाच सदाशिवः
म्लानोदरोऽसि गोविन्द ! देयं ते भोजनं किमु ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वयं प्रविश्य यदि वा स्वयं भुङ्क्ष्व स्वगेहवत् ॥ १४५ ॥

गच्छ वा पार्वतीगेहं या कुक्षिं पूरयिष्यति । इत्युक्त्वा तत्करालम्बीएकान्तमगमद्विभुः
आदिश्य नन्दिनं देवोद्वाराध्यक्षं यथोक्तवत् । गौतमं समुवाचायमुत्तरंविष्णुभाषणम्

सदाशिव उवाच ।

सम्पादयान्नं सर्वेषां भोक्तुकामा वयं मुने । इत्युक्त्वैकान्तमगमद्वासुदेवेन शङ्करः॥१४८

मृदुशय्यां समारुह्य शयितौ देवतोत्तमौ ।
अन्योन्यं भाषणं कृत्वा प्रोत्तस्थतुरुभावपि ॥ १४९ ॥

गत्वा तडाकं गम्भीरं स्नास्यन्तो देवसत्तमौ । कराम्बुपानमन्योन्यं पृथक्कृत्वोभयत्रच
मुनयो राक्षसाश्चैव जलक्रीडां प्रचक्रिरे । अथ विष्णुर्महेशश्च जलपातानि शीघ्रतः ॥
चक्रतुः शङ्करः पद्मकिञ्जल्काञ्जलिना हरेः । अवाकिरन्मुखे तस्य पद्मोत्फुल्लविलोचने ॥
नेत्रे केशरसम्पातान्न्यमीलयत केशवः । अत्रान्तरे हरेः स्कन्धमारुरोह महेश्वरः ॥१५३॥

हर्युत्तमाङ्गं बाहुभ्यां गृहीत्वा संन्यमज्जयत् ।
उन्मज्जयित्वा च पुनः पुनश्चापि पुनः पुनः ॥ १५४ ॥
पीडितः स हरिः सूक्ष्मं पातयामास शङ्करम् ।
अथ पादौ गृहीत्वा तु आचकर्ष च भ्रामयत् ॥ १५५ ॥

अताडयद्धरेर्वक्षः पातयामास चाच्युतम् । अथोत्थितो हरिस्तोयमादायाञ्जलिना ततः
अवाकिरदथो शम्भुमथ विष्णुमथो हरः । जलक्रीडैवमभवदथ चर्षिगणान्तरे ॥१५७॥
जलक्रीडासम्भ्रमेण विस्रस्तजटबन्धनाः । अथ सम्भ्रमतस्तेषामन्योन्यजटबन्धनम् ॥
इतरेतरबद्धासु जटासु च मुनीश्वराः । शक्तिमन्तोऽशक्तिमत आकर्षन्ति त्र सव्यथम् ॥
पातयन्तोऽन्यतश्चापि क्रोशतो रुदतस्तथा । एवं प्रवृत्ते तुमुले सम्भूते तोयकर्मणि ॥
आकाशे नारदो हृष्टो ननर्त च ननाद च । विपञ्चीं नादयन्वाद्यं ललितां गीतिमुज्जगौ
सुगीत्या ललितायास्तु अगायत विधा दश । शुश्राव गीतं मधुरं शङ्करो लोकभावनः
स्वयं गातुं हि ललितं मन्दम्मन्दं प्रचक्रमे । स्वयं गायति देवेशे मिश्रा मङ्गलकैशिकी
नारदे नृत्यमाने तु गायति स्वरभेदिनि । स्वरं ध्रुवं समादाय सर्वलक्षणसंयुतम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वधारामृतसंयुक्तं गानेनैवमथोऽजयत् । वासुदेवो मर्दलंच कराभ्यामिदमाहनत् ॥
अवगाहंश्चतुर्वक्त्रंस्तुम्बुरुर्मुखरोबभौ । तानकागौतमाद्यास्तु तूष्णीं गातुं च वायुतः ॥
गायके मधुरं गीतं हनूमति कपीश्वरे । म्लानमम्लानमभवत्कृशाःपुष्टास्तदाऽभवन्॥१६७
स्वां स्वां गीतिमतः सर्वे तिरस्कृत्यैव मूर्च्छिताः ।
तूष्णीं सर्वे समभवन्देवर्षिगणदानवाः ॥ १६८ ॥
एकः स हनुमान्गाता श्रोतारः सर्व एव ते । मध्याह्नकालवितते भोजनावसरे सति ॥
दुकूलयुगमाधत्त शृण्वन्गीतिं महेश्वरः । पीतवस्त्रद्वयं विष्णुरारक्तं चतुराननः ॥१७०॥
स्वस्वार्हाण्यथ सर्वेऽपि कृत्यं कृत्वाऽपि कालिकम् ।
स्वं स्वं वाहनमारुह्य निर्गताः सर्वदेवताः ॥१७१॥
गानप्रियो महेशस्तु जगाद प्लवगेश्वरम् । प्लवगत्वं मयाज्ञप्तो निश्शङ्कं वृषमारुह ॥
मम चाभिमुखो भूत्वा गायस्वाशेषगायनम् । अथाह कपिशार्दूली भगवन्तं महेश्वरम् ॥
वृषमारोहसामर्थ्यं तव नान्यस्य विद्यते । तव वाहनमारुह्य पातकी स्यामहं विभो ! ॥
मामेवारुह देवेश ! विहगः शिववाहन ! ।
तव चाभिमुखं गानं करिष्यामि विलोकय ॥ १७५ ॥
अथेश्वरो हनूमन्तामारुरोह वृषं यथा । आरूढं शङ्करे देवे हनूमान्कन्धराशिरः ॥१७६॥
छित्त्वा त्वचं परावृत्य मुखं गायतिपूर्ववत् । शृण्वन्गीतिसुधां शम्भुर्गौतमस्य गृहंगतः
सर्वे चाप्यागतास्तत्र देवर्षिगणदानवाः । पूजिता गौतमेनाथ भोजनावसरे सति ॥
यच्छुष्कदारुसम्भूतं गृहोपकरणादिकम् । प्ररूढमभवत्सर्वं गायमाने हनूमति ॥
तस्मिन्गाने समस्तानां चित्रदृष्टिरतिष्ठत ॥ १७९ ॥
द्विबाहुरीशस्य पदाभिवन्दनः समस्तगात्राभरणोपपन्नः ।
प्रसन्नमूर्तिस्तरुणः सुमध्ये विन्यस्तमूर्द्धाञ्जलिभिः सुरैः स्तुतः ॥ १८० ॥
शिरः कराभ्यां परिगृह्य शङ्करो हनूमतः पूर्वमुखं चकार ।
पद्मासनासीनहनूमताञ्जलौ निधाय पादं त्वपरं मुखे च ॥ १८१ ॥
पादाङ्गुलीभ्यामथ नासिकां विभुः स्नेहेन जग्राह च मन्दमन्दम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्कन्धे मुखे त्वंसतले च कण्ठे वक्षःस्थले च स्तनमध्यमे हृदि ॥ ११८ ॥

ततश्च कुक्षावथनाभिमण्डले ततो द्वितीयं निदधाति चाञ्जलौ ।

शिरो गृहीत्वाऽवनमय्य शङ्करः पस्पर्श पृष्ठं चिबुकेन सध्वनि ॥ १८३ ॥

हारं च मुक्तापरिकल्पितं शिवो हनूमतः कण्ठगतं चकारह ॥ १८४ ॥

अथ विष्णुर्महेशानमिदं वचनमुक्तवान् । हनूमता समो नास्ति कृत्स्नब्रह्माण्डमण्डले श्रुतिदेवागमाग्र्यं हि पदं तव किल स्थितम् । सर्वोपनिषदव्यक्तं त्वत्पदं कपिसर्वयुक् यस्मादिसाधनैर्योगिभिर्लक्षणं ते पदं स्थितम् । महायोगिहृदम्भोजे बलं स्वच्छं हनूमति वर्षकोटिसहस्रेषु तपः कृत्वा तु दुष्करम् । त्वद्रूपं नाभिजानन्ति कुतः पादं मुनीश्वराः अहोभाग्यं विचित्रं हि चपलो वानरो मृगः । धत्ते पादयुगं चाङ्के योगिहृद्यपि न क्षमम्

मया वर्षसहस्रं तु सहस्राब्जैस्तथाऽन्वहम् ।

भक्त्या सम्पूजितोऽपीश पादो नो दर्शितस्त्वया ॥ १९० ॥

लोके वादो हि सुमहाञ्छम्भुर्नारायणप्रियः। हरिःप्रियस्तथाशम्भोर्नतादृग्भाग्यमस्ति मे

सदाशिव उवाच ।

न त्वया सदृशो मह्यं प्रियोऽस्ति भगवन्हरे ! ।

पार्वती वा त्वया तुल्या न चान्यो विद्यते मम ॥ १९२ ॥

अथ देवाय महते गौतमः प्रणिपत्य च । व्यज्ञापयदमेयात्मन्देवै हि करुणानिधे ! ॥

मध्याह्नोऽयं व्यतिक्रान्तो भुक्तिवेलाऽखिलस्य च ।

अथाचम्य महादेवो विष्णुना सहितो विभुः ॥

प्रविश्य गौतमगृहं भोजनायोपचक्रमे ॥ १९४ ॥

रत्नाङ्गुलीयैरथ नूपुराभ्यां दुकुलबन्धेन तडित्सुकाञ्च्या ।

हारैरनेकैरथ कण्ठनिष्कयज्ञोपवीतोत्तरवाससी च ॥ १९५ ॥

विलम्बिचञ्चन्मणिकुण्डलेन सुपुष्पिधम्मिल्लवरेण देवः ।

पञ्चाङ्गगन्धस्य विलेपनेन बाह्वङ्गदैः कङ्कणकाङ्गुलीयैः ॥ १९६ ॥

इत्थं विभूषितः शिवो निविष्ट उत्तमासने स्वसंमुखं हरिं तथान्यवेशयद्वरासने ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्योन्यसंमुखौ स्थितौ हरीशौ देवसत्तमौ सुवर्णभाजनान्यथो ददौ स चापि गौतमः
त्रिंशत्प्रभेदभक्ष्यकं सुपायसं चतुर्विधं सुपक्वपाकजातकं शतद्वयं प्रकल्पितम्।
अपक्वपक्वमिश्रकं शतत्रयं प्रकल्पितं शतं शतं तथा सुकन्दशाककं तथा मुनिः ॥१९८॥
पाकादिसर्पिषान्वितं ददौ च पञ्चविंशतिं सुशर्करादिकं तथा सुचूतदाडिमादिकम्।
मोचाफलं तु गोस्तनीं सुखर्जुनागरङ्गकं जम्बूफलं प्रियालुकं विकङ्कतं फलं तथा ॥

एवमादीनि चान्यानि द्रव्याण्यर्प्य यथाविधि।
दत्त्वा चापोशनं विप्रो भुज्यतामिति चाब्रवीत् ॥ २०० ॥

भुञ्जानेषु च सर्वेषु व्यजनं सूक्ष्मवस्त्रम्। गौतमः स्वयमादाय शिवविष्णू अवीजयत् ॥
परिहासमथो कर्तुमियेष परमेश्वरः। पश्य विष्णो हनूमन्तं कथं भुङ्क्ते स वानरः ॥
वानरं पश्यति हरौ मण्डकं विष्णुभाजने। चिक्षेप मुनिसङ्घेषु पश्यत्स्वपि महेश्वरः
हनूमते दत्तवांश्च स्वोच्छिष्टं पायसादिकम्। त्वदुच्छिष्टमभोज्यं तु तवैव वचनाद्विभो
अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं तथा। मह्यं निवेद्य सकलं कूप एव विनिक्षिपेत्।

अभुक्ते त्वद्वचो नूनं भुक्ते चापि कृपा तव ॥ २०५ ॥

सदाशिव उवाच।

बाणलिङ्गस्वयम्भूते चन्द्रकान्ते ह्यवस्थिते। चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणम् ॥

भुक्तिवेलेयमधुना तद्रहस्यं कथान्तरात्।
भुक्त्वा तु कथयिष्यामि निर्विशङ्कं विभुङ्क्ष्व तत् ॥ २०७ ॥
अथासौ जलसंस्कारं कृतवान्गौतमो मुनिः ॥ २०८ ॥
आरक्तसुस्निग्धसुसूक्ष्मगात्राननेकधाधौतसुशोषिताङ्गान्।
तडागतोयैः कृतबीजघर्षितैर्विशोधितैस्तैः करकानपूरयत् ॥ २०९ ॥
नद्याः सैकतवेदिकां नवतरां सञ्छाद्य सूक्ष्माम्बरैः।
शुद्धैः श्वेततरैरथोपरि घटांस्तोयेन पूर्णान्क्षिपेत् ॥
क्षिप्त्वा नालकजातिमास्तपुटकं कङ्कोलकस्तूरिका-
चूर्णं चन्दनचन्द्ररश्मिविशदां मालां पुटान्तां क्षिपेत् ॥ २१० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यामस्यापि पुनश्च वारिवसने नाशोध्य कुम्भेक्षिपे-
च्चन्द्रग्रन्थिमथो निधाय बकुलं क्षिप्त्वा तथा पाटलाम् ॥ २११ ॥
शेफालीस्तवकमथो जलं च तत्र विन्यस्य प्रथमत एव तोयशुद्धिम् ।
कृत्वाऽथो मृदुतरसूक्ष्मवस्त्रखण्डेनावेष्टेत्सृणिकमुखं च सूक्ष्मचन्द्रम् ॥२१२॥
अनातपप्रदेशे तु निधाय करकानथ । मन्दवातसमोपेते सूक्ष्मव्यजनवीजिते ॥ २१३ ॥
अथ उशीरसलिलैः सिञ्चयेत्सृणिकामपि ।
संस्कृताः स्वायतास्तत्र नरा नार्योऽथवा नृप ! ॥ २१४ ॥
तत्कन्या या क्षालिताङ्गा धौतवस्त्राश्च वाससः । मधुपिङ्गलनिर्यासमरुान्द्रमगुरुद्रवम् ॥
बाहुमुले च कण्ठे च विलिप्यसान्द्रमेव च । मस्तकेजाप्यकं न्यस्य पञ्चगन्धविलेपनम्
पुष्पनद्धसुकेशास्तु ताः शुभास्याः सुनिर्मला । एवमेवोचिता नार्य आत्तकुङ्कुमविग्रहाः
युवत्यश्चारुसर्वाङ्ग्यो नितरां भूषणैरपि । एतादृग्वनिताभिर्वा नरैर्वादापयेज्जलम् ॥
तेऽपि प्रदानसमये सूक्ष्मवस्त्राल्पवेष्टनम् । अथ वामकरे न्यस्य करकं तत्र पश्य हि ॥
दोरिकान्यस्तमुन्मुच्य ततस्तोयं प्रदापयेत् । एवं सत्कारयामास गौतमो भगवान्मुनिः
महेशादिषु सर्वेषु भुक्तवत्सु महात्मसु । प्रक्षालिताङ्घ्रिहस्तेषु गन्धोद्वर्तितपाणिषु ॥
तदासनसमासीने देवदेवे महेश्वरे । अथ नीचसमासीना देवाः सर्षिगणास्तथा ॥
मणिपात्रेषु संवेष्ट्य पूगखण्डान्सुधूपितान् । अकोणवर्तुलान्स्थूलानसूक्ष्मानकृशानपि
श्वेतपत्राणि संशोध्य क्षिप्त्वा कर्पूरखण्डकम् । चूर्णं च शङ्करायाथ निवेदयति गौतमे
गृहाण देव ताम्बूलमित्युक्तवचनेमुनौ । कपे गृहाण ताम्बूलं प्रयच्छ ममखण्डकान् ॥
उवाच वानरो नास्ति मम शुद्धिर्महेश्वर । अनेकफलभुक्तत्वाद्वानरस्तु शुचिःकथम् ॥

सदाशिव उवाच ।

मद्वाक्यादखिलंशुध्येन्मद्वाक्यादमृतं विषम् । मद्वाक्यादखिलावेदा मद्वाक्याद्देवतादयः
मद्वाक्याद्धर्मविज्ञानं मद्वाक्यान्मोक्ष उच्यते ।
पुराणान्यागमाश्चैव स्मृतयो मम वाक्यतः ॥ २२८ ॥
अतो गृहाण ताम्बूलं ममदद्याःसुखण्डकान् । हरिर्वामकरेणादात्ताम्बूलं पूगखण्डकम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततःपात्राणि सङ्गृह्य ततः खण्डान्समर्पयत् । कर्पूरमग्रतोदत्तं गृहीत्वाऽभक्षयच्छिवः
देवे तुक्रततताम्बूले पार्वती मन्दराचलात् । जया विजययोर्हस्तं गृहीत्वायान्मुनेर्गृहम्
देवपादौ ततो नत्वा विनम्रवदनाऽभवत् । उन्नमय्यमुखं तस्या इदमाह त्रिलोचनः ॥
त्वदर्थं देवदेवेशि! अपराधःकृतो मया । यत्त्वां विहाय भुक्तं हि तथाऽन्यच्छृणु सुन्दरि !
अथ स्वमन्दिरे स्थाप्य देवदेवविवर्जिते । सर्वबन्धविमुक्ते च महदेनो मयाकृतम् ॥

क्षन्तुमर्हसि देवेशि ! त्यक्तकोपा विलोकय ।
न बभाषैवमुक्ता सा अरुन्धत्या हि निर्ययौ ॥ २३५ ॥

निर्गच्छन्तीं मुनिर्ज्ञात्वा दण्डवत्प्रणनाम च । तदारभ्य महेशाय दण्डप्रणतिसंस्तुतिम्

कुर्यादुवाच च शिवा गौतम ! त्वं किमिच्छसि ॥२३७॥

गौतम उवाच ।

कृतकृत्योऽस्मि देवेशि ! यदि देयो वरो मम । मन्मन्दिरे महाभागे भोक्तुमर्हसि साम्प्रतम्

देव्युवाच ।

भोक्ष्यामि तवगेहेऽहं शङ्करानुमता मुने ! । गत्वेशं गौतमो विप्रो लब्धानुज्ञः पुनर्गतः ॥

भोजयामास गिरिशां देवीं चारुन्धतीं तथा ।
भुक्त्वाऽथ पार्वती सर्वं गन्धपुष्पसभूषणा ॥ २४० ॥

सहानुचरकन्याभिःसहस्राभिर्हरं ययौ । अथाह शङ्करो देवीं गच्छ गौतममन्दिरम् ॥

सन्ध्योपास्तिमहं कृत्वा ह्यागच्छामि पुनर्गृहम् ।
इत्युक्ता प्रययौ देवी गौतमस्यैव मन्दिरम् ॥२४२॥
सन्ध्यावन्दनकामाश्च सर्व एव विनिर्गताः ।
कृतसन्ध्यास्तटाके तु महेशाद्यास्तु कृत्स्नशः ॥२४३॥

अथोत्तरमुखः शम्भुर्न्यासं कृत्वा जजाप ह । अथ विष्णुर्महातेजा महेशमिदमब्रवीत् ॥
सर्वैर्नमस्यते यस्तु सर्वैरेव समर्च्यते । हूयते सर्वयज्ञेषु स भवान्किं जपिष्यति ॥२४५
रचिताञ्जलयःसर्वे त्वामेवैकमुपासते । स भवान्देवदेवेश कस्मै वा रचिताञ्जलिः ॥२४६
नमस्कारादि पुण्यानां फलदस्त्वं महेश्वर । तवकःफलदो वन्द्यःको वा त्वत्तोऽधिकोवद

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शङ्कर उवाच।

ध्याये न किञ्चिद्गोविन्द न नमस्येह किञ्चन। नोपास्येकं च न हरे नजपिष्ये हकिंचन
किं तु नास्तिकजन्तूनां प्रवृत्त्यर्थमिदं मया। दर्शनीयं हरे! तेस्युरन्यथा पापकारिणः
तस्माल्लोकोपकारार्थमिदं सर्वं कृतं मया। ओमित्युक्त्वा हरिरथ तं नत्वा समतिष्ठत
अथ ते गौतमगृहं प्राप्ता देवगणर्षयः। सर्वे पूजामथो चक्रुर्देवदेवाय शम्भवे ॥२५१॥
देवो हनूमतासार्द्धं गायन्नास्ते रघूत्तम!। पञ्चाक्षरीं महाविद्यां सर्व एव तदाऽजपन् ॥
हनूमत्करमालम्ब्य देव्यभ्याशं गतो हरः। एकशय्या समासीनौ तावुभौ देवदम्पती ॥

गायन्नास्ते स हनुमांस्तुम्बुरुर्नारदस्तथा।

नानाविधविलासांश्च चकार परमेश्वरः। आहूय पार्वतीमीश! इदं वाक्यमुवाच ह ॥

श्रीसदाशिव उवाच।

रचयिष्यामि धम्मिल्लमेहि मत्पुरतःशुभे। देव्याह न च युक्तं तद्भर्त्राशुश्रूषणं स्त्रियाः
केशप्रसाधनकृतावनर्थान्तरमापतेत्। केशप्रसाधने देव! तत्त्वं सर्वं न चेप्सितम् ॥
अथ बन्धेकृते पश्चादंसप्रान्तप्रमार्जनम्। तनोश्चरमसँल्लग्नकेशपुष्पादि मार्जनम् ॥२५७॥
एतस्मिन्वर्तमाने तु महात्मानो यदाऽऽगमन्। तदा किमुत्तरं वाच्यं तव देवादिवन्दित
नायान्ति चेदथ विभो भीतिर्नाशमुपेष्यति। एवं हि भाषमाणां तां करेणाकृष्य शङ्करः

स्वोर्वोस्तां स्थापयित्वैव विस्रस्य कचबन्धनम्।
विभज्य च कराभ्यां स प्रससार नखैरपि ॥२६०॥
विष्णुदत्तां पारिजातस्रजं कचगतामपि।
कृत्वा धम्मिल्लमकरोदथ मालां करागताम् ॥ २६१ ॥

मल्लिकास्रजमादाय बबन्ध कचबन्धने। कल्पप्रसूनमालां च ब्रह्मदत्तां महेश्वरः ॥२६२॥
पार्वतीवसने गूढगन्धाढ्ये च समादधात्। अथांसपृष्ठसँल्लग्नमार्जनं कृतवान्विभुः ॥
श्लथनीवेरधो देव्या वस्त्रवेष्टेरधोगतः। देवः किमिदमित्युक्त्वा नीवीबन्धं चकार ह

नासाभूषणमेतत्ते पङ्कजाक्षि समदात्ततः।
इत्युक्त्वा स्वयमादाय विच्छायं मौक्तिकं सती ॥ २६५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हरिद्रायाःसमायोगे मुक्ताफलमदीप्तिमत् । इदं न भ्रियतां मुक्ताफलं मम तव प्रियम् ॥

पार्वत्युवाच ।

अहो त्वन्मन्दिरं शम्भो सर्ववस्तु समृद्धिमत् । पूर्वमेव मया सर्वं वस्तुज्ञातं विभूषणैः
अहो द्रविणसम्पत्तिर्भूषणैरवगम्मते । शिरो विभूषितं देव ब्रह्मशीर्षस्य मालया ॥२६८
नरकस्य तथा माला वक्षःस्थलविभूषणम् । शेषश्च वासुकिश्चैव सविषौ तव कङ्कणे
दिशोऽम्बरे जटाकेशा भसितं चाङ्गरागकम् । महोक्षो वाहनं गोत्रं कुलं चाज्ञातमेव च
ज्ञायेते पितरौनैव विरूपाक्षं तथा वपुः । एवं वदन्तीं गिरिजां विष्णुःप्राहातिकोपनः ॥

किमर्थं निन्दसे देवि ! देवदेवं जगत्पतिम् ।
त्यक्ष्ये प्राणान्प्रियान्भद्रे तव नूनमसंयमम् ॥ २७२ ॥

यत्रेशनिन्दनं भद्रे तत्र नो मरणंव्रतम् । इत्युक्त्वाऽथ नखाभ्यां हि हरिश्छेत्तुं शिरोगतः
महेशस्तु करंगृह्य प्राह मा साहसं कृथाः । पार्वतीवचनं सर्वं प्रियं मम तवाप्रियम् ॥

ममाप्रियं हृषीकेश ! कर्तुं यत्किञ्चिदिष्यते ।
ओमित्युक्त्वाऽथ भगवांस्तूष्णीं भूतोऽभवद्धरिः ॥ २७५ ॥

हनुमानथ देवाय व्यज्ञापयदिदं वचः । अर्थयामि विनिष्कामं ममपूजा व्रतं तथा ॥२७६

पूजार्थमप्यहं गच्छे मामनुज्ञातुमर्हसि ॥ २७७ ॥

शङ्कर उवाच ।

कस्य पूजा क वा पूजा किं पुष्पं किं दलं वद ।
को गुरुः कश्च मन्त्रस्ते कीदृशं पूजनं तथा ॥ २७८ ॥

एवं वदति देवेशे हनूमानतिकम्पितः । वेपमानसमस्ताङ्गःस्तोतुमेव प्रचक्रमे ॥२७९॥

हनुमानुवाच ।

नमो देवाय महते शङ्करायामितात्मने । योगिने योगधात्रे च योगिनां गुरवे नमः ॥
योगिगम्याय देवाय ज्ञानिनां पतयेनमः । वेदानांपतये तुभ्यं देवानांपतये नमः ॥२८१
ध्यानाय ध्यानगम्याय ध्यातॄणां गुरवेनमः । शिष्टाय शिष्टगम्याय भूम्यादिपतये नमः
नमस्तेत्यादीनां :वेदवाक्यानां निधयेनमः । आतनुष्वेति वाक्यैश्च प्रतिपाद्याय ते नमः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अष्टमूर्ते नमस्तुभ्यं पशूनांपतये नमः । त्र्यम्बकाय त्रिनेत्राय सोमसूर्याग्निलोचन! ॥२८४
सुभृङ्गराजधत्तूरद्रोणपुष्पप्रियायते । वृहतीपूगपुन्नागचम्पकादिप्रियाय च ॥ २८५ ॥

नमस्तेऽस्तु नमस्तेऽस्तु भूय एव नमोनमः ।
शिवो हरिमथ प्राह मा भैषीर्वद मेऽखिलम् ॥ २८६ ॥

हनुमानुवाच ।

शिवलिङ्गार्चनं कार्यं भस्मोद्धूलितदेहिना । स्विवासम्पादितैस्तोयैः पुष्पाद्यैरपि तादृशैः

देव विज्ञापयिष्यामि शिवपूजाविधिं शुभम् ।
सायंकाले तु सम्प्राप्ते ह्यशिरःस्नानमाचरेत् ॥ २८८ ॥

क्षालितं वसनंशुष्कं धृत्वाऽऽचम्य द्विरग्रधीः । अथभस्मसमादाय आग्नेयं स्नानमाचरेत्
प्रणवेन समामन्त्र्याप्यष्टवारमथापि वा पञ्चाक्षरेण मन्त्रेण नाम्ना वा येन केनचित्

सप्ताभिमन्त्रितं भस्म दर्भपाणिःसमाहरेत् ।
ईशानः सर्वविद्यानामुक्त्वा शिरसि पातयेत् ॥ २९१ ॥
तत्पुरुषाय विद्महे मुखे भस्म प्रसेचयेत् ।
अघोरेभ्योऽथ घोरेभ्यो भस्मवक्षसि निक्षिपेत् ॥ २९२ ॥

वामदेवाय नमइति गुह्यस्थाने विनिक्षिपेत् । सद्योजातं प्रपद्यामि निक्षिपेदथ पादयोः ॥
उद्धूलयेत्समस्ताङ्गे प्रणवेन विचक्षणः । त्रैवर्णिकानामुदितःस्नानादि विधिरुत्तमः ॥
शूद्रादीनां प्रवक्ष्यामि यदुक्तं गुरुणा तथा । शिवेतिपदमुच्चार्य भस्मसम्मन्त्रयेत्सुधीः
सप्तवारमथादाय शिवायेति शिरःक्षिपेत् । शङ्कराय मुखेप्रोक्तं सर्वज्ञाय हृदि क्षिपेत् ॥

स्थाणवे नम इत्युक्त्वा गुह्ये चापि स्वयम्भुवे ।
उच्चार्य पादयोः क्षिप्त्वा भस्मशुद्धमतःपरम् ॥२९७॥
नमःशिवायेत्युच्चार्य सर्वाङ्गोद्धूलनं स्मृतम् ।
प्रक्षाल्य हस्तावाचम्य दर्भपाणिःसमाहितः ॥ २९८ ॥

दर्भाभावे सुवर्णं स्यात्तदभावे गर्धालिकः । तदभावे तु दूर्वाःस्युस्तदभावे तु राजतम् ॥

सन्ध्योपास्ति जपं देव्याः कृत्वा देवगृहं व्रजेत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देव वेदिमथो वापि कल्पितं स्थण्डिलं तु वा ॥ ३०० ॥
मृण्मयं कल्पितं शुद्धं पद्मादिरचनायुतम् । चातुर्वर्णकरङ्गैश्च श्वेतेनैकेन वा पुनः ॥
विचित्राणि च पद्मानि स्वस्तिकादि तथैव च । उत्पलादि गदाशङ्खत्रिशूलं डमरुं तथा
स्मरोक्तपञ्चप्रासादं शिवलिङ्गमथैव च । सर्वकामफलं वृक्षं कुलकं कोलकं तथा ॥३०३
षट्कोणं च त्रिकोणं च नवकोणमथापि वा ।
कोणद्वादशकां दोलां पादुका व्यजनानि च ॥ ३०४ ॥
चामरच्छत्रयुगलं विष्णुब्रह्मादिकं तथा । चूर्णैर्विरचयेद्देव्यां धीमान्देवालयेऽपि वा ॥
यत्रापि देवपूजास्यात्तत्रैवं कल्पयेद्बुधः । स्वहस्तरचितं मुख्यं क्रीतंचैव तु मध्यमम्
यान्त्रितं तु कनिष्ठं स्याद् बलात्कारमथाधमम् ।
अर्हेषु यत्त्वनर्हेषु बलात्कारात्तु निष्फलम् ॥ ३०७ ॥
रक्तशालिजपास्थाणकलमासितरक्तकैः । तण्डुलैर्व्रीहिमात्रोत्थैःकर्णैश्चैव यथाक्रमम् ॥
उत्तमैर्मध्यमैश्चैव कथितैरधमैस्तथा । पद्मादि स्थापनैरेव तत्सम्यग्यागमाचरेत् ॥३०९
प्रागुत्तरमुखो वापि यदि वा प्राङ्मुखो भवेत् ।
आसनं च प्रवक्ष्यामि यथादृष्टं यथाश्रुतम् ॥ ३१० ॥
कौशं चार्म्मं चैलतल्पं दारवं ताड़पत्रकम् । काम्बलं काञ्चनंचैव राजतं ताम्रमेव च ॥
गोकरीषार्कजैर्वापि त्वासनं परिकल्पयेत् । वैयाघ्रं रौरवं चैव हारिणं मार्गमेव च ॥
चार्मं चतुर्विधं ज्ञेयमथ वन्धुकमेव च । यथासम्भवमेतेषु ह्यासनं परिकल्पयेत् ॥३१३
कृतपद्मासनो वापि स्वस्तिकासन एव च । दर्भभस्म समासीनःप्राणानायम्य वाग्यतः
तावत्स देवतारूपो ध्यानं चान्तः समाचरेत् ।
शिखान्ते द्वादशाङ्गुल्ये स्थितं सूक्ष्मतनुं शिवम् ॥ ३१५ ॥
अन्तश्चरन्तं भूतेषु गुहायां विश्वमूर्तिषु । सर्वाभरणसंयुक्तमणिमादि गुणान्वितम् ॥
ध्यात्वा तं धारयेच्चित्ते तद्व्याप्त्या पूरयेत्तनुम् ।
तया दीप्त्या शरीरस्थं पापं नाशमुपागतम् ॥ ३१७ ॥
स्वर्णं पारदसम्पर्काद्रक्तं श्वेतं यथा भवेत् । तद्द्वादशदलावृत्तमष्ट पञ्च त्रिरेव वा ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिकल्प्यासनं शुद्धं तत्रलिङ्गं निधाय च। गुहास्थितं महेशानं लिङ्गे सञ्चिन्तयेत्तथा
शोधिते कलशेतोयं शोधितं गन्धवासितम्। सुगन्धपुष्पं निक्षिप्यप्रणवेनाभिमन्त्रितम्
प्राणायामश्च प्रणवःशूद्रेषु न विधीयते। प्राणायामपदेध्यानं शिवेत्योङ्कारमन्त्रणम् ॥

गन्धपुष्पाक्षतादीनि पूजाद्रव्याणि यानि च।
तानि स्थाप्य समीपे तु ततःसङ्कल्पयिष्यते ॥ ३२२ ॥

शिवपूजां करिष्यामि शिवतुष्ट्यर्थमेव च। इति सङ्कल्पयित्वा तुतत आवाहनादिकम्

कृत्वा तु स्नानपर्यन्तं ततःस्नानं प्रकल्पयेत्।
नमस्तेत्यादि मन्त्रेण शतरुद्रियविधानतः ॥ ३२४ ॥
अविच्छिन्ना तु या धारा मुक्तिधारेति कीर्तिता।
तया यः स्नापयेन्मासं जपन् रुद्रमुपांशु वा ॥ ३२५ ॥

एकवारं त्रिवारं च पञ्च सप्त नवापि वा। एकादशमथो वारमथ त्रयोदशान्वितम् ॥
मुक्तिस्नानमिदं ज्ञेयं मासं मोक्षप्रदायकम्। शैवया विद्यया स्नानं केवलं प्रणवेन च ॥

मृण्मयैर्नालिकेरस्य शकलैश्चोर्मिभिस्तथा।
कांस्येन मुक्ता भुक्त्या च पुष्पादि कसरेण वा ॥ ३२८ ॥

स्नापयेद्देवदेवेशं यथासम्भवमीरितैः। श्रृङ्गस्य च विधिंवक्ष्ये स्नानयोग्यं यथा भवेत्

पूर्वमन्तस्तु संशोध्य वहिरन्तस्तु शोधयेत्।
सुस्निग्धं लघु कृत्वाऽथ नागं छिन्द्यात्कथञ्चन ॥ ३३० ॥

नीचैकदेशविन्यस्तद्वारद्रोण्यासुवृत्तया। कुशानुयुतया स्नानं देवाय परिकल्पयेत् ॥

एवं गवयश्रृङ्गस्य जलपूर्तिरथोच्यते।
द्वारे निषिद्धलोहाद्धं सन्धिद्वारा समन्विते ॥ ३३२ ॥

योगवक्रं नागदण्डं नागाकारं प्रकल्पयेत्। फलस्थाने तु चषकं दण्डेन समरन्ध्रकम् ॥
तत्रावपातयेत्तोयं मूर्द्धयन्त्रघटेस्थितम्। पातयेदथ चान्येन वामेनैव करेणवा ॥३३४॥
मुक्तिधाराकृता तेन पवित्रं पापनाशनम्। एवं संस्थाप्य देवेशं पञ्चगव्यैस्तथैव च ॥
पञ्चामृतैरथ स्नाप्य मधुरत्रितयेन च। विभूष्यभूषकैर्देवं पुनःस्नाप्य महेश्वरम् ॥३३६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शीतोपचारं कृत्वाऽथ तत आचमनादिकम् । वस्त्रं तथोपवीतं च पञ्चगन्धकमेव च ॥
कर्पूरं मरुवंचापि पाटीरमथवा भवेत् । उभयं मिश्रितं वापि शिवलिङ्गं प्रपूजयेत् ॥
कृत्स्नपीठं गन्धपूर्णं यद्वा विभवसारतः । तूष्णीमथोपचारं वा कालियं पुष्पमर्पयेत् ॥
श्रीपत्रमरुचित्याजं यथाशक्त्याऽखिलं यथा । अनेकद्रव्यधूपं च गुग्गुलं केवलं तथा ॥
कपिलाघृतसंयुक्तं सर्वधूपाय शस्यते । धूपं दत्त्वा यथाशक्ति कपिलाघृतदीपकान् ॥
अथवाप्याज्यमात्रेण दीपान्दत्त्वोपहारकम् ।
यथाशक्त्युपपन्नं च दत्त्वा पुष्पसमन्वितम् ॥ ३४२ ॥
मुखशुद्धिं ततो दत्त्वा दत्त्वा ताम्बूलमादरात् । प्रदक्षिणनमस्कारौ पूजैवं हि समाप्यते
गीताङ्गपञ्चकं पश्चात्तानि विज्ञापयामि ते । गीतं वाद्यं पुराणं च नृत्यं हासोक्तिरेव च
नीराजनं च पुष्पाणामञ्जलिश्चाखिलार्पणम् । क्षमा चोद्वासनंचैव कीर्तितं चोपचारकम्
भूषणं च तथा छत्रं चामरं व्यजनं तथा । शिवोपवीतं कैङ्कर्यं षडीशानोपचारकम् ॥
द्वात्रिंशदुपचारैस्तु यःसमाराधयेच्छिवम् । एकेनाह्ना समस्तानां पापानां नाशनं ध्रुवम्
द्वात्रिंशदुपचारं स्यात्पूजनं तूत्तमोत्तमम् ॥ ३४७ ॥

सदाशिव उवाच ।

एवमेतत्कपिश्रेष्ठ तवपूजां वदाम्यहम् । मत्पाद्युगलं पूज्य सर्वपूजाकरो भव ।
आराध्येत्थं यथा लिङ्गे तन्ममाराधनं कुरु ॥ ३४८ ॥

हनुमानुवाच ।

गुरुणा लिङ्गपूजैव नियता कल्पिता मम । तां करोमि पुरादेव पश्चात्त्वत्पादपूजनम् ॥
इत्युक्त्वैव नमस्येशं शिवलिङ्गार्चनेऽभवत् ।
सरस्तीरमथो गत्वा कृत्वा सैकतवेदिकाम् ॥ ३५० ॥
तालपत्रैर्विरचितमासनं पर्यकल्पयत् । प्रक्षाल्य पादौहस्तौ तु समाचम्य समाहितः ॥
भस्मस्नानमथो चक्रे पुनराचम्य वाग्यतः । देववेद्यामथो चक्रे पद्मानि सुमनोहरम् ॥
अनन्तरं तालपत्रं पद्मासनगतःकपिः । प्राणानायम्य सन्यासं शुक्लध्यानसमन्वितः ॥
प्रणम्य गुरुमीशानं जपन्नासीदतःपरम् । अथ देवार्चनं कर्तुं यत्नमास्थितवानपि ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पलाशपत्रपुटकद्वयानीतजलंशुचि । शिरःकमण्डलुगतं निधायाग्निं त्रिमन्त्रितम् ॥३५५
आवाहनादि कृत्वाथ स्नानपर्यन्तमेव च । अथ स्नापयितुं देवमादाय करसम्पुटे ॥३५६
कृत्वा निरीक्षणं देवंपीठंनोदृष्टवान्कपिः । लिङ्गमात्रं करगतं दृष्ट्वा भीतिसमन्वितः ॥
इदमाह महायोगी किं वा पापं मयाकृतम् । यदेतत्पीठरहितं शिवलिङ्गं करस्थितम् ॥
ममाद्य मरणं लिङ्गं पीठं चेन्नागमिष्यति । अथ रुद्रं जपिष्यामि तदा यास्ति महेश्वरः ॥

इति निश्चित्य मनसा जजाप शतरुद्रियम् ।
अद्यापि न समायातो महेशोऽथ कपीश्वरः ॥ ३६० ॥

रुद्रं न्यपातयद्भूम्यां वीरभद्रः समागतः । किमर्थं रुद्यते भक्त रुदिहेतुं वदस्व मे ॥३६१

हनुमानुवाच ।

पीठहीनमिदं लिङ्गं पश्य मे पापसञ्चयम् ॥ ३६२ ॥

वीरभद्र उवाच ।

यदि नायाति पीठं ते लिङ्गे मा साहसं कृथाः ।
दाहयिष्याम्यहं लोकं यदि नायाति पीठकम् ॥ ३६३ ॥

पश्य दर्शय मे लिङ्गं पीठं यद्यागतं न वा । अथ दृष्ट्वा वीरभद्रो लिङ्गं पीठमनागतम् ॥
दग्धुकामोऽखिलाँल्लोकान्वीरभद्रःप्रतापवान् । अनलं भुवि चिक्षेप क्षणाद्दग्धा महीतदा
अथ सप्ततलान्दग्ध्वा पुनरूर्ध्वमवर्तत । पश्चोर्ध्वलोकानदहज्जनलोकनिवासिनः ॥
ललाटनेत्रसम्भूतं नखेनादाय चानलम् । जम्बीरफलसङ्काशं कृत्वा करतले विभुः॥

यदि नायाति पीठं ते दग्धा लोका न संशयः ।
अनायातमथो दृष्ट्वा वीरभद्रः प्रतापवान् ॥ ३६८ ॥

सनकादि महात्मानो ज्ञात्वा योगेन चागमन् । गौतमस्याश्रमवरं समागम्य महेश्वरम्
न दृष्टवन्तो देवादि सेव्यमानमपि द्विजाः । अस्तुवन्नथ च स्तोत्रैःसर्व वेदसमुद्भवैः ॥

ॐनमो देवदेवाय तस्मै शुद्धप्रभाचिन्त्यरूपाय तस्मै ।
नमःसुराणामधीशाय तस्मै नमो वेदगुह्याय शुद्धाय तस्मै ॥ ३७१ ॥
नमःशिवायादिदेवाय तस्मै नमो व्यालयज्ञोपवीताय तस्मै ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नमः सुराविन्दुसन्दोहवर्षत्त्रयीबिन्दुविश्वम्भराय तस्मै ॥ ३७२ ॥
पृथिव्यथोवायुराकाशमापःपुनःशशी वह्निसूर्यौ तथाऽऽत्मा ।
यस्याष्टैता मूर्तयःशङ्करस्य तस्मै नमो ज्ञानगम्याय शश्वत् ॥३७३॥
एतां स्तुतिमथाकर्ण्य भगनेत्रप्रदः शिवः ।
विष्णुमाह च गच्छ त्वं समानय च तान्द्विजान् ॥३७४॥

आनीतास्तेन हरिणा देवाय प्रणतास्तु ते । तानाह शङ्करो वाक्यं किमर्थं यूयमागताः

मुनय ऊचुः ।

देव द्वादशलोकानां दृश्यन्ते भस्मराशयः । स्थितमेकं वनमिदं पश्यत्वं लोकलङ्क्षयम्

सदाशिव उवाच ।

ऊर्ध्वस्थपञ्चलोकानां दाहे सन्देह एव नः । कथमङ्गारवृष्टिश्च कथं नो घा महाध्वनिः

मुनय ऊचुः ।

भीतिरस्माकमधुना वर्तते वीरभद्रतः । स एवाङ्गारवृष्टिं च पिपासुरिव तामपात् ॥
देवोऽथ वीरमाहूय किं वीरेत्यब्रवीद्भवः । वीरो हनूमतो लिङ्गपीठाभावादिदं कृतम् ॥
कपेश्चित्तं परिज्ञातुं मयाकृतमिदं वृहत् । कृपानिधिरथो देवो यथापूर्वमकल्पयत् ॥३८०
दग्धानप्यखिलाँल्लोकान्पूर्वतः शोभनान्विभुः ।
कल्पयामास विश्वात्मा वीरभद्रमथाब्रवीत् ॥ ३८१ ॥
आलिङ्ग्याघ्राय शिरसि ताम्बूलं दत्तवान्हरः । अथाऽसौ हनुमानीशपूजनं कृतवानथ ॥
एकं वनचरं तत्र गन्धर्वं सविपञ्चिकम् । इदमाह महावीणा मम वै दीयतामिति ॥
गन्धर्वो न मया त्याज्या वीणा प्राणसमा मम ।
ममापि प्राणसदृशी वीणेत्याह कपीश्वरः ॥ ३८४ ॥
अथ मुष्टिनिपातेन गन्धर्वे पतिते कपिः । आदाय वीणां महतीं स्वरतन्तुसमन्विताम्
अलाबुसंयुतां कृत्वा राजवृक्ष फलाकृतिम् ।
तस्योरसि विनिक्षिप्य गायन्नागाच्छिवान्तिकम् ॥ ३८६ ॥
बृहतीकुसुमैःशुद्धैर्देवपादावपूजयत् । तस्मै वरमथ प्रादादाकल्पं जीवितं पुनः ॥३८७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समुद्रलङ्घने शक्तिं वरं प्रादादथापरम् ॥ ३८८ ॥
समस्तभूषासुविभूषिताङ्गः स्वदीप्तिमन्दीकृतदेवदीप्तिः ।
प्रसन्नमूर्तिस्तरुणः शिवाङ्कःसम्भावयामास समस्तदेवान् ॥ ३८६ ॥
पीतमुद्गमनीयं च समादाय महेश्वरः । पीतवस्त्रमिदं देव त्वं गृहाण हरे ! शुभम् ॥३६०
ब्रह्मणे रक्तवसनं सर्वेषां वसुदस्तथा । देवर्षिदानवादीनां दत्तवान्वसुयुग्मकम् ॥३६१॥
रामोऽपि चैतदाकर्ण्य शम्भवे युग्ममार्पयत् ।
सुसूक्ष्मं बहुमूल्यं च स्वर्णभूषणमेव च ॥ ३६२ ॥
अथ भुक्त्वा सुखासीनःसामात्यःस पुरोहितः । नानामुनिगणैर्भूपैर्वानरैर्गौतमीतटे ॥
शम्भुं पुराणतत्त्वज्ञं राघवो वाक्यमब्रवीत् ।
त्वमेव सर्वं जानीषे सर्वधर्मं गुहाशयम् । कस्मिन्कस्मिन्युगे ब्रह्मन्किं विशिष्टं वदस्वमे

शम्भुरुवाच ।

ध्यानमेव कृतेश्रेष्ठं त्रेतायां यज्ञ एव च । द्वापरे चार्चनं तिष्ये दानं च हरिकीर्तनम् ॥
सर्वं च शस्तं सर्वत्र ध्यानं न च कलौ युगे ।
नराणां मुग्धचित्तत्वात्कृच्छ्रस्थानां विशांपते ॥ ३६६ ॥
न धर्मे नियताबुद्धिर्न वेदेनैव च स्मृतौ । न क्रतौ न स्वधाकारे पुराणानां च न श्रुतौ
न यज्ञे न च तीर्थेषु न च शुश्रूषणे सताम् ।
नेज्यायां देवतानां च न स्वजातीयकर्मणि ॥ ३६८ ॥
न देवस्मरणेनापि न च क्वापि वृषे नृप । अतश्च दीर्घकालानां पुण्यानामक्षमा नराः ॥
दानं तु स्वल्पकालत्वात्कर्तुं शक्नोति मानवः ।
अतश्च कलिदुष्टानां प्रायश्चित्तं न विद्यते ॥ ४०० ॥
क्वेशाच्चित्पापनाशः स्यात्प्रायश्चित्तैस्तु नान्यथा ।
ब्रह्मज्ञानी गयाश्राद्धी काशीगन्ता श्रुतौरतः ॥ ४०१ ॥
पुराणज्ञावमाश्चैते श्रोता तस्य च राघव । युगानामनुसारेण तथार्थस्य विवेचनात् ॥
स्वपरप्रत्ययोत्पादात्परब्रह्म प्रकाशनात् । पुराणवक्ता सर्वस्माद्ब्राह्मणस्तु विशिष्यते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेनापि च कृतं पापं न सज्येत्किमुतान्यतः । अन्येषामपिकेषांचित्पुराणं पापनाशनम्
यःपुराणेषु विश्वासी वक्तारं मन्यते गुरुम् । ब्रह्मविद्या प्रदातारंविशिष्टं ज्ञातिबन्धुतः ॥
तस्य पापानि सर्वाणि विलयं यान्त्यसंशयम् । अथ श्रीशैलगमनं पूजकस्य महेशितुः
अतःकलौ मनुष्याणां पुराणं पापनाशनम् । पुरा कलियुगे राम वृत्तंसङ्कीर्तये शृणु ॥
आसीत्तु गौतमो नाम ब्राह्मणो वेदवर्जितः । तस्य पुष्टिःपशुश्चास्तां भ्रातरौ वेदवर्जितौ
ताभ्यां सह कृषिंचक्रे तत्र वृद्धिमवापच । धनधान्यादिकं किंचिद्राज्ञेऽसौ दत्तवानथ ॥
उवाच वचनं किंचिदधिकारं निरूपय । अर्थं न गमयिष्यामि तौ शक्तौ भ्रातरौ मम ॥

राजोवाच ।

ब्राह्मणस्याधिकारो हि वैदिके धर्मकर्मणि । तदन्यत्र नियुक्तस्य ब्राह्मण्यं विप्रणश्यति

गौतम उवाच ।

युगेष्वन्येषु धर्मोऽयं कलिधर्मो न तादृशः । भूपतित्वं हि भूपाल नृपाणां धर्म उच्यते
ब्राह्मणश्च परिक्षीणस्तं कुर्वन्नैव दुष्यति । शूद्राणां तु कृषिर्द्धर्मो नापद्यप्यग्रजन्मनः ॥
तस्मात्क्षत्त्रेण वर्तिष्ये ग्रामान्मम समादिश । अन्यत्र चात्र क्षात्त्रेण वर्तनं मम रोचते
अन्यन्नतु तथेत्युक्तो ददौ ग्रामान्द्विजन्मनः । ग्रामाधिकारदुष्टस्यवर्तनं त्वन्यथाऽभवत्
अभक्षिमांसचापायि सुराचाभाषिदुर्वचः । परयोषा तथागामि परस्वं प्रत्यहारि च ॥
अक्रीडिद्यूतमसकृत्कलञ्जंचादि दुर्भुजा । नापूजि जगतामीशःशिवो वा विष्णुरेव वा ॥
एवं कालेन दुर्वृत्तं राजा वाक्यमभाषत । विप्र विप्रत्वमुत्सृज्य शूद्रत्वं प्राप्तवानसि ॥
तस्मान्नियोगधर्मेण भवन्तं भ्रंशयामि च । माऽस्तु विप्रत्वमद्यैव शूद्रतैव वरंमम ॥
तद्गते यदि विप्रास्ते न भोक्ष्यन्ते वरं मम । न हि सर्वमिदं त्यक्तुं शक्तोऽहं पृथिवीपते

शम्भुरुवाच ।

एवं वदति दुर्विप्रे राजा तूष्णीमतिष्ठत । स तु वै शूद्रतुल्यश्च बुभुजेऽन्नं सहामिषम् ॥
कदाचिदथ दुर्वृत्तःप्रतोलीमण्डपस्थितः । द्विजेन पठ्यमानं तु पद्यं तु श्रुतावानिदम् ॥
हृदये पद्यमेतत्तु द्विजेस्तिमतिष्ठत ॥ ७२३ ॥
परात्परतरं यान्ति नारायणपरायणाः । न ते तत्रगमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्याख्यानमपि च श्रुत्वा पौराणिकमभाषत ।
कीदृङ् नारायणः प्रोक्तः कीदृशोऽपि महेश्वरः ॥ ४२५ ॥
किंपरं त्वयनं प्रोक्तं द्वेषःकीदृगुदाहृतः । किं तत्परमितिख्यातं ततःपरतरं च किम् ॥

पौराणिक उवाच ।

परं तद्ब्रह्मणःस्थानं सुखव्यक्तैकलक्षणम् । ततः परतरं विष्णोर्द्धामतद्ब्रह्मणोऽधिकम्
अविनाशितया तत्तु कीर्तितं परमंपदम् । तन्मध्ये पुरुषो विष्णुस्तदङ्गपरमं विभुः ॥
आपो हि नरजन्मत्वान्नाराः प्रोक्ता मनीषिभिः ।
नाराश्चास्यायनं यस्मात्तेन नारायणः स्मृतः ॥ ४२६ ॥
तत्परं वर्तनं येषां ते प्रोक्तास्तत्परायणाः । महदादीनि तत्त्वानि यानि तेषां य ईश्वरः
सूर्याग्निशशिनेत्रोऽसौ महेशः स्यादुमापतिः । द्वेषो हि वैरं विज्ञेयमीश्वरे परमात्मनि

शम्भुरुवाच ।

एवं पुराणभट्टेन समीरितमिदं वचः । चिन्तयन्पुनरप्याह मादृशस्य कथं गतिः ॥४३२
पौराणिकोऽथ तं प्राह श्रृणु वक्ष्यामि ते गतिम् ।
कुरु सर्वेण यत्नेन प्रायश्चित्तं यथाविधि ॥ ४३३ ॥
धर्मंश्चर यथाशक्ति यथाकालं यथाविधि । विमुक्तपापः पश्चात्त्वमुत्तमां गतिमेष्यसि ॥
पुराणमथवा नित्यं श्रृणुष्वावहितश्चसन् । निराशो वा महेशानं पूजयस्व पिनाकिनम्
देवं वा पुण्डरीकाक्षं केशवंक्लेशनाशनम् । संन्यासमथवा नित्यं ब्रह्मज्ञानपरोभव ॥
अथवा गच्छकाशीशं मुक्तौ वा मृतिमाप्नुहि । गयां वा गच्छतत्रत्वंश्राद्धंकर्तुं प्रयत्नतः
अथवा सर्ववेदानां सारं पातकनाशनम् ।
रुद्रं रुद्रप्रियकरं जप प्रत्यहमादरात् ॥ ४३८ ॥
श्रीशैलमथवा गच्छ केदारमथवेच्छया । अथवा प्रतिवर्षं तु माघस्नानं प्रवर्तय ॥४३९॥
किमत्र बहुनोक्तेन धर्मभक्तःसदाभव । नैवं नरकवासस्ते भविता तु द्विजाधम ! ॥४४०

गौतम उवाच ।

श्रुत्वा सर्वं करिष्यामि पुराणं भवतो मुखात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शास्त्रं विश्वासहेतुं च वर्ज्यं चापि वदस्व मे ॥ ४४१ ॥

पौराणिक उवाच ।

वर्ज्यं मांसं सुराऽन्यस्त्री भोगो द्यूतं विकत्थनम् । पारुष्यमनृतंमायादेवदेवविनिन्दनम्
गुरूणां सुरवृद्धानां पुराणस्मृतिभाषिणाम् । निन्दनं श्वेतवृन्ताकं कृतकालानुवर्तनम् ॥
बीजपूरं कुसुम्भं च लोहितं शृङ्गमेव च । अररुं नालिकेरं च कूष्माण्डकं तथैव च ॥
कोविदारफलं तैल पक्वं मानवजं पयः । वार्ध्रीणसखरीदुग्धं सूतिकाक्षीरमाविकम् ॥

औष्ट्रमेकशफक्षीरं मार्गमाजं नृसम्भवम् ।
विवत्सा सन्धिनीक्षीरं लवणंचैव योगियत् ॥ ४४६ ॥

नालिकेररसं कांस्ये ताम्रे मधु च सीसके । काचे तक्रंकरम्भांश्च घृताक्तान्नैव कारयेत्
होमं तु मृण्मयेपात्रे पुरोडाशं तु राजते । न सेवेत परंलोके शुभार्थी तु विचक्षणः ॥
पात्रान्तश्चूर्णलेपोऽपि तत्र भक्षणमेव च । क्रमुकस्य तथा भक्षश्चूर्णपत्रस्य चैव हि
क्रमुकस्यापि पक्वस्य भक्षणं क्रिमियोगिनः । पायसे लवणंचैव केवलं च करार्पितम् ॥

सिन्धुसौराष्ट्रकाम्वोजमागधेषु च सिंहले ।
न दोषाय भवेत्तत्र क्षीरं च लवणान्वितम् ॥ ४५१ ॥

क्षीराणि च समस्तानि लवणानि च योगतः । देशेष्वन्येषु दोषाय पाने चैवेह संशयः

किमत्र वहुनोक्तेन सद्भिर्निन्द्यं विवर्जयेत् ॥ ४५२ ॥

शम्भुरुवाच ।

एवं तस्य वचःश्रुत्वा ब्राह्मणस्य महात्मनः। स्वमेव भवनं गत्वा चिन्तयामास दुःखितः
रात्रौ मृत्युर्दिवाचेति न जानाति महानपि । परलोके सुखं दुःखमिह भोगविनोदनम् ॥
कृमिकीटमनुष्याद्यैःसुखदुःखैःपृथक्पृथक् । प्रतिजीवं तु हेतूनां भेदोऽपि सुविनिश्चयः

एकस्यापि हि जीवस्य नास्ति चैकविधा स्थितिः ।
जन्मकाले महाज्ञानं शैशवेऽत्यल्पबोधनम् ॥ ४५६ ॥

स्खलत्पदेऽल्पविज्ञानं बाल्ये चाल्पं तथैव च । कौमारे क्रीडनरतिर्यौवने विषयेषितम्
यौवने विनिवृत्ते तु द्रव्यसम्पादनेषणा । वार्द्धके भोगलिप्सा च न भोक्तुंक्षमतेऽपि च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दूषिकाश्लेष्मलालाभिर्वलीपलितकम्पनैः । श्वासकासानिलाक्षिप्तैर्हृष्टीकैर्विकलैर्युतः ॥
किञ्चिद्धर्तुं न शक्नोति न च जानाति किञ्चन । तिष्ठन्तीषु परस्त्रीषु गुह्यस्थानं प्रदर्शयेत्

कोशकण्डूयनपरःक्रूरो जीवितलक्षणैः ।
कण्डूयते स्फिचौ वस्त्रमुद्धृत्य च विचालयन् ॥ ४६१ ॥
भुञ्जानःश्लेष्मणा ग्रासं ग्रसितुं न च शक्नुयात् ।
यदा कासस्तदा जड्डो पायुवायुश्च शब्दवान् ॥ ४६२ ॥
निःसृतिश्च मलस्यापि श्लेष्मनिर्गम एव च ।
स्नुषादि भर्त्सनं बालतालहास्य निदर्शनम् ॥ ४६३ ॥

गुरुनिर्गमनादीनि सञ्चिन्त्य च पुनःपुनः । आहूतोभोजनाद्यर्थं भोज्यान्नादि विनिन्दयन्
चिरमुष्णं च निर्भर्त्स्य पुनश्चिन्तामवाप सः। अतिदुष्कृतिकर्माऽहं कथं भोक्ष्ये कथं शये
कथं तिष्ठे कथं गच्छे परलोकःकथंभवेत् । इति चिन्ताकुलो नित्यं न नमत्यपरान्वितः
द्विजस्य सदनं गत्वा पुराणज्ञस्य राघव । लज्जावाक्कृतवक्त्रश्च किं करोमीत्यभाषत

न किञ्चिदप्युवाचासौ द्विजःपौराणिकस्तदा ।
पापोऽयमिति विज्ञाय शिष्येण निरगामयत् ॥ ४६८ ॥
गौतमोऽपि विनिर्गम्य द्वार्येव च बहिःस्थितः ।
भुव्यासीनं तु विज्ञाय पुराणार्थविचारकम् ॥ ४६९ ॥

कथं कथमपि प्राप्य पीठंदत्तं च नाभजत् । निषण्णो भूतले राम पुराणज्ञमभाषत ॥

प्रायश्चित्तं करिष्यामि तदत्रैव विधीयताम् ॥ ४७१ ॥

ब्राह्मण उवाच ।

पापानि कीर्तयस्व त्वं सर्वथैव कृतानि तु । स चापि नाकृतंकिञ्चिन्मया पापमितीरयन्
रुदन्पपात भूम्यां च कथं तातेतिपीडितः । ब्राह्मणस्तमथ प्राह प्रायश्चित्तं न विद्यते ॥

महापापं त्रिरावृत्ते पुनश्च यदि चेत्कृतम् ॥ ४७४ ॥

गौतम उवाच ।

पौराणिकमहाभाग ! प्राप्याऽपितवामहं कथम् । पापयुक्तोद्विजश्रेष्ठसङ्गतिर्विफलाभवेत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पौराणिक उवाच ।

शास्त्रं प्रमाणं सर्वेषां प्रायश्चित्तविनिर्णये । तद्विना योहितं ब्रूयात्प्रायश्चित्तं न तद्भवेत्
सकृत्कृते सकृत्प्रोक्तं द्वितीये द्विगुणं भवेत् ।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः ॥ ४७७ ॥
त्वयाकृतं तु बहुधा चतुर्विधमपीच्छया । कथं वक्तुमहं शक्तः प्रायश्चित्तं भवादृशे ॥
गौतमोऽपि पुनःप्राह क गन्तव्यं मयेति च । पौराणिको द्विजो राम तूष्णीमेव बभूवह
गौतमोऽपि महाशैलं श्रिया एव जगाम ह ।
तत्र नद्यामथ स्नात्वा दृष्ट्वेशं मल्लिकार्जुनम् ॥ ४८० ॥
उपवासत्रयं कृत्वा शिवरात्रिमविन्दत । चतुर्थमुपवासं च चकारातीव दुःखितः ॥
पारणं चाप्यमायां स कृतवान्फलवल्कलैः ।
अथ प्रदक्षिणं चक्रे श्रीशैलस्य च स द्विजः ! ॥ ४८२ ॥
गतवान्मन्दिरं पश्चाच्चिन्तयातिकृशःश्वसन् । कथं पापनिवृत्तिर्मे तूष्णींभूतस्यसेत्स्यति
अनन्तमविचार्यं किं पापं च सुमहत्तरम् ।
श्रुत्वा न कोऽपि मे ब्रूयात्प्रायश्चित्तं विधीयताम् ॥ ४८४ ॥
किंतु कस्मिन्पुराणे तु श्रुते ज्ञातं भविष्यति । इति कृत्वा मतिं सोऽथ पुराणज्ञमभाषत
पुराणमेकं मे तात व्याख्यातुं भगवानिति । जातकर्मादि संस्कारान्कारयस्व ममाशु वै
द्विजो भूत्वा शृणोम्यद्य प्रायश्चित्तं करोम्यतः ।
विधायकं पुराणं मे भविष्यति च कीर्तितम् ।
अतःशक्यं करिष्यामि पुराणार्थविनिश्चयन् ॥ ४८७ ॥

पौराणिक उवाच

यथावत्कीर्तयिष्यामि पुराणं पापनाशनम् । यथाज्ञानं यथाशक्ति यथाशुद्धं यथाविधि
किं वाञ्छसि पुराणं तु कीर्तयिष्ये तदेव तु ॥ ४८८ ॥

गौतम उवाच ।

सर्वरुचि पुराणं मे वक्तव्यं किं हि तं वद । श्रुते यस्मिन्भिदानैव जायते तु हरीशयोः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पौराणिक उवाच ।

कौर्मोक्तं यत्पुराणं तद्देवयोरभिदाभिधम् ।
श्रिणोतियस्तत्प्रथमं तस्य पापं विनश्यति ॥ ४६० ॥
तस्य वक्ता तु यो विप्रस्तस्य विघ्नान्तरं भवेत् ।
श्रोतव्यं मन्यते पापो यदि भार्या विनश्यति ॥ ६१ ॥

किंचैकं दुष्करं वक्ष्ये श्रोतुर्वक्तुरनिन्दकम् । व्याख्यातरि यदि प्रीतिर्द्धर्मादेव प्रकाशिनि
आचारदर्शने पुण्ये कर्ममोक्षादि दर्शके । तदा तुष्टो महेशःस्याद्विष्णुरिष्टफलप्रदः ॥४६३

पितरस्तारितास्तेन यान्ति ते परमां गतिम् ॥ ४६४ ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे
चतुर्दशोत्तरशततमोऽध्यायः ॥ ११४ ॥

---

## पञ्चदशाधिकशततमोऽध्यायः

### पुराणपठनकर्तॄणां लक्षणवर्णनम् ।

श्रीराम उवाच ।

कथं पातकसङ्घातसङ्क्रमे ब्राह्मणाधमे । पुराणज्ञःकथं व्याख्यां चकार द्विजसत्तम ॥

शम्भुरुवाच ।

अध्यापने चाध्ययने जायते चाथ सङ्गमः । सङ्गतौ वत्सरं राम याति पातकिपातकम्
पुराणज्ञे तु काकुत्स्थ सर्वतत्त्वार्थवेदिनि । अपि पातकसन्दोहचीर्णपापं प्रणश्यति ॥३
प्रभूतवह्निनाशे हि धूमराशिर्यथैव हि । शलभो दीपनाशाय वह्निनाशाय न प्रभुः ॥ ४ ॥
कृतं पापं तथान्येषां नाशनाय पुराणिकः । भूतादिग्रस्तमर्त्यानां भूतादि भयमोचकः ॥
समन्त्रवानपनयेद्यथा न स्वयमाक्रमः । पौराणिकस्तथा पापं न किंचित्प्राप्तुमर्हति ॥
आत्मना च कृतं पापमन्यैरपि च यत्कृतम् । पुराणज्ञो नाशयति त्वतिदुष्टं स्वकर्मवा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवानीशो हृषीकेशो समवृत्तिर्विवेकवान् । लोकवेदक्रियावेत्ता रुद्रजाप्यतिनिःस्पृहः ॥
तुष्टःशान्तः क्रियादक्षः प्रभूतो योगकृद्वशी । यथैव ते पुराणज्ञो वसिष्ठो भगवानृषिः ॥
नियोगात्तव भूपाल अयोध्यायामतिष्ठत । अपालयद्ध्रुवं कृत्स्नां त्वां च रक्षःसमापतत्

स च शुक्रोपदेशेन राक्षसस्त्वामथाभ्यगात् ।
निद्रासक्तं हनिष्यामि नान्यथाऽवसरस्त्विवति ॥ ११ ॥

अथ विप्रो विदित्वैतद्वसिष्ठस्त्वद्धितप्रियः । सुप्तं प्रमत्तं काकुत्स्थं रक्षोहन्त्विन संशयः
ब्रह्मावाप्तवरं तद्धि मयाकार्यं निवारणम् । इति सञ्चिन्त्य विप्रर्षिःसेनामादाय निर्गतः

रक्षोहन्तुमशक्तस्तु मृत्युहीनं ततो मुनिः ।
स्वयं च राक्षसो भूत्वा वाक्यमाह महामुनिः ॥ १४ ॥

किमर्थमागतोऽसीहवनं मुनिनिषेवितम् । स आह राजा रक्षोघ्नस्तमहं हन्तुमागतः ॥
मुनिरप्याह किं तेन जीवितेन मृतेन वा । भुक्त्वाऽऽमिषं मदीयं तु युद्धं कृत्वा जयं व्रज

राक्षस उवाच ।

कथंत्वं राक्षसोमह्यंभक्षणायभविष्यसि । वसिष्ठोऽप्यथमानुष्यमास्थाय चियतिस्थितः
निष्ठीव्य मस्तके तस्य मुष्टिना तमताडयत् । ताडितो राक्षसस्तेन व्यद्रावयदृषिश्च तम्

पलायमानावन्योन्यं जलधिं तु गतावुभौ ।

तत्रस्थेन ग्रहेणाऽसौ गृहीतो राक्षसस्तदा । मुनिः पुनरयोध्यायां पूर्ववत्समतिष्ठत ॥

शम्भुरुवाच ।

तस्मात्स्वाभिमतं कुर्यात्पुराणज्ञोविमत्सरः । श्रवणस्य विधानं च कथयामि शुभंशृणु
शुक्लपक्षे दिनेशुद्धे वारनक्षत्रयोगतः । करणेचापि लग्ने च ग्रहताराबलान्विते ॥ २१ ॥
अमूढेन ग्रहे बाले न च वृद्धौ गुरौस्थिते । न कृष्णपक्षे ग्रहणे न च नास्तिकसन्निधौ
पूर्वोक्तलक्षणोपेतं पुराणं शृणुयादिति । शुद्धगेहेऽथवा शुद्धवेदिकायां मठेऽथवा ॥२३
नदीतीरे देवगेहे सभामण्डप एव च । रथ्यामठेऽथवा रम्ये पुण्यशालासु राघवः ॥२४॥
स्वयं नमस्यविप्रेन्द्रान्पुराणज्ञं विशेषतः । आसनं कल्पितं कुर्यादूर्ध्वं सर्वविशेषितम्
एहि धर्मासनमिति वक्तव्यं स्यादनिष्ठुरम् । पुराणप्रक्रमदिने यत्कार्यं तदुदीरयेत् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्याख्यातरं पुराणस्य वस्त्राद्यैःपरिपूजयेत् ।
शुभानि दत्त्वा वस्त्राणि सूक्ष्माणि च नवानि च ॥ २७ ॥
करकण्ठविभूषादि पात्रमासनमेव च । गन्धपुष्पाक्षतैः पूज्य ताम्बूलं विनिवेद्य च ॥
शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥२९॥
सभासदश्च सम्पूज्य गणेशं प्रार्थयेत्ततः । ॐनमेत्यादिमन्त्रेण पूजनं भारतीनुतिः ॥३०॥
प्रातःकाले पुराणस्य प्रक्रमं प्रारभेदिति । उपक्रमदिने राम त्रिपञ्चदशवा शुभाः ॥३१॥
श्लोका द्वितीये दिवसे ततो द्विगुणिताःशुभाः । तृतीये दिवसे राम ततश्चाधिकमिष्यते
दिनानामव्यवच्छेदाद्व्याख्यानं श्रवणं तथा ।
व्यवस्थितिर्यदा जाता तदा पौराणिकं गुरुम् ॥ ३३ ॥
ताम्बूलादि प्रदायाथ परेद्युः शृणुयादपि । पुराणमेवं श्रोतव्यं दैनन्दिनमिति श्रुतिः ॥
व्रतरूपेण यःकश्चित्पुराणं शृणुयान्नरः । यदैवं तत्पुराण तु तत्र याति न संशयः ॥३५
पुराणं श्रोतुकामेन श्लोकश्चैकोऽपि चेच्छ्रुतः । तद्दिने तु कृतं पापं नाशयेत्तु न संशयः
एवं पुराणं शृणुयाच्च यस्तु स ब्रह्महत्याकृतपापबन्धात् ।
सुरापीतिः स्वर्णहरश्च राम ! गुर्वङ्गनागश्च विमुक्तिमेति ॥ ३७ ॥
पापानि चान्यानि कृतानि पुम्भिःसर्वाणि नश्यन्ति पुराकृतानि ।
इहापि यान्यब्दशतार्जितानि श्रोतुर्विनश्यन्ति तथा च वक्तुः ॥ ३८ ॥
कलौ समस्तविप्राणां सर्वज्ञत्वं न विद्यते ।
विगुणापि ततो व्याख्या फलदा दानकर्मवत् ॥ ३९ ॥
पुराणानामभिप्रायं व्यासोवेद न चापरः । अहं वेद्मिविशेषेणव्यासादपि विधेरपि ॥
न स्वाध्यायस्तपोवापि न मन्त्रो नजुहोतियः । फलन्ति न तथातिष्ये पुराणश्रवणं यथा
एकैकश्रवणादेव पातकं महदेव तु । नाशमाप्नोत्यसन्देहः श्रीशैले वर्तनादिव ॥ ४२ ॥
अतो गुरुःपुराणज्ञःश्रोतृवन्द्योऽघनाशनः । न तस्मादधिकःकश्चिद्गुरुरस्ति गतिप्रदः ॥
मन्त्रेषु गुरवो ये च वेदशास्त्रेषुन्ये मताः । नेशते सर्वविज्ञानं दातुं तस्मान्न बोधकाः
पिशाचाः प्रायशो राम ! ब्रह्मराक्षसनामकाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदमन्त्रस्य वेत्तारो दृश्यन्ते न पुराणवित् ॥ ४५ ॥
पुराणविमुखोनैव सर्वः सर्वं हि पश्यति । पुराणज्ञो हितस्तस्मात्पापनाशकरः प्रभुः ॥
तत्पूजा सर्वपूजास्यात्सर्वद्रोहोऽस्य पीडनम् । यथा समस्तदानानांविद्यादानं प्रशस्यते
पौराणिकस्तथा धन्यस्तत्र दानं महत्फलम् ॥ ४८ ॥

राम उवाच ।

किं वा पौराणिकेदेयंकियत्कीदृशमेव च । पुराणं कीदृशं वर्ज्यं वर्ज्यःकीदृक्पुराणवित्

शम्भुरुवाच ।

षड्रसानन्नपानानि स्नेहद्रव्याणि यानि च । गृहं सोपस्करं राम पुराणज्ञाय दापयेत् ॥
पर्याप्तान्येव सर्वाणि अधिकानि फलाधिकात् ।
दद्याद्द्रव्यमतो भूयः सचैलं शोभितं मृदु ॥ ५१ ॥
भूषणानि यथार्हाणि स्वशक्त्या प्रतिपादयेत् । गन्धपुष्पं प्रतिदिनं केवलं गन्धमेव च
केवलं च तथापुष्पं फलकाले फलान्यपि । ताम्बूलं च तथा दद्यान्नमस्कुर्याच्च भक्तितः
पुराणस्य समाप्तौ तुदद्याद्दानादिकं तथा । अधिकं तु तथादेयं भूहिरण्यादिकं नृप ! ॥
न च तूष्णीमुपक्रम्य श्रोतुमर्हति कश्चन । सभासद्भिःकृताचैव या पूजैकेन वा कृता ॥
देवस्थाने यथाशक्ति सर्वैः पूजनमिष्यते । तीर्थेऽपि च यथा राम पुण्येष्वायतनेषु च
स्वशक्त्या पूजनं कुर्यात्पुराणज्ञाय राघव । श्रोतुस्तु लक्षणं पूर्वं मयोक्तं तु भवेन्नृप ॥
पौराणिकस्य सर्वस्य लक्षणं कथयामि ते । कुलहीनो महाव्याधिर्महापापी तिरस्कृतः
शौचाचारविहीनश्च वेदस्मृतिविवर्जितः । अन्यदेवः पूतिवचो व्यङ्गश्चाप्यधिकाङ्गवान्
परपूर्वापतिःस्तेनः प्राणिहन्ता निराकृतिः । अथ वर्ज्यं पुराणं ते कथयामि नृपोत्तम ! ॥
पूर्वज्ञैरुच्यमानं च यत्प्रोक्तं मुनिभिःपरैः । व्यासादयो मुनिवरा यत्प्रोचुस्तदुदीरयेत् ॥
पुराणस्थं पठेद्ग्रन्थं व्याख्यायेत विचारयन् ।
यया कयापि वा राम भाषया देशभेदतः ॥ ६२ ॥
न देशभाषारचितं ग्रन्थं श्रुत्वा फलं लभेत् ।
व्याख्या या काऽपि काकुत्स्थ ! पुराणस्य हिता हि सा ॥६३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मात्त्वं देव ! यावस्व व्याख्यास्ये यत्पुराणकम् ॥६४॥

शम्भुरुवाच ।

एवं पौराणिकेनोक्तं श्रुतवानपि गौतमः । स्वयं वस्त्रत्रयं प्रादाद्ब्राह्मणाय महात्मने ॥

कौर्मं पुराणं प्रथमं श्रुतवानिति नः श्रुतम् ।

दत्तवान्स्वर्णमधिकं वस्त्राणि च शुभानि च ॥ ६६ ॥

अथ लैङ्गं स शुश्राव वैष्णवं वामनं तथा । पाद्मं च गारुडंचैव सौरं ब्राह्ममथैव च ॥

पञ्चाष्ट स शुश्राव पुराणानि स गौतमः । अथ रामायणंचैव कौर्ममेव पुनश्च सः ॥

शिवनारायणेत्येवं जपं चक्रे सदैव हि । अवाप निधनंचापि स गतो ब्रह्मणःपदम् ॥

ब्रह्मणा पूजितो विप्रो विष्णुलोकमथागमत् ।

विष्णुना पूजितः सोऽथ जगाम शिवमन्दिरम् ॥७०॥

सर्वेषामेव वन्द्योऽसौ गौतमो मुनिसत्तमः । भारतश्रवणेचापि नियमा ये मयेरिताः ॥

पुरा व्यासेन मुनिना त्रिवर्षाद्यत्कृतं शुभम् ।

श्रवणात्तस्य कृत्स्नस्य व्याकर्ता भारतस्य यः ॥ ७२ ॥

न किञ्चित्प्रणमेद्विप्रं मुक्त्वा योगिनमुत्तमम् ।

सर्वेषामेव वन्द्योऽसौ भारतं व्याकरोति यः ॥ ७३ ॥

यो महाभारतं नित्यं व्याख्यास्यति पठेच्च वा ।

स सर्वेभ्योऽधिको विप्रस्तारयेच्चैव मानवान् ॥ ७४ ॥

व्याकरोति च पर्वैकंसर्वाणिकतिचित्तु वा । सर्वपापविनिर्मुक्तो हव्ये कव्ये विशिष्यते

तमेव प्रणमेद्विप्रं तमेवार्हं च पूजयेत् । तमेव भोजयेन्नित्यं सर्वं तस्मै निवेदयेत् ॥

तस्य पूजाविधिः प्रोक्तो व्याख्यानसमये द्विजः ।

प्रतिपूज्योऽथ वस्त्राद्यैः पूजयेद्विधिमार्गतः ॥ ७७ ॥

आदिपर्वसमाप्तौ च दद्यात्सूक्ष्माम्बरत्रयम् । सुवर्णञ्चयथाशक्ति सभापर्वणि वाससी

आनुशासनिकारण्यस्वर्गारोहेषु पर्वसु । आदिपर्वणि पूजा या सा पूजा नृपपुङ्गव ! ॥

कर्णाश्वमेधवैराटशल्यद्रोणेषु पर्वसु । सूक्ष्मवस्त्रत्रयं शुद्धं निष्कद्वयमथापि ॥ ८० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षुद्रपर्वस्वथान्येषु निष्कावथ समानयेत्। हरिवंशे सनिष्कं तु वस्त्रत्रितयमेव तु ॥

भारतस्याखिलस्यैव समाप्तौ क्षेत्रदो भवेत्।
रामायणस्य श्रवणे काण्डे काण्डे प्रपूजयेत् ॥ ८२ ॥

क्षेत्रं पर्याप्तमथवा सुवर्णमपि दापयेत्। व्याख्यातुर्गुरुवाक्यस्य सर्वकल्मषनाशनः ॥
अर्थोधर्मश्च कामश्च मोक्षश्च नृपसत्तम। व्याख्याश्रवणतःसर्वे सिध्यन्ति च सुबुद्धयः
ब्रह्महत्यादि पापानां सर्वेषामपि नाशनम्। एकेन श्रवणेनास्य किंनरैर्न श्रुतं श्रुचि ॥
यानवस्त्रसुवर्णाद्यैर्नित्यमेनं प्रपूजयेत्। व्याख्यातारं यतःपापसन्दोहस्य विनाशनम् ॥

अन्यान्यपि पुराणानि मुनिप्रोक्तानि तान्यपि।
श्रोतॄणां पापनाशाय वक्तुश्चापि विशेषतः ॥ ८७ ॥
यश्च सर्वपुराणानि षट्त्रिंशत्तु प्रकीर्तयेत्।
शृणोति वा न तस्यास्ति चित्तच्छेदः कदाचन ॥ ८८ ॥

ब्राह्मं पुराणं प्रथमं द्वितीयं पाद्ममुच्यते। तृतीयं वैष्णवं चैव चतुर्थं शैवमुच्यते ॥८९॥
अथ भागवतं प्रोक्तं पञ्चमंषष्ठमुच्यते। भविष्यं नारदीयं च सप्तमं परिकीर्तितम् ॥९०॥
मार्कण्डेयमिति प्रोक्तमष्टमं नवमं तथा। आग्नेयं ब्रह्मवैवर्तं दशमं परिकीर्तितम् ॥ ९१॥
लैङ्गं च वामनंचैव स्कान्दं मात्स्यमथैव च। कौर्मं वाराहमुदितं गारुडं वाथ कीर्तितम्
ब्रह्माण्डमित्यष्टादशपुराणानि विदुर्बुधाः। तथा चोपपुराणानि कथयिष्याम्यतःपरम्
आद्यं सनत्कुमाराख्यं नारसिंहमतःपरम्। तृतीयमाण्डमुद्दिष्टं दौर्वाससमथैव च ॥९४॥
नारदीयमथान्यच्च कापिलं मानवं तथा। तद्वदौशनसं प्रोक्तं ब्रह्माण्डं च ततःपरम् ॥
वारुणं कालिकाह्वानं माहेशं साम्बमेव च। सौरं पाराशरंचैव मारीचं भार्गवाह्वयम् ॥
कौमारं च पुराणानि कीर्तितान्यष्ट वै दश। अष्टादशपुराणानां व्याकर्ता तु भवेन्मनुः ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे पुराणमाहात्म्यकथनं नाम पञ्चदशोत्तरशततमोऽध्यायः ॥ ११५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# षोडशाधिकशततमोऽध्यायः

## जाम्बवदुक्तपुराकल्पीयरामायणकथावर्णनम् ।

सूत उवाच ।

संध्यावन्दनकर्म क्रियतामिति रामो मुनिमाचष्टायम् ।
उष्णद्युतिरत्यस्तमुपैति द्विजकुलमेतन्नीडमुपैति ॥ १ ॥
स्वयमपि सन्ध्यावन्दनकामोऽव्रजदुत्तरदिशमुज्झितयानः ।
हाहाहूहूकृतसङ्गीतिर्वन्दिप्रमुखप्रस्तुतकीर्तिः ॥ २ ॥
गौतमीतटमुपेत्य राघवो वायुनन्दनसुधौतपद्युगः ।
जाम्बवत्कृतकरावलम्बनः प्रापदुत्तमनदीं तु गौतमीम् ॥ ३ ॥
करद्वये धृतकुशः स राघवः प्रागमद्वरुणदिशामथोत्तमाम् ॥ ४॥
दत्त्वा ततोऽर्घत्रितयं यथाविधि प्रहृष्टरोमाऽथ जजापसोऽन्तरे ।
सम्प्रार्थयित्वा वरुणं यथाक्रमं शम्भुं वसिष्ठं प्रणनाम राघवः ॥ ५ ॥
ताभ्यां कृताशीरगमन्मनःपदं हनूमता क्षालितपादपङ्कजः ।
जुहाव वह्नीनथ बन्दिमागधैः संस्तूयमानोऽथ विनिर्ययौ बहिः ।
प्रहसच्चन्द्रकिरणैः सुधालिप्तमिवाम्बरम् । प्रसन्नताराकुसुमं वितानमिव सर्वतः ॥
अथागच्छत्सौधतलं वृद्धामात्येन कल्पितम् । नानासनसमोपेतं सभास्थानं ययौ नृपः
अथ मुनिं ह्युपवेश्य स राघवः स्वयमपि प्रथमासनमाभजत् ।
कपिगणाः परितः पृथुविग्रहा रचनया स्थितिमाप्रतिपेदिरे ॥ ६ ॥
सुखस्थितं नृपमभिवीक्ष्य स द्विजो वचस्तदा समुचितमाह शम्भुः ।
इह स्थितो भवति समस्तपूजितः कथं कथा नृपवर ! वर्तते गुहायाम् ॥
आकर्ण्याथ रघूद्वहो द्विजवचः शुश्रूषुरासीत्कथां,
तत्रस्थो निपुणं निवार्य वचनं सर्वैः श्रुतं तत्क्षणात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुश्रूषामि कथं महाद्भुततया स्वात्माश्रयामन्यथा,
रक्षोबाधनवादिनीमथ नृपः किंत्वेतदित्याह च ॥ ११ ॥
कुम्भश्रोत्रवधः पुरा समजनि प्राप्तो दशास्यो वधं,
पश्चादित्ययमन्यथा विरचितं रामायणं भाषते ।
कोऽयं विप्रवरः समस्तजनतानास्तिक्यसम्पादको,
राज्ञां स्थानमुपेत्य वक्ति स मया दण्ड्योऽथ पूज्योऽथ वा ॥ १२ ॥

अथाह जाम्ववानमुं रघूत्तमं कथांप्रति रामायणं न तावकंत्विदं हि कल्पितं मतम् ।
समस्तमत्र विस्तराद्वदामि देव ! तच्छृणु पङ्केरुहस्य सूनुतो मया श्रुतं पुरा ह्यभूत् ॥

जाम्ववन्तं विज्ञाप्य रामचन्द्रो वचनमाह ।

श्रीराम उवाच ।

कीर्तय पुराणं मे शुश्रूषुः कुतूहलादहं प्रणीतं तत्केन च विज्ञातम् ।

जाम्बवानथ बभाषे हि विधात्रे नमो नमस्तथैव विधुभूषणकेशवाभ्याम् ।

अथ पुरातनं रामायणं कथयामि । यस्य श्रवणेनाखिलजन्मसम्पादितपापक्षयो जायते। अथ तथापि दशरथो दशरथसमानरथी महीयसा बलेन सुमानसनामनगरजिगीषया पङ्केरुहसुतसुतं वसिष्ठमाहूय नमस्कृत्य मुनिदत्तानुज्ञःशताक्षौहिणीसेनया सहारुह्य तुरङ्गमं चन्द्रसमानशरीरमतिरोषसमाविष्टो विष्टरश्रवसमाराध्य दण्डयात्रां चकार । साध्योनाम स्वीयया सेनयाऽऽवृतो दशरथाभिमुखमाययौ योद्धुंयुद्धं चान्योन्यमभूत्

मासमेकं युद्धं कृत्वा दशरथस्तं साध्यं जग्राह । अथ साध्यसूनुर्भूषणो नामाल्पपरिवारो युयुधे दशरथेन । दशरथोऽपि साध्यसूनुं भुवो भूषणमवलोक्य योद्धुमेव नैच्छत् । कथमेतादृशं हन्मि चास्मिन्हतेऽस्य कथं पिता भविष्यति कथं तन्माता कथमप्रौढयौवना प्रियाभार्या । अमुष्य हि देहे समालिङ्गनचुम्बनपरिवर्तननवीनतरदलारविन्दपदानि कुसुमानीव दृश्यन्ते । एतत्समानवर्णवया एतादृशःसुभगःपरमप्रीतिवर्द्धनो नामपुत्रो भल्लूकभक्षितो मृतः स्मृतिपथं प्राप्यापि मां रक्षयितुमिच्छतीव मम हृदयमन्यथाकरोति इति मनसा वितर्क्यातिबालकं ग्रहीतुमारभत् । स चासा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ध्योऽपि पराधीनो बभूव। स च कुमारेण सह पराजयखेदममत्वा सुखमध्युवास च। दशरथोऽपि तत्र मासं स्थित्वा तत्पुत्रसन्दर्शनसुखमवलोक्याचिन्तयत्॥ अहो सर्वदुःखापनोदनक्षममेतत्सुखावलोकनं पुत्रसंवर्द्धनं नाम सर्वराष्ट्रिको मम जयःपुत्रवियोगमनुस्मरतो दुःखाय केवलं भवति। तदस्य पृच्छां करोमि कथमीदृशो जायते पुत्र इति वितर्क्य तमपृच्छत्। साध्योऽपि सकलमोक्षमार्गं क्षितीशायादिशत्। हरीशानौ समाराध्य सर्वैकादशीरुपोष्य द्वादशीषु ब्राह्मणानाराध्य तत्तत्कालभवं फलपूर्वमन्नाद्यं व्यञ्जनं पुष्पं च न्यायेन सम्पाद्य कपिलाघृतेन केशवं स्नापयित्वा सुगन्धचूर्णेन सँलिप्य स्वादूदकेन स्नापयित्वा सुरभिप्राटीरं स्वयमुद्घृष्टं मृगनाभ्यागुरुसारेण वा समेतं देवाङ्गे सर्वमुपलिप्य सतुलसीदलैर्यूथिकाकरवीरनीलोत्पलकमलकोकनदद्रोणकुसुममरुवदमनकगिरिकर्णिकाकेतकीदलपूर्वैर्यथासम्भवमभ्यर्च्य द्वादशाक्षरेण पुरुषसूक्तेन वा नाम्ना षोडशोपचारेण वाऽऽराध्य प्रणम्य नृत्यं कृत्वा देवं क्षमापयेत्। तथा व्रतानि विचित्राणि नारायणप्रीणनाय कुर्यात्।

प्रसन्नो भगवान्मुनिरीप्सितं पुत्रं यच्छति तदमुमाराधयस्वेति दशरथमुक्तवान्। स चापि साध्यं तत्र स्थाप्य गत्वाऽयोध्यां तथा सर्वं कृतवान्। अथ पुत्रकामेष्टौ समाप्तायामाहवनीयाद्यज्ञमूर्तिः शङ्खचक्रगदापाणिरुदतिष्ठत्। राजानं च वरंवृणीष्वेत्युक्तवान्। स च राजा वव्रे पुत्राननतिधार्मिकान्दीर्घायुषश्चतुरो लोकोपकारकान्देहीति।

अथ राजमहिष्यश्चतस्रः कौशल्या सुमित्रा सुरूपा सुवेषा चेति। राजानमब्रुवन्देव प्रतियोषमेकैकेन पुत्रेण भवितव्यम्।

अथ कौसल्योवाच।

एष यदि प्रसन्नो देवस्तदाऽयमुत्पमुद्यतां मम।

राजोवाच।

मम यदिष्टं तदयं प्रार्थ्यसे हरिः। विष्णो! प्रसीद देवेश! कमलापते शङ्खचक्रगदाधर! विभीषण! सृष्टिसमस्तलोकपालादिपूजितपादयुगल! शाश्वत!

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हरे ! नमस्ते नमस्ते एवं स्तुतो भगवानथ राजानमाह ।

माधव उवाच ।

तव पुत्रो भविष्यामि कौशल्यायाम् । अथ चरुं प्राविशद्धरिः । तं चरुं हि चतुर्धा विभज्य भार्याभ्यो दत्तवान् । अथ कौशल्यायां रामो लक्ष्मणः सुमित्रायां सुरूपायां भरतः सुवेषायां शत्रुघ्नो जज्ञे । खात्पुष्पवृष्टिश्च पपात ।

अथ चतुराननः स्वयमुपेत्य जातकर्मादिकाः क्रियाश्चक्रे । त्रिभुवनाभिरामतया राम इति नाम चक्रे रूपशौर्यादिलक्ष्मीयोग्यतया लक्ष्मण इत्यपरस्य शुभं भावारोपयतीति भरतः शत्रून्हन्तीति शत्रुघ्न इति नामानि कृत्वा ब्रह्मा स्वभवनं जगाम । शिशवश्च वृद्धिमीयुः ।

अथ पादसञ्चारिणं बालचन्द्रसङ्काशदर्शनं बिम्बाधरमुन्नततिलप्रसूननासं पुरश्चूलिकालम्बामानरत्नपत्रकं श्रवणलोललम्बमानकुण्डलं वक्षःस्थलविचलितस्थूलमुक्ताहारं विलसत्कार्तस्वरबाहुवलयं शिञ्जन्मणिकङ्करत्नाङ्गुलीयकं हेममणिरचितश्रोणिसूत्रं शिञ्जन्नूपुरोपशोभितपादमङ्गुलीयोपशोभितपादमध्याङ्लीकं वज्राङ्कुशसरोजलाञ्छनशोभितोरुपादतलं तूणीरसदृशजङ्घं करिकरसदृशोरुं विस्तृतजघनं सूक्ष्ममध्यवर्तुलावर्तकं गम्भीरनाभिमिन्द्रनीलशिलाविशालवक्षःस्थलं कम्बुग्रीवं चन्द्रबिम्बसदृशवदनमर्द्धचन्द्रसदृशललाटं नीलकुटिलकुन्तलं क्रीडासक्तं धूलिभिरापाण्डुरं फुल्लपद्मदलारक्तविलोललोचनं महेश्वरमिवोद्धूलितभूतिं महेश्वरमिव दिगम्बरं रामं कुमारं राजा दशरथो दृष्ट्वा हर्षपरिपूर्णहृदयः पुत्रमालिङ्ग्य चुम्बित्वा वक्षस्यालिलिङ्ग दृढम् । अथ कुमारोऽपि पार्श्वेनास्याङ्कमारोप्य कलकलितलोचनो यत्किञ्चिदुवाच । याचमानमितस्ततो वीक्षमाणस्तात ! गच्छे शये तात ! क्रीडामि तातेत्यादि पुत्रसुखमनुभूयानुभूय निर्वृतिं ययौ । अथ कदाचिद्भोक्तुमागते राजनि रामचन्द्रो बालक्रीडासक्तहृदयो बहुक्रीडनकरकमल उत्प्लुत्य धावमानो नरपतिपुरःस्थितमणिखचितसुवर्णभाजनस्थमन्नं वामकरेण गृहीत्वा राजनि चिक्षेप । इदमपि राजा सुखाय मेने । एतादृशान्यन्यानि चकार रामचन्द्रः । अथ कदाचित्क्रीडमाने रामे वात्यारामपात-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्रामश्च रुदन्नपतत्। एतस्मिन्नन्तरे ब्रह्मराक्षसोराममगृह्णात्। रामश्च मूर्च्छामाप।

अथ सहचरो वाल इतस्ततो रोरूयमाणो रामं तथाविधं राज्ञे व्यज्ञापयत्।

अथ राजा राममादाय वशिष्ठमाह किमिदं रामस्येति। अथ वसिष्ठो भस्मादायाभिमन्त्र्य ब्रह्मराक्षसं मोचयामास। पप्रच्छ कोभवानिति स चाहाहं वेदर्गावतो ब्राह्मणो बहुशः परधनमपहृत्य ब्रह्मराक्षसो जातो मे निष्कृतिं विचारय।

वशिष्ठ उवाच।

इदानीमितःपरमेकवर्षशतोपभोग्यं राक्षसत्वं नरकं भागीरथीस्नानमेकं शिवाय विल्वपत्रशतं समर्प्य ततः स्नात्वा पापाद्विमुक्तो भवसीति। कदाचित्तादृशं कृतपुण्यं तव पदं प्रयच्छामि तदुपरि शिष्टां गतिं भजेति वसिष्ठवाक्यमाकर्ण्य ब्रह्मराक्षसो वसिष्ठोपदिष्टपुण्यवशाद्दिव्यशरीरो भूत्वा नमस्कृत्य स्वर्गं जगाम। अथ रामं प्राप्ते काले उपनीय वसिष्ठो वेदानध्यापयामास षडङ्गानि मीमांसाद्वयं नीतिशास्त्रं च॥ अथ धनुर्वेदमायुर्वेदं भरतगान्धर्ववास्तुशाकुनविविधयुद्धशास्त्राणि च॥ अथ विवाहं कर्तुकामेन राज्ञा दशरथेन नानादेशजनपतीन्प्रतिदूताः प्रेरिताः॥ अथ कश्चिच्छीघ्रमागत्य राजानमिदमब्रवीत्॥ राजन्विदर्भदेशाधिपतिर्विदेहो नाम राजा॥ तस्य पुत्री वैदेही होमलब्धा रूपेण लक्ष्मीसमा सर्वलक्षणसम्पन्ना रामयोग्या विद्यते॥ स च तां दातुं राजा रामायोद्यतः॥ तद्गम्यतां शीघ्रमिति॥ अथ वसिष्ठादीन्प्रेषयामास॥ ते च तत्र गत्वा तां च निरीक्ष्य लग्नं निश्चित्यायोध्यामेत्य राजा (राजान) मुक्त्वा रामसहिताः पृथिवीपतिसमेताः शीघ्रं विविधकरितुरगशकटशिबिकान्दोलिकाभिरतिसुभगरूपभोगविलासक्रियानिपुणविदितविविधचेष्टागन्धर्वाः कामशास्त्रसुकुशला मृदुकठिनपृथुपयोधरासन्नकण्ठाः स्थूलसूक्ष्मललाटविम्बदशनच्छदमुखपङ्कजाः कुटिलकुन्तलदीर्घकेशधम्मिल्लाः कनकपत्रकर्णाः स्नानचेष्टयोत्थितरोमशोभिता जपाकुसुमरक्तदशना विशदविस्फुरच्छफरीलोचनाः शुक्तिकासदृशश्रवणाः नक्षत्रसदृशस्थूलमुक्तफलोपशोभितनासापुटा मुकुटसदृशकपोलास्तिलप्रसूननासिका आनम्रमध्यप्रदेशचूचुका इन्द्रगोपप्रतीकाशाधरपुटदशनक्षताः समदीर्घ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काङ्क्षप्रदर्शनास्थितसर्वप्रदेशतुंवर्तुलानातिमांसलाः पिण्डकाग्रन्थिनीव्यो वलितबाहुमूला अनतिचिरकालोत्थितरोमतया हरिद्रावर्णतया च कर्णिकारदलसदृशबाहुमूला मृदुस्निग्धवर्तुलसूक्ष्ममध्यप्रदेशाः कठिनस्थूलवर्तुलामग्नचूचुकपरस्परस्थानाक्रमणस्पर्द्धिपयोधरमध्यलब्धपदकपयोधरोपरि चञ्चलविविधमणिमयहारोपशोभितवक्षःस्थलाः पयोधरपरितो लब्धपदतया तरुणदृष्टिपरम्परतया असमानया नाभिकूपोपरितनरोमराज्योपशोभितोदरप्रदेशाभज्यमानमध्यस्थलीकरण एव वलीत्रयोपशोभिता मुष्टिग्राह्यमध्याः करिकरोपमजघनप्रदेश्या अरोमसदृशमृदुस्निग्धामलासमजान्व्यःकदलीस्तम्भसन्निभोरुयुगला आमग्नजानुकृशकुशवर्तुलपिण्डिकारहितजङ्घा आमग्नगुल्फा आसूक्ष्मस्निग्धा दीर्घदीर्घाङ्गुलीपादा नूपुररवाहूयमानमदना हंसमतङ्गजगमनादक्षिणाङ्गुष्ठास्पर्शिकच्छाग्रउपरिकच्छं नीवीं कृत्वा करद्वययुता वस्त्रप्रदेशकण्ठमपावृत्यापरवसनपरिभागवृतस्तनवसनापरभागे वामांस एव दक्षिणपार्श्वगतेन दशाभागेन नाभिप्रान्तेन प्रवेशितोपशोभितगात्रयष्टयो योषितो विवाहमङ्गलकर्मकरणायानेकश आगच्छन् ।

बालिकाश्च विद्युल्लतांशुशोधितगात्रयष्ट्य उद्भिन्नकुचकमलकुड्मलविविधहारोपशोभिवक्षसो यत्किञ्चिद्भाषिण्योऽतिचपलमृदुगतयो वृद्धवनिताश्चागच्छन् ॥

अथ विदेहपुरतः क्रोशमात्रे चूतवनिकायां विविधविटपविस्तरप्रदेशविविधविहङ्गकूजितकर्णनदत्तकर्णवनहरिणशाववत्यां महारजतनिर्मितोच्चनीचप्रासादोपशोभितप्रदेशविविधविहङ्गायां हेमवल्कलसंवीतभसितोद्धूलितशरीरजटिलमुनिगणध्यानोपासनोपशोभितवृक्षमालायां विविधविद्याधरवधूपयोधरभाराभिभूतविचरिततरङ्गसरसीयुतायां सरस्तीरमिलितसैरन्ध्रीयुवतिभिराहूयमानतरुणजनायां नानावर्णकुसुमसौरभवासिताशेषप्रदेशायामितस्ततो रिरंसया प्रदर्शितस्फारशफरीविलोचनतरलचक्षुषाप्रभाविलसितशरीरवेश्याजनायां विविधाश्चर्ययुतायां दशरथः सामात्यपुरोहितोऽभिरामरामादिपुत्रसहितः सुखमुवास ॥

अथ वैदेहोऽपि मिथिलां नानापताकोपशोभितां विविधप्रासादगोपुरोद्यानदेवता-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यतनोपशोभितामन्योन्यकेलिचतुरयुवतिजनानुकीर्णामुशीरविरचितमहाप्रपां सुकेलीजनोपशोभितविशिखां विविधपण्योपशोभितरथ्यां तत्र तत्र ब्रह्मघोषशोभितमठां प्रतिमन्दिरं मीमांसादिव्याख्यानसम्पादसीमाध्ययनां सुपुण्यहविर्गन्धसामादिस्वरपदक्रमश्रुतिब्राह्मणवाटिकामनेकपरिवृढमन्दिरप्रवेशनिष्क्रीतागुरुकुङ्कुमाध्वर्युवेषां मृदुलवसनताम्बूलरक्तदन्तच्छदकामिनीं मृदुवचनकठिनवचनकरसंज्ञानिर्धारितप्रतिवचनविविधोपायनाहरणकरजनोपशोभितां मृदुधवलजघनपरिवीतवस्त्रोपरिभागेन स्निग्धवर्तुलपरस्परसङ्घर्षपयोधरमध्यप्रदेशोपशोभितवामांसकन्दोपशोभितवनितां विविधमुक्ताहारजपासङ्काशदशनच्छदमन्दहासमालाकारसहस्रोपशोभितां पुण्यासवसाधनमन्दिरां तत्र तत्र विचित्रतोरणां विशुद्धवीथिकां तत्र तत्र स्थापितकल्पपादपां रम्भाविभूषितद्वारां पुरीं शोभितां शोभयामास ॥

अथाभिकलनार्थं विलासिन्यो निशादूर्वाऽक्षतमन्त्रमङ्गलकज्जलितकेशिकधम्मिल्ललताग्रथितजटोपशोभितसीमन्तशीर्षशोभितनासामुखविचित्राभरणार्हणहेमपात्रावस्थिताज्यगुग्गुलुफलादिसौभाग्यद्रव्यमुद्वहन्तीभिः स्त्रीभिरन्यैरपि शोभितजनैः स राजा निर्जगाम ।

तदानीं मङ्गलतूर्यघोषा देवदुन्दुभिभेरीनिसाणमर्दलशङ्खादिनादाः प्रादुर्बभूवुः । गायकाश्च मङ्गलानि जगुः ॥ मङ्गलवेदवाक्यानुपाठेन वैदिका ब्राह्मणाः कुलपाठका भेरीघोषेण च कृत्स्नमाकाशमापूरयन् ।। अथान्योन्याक्षतपूर्वमङ्गीकुर्वन्तः सूतवन्दिजनादिभिः स्तूयमानाः पुरं प्रविविशुः ॥ विदेहनगरात्पश्चिमभागे निर्मितं मन्दिरं दशरथः प्रविवेश । अवशिष्टाश्च यथा योग्यं भवनं विविशुः ॥

अथ नारदो मिथिलां तदानीमेवागच्छत् । विदेहोऽपि देवर्षिमभिपूज्य स्वागतं पृष्ट्वा भोजनं कारयित्वा सुखासीनाय मुनये सघनसारं ताम्बूलं दत्त्वा व्यज्ञापयत् ।

श्वो विवाहे भवान्स्थातुमर्हेति कारयितुं विवाहम् ॥

नारद उवाच ।

श्वो हि नक्षत्रं सूर्यनक्षत्रदर्शनं तत्र विवाहो न कर्तव्य इति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ मौहूर्तिकं वृद्धगार्ग्यमाहूय राजा पप्रच्छ ॥ क्व विवाहमुहूर्तं इति । श्व इति गार्ग्य उवाच ।

राजा च नारदं गार्ग्यं चोदीक्ष्य भो इदमित्थमिति पप्रच्छ ॥

अथ नारदो गार्ग्यमुवाच ।

कथमुक्तं लग्नं दास्यसि । अथ गार्ग्यो विषघटिकाश्च विहाय लग्नं दास्यामीत्युवाच ॥

नारदोऽपि ब्रह्मवचनानि किं न जानासीत्युक्तवान्गार्ग्यम् ।

गार्ग्येण पृष्टस्तान्दोषानपठत् ॥

उल्का च ब्रह्मदण्डश्च मोघः कम्पस्तथैवच । सर्वकार्यविनाशाय दृष्टा वै ब्रह्मणा पुरा प्रतिष्ठासु विवाहेषु मौञ्जीबन्धाभिषेकतः । अन्येषु सर्वकार्येषु विषनाडीर्विवर्जयेत् ॥ अतःपरं तु कार्याणां करणे नच दोषभाक् । विवाहादिषु कार्येषु दोषमेव वदाम्यतः ॥

उल्का दहेत्कुलं सर्वं ब्रह्मदण्डो विनाशयेत् ।
मोघस्तु मरणाय स्यात्कम्पः कम्पाय कर्मणः ॥ १७ ॥
इति नारदोक्तमाकर्ण्य गार्ग्यो मुनिर्मौनपरोऽभवत् ।
दध्यौ रविं ग्रहपतिं विहाय विषनाडीर्विवाहः क्रियतामिति ॥

नारद उवाच ।

कथं ब्रह्मवचनम् ।

सूर्य उवाच ।

देशभेदेन व्यवस्थोदिता । तदस्मिन्देशे विवाहो विषघटिकाविहाय कर्तव्य एव । नारदोऽप्यनुमेने । उवाच श्वः पराह्णे च क्षत्रविवाहश्च भवेदतः स्वयंवरार्थं नृपा आगच्छन्तु तन्नृप ! दूतान्प्रेषय । अथ राजा दशरथानुमतेन सर्वानेव नृपानागमय्या-चिन्तयत् कथं सर्वानेव तिरस्कृत्य वैदेही रामाय देयेति ॥

अथ रात्रौ मुहुर्निःश्वस्य निद्रालुरपि न निद्रामाप । अथ मध्येनिशं राजा शुचि-र्भूत्वा त्र्यम्बकं साम्बिकं मङ्गलदुकूलधारिणं कमलभवपुरुषोत्तमशक्रप्रमुखनिखिलदेवै-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भृगुप्रमुखमुनिवरैर्हाहाप्रमुखगन्धर्वैस्तुम्बुरुप्रमुखैश्च श्रुतिस्मृतीतिहासपुराणैर्मूर्तिमद्भिश्च सिद्धविद्याधरादिमातृकागणैश्च नन्दीप्रमुखगणैश्च सेव्यमानपादकमलं सर्वामङ्गलपरिमोचकमतिपुण्यसलिलया गङ्गया निष्कलङ्केन चन्द्रमसा सेव्यमानशिरोभागं वामाङ्कारूढया गिरिजया प्रदीयमानवीटिं सहासं सकामं सहावेक्षणमाददानं गोक्षीरसदृशं प्रतिकूलककस्तूरिकासदृशकण्ठं मृदुसूक्ष्मस्निग्धजटाभिर्विरचितकपर्दं विशुद्धकार्तस्वरकुण्डलोपशोभितगण्डभागं द्विरष्टवर्षवयसं गोक्षीरसदृशस्थूलमुक्ताफलकौसुम्भवर्णाश्चलेनावेष्टितशिरोभागं विविधरत्नविरचितकार्तस्वरभूषितवक्षः स्थलमतिधवलोपवीतेनोपशोभितशरीरमम्बिकानुलग्नकुङ्कुमारुणसुगन्धिशरीरमीक्षमाणं तर्जमानकाममार्गणं कोटिकन्दर्पसदृशं मनसाऽचिन्तयत् ॥

जजाप शतरुद्रियं जुहाव च तेनैव कामाहुतिः प्रास्तुवच्च पुरुषसूक्तेन । अथ तादृश एव महेश्वरस्तत्र प्रादुरभूत् । अथ राजा नमस्कृत्यास्तुवीत ॥

राजोवाच ।

क्षितिसलिलगगनपवनदहनरविशशियजमानमूर्तिभिरष्टमूर्त्ते ! विश्वमूर्त्ते ! त्रिभुवनमूर्ते ! वेदपुराणमूर्ते ! यज्ञमूर्ते ! स्तोत्रमूर्ते ! शास्त्रमूर्ते ! स्वधामूर्ते ! नारायणमूर्ते ! सर्वदेवतामूर्ते ! त्रयीमय ! त्रयीप्रमाण ! त्रयीनेत्र ! सामप्रिय ! वसुधाराप्रिय ! भक्तिप्रिय ! भक्तसुलभाभक्तविदूरस्तुतिप्रिय ! धूपप्रिय ! दीपप्रिय ! घृतक्षीरप्रिय ! द्रोणकरवीरप्रिय ! श्रीपत्रप्रिय ! कमलकह्लारप्रिय ! नन्द्यावर्तप्रिय ! बकुलप्रिय ! यूथिकाप्रिय ! कोकनदप्रिय ! ग्रीष्मजलावासप्रिय ! यमनियमप्रिय ! नियतेन्द्रियजपप्रिय ! प्रियश्राद्धप्रिय ! गायनप्रिय ! गायत्रीप्रिय ! पञ्चब्रह्मप्रिय ! सदाचारप्रिय ! गोत्रोत्सादिकमलभवहरिहरनयनसमर्चितपादकमलजयप्रद ! हरिप्रार्थितजलोत्पादितचक्रप्रदर्शकृतस्मृतियुक्तिप्रद ! स्मृतमङ्गलप्रद ! मृत्युञ्जय ! नमस्ते नमस्ते ।

इति स्तोत्रमाकर्ण्य भगवान्भवो राजानमुवाच वरदोऽहं वरं वृणु ।

राजोवाच ।

श्रीमन्मम कन्या वैदेही रामाय दित्सिता स्वयंवरे कुलरूपबलोत्साहसम्पन्नानेक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भूपराक्षसविप्रादिसर्वप्राणिसमागमे रामाधिकबलो यदि तामग्रीहष्यत्तदावचनमनृतं मम पापं च भविष्यति।

प्रत्युत दशरथोऽपि सर्वानेवागतान्विजेतुमलं क्षत्रकदनश्च रामो यद्यायास्यति तर्हि मम सुतां किं करिष्यति वा किं किं वा प्रेषयिष्यति कीदृशं कारयिष्यति मम किंवाकरिष्यतिसर्वथा हि प्रभूतबलवाहनो नरपतिरशेषमपि त्रिभुवनं हन्यात्। किमुतमामल्पसत्त्वं किमुतबहुना भवानेव शरणं ममोपायं वद यथा विवाहे श्रेयो भविष्यति रामश्च जामाता भविष्यति। शम्भुरपि तथा करोमीत्युवाच। राम एव नाथः सीताया भविष्यति। रामं च कृत्वा स्वस्त्ययैव करिष्यामि गृहाणाजगवं धनुरिदम्।

राजोवाच।

किमेतेनाजगवेन धनुषा स्वयंवरे सीतां रामं प्रापय॥

शङ्कर उवाच।

इदं धनुरसज्यं मे यस्तु सज्यं करिष्यति। तस्मै देया मया सीताप्रतिज्ञामेवमाचर॥
इत्येवमुक्त्वा भगवान्गणैरन्तर्दधे हरः। अथादातुं धनू राजा न शशाकातियत्नतः॥
अथोज्ज्वलं शतसहस्रगजबलं समाहूय गृहाणेत्युवाच॥

स चापि मातुलं नत्वाऽट्टहासं कृत्वोत्प्लुत्य धनुर्द्वाभ्यां कराभ्यामुद्दधार जानुपर्यन्तं मातुलो मारीचः श्रुत्वाएकाकी विप्रवेषं कृत्वा विदेहमयाचत। वैश्वदेवान्ते प्राप्तमतिथिं मामवेहि॥

राजोवाच।

स्वागतं भो इदं ब्रह्मन्नासनं तत्र निषीदेति। स चातिथिस्तथेत्युक्त्वा निषसाद॥ अथ राजा जलमादाय पादौ प्रक्षाल्य गन्धपुष्पाक्षतैरभ्यर्च्य महाऽर्जं तस्मै निवेद्य भोजनाय प्रार्थयामास। स चापि तदन्नं षड्रसोपेतं सौवर्णभाजनगतमीक्षमाण इवेतस्ततो विलोकयामास। तस्मिन्नेवावसरे सीता पद्मकिञ्जल्कप्रभेषदरुणवसनं बिभ्रती नील

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुटिलकुन्तलैश्चलद्भिः यूनां मनांस्याकर्षयद्भिः प्रेक्षमाणदृष्टिभग्नकलैरिव स्त्रीणां चित्तमीदृशमिति दर्शयद्भिरिवोपशोभितललाटानङ्गचापसुभ्रूः पद्मपत्रारुणविलोचना तिलप्रसून नासा मृदुस्निग्धरोमशकपोलानन्तरारक्तोष्ठा रक्तासनमाणिक्यनिभदाडिमीदशना जपाकुसुमारुणाधरातिशोभितचिबुका शुक्तिकर्णा समदीर्घकण्ठाऽतिमांसलवक्षाः पीनोद्भिन्नकुचकुड्मलानेकहारोपशोभिता सुभगाकारनतिमांसलबाहुलता मुग्धायतसमानाङ्गुलिशिखापद्मारुणपल्लवा विविधबहुरत्नाङ्गुलिभूषणा मुष्टिग्राह्यमध्या सुरोमराजि गम्भीरनाभिः पृथुजघना करिकरोरूस्तूणीरजङ्घा सुपादकमला नूपुरादिपादविभूषणा पादाङ्गुलीभूषिता विकसितसौगन्धिदकं बिभ्रती भुञ्जानमारीचस्य पुरतश्चागता ॥ वीक्ष्यालावचिन्तयदेलां कथमपहरामि कथमालिङ्गामिकथमन्यत्किञ्चित्करोमीत्येवमवसरमलभमानस्तूष्णीमेव विनिर्गतः ॥

अथ देवा धनुः सज्जीकरणाय यतमाना अहम्पूर्विकया विद्यमाना अन्योन्यतिरस्कारेण महेन्द्रः प्राप धनुरुत्तमं प्रान्तद्वयात्परं नावनमयितुं शशाक। अथ सूर्यो धनुरादाय नमयन्नेव निपपात। वायुर्बलवतां श्रेष्ठो जग्राहाजगवमथ स्वेनेव करेणोत्कर्षयन्नधः पपात धनुश्च वायोरुपरि पपात अहसंस्तदा सर्वे। एतस्मिन्नन्तरे तुरगवरमारुह्य बाणासुरः सहस्रबाहुरनेकानेकशिरोभिर्दैत्यैः परिवृतः प्रह्लादसमेतो विदेहपुरीमाजगाम। अथ स्वविभूषणोद्भासितां दिशं कुर्वन्स्वतेजसाऽपयशसो देवताः कुर्वन्नानाविधिगीतं शृण्वद्व्यङ्गुलमात्रेण शक्तो विरराम। प्रह्लादो बलिश्चैव धावातेऽथ विरेमतुः। अथ राक्षसेषु तूष्णींभूतेषु राजानोऽतिबलिनः समागता ज्याबन्धाशक्ता अपसृत्य तस्थुः।

अथ ब्राह्मणाः समागताः।

अथ विश्वामित्रो धनुरादाय एकाङ्गुलपर्यन्तं सज्यं कृत्वा विरराम।

निवृत्ताश्चापरे।

अथ दिनमात्रे धनुषि तूष्णींभूतेषु राघवः सहानुजैरागत्य धनुर्निरीक्ष्यास्पृशत्। अथ राजकुमाराः शतशः समागताः। सर्वाभरणभूषितो धनुर्दृष्ट्वा पस्पृशुर्नैवा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लनक्षमाः । अथ दाशरथिप्रमुखाः कुमाराः समागताः । अथ वेत्रझर्झरपाणयः समागमन्सर्वानेवापसारयामासुः । अथ रामो लक्ष्मणहस्तं गृहीत्वा सर्वाभरणभूषितो धनुरासाद्य स्पृष्ट्वा नत्वा प्रदक्षिणीकृत्य धनुरादायोद्दधार । तदादानसमये सर्वे एवैत्य सहासमूचुः । अत्र भग्ना महारथा इति । अथ स रामो धनुर्ज्यास्थानमवनमय्य धनुषि जानुं कृत्वा सज्यमेककरेणोत्पादयन्कोट्यामनामयत् । अथ सज्जीकृतं दृष्ट्वा सर्वे एव नासाग्रन्यस्ताङ्गुलयोऽभवन् । रामोऽपीज्यामन्वनादयत् । तेन नादेन सर्वेषां मनांसि क्षुभितान्यासन् । रामेण सज्जितं धनुरिति सर्वत्र वादः सञ्जातः । जनकोऽपि तां रामाय ददौ राजभिश्च युद्धं कृत्वा तान्निर्जित्य स्वपुरीमागात् । अथैकदा दशरथो रामं यौवराज्येऽभिषिच्य सुखी बभूव सर्वप्रजारञ्जनाच्च रामो राजानुमत इति सर्वप्रजावादोऽभूत् । अथ केकयदेशाधिपतितनया सुवेषा रामं राजानमसहमाना राजानमुवाच मम वरदानावसर इति राजा चिन्तयत्किंदेयमिति ।

देव्युवाच ।

चतुर्दशवर्षाणि रामो वनं विशतु पालयतु राज्यं भरतः । राजाऽनृतवचनदोषभयात्कथं कथमपि स्वीचकार । अथ वसिष्ठं भावितयाऽवोचत रामो वनाय निर्गच्छति अस्य किं वा भवेदिति विचार्य शुभाशुभं ब्रूहि । वसिष्ठो विचार्य सहर्षं राजानमुवाच ।

गत्वा वनं निखिलदानववीरहन्ता शम्भोरनेकविधपूजनमातनोति ।
सीतावियोगरुषितः कपिसेनया च तीर्त्वोदधिं दशमुखं च निहन्ति रामः ॥ २० ॥
आगम्य राज्यं रघुनन्दनोऽपि बहूनि वर्षाणि समातनोति ।
प्रशस्तकीर्तिर्निखिलेऽपि लोके शर्वेण देवेन चिरं न्यवात्सीत् ॥ २१ ॥
सुपुत्रयुक्तो बहुयज्ञयाजी परिवृढः सर्वगुणाधिकश्च ॥ २२ ॥

इति वसिष्ठवचनं श्रुत्वा दशरथो रामगुणाननुस्मरन्नित्युवाच श्रेयो मे मरणं रामस्य निर्गमन इति । अथ रामो मातरं पितरं गुरुं च वसिष्ठं पितृपत्नीर्नमस्कृत्य वनाय जगाम । अथोपवने दिनमेकं स्थित्वा जटाः कारयित्वा वल्कलं वासो धृत्वै

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कोपवीतीकृतदन्तशुद्धिरेकेनोपवीतेन जटा बद्ध्वा भस्मोद्धूलितसर्वाङ्गोभसितनिष्ठुर कायोमुक्ताफलदाममणिव्यत्यस्तरुद्राक्षमालामुरसिदधानोऽल्पभूषणाधिभूषितसीतासहायो लक्ष्मणानुचरो विवेश वनान्तरम्। अथानेकराक्षसांस्तस्मिन्निजघान भवानिव निखिलं चकार सीतापहरणादिनिखिलमपि भवतो यथा तथाऽस्याथ सुग्रीवाश्रममृष्यमूकपर्वतं रामो जगाम निबिडच्छायं चूतवृक्षमासाद्य लक्ष्मणसहायः परिश्रयमकल्पयत्। वृक्षे तु धनुषी आरोप्यासीनलक्ष्मणाङ्के शिरः कृत्वा हरिचर्मशय्याशयनो लक्षितां गीतिं शृण्वन्वृक्षफलं निरीक्षमाणो वानरमेकं मणिकुण्डलं हेमपिङ्गलं सुदृढबद्धमौञ्जीकौपीनमच्छोपवीतिनमतिचञ्चलं फलमादायात्मनि विक्षिपन्तं पुष्पमञ्जरीश्च किरन्तं गानमनुकुर्वन्तं व्यजनेन रामं वीजयन्तमारुह्य शाखामपि तथा वीजयन्तमाबद्धचूतफलमाम्रं रामो वीक्ष्य लक्ष्मणमभाषत। लक्ष्मण कोऽयं कपिरिति।

लक्ष्मणोऽपि न जान इत्युवाच। अथ रामः समाहूय कस्य त्वं किं नामेत्यपृच्छत्। स च सुग्रीवस्य हनुमानित्युवाच।

रामं नत्वा सुग्रीवमेत्य नत्वा देव! नारायण इवापरः पुरुषो युवा मेघश्यामा जटी आजानुबाहुरतियशस्वी सूर्यसङ्काशेन सहापरेण इहास्ते। अथ तरुच्छायाधः संस्थितौ सर्वलक्षणसम्पन्नौ राजपुत्रौ दृष्ट्वा उक्तश्च ताभ्यां सुग्रीवाय निवेदयेति तत्त्वयि निवेदितम्। अथ सुग्रीवः सत्वरमुत्थाय पुष्पसलिलादि द्रव्यमादाय पादप्रक्षालनादिकं कृत्वा फलानि समर्प्य व्यज्ञापयत्। कौ युवां किमर्थमागतौ राजपुत्रौ तपस्विनाविति सुग्रीववचनमाकर्ण्य लक्ष्मणेनाभाषत रामः दशरथतनयावावां राम लक्ष्मणौ दुष्टनिग्रहशिष्टपरिपालनाय वनं गताविति। अथ सुग्रीव आह युवयोरुपकारमपरं कार्यमस्तीति लक्ष्यते। अन्यथा सेनासमेतावागमिष्यतः। लक्ष्मण आह अस्ति कार्यान्तरम्। अमुष्यभार्या केनापहृता न ज्ञायते तामन्वेष्टुमागतौ तदेवावयोः कार्यमन्यदानुषङ्गिकम्। तदर्थमपि जलधिं तराव अपि पातालं प्रविशाव अपि नाकं साधयावः अपि महेन्द्रं पातयावः अपि बलिनं हन्वः किमपि कुर्वहे।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुग्रीव उवाच ।

रावणेनापहृतया कयाचिद्ध्रियमाणागतया विभूषणानि कानि चित्परित्यक्तानि गतानि मया सङ्गृहीतानि तानि दर्शयामीत्याभाष्य रामं मन्दिरमागमय्य दर्शयामास। रामोऽपि निरीक्ष्य निश्चित्य प्ररुद्य क्व गतोऽसौ रावण इति पप्रच्छ स च दक्षिणामाशां गत इति बभाषे। अथ रामस्तेन सख्यमकरोत्।

अपृच्छच्च किमर्थमिह भार्याहीनः स्थित इति।

सुग्रीव उवाच ।

मम भ्राता बाली महाबलो मम भार्यां राज्यं चापहृत्य किष्किन्धायामास्ते युद्धे-न चाहं पराजितस्तद्वधाय सर्वथा मम चिन्ता यथाऽसौ त्वया निहन्यते तथाऽहमपि-सागरं बद्ध्वा परतीरे लङ्कायां स्थितां सीतां रावणेनापहृतां तव समर्पयामीत्याभाष्य शपथं कृत्वा सुग्रीवो बालिनाऽतिबलिना युद्धायाहूतेन युयुधे। रामोऽप्यनन्तरमनिश्च-यद्बालिनं नाहन् ॥ अथ सुग्रीवः पलायितो राममिदमभाषत। तव चित्तमविज्ञाय प्रवृत्तोऽहं मरणाय। रामोऽपि युवयोर्विशेषाज्ञानान्मयातूष्णींभूतं चिह्नितं त्वां निरी-क्ष्य तं हन्मि। अथ सुग्रीवश्चिह्नं कृत्वा वालिनं युद्धायाहूय समतिष्ठत। तारा बभाषे बालिनम्।

सहायवानिव लक्ष्यते सुग्रीवो नोचेदेवं नाह्वयति ज्ञातं मया रामलक्ष्मणौ दशरथतनयौ नारायणांशौ भूभारावतरणाय समागतौ तावस्य सहायभूतौ।

वाल्युवाच ।

नीतिमान्राम इति मया श्रुतम्। नहि बलवन्तं विहाय दुर्बलं भजते तादृशः समा-यातु वा रामः प्रतिपन्नमधिकं कृत्वा बिभेति वीरो यदि रामः स्वयं युद्धाय यात-स्तदा युद्धं कर्तव्यमित्याभाष्य तारां सम्भाव्य सुग्रीवयुद्धाय निर्यातः। अथ मुष्टि-युद्धमन्योन्यमभूत्। रामोऽपि वालिनं जघान। पपात च वाल्याह चाशस्त्रयुद्धे वा बाणघातोऽथ शोणितससर्वाङ्गो बभूव। अथ तारा चाङ्गदश्च समागत्य व्यथितौ बभूवतुः। अथ राघवं वानराः समायाता वाल्युपान्ते निपेतू रुरुदुश्च। अथ तारा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रामं बभाषे शास्त्रकुशलाः शूराः धार्मिकाः राघवाः पुरा चापि राम! कथं पापमकार्षीः। न क्षत्त्रधर्मं जानीषे राजगणसेवितम्।

अन्योन्यं युद्ध्यतोर्युद्धे जयो वा मरणं भवेत्।
अन्यो यदि तयोर्हन्याद् ब्रह्महा स निगद्यते॥ २३॥
किं वैरेण वालिनस्राहनः किं वानरमांसाशया॥ २४॥

अभोज्यं वानरं मांसं यद्यात्मनोऽप्रियात्सुखाभावादपरेषामपि तथाभावं मन्यसे अहो विमोहाद्यदि मामादातुमिदं कृतमेकपत्नीव्रतं तव। यदि रावणहृतां सीतामानेतुं सुग्रीवसहायाय कृतमेवमेवहामहदन्तरं बलबृद्धेन महाबलेन वालिना सद्भावेन दिनकरावनितान्तरे सीतामानेतु समर्थेन स्मरणागतरावणदानसमर्थेन वानरराजेन पञ्चाशत्पराद्र्धवानरभल्लूकसेनावता आत्मकार्येण सिध्यत इति किं सुग्रीवेणाल्पवीर्येण सप्तपराद्र्धसेनापतिना कपिना किं सिध्यति कार्यं वचनवतः। अहो ज्ञातं सर्वदेव भद्रं यदुक्तोऽसि। वक्ति च रामः पृथिवीपतिना मया दुष्टनिग्रहणं कार्यं शिष्टपरिपालनं च वालिना सुग्रीवमहिषी रुमाऽपहृता राज्यं च अतश्च न तादृग्वधे दोषः।

तारोवाच।

सुग्रीवोऽपि तर्हि वध्यो दुन्दुभिना युध्यता वालिना बिले प्रविष्टेन वत्सरं तत्रोषितं तदन्तरे च मामपहृत्य राज्यं च कृतं सुग्रीवेण तं पूर्वमपि पश्चात्तं हन्तु।

राम उवाच।

कियत्कालात्पूर्वमिदं च वद।

तारोवाच।

षष्टिवर्षसहस्रादर्वागशीतितमे वर्षे रक्षोयुद्धे सुग्रीवेण राज्यमपहृतम्। पुनश्च वर्षान्तरे प्राप्तेन वालिना सुग्रीवः पलायितः। अपहृता तस्य भार्या राज्यं चापहृतम् तस्मिन्नेव दिने भवतः पितुर्दशरथस्याभिषेकः।

राघव उवाच।

मया पितुरनुशासनाद्राज्यगतदुष्टनिग्रहणं कृतम्। गुरुवचनस्यानुल्लङ्घनीय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वात्तदपहरणवेलायां यो राजा स नाचरत् । अथवा स्वतन्त्रौ मृगौ मृगयोर्हतश्च वाली मृगाणामन्योन्यदारणाद्यजुगुप्सा च । यतो मम मृगयावदाथवा मृगाणाम् । चलितस्थितबद्धानां चलद्भ्रान्तपलायिनाम् । अथावसृजतासङ्गमुज्झितामृगया तथा मृगया शास्त्रविधितो मृगयेयं मया कृता । दर्शनादर्शनाभ्यां च धावता धावता तथा

अवरोहात्परं स्थानं सात्त्विकानां प्रभिद्यते ।

राज्ञश्च मृगया धर्मो विना चामिषभोजनम् ॥ २६ ॥

अथ रामवचनमाकर्ण्य एव प्राकम्पयञ्छिरांसि । वाली बभाषे राममञ्जलिं मस्तके निधाय नमस्ते राम ! शृणु वचनं मम ।

शङ्खचक्रगदापाणिः पीतवासा जगद्गुरुः । नारायणःस्वयं साक्षाद्भवानिति मया श्रुतम्

त्वां योगिनश्चिन्तयन्ति त्वां यजन्ति च यज्विनः ।

हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृत् ॥ २८ ॥

मरणे चिन्तमानस्य त्वां विमुक्तिरदूरतः । स त्वं मे दर्शनं प्राप्तो राम ! मे पापसंक्षयः

गृहाण बाणं काकुत्स्थ व्यथितो भृशमस्म्यहम् ॥ ३० ॥

अथ रामस्तथेति बाणमादाय वालिनमुवाच किमिष्टं दीयतां वद ।

कपिरुवाच ।

यदि प्रसन्नो भगवान्मम सद्गतिं देहि । अयं सुग्रीवस्तथा रक्षणीयोऽङ्गदोऽथ तारा च मया पापिनाऽपराधः कृतस्तत्फलमनुभूतम् । अथ रामं पश्यन्नेव वाली ममार स्वर्गं च गतः । अथ सुग्रीवं राज्येऽभिषिच्य स्वयं वनं विवेश । अथ तेन सहायेन जलधिसमीपं गत्वा क्व लङ्का क्व सीता क्व चारातिरिति सुग्रीवमाह रामः । अथ हनुमानाह प्रविश्य लङ्कां विचित्य सीतां सर्वतत्त्वमवगत्य युद्धं सन्धिर्वा कर्तव्यस्तदुदधिलङ्घनाय कश्चित्समादिशतु भगवान् । अथ सुग्रीवमाह रामः । कथमेतद् घटत इति ।

कपिरुवाच ।

मम वानरा भल्लूप्रमुखाः कोटिशः सन्ति । एकं नियुज्य सर्वमाकलय्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथायुक्तं तथा करणीयम्। अथ जाम्बवानाह। हनुमानेको गच्छतु बुध्यतु लङ्काम्। अथ हनुमानगमल्लङ्कापुरं विचित्य। सीतामशोकवनिकायामासीनां तया सम्भाष्य च विश्वासं कृत्वा वनं बभञ्ज वनरक्षकांश्च। बद्धो रक्षसा लङ्कां दग्ध्वा उत्तरकूलं गत्वा रामं दृष्ट्वा वृत्तान्तं कथयित्वा तूष्णीमतिष्ठत्।

अथ रामः सर्वैर्विचारयामास जाम्बवानुवाच रामेण लङ्का कपिभिर्विनश्यतीति नान्येन समीकम्। अथ सागरोत्तरणे यत्न आस्थेयः। अथ रामः शङ्करमाराध्य सर्वं निवेदयित्वा त्वदुक्तं करोमीति वचनमुक्त्वा शिवमभ्यर्च्य प्रणतोभूत्वा व्यजिज्ञपत्। हे महादेव! महाभूतग्रास! महाप्रलयकारण! महाहिभूषण! महारुद्र! शङ्कर! परमेश्वर! विरूपाक्ष! नागयज्ञोपवीत! करिकृत्तिवसन! ब्रह्मशिरः! कपालमालाभरभूषण! नरकास्थिभूषण! भसितपर! नारायणप्रिय! शुभचरित! पञ्चब्रह्मादिदेव! पञ्चानन! चतुर्वदन! वेदवेद्य! भक्तसुलभाभक्तदुर्लभ! परमानन्दविज्ञान! परपूषदन्तपातन! दक्षशिरश्छेदन! ब्रह्मपञ्चमशिरोहरण! पार्वतीवल्लभ! नारदोपगीयमानशुभचरित! शर्व! त्रिनेत्र! त्रिशूलधर! पिनाकपाणे! कपर्दिन्ननेकरूपधर! वृषभवाहन! शुद्धस्फटिकसङ्काश! चतुर्भुज! नानायुध! दक्षिणामूर्ते! ईश्वर! देवपते! गङ्गाधर! त्रिपुरहर! श्रीशैलनिवास! काशीनाथ! केदारेश्वर! भूषणसिद्धेश्वर! गोकर्णेश्वर! कनखलेश्वर! पर्वतेश्वर! चक्रप्रद! बाणचिन्तापादक! मुरहरपूजितचरणकमल! सोम! सोमभूषण! सर्वज्ञ! ज्योतिर्मय! जगन्मय! नमस्ते नमस्ते। एवं स्तुवतो रामस्य पुरतो लिङ्गमध्यकोपेतस्तेजोमयमूर्त्तिराविर्बभूव। अभयवानथ पुनः पद्मासनासीनमुमाधिष्ठिताङ्कमीशमामुक्तसर्वाभरणंसुकान्तिकिरीटिनं हैमवती कटिस्पर्शं करद्वयेनाभयवरप्रदं तरङ्गितानेकदिशाभिः पूर्णतेजस्विनं हासमुखं प्रसन्नवदनं ददर्श रामः। परमेशितारं ननाम बद्ध्वाञ्जलिः पुनश्च दण्डवत्पपात। अथ रामं परमेश्वरोऽपि वरंवृणु त्वं वरदोऽहमित्युक्तवान्।

राम उवाच।

लङ्कां गमिष्यामि समुद्रतरण उपायमेकं मम देहि शम्भो!॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शम्भुरुवाच ।

ममाजगवं धनुरस्ति तत्कालरूपमविकल्पं वा भवति । तदारुह्य समुद्रं तीर्त्वा लङ्कामाप्नुहि । रामस्तथेतिनिश्चित्य सस्माराजगवम् । आगतं धनुस्तच्च रामोऽपूजयत् । अथ हरो धनुरादाय रामाय दत्तवान् । रामोऽपि जलधावपातयत् । आरुरुहुः सर्वे वानरा रामलक्ष्मणौ च षष्टिपरार्द्धं तेषामसङ्ख्येषु वानरेषु धनुरारूढेषु निकामं ययौ ! धनुस्तटं वानराश्च ततस्ततो गत्वा निरीक्षयामासुः ।

अथातिकायो नाम राक्षसः कपिबलमालोक्य रावणायोक्तवान् । रावणोऽपि किं कपिभिः शाखामृगैः किं वा मानुषाभ्यां रामलक्ष्मणाभ्यां किमायातं दैवागतमस्माकं भोजनमित्युवाच । अथ सुग्रीवः पश्चिमावलम्बिनि भास्वति हनूमज्जाम्बवदादिमहाबलैश्चातिकायैरसङ्ख्यातैर्लङ्कापार्श्वं गत्वा उपवनं प्रविश्य नाना फलानि खादित्वा पयः पीत्वोपवनरक्षिराक्षसान्विद्राव्य सर्वं विपिनमेकैकशो गृहीत्वा प्राद्रवँल्लङ्कां गोपुरं च गत्वा समारुह्य प्रासादं च विशीर्यैकैकशः केचित्स्तम्भमादाय रक्षोभिर्युयुधुः । एके च शालां बभञ्जुर्गृहाणि चूर्णयामासुर्बालवृद्धस्त्रीजनादिकं सर्वमेव निजघ्नुः ।

अथैकं प्राकारं निर्जितमाज्ञाय रावण इन्द्रजितं सन्दिदेश । इन्द्रजिता च युद्धं वनराः कृत्वा भीताः पालयिताश्च । अथ हनुमानखिलं निर्गतमाज्ञाय रावणं ज्ञात्वा वानरानाहूय निर्भर्त्स्य सेनां महतीं कारयित्वा दशमुखं कल्पयित्वा मोदयामास । अथ खस्थ एवेन्द्रजिद्युयुधे न च वानरास्तं दृष्टवन्तः । अथ हनुमज्जाम्बवन्तौ खमुत्पत्य पर्वतशिखराभ्यामिन्द्रजितं निजघ्नतुः । अथ भुवि पपात तं लक्ष्मणश्च यमलोकगामिनं चकार । अथातिकायमहाकायौ वानरसैन्यं बहुशो हत्वा लक्ष्मणं पीडयित्वा रामेण संयुध्य सुग्रीवं कृत्वा हनूमज्जाम्बवद्भ्यां युयुधाते पराजितौ गृहीत्वा च योद्धारावादाय रामसमीपं गत्वा रामाय न्यवेदयताम् । अतिकायमभाषत रामः । रावणस्य मम युद्धं ब्रूहि सचिवानामन्येषां महाभयानाञ्च ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतिकाय उवाच ।

निश्चितमिदंपुरास्माभिः कार्यं सेनां विभागशः कृत्वा विद्युन्माली नाम राक्षसो महाबलो विचित्रयोधी दर्शनादर्शनयोधी वानरैः सर्वैरेक एव युध्यते । अपरे च बलिनो-महान्तःशिक्षितास्त्राश्चागता आवां च युवाभ्यां युध्यावो रावणः पुष्पकमारुह्यापरभागेन त्वामेवनिहनिष्यति । अन्ये राक्षसाः कुम्भकर्णमुखाश्चात्मरूपं कृत्वा त्वां परिवार्य गृहीत्वा सीतायै दर्शयित्वा तत्सन्निधावेव हनिष्यन्ति । रामः प्राह अहो बलवतां किमसाध्यमेवं भवति दैवगतिः कुटिला । सुग्रीवोऽतिकोपनः सक्रोधं दृष्ट्वा राममुवाच । वध्यावेतौ न मोचनीयौ । रामः प्राहावध्यौ मोचनीयावेतौ वसनानि भूषणान्यानयेत्युक्तमात्रे हनूमता तान्यानीतानिरामस्ताभ्यां दत्तवान् नत्वायदेतल्लङ्काद्वारे दृश्यते दारुपञ्चवक्त्रं शुक्रेणोक्तमेतेन च्छिन्नेन रावणो हन्यते । अथ च दारुच्छेदनसमनन्तरं पातालं गन्तव्यमिति भार्गवभाषितं शासनं लिखितम् । तस्मात्त्वमिदं दार्वेकप्रयत्नैकबाणनिपातेन पञ्चधाच्छिन्धि ततस्तव शक्तिं ज्ञात्वा युद्धमति दृढं कुर्वीमहि । अथ भार्गववचो विज्ञाय रामःपूर्वं कोट्यां स्पर्शमात्रेण सज्यं कृत्वा धनुषिबाणं संयोज्य रक्षोभ्यां हनूमतश्रावयन्नेवबाणं मुमोच ।

बाणं धनुषश्चलितं तौ राक्षसौ बाणमार्गं निरीक्षमाणौ दारुबाणेन पञ्चधाच्छिन्नंनिरीक्ष्य रामं व्यज्ञापयतामावयोः शिशवो रक्षणीयास्त्वयेति तथेत्याह रामः । राक्षसौ लङ्कां प्रविष्टौ । अथ प्राकारयुद्धं कर्तुं वानरा गत्वा सर्वतो वरणमात्रं हि पार्ष्णिभिःपादैर्जानुभिःकरैः पृष्ठैश्च तलसमं कृत्वा द्वितीयप्राकारं गतास्तदा च रावणः समागत्य सर्वानेवेषुभिर्द्रावयित्वा तदनुगच्छन्राममगात् ।

अथ राममपि पञ्चभिर्बाणैर्विव्याध अथ रामो दशभिर्बाणै रावणं सव्रणं चकार । अनयोरतिदारुणमन्योन्यं युद्धं बभूव । रावणो दशभिर्बाणैर्विव्याध । अथ रामबाणैश्च क्षतशरीरो राक्षसः पलायनपरोऽभवत् । वानरा लक्ष्मणश्च कोटिकोटिं राक्षसानघ्नन् । अथ परस्मिन्नहनि विभीषणो रावणं विचार्येदमुवाच ॥

तृतीयोपायकालोऽयं चतुर्थं न विचारय ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चतुर्थो विपरीतो न शस्तः शस्तार्थकारिणः ॥ ३१ ॥
परस्य चाऽऽत्मनःशक्तिं विदित्वा चाऽऽत्मनोऽधिकाम् ।
तदा युद्धं प्रशस्तं स्याद्विपरीतं विनाशकम् ॥ ३२ ॥
रामेण बलिना नैव युद्धं ते दुर्बलस्य च ।
एकेषु वालिहन्ताऽसौ वालिर्ज्ञातस्त्वया पुरा ॥ ३३ ॥
मारीच एकबाणेन भवानपि पलायितः । निहता राक्षसाः शूरा इन्द्रजिच्च सुतो हतः ॥
वरेण्यत्रितयं भग्नं तेन युद्धं च नैव ते । दासभावमथोवाऽपि दत्त्वा सीतामथाप्नुहि ॥
गोपुरस्थं तथा दारुपञ्चवक्त्रमथेषुणा । चिच्छेद पञ्चधा तेन रामस्त्वां मारयिष्यति ॥
त्वदर्थं बहवोनष्टा नाशमेष्यन्ति चापरे । एकोन्यायःसुखार्थाय न च सौढ्यं सहोदर
मानुषीं मृत्युसंयुक्तामनिच्छन्तीं पतिव्रताम् ।
पत्नीं बलवतश्चापि पूजयित्वा विसर्जय ॥ ३८ ॥
अनिच्छन्त्याःसमायोगे भवेद्दुःखपरम्परा । दुर्गन्धमलसंयुक्तो नारीसङ्गो जुगुप्सितः
विरक्तिरथचेज्जाता दुःखायाकार्यवर्तनम् । अनुरागो यदि भवेन्मरणं नरकं ततः ॥४०॥
आत्मनोमरणंव्यर्थं तस्याश्चाद्यसमागमे । त्यागो वा मरणं तातधर्मपत्न्यास्तथा भवेत्
एवमादि तथाऽन्यच्च कश्मलं सम्भविष्यति ।
अन्यदाख्यामि ते वाक्यं सर्वेषां च प्रियं हितम् ॥ ४२ ॥
गत्वा रामान्तिकं नत्वा स्तुत्वा विज्ञाप्य राघवम् ।
क्षम राम महावीर शरणागतवत्सल ! ॥ ४३ ॥
तामसा राक्षसाःसर्वे वयमेते सुपापिनः । सीतापहारजं रोषं त्यक्त्वा पुत्रानवेहि नः
त्वदधीना वयं राम रक्ष वा मारयेच्छया । इत्युदीर्य पुरस्तस्य राघवस्य स्थितावयम्
स्थिरायुषो भविष्यामःस्थिरराज्या दशानन ! ।
अथाऽऽह रावणो वाक्यमहो नो राक्षसो भवान् ॥ ४६ ॥
न शूरो राजधर्मं च न च जानासि शाश्वतम् । परनारीपरद्रव्यपरराज्यनिषेवया ॥
शूराणामुत्तमो धर्मो न षण्ढानां भवादृशाम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शत्रुपक्षं समालिङ्ग्य निर्गच्छेच्छा हि चेन्नृप ॥ ४८ ॥

अथ विभीषणो मन्दिरं गत्वा रामान्तिकं गत्वा तं शरणमभजत् । अथ रावणः पुरान्निर्गत्य रामेण लक्ष्मणवानरै राक्षसाअपि युयुधिरे । अथ रावणं महाबलं हन्तुमशक्तो रामो विभीषणमुखमवलोक्य तदुक्तचिह्नपदं बाणेन निर्भिद्यामारयत् । अथ कुम्भकर्णो महागदामादाय सर्वं निष्पाद्य वानराननेकशो भक्षयित्वा रामोत्तमाङ्गं गदयाऽहन् । अथ रामो निशितबाणशतेन तमहन्ममार कुम्भकर्णः । अथ विभीषणेन रावणादेः श्राद्धादिकं कारयित्वा शिवालयं तन्नाम्ना कारयित्वा तमेव लङ्काराज्ये विभीषणमभिषिच्य सीतामग्निप्रवेशशुद्धामुमामहेश्वराभ्यां नमयित्वा पुरहरेण दत्ताखिलामृत्तबलायुष्यः सुपुष्पकमारुह्य जलधिमुत्तीर्य पारावारतटे सेनां समवस्थाप्य शिवप्रतिष्ठां तत्र कृत्वा मुनिभिर्देवैरभ्यर्चितोऽयोध्यामगमत् । अथ भरतादि समुपेतो नागरैर्वसिष्ठेन मुनिभिश्चाभ्यर्चितःस्वगृहमगमत् । आत्मनाऽऽगतानिन्द्रादि देवानासनादिनाऽभ्यर्च्य वानरान्सम्पूज्य मुक्तजटोऽभिषिक्तो राज्ये रावणवधहर्षितादेवा राममूचुः । त्वयाऽऽत्मराज्ये स्थापिता वयं नःसर्वदा परिपालयत्वमादिनारायणो देवो निखिलदुष्टनिग्रहार्थमवतीर्णो रावणं स बान्धवं हत्वा लोकत्रयरक्षकोऽसि श्रियासह सुखी भवेत्युदीर्य स्वर्गं गताः । अथायोध्यावासिनो रामं प्रहर्षिता ऊचुः ।

हत्वा शत्रून्समायातो दिष्ट्या प्राप्तोऽसि वै शिवम् ।
दिष्ट्या त्वं राजसे राम दिष्ट्या पालयसे प्रजाः ॥ ४६ ॥

त्वया यज्ञाःकरिष्यन्ते त्वयाधर्मो विवर्धते । इति पौरवचः श्रुत्वा रामो राजीवलोचनः वस्त्रादिभिरथो सर्वान्नागरान्समपूजयत् । मुनीनुवाच धर्मात्मा पूजयित्वाखिलैर्जनैः

कच्चित्तपःसमृद्धं वः कच्चिद्यज्ञः स्वनुष्ठितः ।
कच्चित्स्वदारनिरताः कच्चिदीशोऽभिपूज्यते ॥ ५२ ॥
कच्चित्सुप्रजसो भार्याः कच्चित्सर्वं सुखोत्तरम् ॥ ५३ ॥

मुनयःऊचुः ।

त्वयि राजनि काकुत्स्थ ! सर्वं स्वस्थं तपस्विनाम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गच्छामहे पदमितः किं वा त्वं मन्यसे नृप ! ॥ ५४ ॥

राम उवाच ।

यस्य विप्राःप्रसीदन्ति तस्य शम्भुःप्रसीदति । यस्यप्रसीदतीशानस्तस्य भद्रं भविष्यति

तत्कृत्वो भोजनमिह गन्तुमर्हा अनन्तरम् ।

तथेत्युक्त्वा मुनिगणाः कृत्वा भोजनमुत्तमम् ॥ ५६ ॥

अभिवर्ध्य तमाशीभिर्हृष्टाःस्वंस्वंपदं ययुः । रामोऽपि परमप्रीतः सभार्यश्च सहानुजः ।

अकण्टकं स कृतवान्राज्यं सर्वजनप्रियः ॥ ५७ ॥

शृणोत्येतदुपाख्यानं यःकश्चिदपिपातकी । सर्वपापविनिर्मुक्तःपरंब्रह्माधिगच्छति ॥५८॥

न दुर्गतिर्भवेत्तस्य यश्चेदं स्मरते नरः । यश्चापि कीर्तयेत्तस्य एवमेतदुदीरितम् ॥५९॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे पुराकल्पीयरामायणकथनं नाम षोडशोत्तरशततमोऽध्यायः ॥ ११३ ॥

---

## सप्तदशाधिकशततमोऽध्यायः

### रामस्य भरद्वाजाश्रमात्सुदेवगृहे गमनम् ।

सूत उवाच ।

भारद्वाजगृहेभुक्त्वा रामचन्द्रःप्रसन्नधीः । मुनीन्द्रविष्णुसहितो वानरर्क्षसमन्वितः ॥

मेघच्छन्ने तथाकाशे मन्दं चरति मारुते । तद्वनाभ्यन्तरे क्वापि सुदेवगृहमुत्तमम् ॥२॥

अष्टापदस्तम्भयुतं हेमपट्टिककल्पितम् । मणिमौक्तिकसंयुक्तं राजतैःकलशैर्युतम् ॥३॥

पाटीरचन्द्रकस्तूरीकुङ्कुमैःसुरभीकृतम् । कर्दमैर्जालकयुतं शकलोपरिसंवृति ॥ ४ ॥

चन्द्रज्योत्स्नागमं सूर्यानिरीक्ष्या(?) मध्यभित्तिकम् ।

गृहान्तर्भूतलं कृत्स्नं चन्द्रपुष्परसोक्षितम् ॥ ५ ॥

दिगुदीची तथा कृत्स्ना भित्तिकल्पनवर्जिता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तम्भे स्तम्भे चित्रकारी स्वपादीपरिकल्पितम् ॥ ६ ॥
शतहस्ताङ्गणं तस्य स्फटिकोपरिकल्पितम् । गृहाङ्गणाधिकच्छायः पारिजातमहीरुहः ॥
कृत्स्नप्रावृत्तिकं तत्र निबिडं कदलीवनम् । कदलीवनसयुक्तं केतकीवनसंवृतम् ॥ ८ ॥
मयूरनादबहुलं मञ्जुकूजन्मधुव्रतम् । पारावतगणध्वानं नानोपवनशोभितम् ॥ ९ ॥
प्रासादशतसम्बाधं मत्तकोकिलनादितम् । शाखालम्बिमहारत्नशोभितानेकपादपम् ॥१०
किन्नरीनिलागीतनादपूरितदिङ्मुखम् । अनेकारामसुभगं गौतमीतटमुत्तमम् ॥ ११ ॥
भारद्वाजगृहं पुण्यमनन्तगुणसेवितम् । रतिकन्दर्पसङ्काशदासीदासशतान्वितम् ॥१२॥
नानोपकरणोपेतं भारद्वाजगृहं शुभम् । तस्य चान्तर्गतः सौधस्तत्रान्तर्गृहवाटिकाः ॥
अष्टौ तन्मध्यतोह्येकं गृहं परमशोभनम् । चतुर्दिक्षु महादेव गृहप्रासादशोभितम् ॥१४॥
प्रतिदेवगृहं श्यामातौर्यत्रिकसुशोभितम् ।
स्वर्गस्थितवरस्त्रीणां विश्रामायैव कल्पितम् ॥ १५ ॥
भारद्वाजगृहाद्रामो निर्गत्याशेषसंयुतः । तस्यैव च महागेहं वनमध्यगतं त्वगात् ॥१६
तदन्तराच्छादितकम्बलं तदा पृथक्स्थवस्त्रासनसंयुतं च ।
सिंहासनं मध्यगतं तथैकं मुन्यासनानेकगतं विवेश ॥ १७ ॥
पौराणिकस्यानुपमासनान्तरं भूपालहर्यृक्षवरासनञ्च ।
पौराणिकं पूर्वमथोपवेश्य ततो वसिष्ठं मुनिपुङ्गवांश्च ॥ १८ ॥
नारायणं भूमिपतीन्कपींश्च नीचासनं च स्वयमध्यतिष्ठत् ।
मेघावृतं व्योमदिशः प्रसन्नाः सुपुष्पमुर्वीतलमुप्तबीजम् ॥ १९ ॥
तदङ्गणं नोष्णमहो न शीतलं सन्तानपुष्पं दमपुष्पगन्धि ।
शम्भुं विलोक्याथ वचो बभाषे रामः कथां कीर्तय शङ्करस्य ॥२०॥
तृप्तिर्न जाता मुनिवर्य शृण्वतो माहेशमाख्यानमघौघनाशनम् ।
चकार किंवा ननु गौतमाश्रमे महेश्वरो देवगणाधिसंवृतः ॥ २१ ॥

शम्भुरुवाच ।

महाविपश्चीमवलम्ब्य निष्ठितः स वायुसूनुः शिवमन्वपृच्छत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्यायार्जितैरेव हि पूजने विभोः कीदृग्भवेच्चानयजैःफलं वद ॥२२॥
चौर्यैरथो किं फलमर्पितार्पणे उपाहृतद्रव्यसमर्दणेषु ।
एकैकशो मे भगवन्वदेश प्रश्नोत्तरं किं कथयाशु शम्भो ! ॥ २३ ॥
अथेश्वरो वानरमाबभाषे वदामि सर्वं तव ध्यानतः शृणु ।
न्यायार्जितैः पूज्य सदाशिवं त्वजं सम्प्राप चैश्वर्यमिदं हि गौतमः ॥२४॥
पुरा द्विजो मङ्कणसूनुराकथः सुशोभनामाप सतीं द्विजन्मा ।
दरिद्र एकःकरुणासमन्वितःषष्ठाहभोजी पितृवर्जितश्च ॥ २५ ॥
उपोष्य पञ्चाहमथापि भोक्तुं प्रवृत्त एवाथ समापतद्यतिः ।
यतिर्बभाषे मधुरं तदा कथं मासोपवासी तव भोक्तुमागतः ॥ २६ ॥
तिष्ठामि भुङ्क्ष्व यदि चास्ति ते मुने न मे बुभुक्षाऽन्यगृहाद्धिभोक्तुम् ॥ २७ ॥

आकथ उवाच ।

न मे भुजिः पञ्चदिनं द्विजेन्द्र ! षष्ठे दिने मे भुजिरागतश्च ।
तदा मयाकार्यमचिन्तनीयं प्रक्षालयाम्येहि तवाद्य पादौ ॥ २८ ॥
ओमित्यथ क्षालितपादयुग्मः स भोजनं कर्तुमियेषयोगी ।
रम्भादलांसे बुभुजेतदन्नं विपाच्य सम्पादितमाज्ययुक्तम् ॥ २९ ॥
वन्यैः सुसंयुक्तमथादरेण न किंचिदुच्छेषितमन्नमस्य ।
अथाकथो वीक्ष्य मुनिं सुतुष्टं तुतोष भार्यासहितस्तपस्वी ॥ ३० ॥
गतोऽथ भुक्त्वाऽपि यतिः स चाकथः सन्तुष्टचित्तोऽथ जपं चकार ।
कपोतवृत्तिं स चकार पत्न्या तपोवितानाय स सज्जनो मुनिः ॥ ३१ ॥
पीठेऽथ कृत्वा तमुमापतिं शिवं लिङ्गे समाराध्य समन्वितं गणैः ।
लिङ्गं निधायाथ निरीक्षमाणो ददर्श चाज्ञातकृशाकृतिं द्विजम् ॥ ३२ ॥
दिगम्बरं पादविहीनमेतं काणं कुणिं कर्णविहीनकं प्रभुम् ।
सामोद्गिरन्तं बहुशास्त्रपारगं गृहं समायान्तमथो ददर्श ॥ ३३ ॥
अथाकथो भार्यां सुशोभनामिदमुवाच । अयं हि विकृतवेषो ब्राह्मणः समायाति ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अद्य देयमेतस्मै भोजनं रक्षार्थमन्नं चास्मिन्नपि दिने गते षष्ठेऽह्नि भोजनाभावात्तवजीवितं न तिष्ठतीति मम प्रतीयते किं तु त्वं मन्यसे वद।

शोभनोवाच।

आयुर्ललाटे लिखितं नान्यथा नश्यति। आकथ आह। यथा वद्धायुषोऽपि यज्ञस्य वीरभद्रेण च्छिन्नं शिर अजस्रात्मनः किमुत मनुष्याणां पापात्मनामिति सर्वेनं परित्यज्य त्वया भुज्यते यदि त्वेतस्मै मयाऽन्नं दीयते। तवेच्छानुसारतो मम कर्तव्यम्। भार्या प्राह कथमहं भोक्ष्ये त्वय्यभुक्ते मया किं पूर्वं भुक्तमिदमपरं शृणु॥

अन्नं हि प्राणिनां प्राणाः प्रत्यक्षं सर्वदेहिनाम्। तस्मादन्नप्रदो यस्तुप्राणदः स निगद्यते

अन्नाद्भूतानि जायन्ते वर्द्धन्ते तानि वै यतः।

तस्मादन्नाधिकं किञ्चिन्नास्य दानं महाफलम्॥ ३५॥

अश्वत्थचलपत्राग्रलीनतोयद्रवास्तिके। जीविते न हि योदद्यात्तस्य जन्म निरर्थकम्

परलोकसहायो हि धर्मो भार्या न बान्धवाः।

भार्या वा पितरौ पुत्रा यावदायुर्न बान्धवाः॥ ३७॥

सम्पद्वयः सुहृदिह इहामुत्र हितं स्थितम्। धर्मं धर्मभृतां श्रेष्ठं भुङ्क्ते चान्ये किमावयोः

इति भार्यावचः श्रुत्वा आकथः करुणानिधिः। अविशङ्कितमेवास्मै दत्तवानन्नमूर्जितम्

अयं स शङ्करो देवो नानाकरणमागतः। इति निश्चित्य मनसा तस्याङ्गं पापनाशनम्

आजानुपादं प्रक्षाल्य पराजङ्घमतः परम्।

गुल्फं च तदधस्तस्य प्रक्षाल्याचामयद् द्विजम्॥ ४१॥

अथाकथोऽपि पत्सन्धि गृहाङ्गणमुपानयत्। उन्मुच्यपादसन्धि स निषसादार्पितासने

संमभ्यर्च्याकथः सम्यग्भोजमामास तं मुनिम्।

एतस्मिन्नन्तरे कश्चिदुन्मत्तो गृहमागतः॥ ४३॥

पादसन्धिमथादाय गृहबाह्यमुपानयत्। अथादहच्च तद्गेहं दम्पती चाप्यताडयत्॥

आकथस्ताडितो विप्रो दह्यमानं गृहं तदा। विवेश देवमीशानमादातुं तूर्णमेव वा॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथादाय महेशानं दग्धपूजां द्विजोत्तमः । निर्गत्य च ततो दृष्ट्वा मुखसन्तापमेव च ॥
दग्धपूजां तिरस्कृत्य वीक्ष्य दग्धाङ्गमप्युत । भार्यामुवाच धर्मात्मा यथापूजामहेशितुः
तथा मम समस्ताङ्गं कर्त्तव्यमविशङ्कितम् ॥ ४८ ॥

व्यङ्ग उवाच ।

पश्चादपि कृता पूजा सफला ते भविष्यति । यथान्यद्रव्यदहने तादृशं दीयते जनैः ॥४९॥
पूजा या दहने तद्वत्पूजाऽस्य क्रियतामिति ॥ ५० ॥

आकथ उवाच ।

चौर्येणाप्यर्जितैर्द्रव्यैःपूजया न हितंभवेत् । न चान्यायार्जितैर्विप्र शम्भोःपूजा शुभप्रदा
इत्युक्त्वा चाकथस्तूर्णं स्वाङ्गं दग्धुमुपाक्रमत् ।
दग्धं लिङ्गं तदोन्मत्तो गृहीत्वाऽन्तर्दधे क्षणात् ॥ ५२ ॥
अथ व्यङ्गो हरो भूत्वा वारयामास चाकथम् । किमर्थं खिद्यते विप्र वरदोऽहं वरं वृणु
आकथोऽपि विभोः पादे भक्ति वव्रे सुनिश्चलाम् ॥ ५४ ॥

सूत उवाच ।

एतां श्रुत्वा कथां रामः प्रहृष्टो मुनिभिर्वृतः । भारद्वाजं नमस्कृत्य प्रयाणाज्ञामयाचत ॥
अथो भरद्वाजमुनिः प्रसन्नः शम्भुं वसिष्ठं मुनिपुङ्गवञ्च ।
नारायणञ्चर्षिगणांश्च नत्वा व्यसर्जयत्तेऽपि ययुः प्रणम्य ॥ ५६ ॥

नैमिषीया ऊचुः ।

गत्वाऽयोध्यां महातेजाःसमस्तमुनिसंयुतः। किं चकार ततोरामःस च शम्भुर्महायशाः

सूत उवाचः।

कौसल्यामासिकश्राद्धमपरेऽहनि राघवः । चिकीर्षुर्द्विजप्रवरानृषिकल्पान्न्यमन्त्रयत् ॥
शम्भुं समस्ततत्त्वज्ञं नारदं रोमशं भृगुम् । विश्वामित्रमयो रामं एकभक्तंव्रती ततः ॥
भूमौ सुखास्तृतायां च सुष्वापाव्याकुलेन्द्रियः ।
परेद्युरथ सम्प्राप्ते प्रातः स्नात्वा विधानुवित् ॥ ६० ॥
अन्नं शाकादिकं शुद्धं जनैरेवान्वकारयत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नानान्नानि विचित्राणि चोष्याद्यानि तथैव च ॥ ६१ ॥

घटकादींस्तथाभक्ष्यानष्टत्रिंशदकल्पयत् । पायसं षड्विधं चैव पक्वशाकशतद्वयम् ॥

अपक्वमिश्रकाणां च शतत्रयमकल्पयत् । कालशाकादिकं शाकं फलानि विविधानि च

मूलानि चैककन्दानिवल्कालानि च राघवः । कारयित्वा नदींगत्वा सह भ्रातृपुरोहितः

सरयूसलिले स्नात्वा हुत्वाऽग्निं स्वागतान्द्विजान् ।

उक्त्वा तु स्वागतं तांस्तु कृतदेवार्चनो नृपः ॥ ६५ ॥

प्राणानायम्य सङ्कल्प्य क्षणं चैव प्रदत्तवान् । रोमशं नारदं रामो वैश्वदेवे न्यमन्त्रयत्

शम्भुं भृगुं कौशिकं च मातृस्थाने न्यमन्त्रयत् ।

गोमयेन ततः कृत्वा मण्डलं पूज्य चार्हतः ॥ ६७ ॥

पादप्रक्षालनं चक्रे सीतादत्तोदकेन च । आचामयित्वा तान्विप्रान्गृहं गन्तुमथोद्यतः

अभ्यागतः समायातः स्थविरो विकृता कृतिः ।

कृशः सम्प्रचलद्गात्रो वेपिताङ्गशिरास्तथा ॥ ६९ ॥

लम्बमानत्वगुत्कर्षच्छ्वासकासादिपीडितः ।

दूषिकाक्लिन्नगण्डश्च लालासम्पृक्त कूर्चकः ॥ ७० ॥

उवाच रामं राजानमहमेको द्विजः स्थितः । ममापि भोजनं देयं स्थविरस्य कृशस्य च

रामोऽपि तद्वचः श्रुत्वा लक्ष्मणं वाक्यमब्रवीत् ।

पादौ प्रक्षालयास्य त्वमहमभ्यर्चये द्विजम् ॥ ७२ ॥

अभ्यागतोऽपि वचनमाह राममथाकुलम् । त्वयाप्रक्षालिते पादे मम भोजनमिष्यते ॥

मत्तोऽधिका द्विजाः किं ते येन मामवमन्यसे ।

श्राद्धधर्मं न जानीषे महर्षिगणसेवितम् ॥ ७४ ॥

ममावमानतः सर्वविप्राणामवमाननम् ।

श्राद्धं विहन्यते चापि नरकं च गमिष्यसि ॥ ७५ ॥

अथ रामः स्वयं विप्रपादौ प्राक्षालयत्तदा । आचामयित्वा तं विप्रं गृहं प्रावेशयत्ततः

आचान्तश्च स्वयं रामो विष्टरं दत्तवानथ । आसीनेषु च विप्रेषु प्राणवायुं निरुध्य च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वकर्मकरणानुज्ञां लब्ध्वाऽथ सतिलं जलम् । अपहतेति मन्त्रेण द्वारदेशे विनिक्षिपेत्
उदीरतामिति तथा पितृपात्रस्थले क्षिपेत् । गायत्र्या चाक्षतजलं देव पात्रस्थले क्षिपेत्

पाकजातं तथाऽभ्युक्ष्य मन्त्रमेतमुदीरयेत् ॥ ८० ॥
श्राद्धभूमिं गयां ध्यात्वा ध्यात्वा देवं जनार्दनम् ।
वस्वादींश्च पितॄन्ध्यात्वा ततः श्राद्धं प्रवर्तयेत् ॥ ८१ ॥

विश्वेदेवार्चनं कुर्याद्यवैर्वातण्डुलैरथ । मूलाग्रयोजितौ दर्भौ गृहीत्वा साक्षतावथ ॥८२
भूस्पृष्टदक्षजानुस्तुद्विजहस्ते जलार्पणम् । पुरूवार्द्रवाणां वै देवानामिदमासनम् ॥८३

इति दत्त्वाऽऽसनं तेषां श्राद्धदः प्रार्थयेत्क्षणम् ।
अर्घं कृत्वा ततः पश्चादुत्तराग्रकुशेष्वथ ॥ ८४ ॥
न्युब्जं पात्रं ततः कृत्वा कुशग्रन्थिमथोपरि ।
उत्तानं तु ततः कृत्वा जलैरभ्युक्ष्य रौक्मकैः ॥ ८५ ॥
पवित्रान्तर्हिते पात्रे शं नो देव्या जलं क्षिपेत् ।
वैश्वदेव्याऽखिलं कर्म यावत्तद्विधिचोदितम् ॥ ८६ ॥
यवोऽसि धान्यराजो वा इति पात्रे क्षिपेद्यवान् ।
मधुमिश्रांस्तु करकान्गन्धपुष्पैस्ततो ददेत् ॥ ८७ ॥
द्विज ! तेऽस्त्वर्घ इत्युक्त्वा त्वस्त्वर्घोत्तरतस्ततः ।
आवाहयिष्य तान्देवानिति पृष्ट्वा तदुत्तरम् ॥ ८८ ॥
विश्वेदेवास इत्युक्त्वा विप्रमूर्ध्नि कुशान्क्षिपेत् ।
विश्वेदेवाः शृणुतेममागच्छन्त्विवति सञ्जपेत् ॥ ८९ ॥

समागतो निषण्णोऽथ स दर्भं पात्रमाहरेत् । दक्षिणे चरणे क्षिप्त्वा मुख्यपात्रोदकं ततः
विप्रस्य दक्षिणे हस्ते प्रागग्रेऽथ पवित्रके । यादिव्याइति मन्त्रेण निक्षिपेत्पात्रवारितम्

इदं भो अर्घमित्युक्त्वा ह्यस्त्वर्घोत्तरतस्ततः ।
पात्रे धृत्वाऽर्घतोयं च तत्पात्रं स्थापमेत्क्वचित् ॥ ९२ ॥

अथ दत्त्वा करे तोयं यवैरेतानथार्चयेत् । अर्चत प्रार्चत इति पृष्ट्वा चोत्तरतस्ततः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पादादिमूर्धपर्यन्तमभ्यर्च्य दलदस्ततः । गन्धद्वारेति मन्त्रेण तथेत्युक्त्वोत्तरस्ततः ॥ ९४
पितृणामर्चनं कुर्यादेवमेवापसव्यकम् । उपवीतं द्विजं कृत्वा कुशान्भग्नांस्तिलान्वितान्
वामजानुं भूमिगतं कृत्वा दद्यात्तदासनम् । दक्षिणाभिमुखो भूत्वा क्षणप्रश्नमथो वदेत्
दक्षिणाग्रेषु दर्भेषु न्युब्जं पात्रत्रयं न्यसेत् । त्रिकेशग्रन्थिसंयुक्तमुत्तानमथ कल्पयेत् ॥

ततः सम्प्रोक्ष्य पात्रेषु सपवित्रतिलेषु च ।
शन्नो देव्या जलं क्षिप्त्वा तिलोऽसीति तिलान्क्षिपेत् ॥ ९८ ॥

गन्धपुष्पमथो दत्त्वा स्वधाऽर्घ इति पृच्छति । दत्तोत्तरोऽस्त्वर्घ इति पितृनावाहयेत्ततः
तिलपुष्पकुशैस्तिष्ठन्कल्पिताघंकरे दधत् । उशन्तस्त्वेति मन्त्रेण त्रिरर्घोदकमर्पयेत् ॥
अर्चनं तु तदा तेषामपसव्यं तु पूर्ववत् । प्रक्षाल्य भाजनं स्वर्णं देवानां परिकल्पयेत्
पितृणां राजतं कुर्याद्यथासम्भवमेव वा । तदभावे तु कांस्यं स्यादनन्याशितमुत्तमम्

पात्राणि तदभावे स्युः पालाशानि न मध्यमम् ।
रम्भाणि चूतपत्राणि जम्बूपुन्नागकानि च ॥ १०३ ॥

पराकान्यथ चाम्पानि मधूककुटजान्यपि । मातुलिङ्गस्य पत्राणिश्राद्धे देयानि वै नृभिः
दर्व्यामन्नमथाऽदाय कराभ्यामाज्यमेव च । प्रवेषणंततः पृच्छेत्प्राचीनावीतवान्द्विजम्
करिष्येऽग्नौकरणमिति कुरुष्वेति तदुत्तरम् । परिवेष्योपवीतीस्यादभिघार्यसमाहरेत्
हुनेत्सोमायपितृमते स्वधा नम इतीरयन् । यमायाङ्गिरसे पितृमते स्वधा नम इति ॥

द्वितीयामाहुतिं हुत्वा चाभिघार्याक्षतं ततः ।
अग्नये कव्यवाहनाय स्वधा नमस्ततः परम् ॥ १०८ ॥

हुत्वाऽपसव्यं कृत्वातु परिवेष्यद्विजान्व्रजेत् । मेक्षणेन ततोऽभीक्ष्णंपातयेत्पितृपात्रके
पिण्डपात्रमतः शेषं दर्वीप्रक्षालनं ततः । मेक्षणस्याग्निनिक्षेपं ततो पात्राण्युपस्तरेत् ॥
पात्रदक्षिणभागे तु दद्यादन्नमनन्तरम् । भक्ष्याणि भोज्यशाकानि सर्वाण्येवसदत्तवात्
अथातिथिर्महावृद्धो वीक्षमाणस्ततस्ततः । उवाच राघवं शान्तं शीघ्रमेव नमस्कुरु ॥

बुभुक्षा वर्ततेऽस्माकं भक्षिष्येऽहं वा तवाऽऽज्ञया ।
रामो बभाषे वचनं विलम्बय क्षणं मुने ॥ ११३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवताः पितरो मङ्क्षु नमस्यन्तेऽधुना मया । इत्युक्त्वा राघवः प्रादादन्नंपात्रगतं तदा
प्राक्सौम्याग्रान्कुशान्दैवे प्रतीचीदक्षिणाग्रकान् ।
पित्र्ये पवित्रे ये दर्भा यवानथ तिलानपि ॥ १५॥
अन्नप्रदानं कुर्वन्ति पृथिवी इति मन्त्रतः । इदं विष्णुरिति स्पृष्टमङ्गुष्ठेनद्विजस्य तु ॥
देवेभ्यः प्रथमं दद्याद्येवा इति वै पठन् । पितॄणां च ततो दद्याद्द्यादतिथये ततः ॥११७
देवताभ्य इति मुखानुच्चार्याऽऽपोशनं ददेत् । त्रिर्जपित्वा तु गायत्रीमुपवीतिपुरोमुखः
प्राचीनावीतवान्ब्रूयान्मधुत्रयमतः परम् । भुञ्जध्वमिति तानुक्त्वा भुञ्जानेषु द्विजातिषु
रक्षोघ्नमन्त्रपठनं भक्ष्यभोज्यादि दापयन् । एतस्मिन्नन्तरेविप्रो योऽतिथिस्त्वद्विदंतथा
कृतवान्महदाश्चर्यं तद्वदामि समासतः । पात्रस्थितमशेषं च ग्रासेनैकेन चाग्रसत् ॥१२१
प्राणाहुतीनां पर्याप्तं दीयतामिति चाब्रवीत् ।
एतावद्दातुमशक्तः कथं श्राद्धक्रियोद्यतः ॥ १२२ ॥
ममैकस्य प्रदाने त्वमशक्तो राम किं वृथा । बहूनां भोजनं दातुमुद्युक्तो राम किं वृथा
सहसाकृतकर्माणि न समाप्तिं प्रयान्ति च । त्वया कृतमशेषानां नालं प्राणाहुतिर्मम ॥
कथं मे दीयते भुक्तिः कथमेषां तथा वद । रामस्तमब्रवीद्वीरोभुङ्क्ष्वत्वंहि यथासुखम्
इत्युदीर्य निरीक्ष्यास्यकर्म तत्परमाद्भुतम् । अथ शम्भुं समाहूय प्राह त्वं परिवेषय ॥
त्वं पिता पार्वती माता शिवादेवीति मे मतिः । अन्नपूर्णेश्वरीदेवी भवान्येवेतिमे मतिः
सा शाम्भवीवचः प्राह तत्पर्याप्तं ददाम्यहम् ।
अथोमा कांस्यमादाय भिस्सापूर्णमलङ्कृतम् ॥ १२८ ॥
स्वर्णदर्व्या समादाय पायसं गन्धकान्तिमत् ।
अस्याक्षयमिदं भूयादिति प्रादात्तु पायसम् ॥ १२९ ॥
द्विजस्य दक्षिणे हस्ते साऽददात्सत्कृतं मुदा । कम्पमानशिरस्कस्तु ऊर्ध्वदृष्टिस्थाभवत्
प्रसारितकरश्चाऽऽसीद् गृहीत्वा पायसं करे ।
दीयतां पायसं स्वादु सुष्ठुपक्वमिदं तु किम् ॥ १३१ ॥
शम्भुपत्नी बभाषे तं करे भुङ्क्ष्व ततो ददे । अभक्षयत्ततो विप्रःपुनः करतले स्थितम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदक्षयमथ ज्ञात्वा प्रासारयदथेतरम् । तस्मिन्करतले देवी पायसं दत्तवत्युत ॥१३३॥
अन्येषामपि विप्राणां पक्वाक्षय्यमदात्सती । अथ पाणिद्वयगतं विज्ञायाक्षय्यपायसम्
दृष्ट्वा करान्तरमथो प्रासारयत स द्विजः । उवाचान्नं प्रदातव्यं ससूपघृतमुत्तमम् ॥
शिवादेवी तथा प्रादादक्षय्यं शम्भुवल्लभा । यद्यत्प्रादात्तदा साध्वी सर्वमेव तदक्षयम्
करान्तरमथोत्सृष्टं परिपूर्णं पुनः पुनः । एवं करसहस्रं तु कृत्वा स विरराम ह ॥१३७॥
उवाच वचनं विप्रो देहि गण्डूषवारि मे । तर्पितोऽस्मि त्वया भद्रे न रामेण न सीतया

शम्भुरुवाच ।

रामेण सीतया दत्तं मया दत्तं हि यत्र च । इतः परं हि किं देयं पूर्णं वा त्वं वदस्व मे

द्विज उवाच ।

तृप्तोऽस्मि न च मे देयमधिकं च करस्थितम् । विद्धन्नतः करगतं न पपात कथञ्चन ॥
निषण्णो हि चिरं दध्यौ कथं मे केवलः करः । भुक्त्यैकृतमिदं सर्वं नान्यस्मै कर्मणे मम ॥

तस्मादन्यकृतेरेतत्सर्वं रिक्तं भविष्यति ।

इति निश्चित्य मनसा लिप्ताङ्गोऽतिथिराभवत् ॥ १४२ ॥

पश्यत्सु सर्वदेवेषु तदद्भुतमिवाभवत् । तृप्तानथ द्विजाञ्ज्ञात्वा राघवः परमार्थवित्

दर्वीकरोऽथ तृप्ताःस्थ इति पृष्ट्वा यथाविधि ।

तृप्ताः स्म इति विप्रेन्द्रा विकीर्यान्नं समन्त्रकम् ॥१४४॥

पात्रस्य याम्याभिमुखः सन्निधौ पिण्डमर्पयेत् ।

गण्डूषमपि विप्राणां तत्रैव परिकल्पयेत् ॥ १४५ ॥

उच्छिष्टपर्णपात्रेषु ते गण्डूषमकुर्वत । गृहान्तरे च ते विप्रा विविशुस्त्वतिथिं विना ॥
आहातिथिर्बहिः कार्यं मयाऽऽचमनं विद्यते । उत्थातुं नैव शक्नोमि करं मे देहि राघव !
अथ रामः करं प्रादान्नोत्थितस्तु द्विजोत्तमः । हनूमानथचाप्यस्य दत्तवान्बलवत्करम्
इतरेण गृहीत्वा तु करेण द्विजपुङ्गवम् । आचकर्ष कपीन्द्रस्तु द्विजः साक्रोशमुक्तवान्

द्विज उवाच ।

छिद्यते मे करो व्यक्तमुत्थापय ततोऽन्यतः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लाङ्गूलेन सपीठं तमावृत्याऽऽमस्तकं बलात् ॥ १५० ॥
अथाधावत्ततः पृथ्वीं द्विजस्तु न चचाल ह । अथ वानरवीरस्तु पद्भ्यां चक्रन्त तांमहीम्
पादौ विन्यस्यसुदृढौ द्विजमूर्धानमाक्षिपत् । विशीर्णमभवद्वेश्म द्विजाः सर्वे बहिस्तथा
सहवृद्धद्विजः सोऽथ हनूमान्बहिरभ्यगात् ।
पीठे च स्थापयामास ब्राह्मणं स्थविरं कृशम् ॥ १५३ ॥
द्विजाय जलमादाय जाम्बवान्मृण्मये घटे ।
आह स्वच्छं जलं विप्र त्वयाऽदेयं सभाजनम् ॥ १५४ ॥
सीताप्रक्षालयेदङ्गं लक्ष्मणो जलदो भवेत् । जाम्बवानाहतं रामं ब्राह्मणोक्तमशेषतः ॥
द्विजप्रक्षालने रामो व्यादिदेशानुजं प्रियाम् । सौमित्रिर्जलमादाय द्विजाङ्गक्षालनेसधा
प्राक्षालयदशेषाङ्ग प्रतिमामिवभूभुजः । अथ रामोपदेशेन चक्रतुस्तौ तथैव च ॥१५७॥
अथातिथिः स्वगण्डूषं सीतावक्त्रे व्यमुञ्चत ।
सालङ्कराऽम्बुभिर्व्याप्ता प्राक्षालयदथो सती ॥ १५८ ॥
श्लेष्मलालासुप्रचुरं मुखं विप्रस्य सा सती ।
प्रममार्ज पुनः क्षाल्य नासाश्लेष्माणमत्यजत् ॥ १५९ ॥
आचामयित्वा सौमित्रिरुत्तिष्ठेत्यब्रवीद् द्विजम् ।
द्विजो न शक्यमित्याह हनुमानत्यथाऽगतः ॥ १६० ॥
अतिथिः प्राह तं विप्रः पीडितोऽहं हनूमता । गृहीत्वोद्धरता पूर्वं पातितो वानरेण च ॥
जाम्बवानथ तं प्राह लोमाङ्गं मम वै मृदु । मयाऽथो ध्रियसे विप्र न च पीडा भविष्यति
इत्युक्त्वा जाम्बवान्विप्रं दोर्भ्यामालम्ब्य चोद्धरत् ।
द्विजप्रान्तमथादाय स्थापयामास तं मुनिम् ॥ १६३ ॥
अथ रामो द्विजेन्द्राणां प्रदक्षिणमवर्तत । दत्ताशीरपिविप्रेन्द्रैर्दत्त्वा ताम्बूलमग्रतः ॥१६४
पादावलम्बकृद्रामो भ्रातृभिः सह चाब्रवीत् ।
अयि सीतेऽतिथेरस्य त्वया न क्षालितं वपुः ॥ १६५ ॥
जङ्घायुगतिथेरस्य मलं चास्यं मलान्वितम् ।सम्यक्प्रक्षाल्यमुखं द्विजो न सहते मलम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सीतोवाच ।

अथ प्रक्षालितं सम्यगिदानीं निर्गतं पुनः ॥ १६७ ॥

राम उवाच ।

पुनः प्रक्षालयमलं दोषः स्यादन्यथा मम । अथ सीता तथा कृत्वा तूष्णीमेव बभूव ह
आह रामं च सीतां च द्विजः परमकोपवान् । पादौ यौ ममराजेन्द्रतौसीतालम्बयेदिति
सवामकरौ च भरतो मम वीजं प्रयच्छतु । लक्ष्मणः केशनिचयप्रसाधनकरो भवेत् ॥

शत्रुघ्नः श्लेष्मनिर्मुक्तिं स्ववस्त्रेण करोतु मे ॥ १७१ ॥

सूत उवाच ।

अथ ते काकुत्स्थविधेरशेषमुदितं तथा । तथापुर्विस्मयं विप्रा नरवानरराक्षसाः ॥ १७२ ॥
शिवा देवी च शम्भुश्च सभ्रूभङ्गमुदैक्षताम् । मनसा चाप्यभाषेतामतिथिः शम्भुरेवच
अतिथिश्च प्रसन्नोऽभूच्छङ्खचक्रगदाधरः । पीताम्बरः समस्ताङ्गभूषितोऽतीव दीप्तिमान्

यः पुराराधितः शम्भुः प्रसन्नोऽभूत्त्रिलोचनः ।

शुद्धस्फटिकसङ्काशःसर्वाभरणभूषितः ॥ १७५ ॥

कोटिसूर्यप्रतिकाशः किरीटी करुणानिधिः ।

आलम्ब्य चक्रिणः पाणिमातिष्ठत सदाशिवः ॥ १७६ ॥

रामः परमधर्मात्मा पुलकाञ्चितविग्रहः । दण्डवन्निपपातोर्व्यामानन्दप्लावितेक्षणः ॥ १७७

अनमन्भ्रातरस्तस्य दण्डवद् भूतले स्थिताः ।

शिव उत्थाप्य काकुत्स्थमालिङ्ग्याघ्राय मस्तकम् ॥ १७८ ॥

उवाच मधुरं वाक्यं रामं राजीवलोचनम् ॥ १७९ ॥

शिव उवाच ।

वरं वृणु प्रसन्नोऽस्मि ब्रह्मादेरपि दुर्लभम् । तवादेयंन मे किञ्चिद्वृणुत्वं न चिरायवै

श्रीराम उवाच ।

न याच्यं मे जगन्नाथ सुराज्यं मम साम्प्रतम् ।

स्वर्गश्च कर्मभिः प्राप्तो भक्तिस्त्वत्पाददर्शनात् ॥ १८१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आरोग्यं पश्य भुञ्जेऽहं सा सीता योषितां वरा। वशीकृताः सर्वनृपाः प्रजा धर्मसमन्विताः
हर्ष एव ममापन्नस्त्वदागमनतोऽच्युत। तथापि वरये किंचिद्भक्तिरस्तु स्थिरात्वयि
तथा मम गृहे देव त्रिवर्षं तिष्ठ हे प्रभो। ब्रुवन्समस्तधर्मांश्च रूपेणानेन शङ्कर! ॥१८५

शिव उवाच।

एवमस्तु तथा राम सर्वं ते सम्भविष्यति। अथाह चक्री राजानं रामं राजीवलोचनम्
वरं वृणु महाभाग प्रसन्नोऽहं यमिच्छसि। श्रीरामआह वचनं ममप्रार्थ्यं न चास्तिहि
यत्प्राप्यं शम्भुतः प्राप्तमन्यत्सर्वमुदीरितम्। किं चैकं वरये विष्णो प्रसन्नः सर्वदाभव
अथ सीतां हरिः प्राह प्रसन्नोऽहं तवाधुना। वरं वृणु प्रयच्छामि ततः सीताऽब्रवीदिदम्

वरो वृतः पुरा भर्त्रा न चान्यो मे वरो वरः।
यदि कामं प्रयच्छेथा मनश्च परपूरुषात् ॥ १८६ ॥

सन्निवृत्तं च भवतान्नमस्तेऽस्तु द्विज प्रभो। अथ ते मुनयः सर्वे प्रणेमुर्देवतोत्तमौ ॥
अथासौ राघवं प्राहभुङ्क्ष्व त्वं बन्धुभिः सह। एकान्तमन्दिरेरस्येदेव्यासह वसामिते
विष्णुःसमस्तकरणःसमुद्रतनयान्वितः। एकस्मिन्मन्दिरे राम तिष्ठतां लोलुपो हि सः
अथ शुद्धमहागारे पीठाढ्ये बहुभाजने। अग्रे वसिष्ठो भगवानुपविष्टस्तयोर्मुनिः ॥
अपरे ऋषयःसर्वे यथावृद्धं नृपास्तथा। तेषामभिमुखो रामो भ्रातृभिःसहितो नृपः ॥
तरुणे समभागे च आसने तानवेशयत्। हनूमत्प्रमुखान्भृत्यानाह रामोऽनुसान्त्वयन्
भवन्तःपरितिष्ठन्तु पश्चाद्भुञ्जे न चान्यथा। ततस्ते प्रददुःसर्वे पादार्घाननुपूर्वशः॥१९६
बुभुजुश्चापि ते सर्वे ये रामस्योपसेविनः। तेषां दत्त्वाऽथ ताम्बूलंकपीन्द्रादीनभोजयत्
भुक्तवत्सु समस्तेषु रामो राजीवलोचनः। दीनान्धकृपणादीनां पशुपक्षिमृगस्य च ॥

दत्त्वा हि भोजनं सन्ध्यां वन्दितुं हिं समारभत्।
सन्ध्याजपादिकं कृत्वा नत्वा तेषां नृपस्ततः ॥ १९९ ॥

सिंहासनगतो रामःपौरजानपदादिभिः। सेव्यमानःसभास्थान गतो रेजे स राघवः ॥
सर्वदेवपरीवारो यथादेवःशचीपतिः। राजकार्यमशेषं च कृतवान्भ्रातृभिःसह ॥२०१॥
नाम्ना चैकैकशःसर्वान्विससर्ज स राघवः। भ्रातॄन्विसर्जयामास वानरादींस्तथाऽपरान्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ रामं महातेजा वसिष्ठोवाक्यमुक्तवान् । तव प्रातर्हि यत्कार्यं न च विस्मर राघव
आस्ते शम्भुर्जगन्नाथो भगवानम्बिकापतिः । स्मर्तव्यो वन्दनीयश्च भगवानथ यत्नतः

तथेत्युक्त्वा गुरुं राजा नत्वा तं च व्यसर्जयत् ।
स्वयं च भार्यामभजद्देवदेवं विचिन्तयन् ॥ २०५ ॥

ऋषय ऊचुः ।

प्रातःसमुत्थाय गुरो रामो मतिमतांवरः । किं चकार तदाख्याहि श्रोतुं कौतूहलं हिनः

सूत उवाच ।

शम्भुं विलोक्याथ ततो बभाषे रामः कथां कीर्त्तय शङ्करस्य ।
तृप्तिर्न जाता मुनिवर्य ! शृण्वतो महेशमाहात्म्यमघौघनाशनम् ॥ २०७ ॥

शम्भुरुवाच ।

अथ प्रश्नशेषस्योत्तरमीशभाषितं ते कीर्तयिष्यामि । अन्यायोपार्जितद्रव्यैरीश्वरं य उपासते ते व्यङ्गा जायन्ते । तद्यथा कश्चिद्रूपको नाम राक्षसोऽन्यायार्जितेन द्रव्येण शङ्करमाराध्य तेनैव द्रव्येण घण्टामीश्वरप्रीतये कृतवान् । तस्य पुत्रःसम्पारीतिख्यातः । चौर्यार्जितैःशङ्करं पूजयामास । तावुभावेकस्मिन्दिवसे मम्रतुः गतौ शिवलोकं वीरभद्रेण भाषितौ च । भो रूपक ! अन्यायार्जितेन द्रव्येण भवता पूजा कृता घण्टादिकं च तेन भावेन व्यङ्गोभूत्वा चौरगणो भविष्यसि । शिवपदवचनाद्यथक्तं नामाश्रवणाच्छ्रोत्रं तस्य स्वनेनध्वस्तं भवति नो दर्शनमेतावदेव त्वयेश्वरपूजा सम्यक्कृता । अतोभक्तिश्च भविष्यति वीरभद्रस्त्वनशनं नाम गणं क्वचिद्विचरन्तमित्यादिदेश । तौ च तथाभूतौ शिवलोकेऽतिष्ठताम् ।

शम्भुरुवाच ।

अथोपहतद्रव्यपूजा कथां हनुमते महेशभाषितां कथयिष्यामि । शृणु राघव ! प्रमथानां चरित्रमेकैकस्य कर्मविपाकं कथयिष्यामि । उपहताङ्गगणव्याख्या क्रियतामिति हनुमत्पृष्टः ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिव उवाच।

तदुपहतद्रव्यं ज्ञानतो य ईश्वरेऽर्पयिष्यति एतदुक्तं ज्ञानिनाऽतः शृणु। एष सर्वाङ्गस्वेदिलः सर्वकालं सर्वाङ्गस्वेदिलः स्वेदार्द्रवसनःस्वेदसम्पादिताल्पप्रवाहशरीरो नासाग्रनिपतितस्वेदबिन्दुः स्पर्शायोग्यो दृश्यते। स पुरा स्वेदकरणेश्वरार्चनं कृतवान्। अत्रेतिहासं कीर्तयिष्यामि।

चेकितानिरिति ख्यातो ब्राह्मणः कर्षकोऽभवत्।
स नित्यं कृषिमुत्पाद्य प्रातः स्नात्वा च नित्यशः॥ ८॥

मध्याह्नकालेसम्प्राप्ते सञ्जपन्ब्रह्मणस्त्वसौ। अन्नमानय मे क्षिप्रमिति भार्यामभाषत तयाऽऽनीतेन चान्नेन वेगेन शिवपूजनम्। कृतवानर्कसन्तप्तः स्वेदिलः सर्वदैव तु॥ गन्धपुष्पाक्षताद्यैश्च स्वेदबिन्दुसमन्वितैः। अथ सायन्दिनेप्राप्ते क्षालिताङ्गःसुशोभनः पूजयामास देवेशं कालसम्भवसाधनैः। ममाराध महाबुद्धिः शिवलोकं गतश्च सः॥ वीरभद्रेण चाप्युक्तो भवत्वं स्वेदिलोगणः। स्वेदस्पृष्टपदार्थैश्च पुराशम्भुःप्रपूजितः॥
नित्यं स्वेदसमायुक्तस्तेन स्वेदगणो भव॥ २१४॥

शम्भुरुवाच।

वीरेणाथ समादिष्टः प्राप्तो राम! गणस्त्वयम्॥ २१५॥

अमुं घण्टामुखं पश्यायं पुरा वैश्यो विभावसो नाम धार्मिको महादानकर्त्ता नित्यं ब्राह्मणभोजनं कारयित्वा कृतानुष्ठानः प्रातःकाले शिवं नमस्कृत्य कुसुमैःसम्पूज्य किञ्चित्प्रदेशं गोमयेनोपलिप्य पद्मादिकमर्जयित्वा देवाय समर्प्य उपहतघण्टानादं कृतवान्।

राम उवाच।

कथमुपहतघण्टा।

शम्भुरुवाच।

आसीत्पुराबलःकश्चित्सोम इत्यभिविश्रुतः। तस्य पुत्रश्च मन्दाख्यो दशवर्षवया अभूत् स चाग्निपक्वकलमाषान्घण्टायां प्राक्षिपन्नृप। तानभक्षयदप्येष तेन चोपहतोऽभवत्॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रहीतुमथ तं वैश्यं यतमानोऽब्रवीदिदम् । अथ वैश्यःस्वयं तत्र निश्चित्य द्रव्यशोधनम्
लौकिके कृतवाँल्लोके व्यवहारपदञ्च ताम् । एतेन पापयोगेन गणोघण्टामुखोऽभवत् ॥

राम उवाच ।

द्रव्यशुद्धेर्विशुद्धा सा कथं पापस्य कारणम् । सम्यगुक्तं द्रव्यशुद्ध्यैकथं नद्रव्यशोधिनी

शम्भुरुवाच ।

न लौकिकव्यवहृतौ तथाभक्तो भविष्यति ।
स याति च शिवस्थानं वक्ता चापि तथा भवेत ॥ २२२ ॥

सूत उवाच ।

यश्चवक्ति कथामेतां स तेन सदृशो भुवि । गुह्याद्गुह्यतमं विप्राःशिवज्ञानप्रदं भवेत् ॥
एतद्वःकथितं विप्राःपुण्यायुष्यतमं महत् । य इदं शृणुयाद्भक्त्या शिवलोके महीयते ॥
पुराणवक्त्रे दातव्यं वस्त्रं गोहेमभूषणम् । भूमिसस्यफलोपेता देया शक्त्यनुसारतः ॥
शिवराघवसंवादं सर्वाघौघनिकृन्तनम् । यःपठेच्छृणुयाद्वापि स याति परमंपदम् ॥२२६

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे
सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

---

समाप्तं पञ्चमं पातालखण्डम् ॥ ५ ॥

ॐ तत्सद्ब्रह्मार्पणमस्तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीगणेशाय नमः ॥

# पद्मपुराणान्तर्गत पञ्चमपातालखण्डस्य

## शुद्धिपत्रम्



| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | २ | निर्घोषा | निर्घोषो |
| ५ | ६ | सुहर्षिता | सुहर्षिताः |
| ५ | २५ | पदाभ्योज | पदाम्भोज |
| ६ | १० | निगदितः | निगदतः |
| ११ | १२ | वभासे | बभासे |
| ११ | २३ | कारयाभासु | कारयामासु |
| १३ | १६ | वृणुतभे | वृणुत मे |
| १४ | ४ | पुसां | पुंसां |
| १५ | १८ | गृहीत्वाऽघ्यं | गृहीत्वाऽर्घ्यं |
| १६ | ११ | कुम्भकण | कुम्भकर्ण |
| ३१ | १५ | द्वारविधि | द्वारविधिं |
| ३८ | १० | परीरभ्भ | परीरम्भ |
| " | २२ | शत्रघ्नाज्ञा | शत्रुघ्नाज्ञा |
| ३६ | ६ | वलिनः | बलिनः |
| ४० | १८ | लाका | लोका |
| ४१ | ५ | स्काटिकै | स्फाटिकै |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| | | | |
|---|---|---|---|
| ४८ | ५ | महराज | महाराज |
| ५१ | १६ | तपस्ते | तपस्तेपे |
| ” | १६ | स कुटुम्बो | सकुटुम्बो |
| ५२ | १३ | तदोत्पाता | तदोत्पाताः |
| ५३ | ११ | त्तिवृत्ती | चित्तवृत्ती |
| ” | १८ | तद | तदा |
| ५४ | ८ | भ्रु वद्धि | भ्रु ववद्धि |
| ” | १० | भाया | माया |
| ” | २० | स्तभ्भै | स्तम्भै |
| ” | २५ | उपपर्युरि | उपर्युपरि |
| ५५ | २१ | पराध्यानि | पराध्याणि |
| ५६ | २२ | शङ्कलं | सङ्कुलं |
| ५७ | २४ | भजो | भुजो |
| ६० | ४ | द्दष्टा | द्दष्ट्वा |
| ” | १८ | प्राप्त | प्राप्ता |
| ६१ | ४ | रप्यै | रौप्यै |
| ६२ | १८ | धमण | धर्मेण |
| ६३ | २१ | राणेन्द्र | राजेन्द्र |
| ६४ | ७ | प्रोक्ता | प्रोक्तो |
| ६७ | २२ | तच्छवणे | तच्छ्रवणे |
| ६९ | ७ | ममुत्तमम् | मनुत्तमम् |
| ७३ | १० | यिलां | शिलां |
| ७४ | १४ | बँध्द्वा | बद्ध्वा |
| ७९ | २ | भब्यं | भव्यं |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| | | | |
|---|---|---|---|
| ९१ | २ | विचित्रिताः | विचित्रिताः |
| ९३ | १३ | साक | साकम |
| १०१ | १८ | चदहम् | चेदहम् |
| १०३ | " | वीराणं | वीराणां |
| १०५ | १६ | प्सर | प्सरस |
| ११४ | २२ | नैंमि | नैंभि |
| १२५ | १६ | बिद्यु | विद्यु |
| १३५ | २३ | गुरुवः | गुरवः |
| १४२ | ८ | बुभावपि | बुभावपि |
| १४३ | २४ | माध्व्या | माध्व्या |
| १४७ | ८ | स्वदु | स्वादु |
| " | १६ | त्रैलोकस्य | त्रैलोक्यस्य |
| १५० | १० | पर | परम |
| " | २२ | श्रियः | श्रिया |
| १५१ | १० | नंहान् | मंहान् |
| १६१ | २४ | चराण | चरणा |
| १६३ | २३ | मण्ड | मण्डल |
| १६४ | १६ | हतोः | हतो |
| १६७ | ८ | मयी | मयि |
| " | २५ | स्च | स्व |
| १६६ | ८ | महात्कर्म | महत्कर्म |
| १७१ | १५ | त्रूस्ता | त्रस्ता |
| १७५ | २३ | आग्नेयास्त्रं | आग्नेयास्त्रं |
| १८० | ४ | सङ्घुष्टं | सङ्घुष्टं |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| | | | |
|---|---|---|---|
| १८० | १७ | समुद्धतं | सुमुद्धत्तुं |
| १८२ | १८ | जाम्बती | जाम्बवती |
| १८३ | १२ | राक्षसी कृतः | राक्षसीकृतः |
| " | १८ | मोक्षा | मोक्ष |
| १८४ | ११ | मूखै | मुखै |
| १८६ | ५ | सारान् | सारवान् |
| १८८ | १२ | राघवं | राघव |
| १९३ | १० | एतच्छुत्वा | एतच्छ्रुत्वा |
| २०४ | २१ | रणाविशरद | रणविशारद |
| २१३ | २ | बवन्ध | बबन्ध |
| " | १० | ब्रह्म | ब्रह्मा |
| २१५ | १९ | कृतुं | कतुं |
| २१६ | ८ | यच्छतं | यच्छ्रुतं |
| २१९ | १ | भर्तृ | भर्तृं |
| २२१ | १४ | तच्छूत्वा | तच्छ्रुत्वा |
| २२३ | १८ | क्रोधा | क्रोध |
| " | २२ | द्ःखित | दुःखित |
| " | २३ | क्रोधा | क्रोध |
| २२४ | १६ | पृथिर्वी | पृथिवीं |
| २२७ | १० | साम्प्रतं | साम्प्रतं |
| २२८ | २४ | एतच्छुत्वा | एतच्छ्रुत्वा |
| २३२ | ७ | परतन्त्रण | परतन्त्रेण |
| २४३ | ४ | मन्धा | मन्य |
| " | १५ | मूच्छावणनम् | मूर्च्छावर्णनम् |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| | | | |
|---|---|---|---|
| २४६ | २२ | माता | मात |
| २४७ | ४ | विहायष | विहायैष |
| २४९ | १६ | किन्नाम | किन्नामा |
| २५० | २२ | मूच्छितः | मूर्च्छितः |
| २५२ | २४ | जग्राह् | जग्राह |
| २५३ | २ | याग्यताम् | योग्यताम् |
| " | १५ | सुशोभिम् | सुशोभितम् |
| " | १८ | जाग्रह् | जग्राह |
| २५६ | १६ | शिरस्त्राण | शिरस्त्राण |
| २६१ | १३ | ववन्धतुः | बबन्धतुः |
| २६२ | २२ | बालयौः | बालयोः |
| २६७ | २३ | वचनातत्र | वचनात्तत्र |
| २६८ | ७ | शीत्र | शीघ्र |
| २७६ | ११ | दुःखतो | दुःखितो |
| २७९ | ६ | द्दष्टः | दुःष्टः |
| २८० | १५ | गापितम् | गोपितम् |
| " | १७ | वृन्दावन | वृन्दावनं |
| " | १९ | किञ्चिद् | किञ्चिद् |
| २८४ | २२ | रूयं | रूपं |
| २९१ | १३ | वाले | बाले |
| २९७ | १६ | पश्च | पश्चा |
| २९८ | ५ | बापीं | वापीं |
| २९९ | ६ | घरं | घरं |
| ३०२ | १९ | चित्रध्वजः | चित्रध्वजः |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| | | | |
|---|---|---|---|
| ३०३ | ७ | परहर | पहर |
| ” | १६ | जमौ | जगौ |
| ३०५ | ५ | ४६ | १४६ |
| ” | ६ | ५३ | १५३ |
| ” | ११ | ५४ | १५४ |
| ३११ | ६ | कर्म | कर्म |
| ३१५ | ३ | तच्च्छत्वा | तच्छ्रुत्वा |
| ३१६ | २५ | पाश्व | पार्श्वे |
| ३२२ | १४ | वृण्दा | वृन्दा |
| ३२५ | ६ | विनशाय | विनाशाय |
| ” | १६ | गौरबम् | गौरवम् |
| ” | २२ | र्वालकै | र्बालकै |
| ३३३ | २२ | भलम् | फलम् |
| ३४० | ४ | रितामृतम् | चरितामृतम् |
| ३४६ | ६ | तुभ्य | तुभ्यं |
| ” | २२ | मुखीम् | मुखीम् |
| ३५७ | २ | महद्भुतम् | महदद्भुतम् |
| ” | ६ | द्विजश्रेष्ठा | द्विजश्रेष्ठाः |
| ” | २३ | विदन्ति | विन्दति |
| ” | ” | तपा | तपो |
| ३५८ | ७ | परमार्थसित् | परमार्थवित् |
| ” | ६ | पृष्टारं | प्रष्टारं |
| ” | २७ | मायव | माधव |
| ३५६ | २५ | सवे | सर्वेऽ |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| | | | |
|---|---|---|---|
| ३५६ | २५ | कारो | कारोऽ |
| ३६० | ४ | सूरयौ | सूरयो |
| " | २२ | एब | एव |
| ३६२ | ७ | व्राह्माण्डं | व्रह्माण्डं |
| " | ८ | चतुर्बाहु | चतुर्बाहुं |
| " | १० | तस्त | तस्य |
| " | १६ | एतत्त | एतत्ते |
| ३७० | ६ | स्वयम्भु | स्वयम्भू |
| " | २४ | माधमो | माधवो |
| ३७१ | ५ | माहात्म्ये | माहात्म्ये |
| " | ८ | अम्वरीष | अम्बरीष |
| ३७५ | ५ | स्वामिलोमं | स्वामिन् ! लोभं |
| " | १६ | प्रवक्ष्मामि | प्रवक्ष्यामि |
| ३७७ | ६ | यधा | यथा |
| " | १२ | गुरू | गुरून् |
| " | २३ | आबल्येन | आबाल्येन |
| ३७८ | ६ | प्रेगणम् | प्रेषणम् |
| ३८४ | १४ | जम्म | जन्म |
| ३६४ | २३ | भुङ्क्ते | भुङ्क्ते |
| ३६५ | ३ | किञ्चि | किञ्चि |
| ३६६ | १३ | ब्रिश्या | विषयां |
| ३६७ | २२ | दमालु | दयालु |
| " | २३ | पुरसान् | पुरुषान् |
| ३६८ | १४ | यतीतं | व्यतीतं |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| | | | |
|---|---|---|---|
| ४०० | १६ | तथा | स्तथा |
| ४०१ | ७ | दिश | दिशः |
| ४०२ | ६ | प्रष्टं | प्रष्टुं |
| ४०३ | ४ | कीर्तनः | कीतनैः |
| ४०५ | ६ | पानं | पापं |
| " | २३ | वजिताः | वर्जिताः |
| ४०७ | ८ | वियमं | नियमं |
| " | १४ | माम्भूल | मान्मूल |
| " | २५ | नमस्तेऽतु | नमस्तेऽस्तु |
| ४०६ | २२ | वैखाखे | वैशाखे |
| ४१० | ८ | मुक्त्वा | भुक्त्वा |
| ४११ | ६ | सर्षिं | सर्पिं |
| ४१३ | ७ | पूजादिनां | पूजादीनां |
| " | ६ | नैरपेक्षेण | नैरपेक्ष्येण |
| ४१५ | १६ | मम्भ | मभ्य |
| ४१७ | ७ | चयन्ति | चर्चयन्ति |
| " | १४ | सित्तथे | सिक्थे |
| ४१८ | १६ | क्षीणापुषां | क्षीणायुषां |
| ४१६ | ४ | गन्यव्यं | गन्तव्यं |
| " | ८ | ब्राह्मणं | ब्रह्माणं |
| " | १४ | दाभ्मिका | दाम्भिका |
| " | १५ | मोहात्थ | मोहात् |
| " | १६ | भार्वनिती | भावनिरतो |
| ४२४ | ४ | यानि | याति |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| | | | |
|---|---|---|---|
| ४२५ | १७ | स्मु | स्यु |
| ४२८ | ३ | सागरः | सागराः |
| ४३० | " | या | यो |
| " | ११ | रनात्वा | स्नात्वा |
| ४३२ | ४ | मेषङ्क्रम | मेषसङ्क्रम |
| " | ११ | नूना | नून |
| ४३३ | ८ | भगवान | भगवान् |
| " | १७ | रयस्याशु | रयत्याशु |
| ४३४ | २ | हस्राणां | सहस्राणां |
| " | १२ | पूष्प | पुष्प |
| ४३५ | १६ | मुख्वात् | मुखात् |
| ४३८ | २ | मह्ी | मही |
| ४४० | १५ | णाद्द | याद्दश |
| ४४३ | २२ | बिश्व | विश्व |
| ४४५ | १५ | नियमाणो | नीयमानो |
| " | २२ | श्रतः | श्रुतः |
| ४५२ | १५ | मणु | मणि |
| " | १६ | सुस्निग्घ | सुस्निग्ध |
| ४५४ | १५ | सिचाया | सिचया |
| ४५६ | १८ | न्याथ | न्याय |
| ४६५ | २३ | स रामसुनिवर्यां | सरामसुनिवर्या |
| ४६६ | २४ | शम्सु | शम्भु |
| ४७२ | २५ | हे | हेतु |
| ४७३ | ४ | भार्यानां | भार्याणां |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| | | | |
|---|---|---|---|
| ४७३ | ६ | तत्रा | तत्र |
| ” | ” | तमोजयन् | तमयोजयन् |
| ४७६ | १६ | ऊरुदघ्नो | ऊरुदघ्नो |
| ४८० | १० | पुनपुनः | पुनः पुनः |
| ४८२ | १८ | समाचार | समाचर |
| ४८३ | १५ | विधांवायै | विधवायै |
| ” | २२ | तवान्तेष्टिं | तवान्त्येष्टिं |
| ४८४ | १४ | भर्ता | भर्ता |
| ४८५ | २१ | षडत्तर | षड्डुत्तर |
| ४८६ | १८ | निपपिता | निपपिता |
| ४९० | १७ | भस्मन | भस्मना |
| ४९२ | १३ | ते | तं |
| ४९३ | ४ | रजा | रजो |
| ४९५ | १६ | ब्रह्म | ब्रह्मा |
| ४९६ | १३ | कीतिर्यस्यामि | कीर्तयिष्यामि |
| ” | १७ | चाथ्था | चाख्या |
| ” | ” | व्यारव्या | व्याख्या |
| ” | १८ | पुणाणे | पुराणे |
| ५०५ | ५ | द्रतम् | द्रुतम् |
| ५०६ | २३ | तथांष्टत्रं | तथाऽष्टपत्रं |
| ५०७ | १ | वृतान्तः | वृत्तान्तः |
| ५११ | १६ | पशुनां | पशूनां |
| ५१२ | २ | वणनम् | वर्णनम् |
| ५१४ | ११ | तपो | ततो |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| | | | |
|---|---|---|---|
| ५१७ | ६ | पावत्यु | पावत्यु |
| ” | २४ | कुत | कृत |
| ५२१ | ३ | मवापस्यति | मवाप्स्यति |
| ५२५ | ८ | क्रीडनास्ते | क्रीडन्नास्ते |
| ५२८ | २१ | प्रह्वादो | प्रह्लादो |
| ५३४ | १६ | हनूसन्ता | हनूमन्त |
| ५३६ | ३ | किञ्चि | किञ्चि |
| ५५१ | १६ | वहिः | बहिः |
| ५५२ | २० | पुराणार्थे | पुराणार्थं |
| ५५३ | ४ | श्रिणोति | शृणोति |
| ५५४ | ५ | राक्ष | राक्षस |
| ५५५ | २ | व्याख्यातरं | व्याख्यातारं |
| ” | १२ | पुराण | पुराणं |
| ” | १३ | चेच्क्रतः | चेच्क्रृतः |
| ५५६ | १७ | कुयात् | कुर्यात् |
| ५६२ | १२ | लम्बा | लम्ब |
| ” | १४ | मध्याङ्लीकं | मध्याङ्गुलिकं |
| ५६६ | १४ | मामर्ण्य | माकर्ण्य |
| ” | २४ | पुरषोत्तम | पुरुषोत्तम |
| ५६९ | १४ | स्वेनेव | स्वेनैव |
| ” | २३ | [illegible]त्ताश्चापरे | निवृत्ताश्चापरे |
| ५७० | १२ | राजा | राजाऽ |
| ” | २४ | नृतवचन ! | नृतवचन |
| ५७१ | १ | वार्तालपः | वार्त्तालापः |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| | | | |
|---|---|---|---|
| ५७१ | १४ | मेघश्यामा | मेघश्यामो |
| ५७४ | ३ | वदाथवा | वदथवा |
| " | ४ | मुञ्भिता | मुञ्भिता |
| ५७५ | १६ | राबि | रावि |
| " | २१ | करद्वयेन् | करद्वयेन |
| ५७६ | १७ | वनराः | वानराः |
| " | २० | पापात | पपात |
| ५८३ | २२ | भोजमामास | भोजयामास |
| ५८५ | ५ | वल्का | वल्क |
| ५८६ | १६ | पूष्पै | पुष्पै |
| ५८६ | ६ | कि | किं |
| " | २२ | वल | बल |
| ५६४ | ३ | यंयिष्यति | पंयिष्यति |
| " | ६ | मध्याह्ना | मध्याह्न |
| ५६५ | १३ | शिवराघ | शिवराघव |

॥ समाप्तमिदम्पातालखण्डस्य शुद्धिपत्रम् ॥

शुभमस्तु

❀ मुमुक्षु भवन वेद वेदाङ्ग पुस्तकालय ❀
वाराणसी।
आगत क्रमाक...... 0294 ..........
दिनांक...... 27/5 ..........
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

